# ऋक्संहिता

पदपाठसहिता

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं ऋग्भाष्यं - श्रीमज्जयतीर्थश्रीचरणविरचिता ऋग्भाष्यटीका - मन्त्रार्थमञ्जरी - श्रीस्कन्दस्वामिभाष्यम् - वेङ्कटमाधवभाष्यम् - मुद्गलभाष्यम् - सायणभाष्यम् - सिद्धाञ्जनम् - नीतिमञ्जरी इत्येताभिर्नव व्याख्याभिः सहिता

## प्रथमं सम्पुटम्

प्रथमोऽध्यायः – एकोनविंशतिसूक्तानि


प्रधानसम्पादकः

डा. सत्यध्यानाचार्य कट्टी

म्यानेजिङ्गट्रस्टी, विद्याधीशस्नातकोत्तरसंस्कृतशोधकेन्द्रः

सम्पादकः

डा. कृष्णाचार्य उपाध्यायः

निदेशकः, विद्याधीशस्नातकोत्तरसंस्कृतशोधकेन्द्रः



प्रकाशनम्

विद्याधीशस्नातकोत्तरसंस्कृतशोधकेन्द्रः, बेङ्गळूरु

(कर्नाटकसंस्कृतविश्वविद्यालयेन मानिता शोधसंस्था)

# ऋक्संहिता

## पदपाठसहिता

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं ऋग्भाष्यं - श्रीमज्जयतीर्थश्रीचरणविरचिता ऋग्भाष्यटीका - श्रीराघवेन्द्रतीर्थविरचितमन्त्रार्थमञ्जरी - श्रीस्कन्दस्वामिविरचितं भाष्यम् - वेङ्कटमाधवाचार्यविरचितं भाष्यम् - मुद्गलविरचितं भाष्यम् - श्रीमत्सायणाचार्यविरचितं भाष्यम् - कपालिशास्त्रिविरचितं ऋक्संहिताव्याख्यानं सिद्धाञ्जनम् - श्रीयादेवविरचिता नीतिमञ्जरी इत्येताभिर्नव व्याख्याभिः सहिता

# प्रथमं सम्पुटम्

प्रथमोऽध्यायः एकोनविंशति सूक्तानि


प्रधानसम्पादकः

डा. सत्यध्यानाचार्य कट्टी

म्यानेजिङ्गट्रस्टी, विद्याधीशस्नातकोत्तरसंस्कृतशोधकेन्द्रः

सम्पादकः

डा. कृष्णाचार्य उपाध्यायः

निदेशकः, विद्याधीशस्नातकोत्तरसंस्कृतशोधकेन्द्रः



*This Volume is published with the grant from the Govt. of Karnataka*





प्रकाशनम्

विद्याधीशस्नातकोत्तरसंस्कृतशोधकेन्द्रः, बेङ्गळूरु

(कर्नाटकसंस्कृतविश्वविद्यालयेन मानिता शोधसंस्था)

**Ṛk Samhitā** Vol.1 - Ṛg Bhāṣyam of Śrī Ānandatīrtha-bhagavatpāda-cārya, Ṛgbhāṣyatīkā of Śrīmajjayatīrtha, Mantrārthamañjarī of Śrī Rāghavendratīrtha, Ṛg Bhāṣyam of Śrī Skandhaswāmy, Śrī Venkatamādhava, Śrī Mudgala, Śrī Sāyaṇāchārya, Siddhāñjana by Śrī Kapāliśāstry, Nītimañjari by Śrīdyādeva.

*Chief Editor*

**Dr. Satyadhyanacharya Katti,**

*Editor*

**Dr. Krishnacharya Upadhyaya**

*Published by :*

**Vidyadhisha Post-Graduate Sanskrit Research Centre,**

No.11, Uttaradi Matha Road, Basavanagudi, Bangalore-04.

Phone: 080-79689974. email : vidyadheeshashodha@gmail.com

No. of Pages : xviii+610

No. of Copies : 500

Year of Publication : 2021

Price : Rs.400



Printed at : **Vāgartha,** Hanumanthnagar, Bangalore-560 019.

।। श्रीदिग्विजयरामो विजयते ।।
श्रीमत्परमहंसपरिव्राजकाचार्यत्वाद्यनेकगुणगणालङ्कृत
श्रीमन्मूलसीतासमेतश्रीमन्मूलरामदिग्विजयरामवेदव्यासादिपादपद्माराधक
श्रीमद्वैष्णवसिद्धान्तप्रतिष्ठापनाचार्यजगद्गुरुश्रीमन्मध्वाचार्यमूलमहासंस्थान
श्रीमदुत्तरादिमठाधीश
श्री श्री १००८ श्रीसत्याभिज्ञतीर्थकरकमलसञ्जात श्री श्री १००८ श्रीसत्यप्रमोदतीर्थवरकुमार
श्री श्री १००८ श्रीसत्यात्मतीर्थश्रीपादानां

## अनुग्रहसन्देशः

''अदुःखमितरत्सर्वं जीवा एव तु दुःखिनः । तेषां दुःखप्रहाणाय श्रुतिरेषा प्रवर्तते'' इत्युद्घोषयत्याम्नायः स्वप्रवृत्तिप्रयोजनम् । दुःखं जिहासमानानां सुखं प्रेप्समानानां साधूनामधिकारिणां दुःखहानसुखप्राप्तिसाधनानि समुपदेष्टुं प्रववृतिरे निगमा इति निश्चप्रचम् ।

''यस्य प्रसादात् परमार्तिरूपादस्मात् संसारान्मुच्यते नापरेण'', ''बन्धको भवपाशेन भवपाशाच्च मोचकः'', ''त्वं मुक्तिदो बन्धदोऽतो मतो नः त्वं ज्ञानदोऽज्ञानदश्चासि विष्णो'' इत्यादिप्रमाणपर्यालोचनया प्रसन्नः परमेश्वरो नारायण एव संसारान्मोचकः इत्यपि सुद्रढिम्ना समसैत्सीत् ।

सत्येवं, यथा प्रतिपादने भगवान्नारायणः प्रसन्नः स्यात्तथैव श्रुतयः प्रतिपादयन्तीत्येवाङ्गीक्रियेत । ''न तादृशी प्रीतिरीड्यस्य विष्णोः गुणोत्कर्षज्ञातरि यादृशी स्यादि''ति भाव[1]भावबोधकप्रमाणचरणशरणीकरणेन तु गुणभृद्गु[2]णोत्कर्ष एव सकलनिगममहातात्पर्यगोचर इत्यत्र नास्ति संशीतिगन्धः ।

यथाहुष्टीकाकृत्पादा जयतीर्थश्रीमच्चरणाः – सर्वाण्यपि हि वेदवाक्यान्यसङ्ख्येयकल्याणगुणाकरं सकलदोषगन्धविधुरमेकरूपमेव ब्रह्म नारायणाख्यं प्रतिपादयन्ति । किन्तु कानिचित् सर्वज्ञत्वसर्वेश्वरत्वसर्वान्तर्यामित्वसौन्दर्यौदार्यवीर्यादिगुणविशिष्टतया, कानिचिदपहतपाप्मात्वनिर्दुःखत्वप्राकृतभौतिकविग्रहरहितत्वादिदोषाभावविशिष्टतया, कानिचिदतिगहनताज्ञापनाय वाङ्मनसाद्यगोचरत्वाद्याकरेण, कानिचित् सर्वपरिहारेण तस्यैवोपादानायाद्वितीयत्वेन, कानिचित् सर्वसत्ताप्रतीतिप्रवृत्तिनिमित्ततांप्रतिपत्यर्थं सर्वात्मकत्वे-

१. भावः - विष्णुः । २. गुणभृद् - विष्णुः ।

नेत्येवमाद्यनेकप्रकारैः परमपुरुषं बोधयन्ति । ततो व्याकुलबुद्धयो गुरुसम्प्रदायविकला अश्रुतवेदव्याख्यातारः सर्वत्राप्येकरूपतामननुसन्दधाना वेदं छिन्दन्ती''त्यादि ।

तथा अन्यत्रापि– ''यो हि सात्विकप्रकृतिर्लोकप्रवादात् कार्यत्वादिलिङ्गानुसन्धानाद्वा स्वतनुभवनादेः कर्तारं सामान्यतो जानन् स्नेहमाहात्म्यज्ञानाभ्यां तद्विशेषज्ञानार्थमुत्कण्ठित-मानसस्तत्संस्कारवशाचान्यदगणयन् वर्तते तं प्रत्याप्तो बन्धुरिवायं समस्तो वेदस्तत्स्वरूपं स्वप्राधानमेव प्रतिपादयति । ततो वाक्यार्थज्ञानादवाप्तपरमानन्दस्तत्साक्षात्कारं कामयते । तं प्रति तदुपासना विधीयते । सा च प्रक्षीणान्तःकरणमलस्यैव सम्भवतीति तदर्थं कर्मविधयः । अथवा यः सांसारिकविविधदुःखं जिहासुः परमानन्दं च प्रेप्सुस्तत्साधनं जिज्ञासते, तं प्रति परमेश्वर एव प्रसन्नः परमेष्टसाधनतयोपदिश्यते । ततः कथमसौ प्रतीदतीत्यपेक्षायां तत्साक्षा-त्कारस्तदङ्गतया कर्माणीत्युभयथा स्वप्रधान एव परमेश्वरो वेदार्थः इति'' ।

तदेतद्वैदिकं महातात्पर्यं श्रीमदानन्दतीर्थकृतभाष्याधीत्यैव ज्ञायते । भाष्यञ्चानन्दतीर्थीयं श्रीमज्जयतीर्थकृतटीकासहायेनैव परिज्ञाततात्पर्यं भवतीति विदितमेव विपश्चिदपश्चि-मानाम् । अतः सकलवेदाध्ययनप्रक्रमप्रदर्शनाय ऋग्वेदसंहिताया आद्याध्यायत्रयं समन्त्रार्थमञ्जरीटीक-मध्वभाष्योपेतप्रकाश्यमानमस्ति । समग्रापि संहिता सविमर्शतौलनिकाध्ययनसौकर्याय स्कन्दस्वामिवेङ्कटमाधवमुद्गलसायणभाष्यसिद्धाञ्जननीतिमञ्जर्यादियुता प्रकाश्यते । तदिदं प्रकाशनं सुप्रसिद्धनाम्ना विद्याधीशस्नातकोत्तरसंस्कृतशोधकेन्द्रेण क्रियत इति महान् सन्तोषपारावारः । विद्याधीशस्नातकोत्तरशोधकेन्द्रस्य धर्मदर्शिनां मार्गदर्शकानां डा. पं. कट्टिसत्यध्यानाचार्याणां मार्गदर्शने निर्देशकाः डा. पं. कृष्णाचार्याः उपाध्यायोपाह्वाः प्रथमाध्यायस्यास्य संशोधने सम्पादने च कृतभूरिपरिश्रमाः । वैदिकग्रन्थसंशोधनं नाल्पस्य तपसः फलम् । सम्यग्व्याख्यान-योजनां विधाय मुद्राराक्षसान् परिहृत्य यथा पिपठिषवः पठेयुः सपटिम, तथा समपाद्येतैरिति महानानन्दथुः । अस्याः संस्थायाः स्थापकान् दि. प्रो. कृष्णाचार्यान् पाण्डुरङ्ग्युपनामधेयानपि साभिमानं संस्मरामः । तथा अन्येऽपि अस्याः संस्थायाः विश्वस्ताः धर्मदर्शिनः अस्य ग्रन्थस्य प्रकाशने महतीं सेवां व्यधुः । सर्वानेतान् अस्मदुपास्याः श्रीमूलसीतासमेतश्रीमन्मूलराम-दिग्विजयरामवेदव्यासवंशरामप्रसन्नविठ्ठलाः ज्ञानभक्तिवैराग्यादिदनेन सच्छास्त्रपाठप्रवचनसंशोधन-सम्पादनादिवाङ्मयसेवासौभाग्यदानेन च समनुगृह्णन्त्विति सम्प्रार्थयामहे ।

श्रीसत्यात्मतीर्थः

## प्राश्नो वाचः

''वेदानधीत्य वेदौ वा वेदं वाऽपि यथाक्रमम् ।'' इति वचनानुसारेण वेदानां सर्वेषां अन्यतमस्य वा स्वप्रज्ञानुसारेणाध्ययनमुपनीतेन कर्तव्यम् । एकवेदपक्षे पितृपितामहादिपरम्पराप्राप्त एव वेदोऽध्येतव्य इत्यभिप्रेत्य ''स्वाध्यायोऽध्येतव्यः'' इति श्रुतिरस्मान् श्रावयत्यध्ययनाय स्वशब्दाम्नानेन । तच्चाध्ययनं न काम्यं किन्तु नित्यम् । अन्यथा पातित्यं स्यात् । ''वेदस्याध्ययनं नित्यमनध्ययने पातात्'' इति हि पुरुषार्थानुशासने सूत्रम् ।

यद्यप्ययमुपनीतो वटुः काव्यनाटकादिकं शृणोति तथापि निरर्थकमेव तच्छ्रवणम् । तेन सुकृतमार्गज्ञानाभावात् । अत एव मनुरप्यनुमन्यते–

**योऽनधीत्य द्विजो वेदानन्यत्र कुरुते श्रमम् ।**
**स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ।।** इति ।

अत एव स्वाध्यायोऽवश्यमध्येतव्यः ।

परं भारतभणितिरेवं श्रूयते–

**चतुर्वेद्यपि यो विप्रः सूक्ष्मं ब्रह्म न विन्दति ।**
**वेदभारभराक्रान्तः सवै ब्राह्मणगार्दभः ।।**

इति केवलं वेदाध्ययनेन यो भारं बिभर्ति स भारवाही गार्दभः एव । वेदार्थभूतस्य ब्रह्मणोऽविज्ञानेनेति निन्दैव कृता महाभारते । अतो वेदार्थज्ञानमावश्यकम् । तच्चार्थज्ञानं व्याख्यानसापेक्षम् । वेदार्थस्तु विना सर्वज्ञोपदेशं देवानामपि दुरधिगम इति परमदयालुभिः श्रीमदानन्दतीर्थभगवत्पादैः तज्ज्ञापनाय ऋग्भाष्यं निरमायि । तच्च श्रीहरेरतितुष्टिकरं परममाङ्गलिकमिति तन्मङ्गलपद्य एव व्यक्तम् । ऋक्संहितार्थकथनमुखेन तत्र सर्वोऽपि वेदार्थो निर्णीयते । तदिदमुक्तं श्रीमच्चन्द्रिकाचार्यैः–

**ऋग्भाष्यं च चकारासौ सर्ववेदार्थनिर्णयम् ।**

शब्दसंक्षेपेऽपि बह्वर्थपरस्यास्य भाष्यस्य टीका श्रीमज्जतीर्थश्रीचरणैर्विनिर्मिता । तस्या अपि दुरधिगमत्वात् श्रीराघवेन्द्रश्रीचरणैः मन्त्रार्थमञ्जरी व्यरचि । सायणपूर्वा नैके व्याचक्रिरे ऋग्वेदम् ।

सायणाचार्योऽपि व्याचकार ऋक्संहिताम् । परं सम्पूर्णं व्याख्यानं सायणाचार्यवेङ्कटमाधवाचार्ययोरेव विराजते । परमेता व्याख्याः विशकलिततया नैकाः संस्थाः मुद्रापयामासुः । इदानीं अध्ययनविमर्शनसौकर्याय विद्याधीशस्नातकोत्तरसंस्कृतशोधकेन्द्रेण ऋग्भाष्यं, जयतीर्थीया टीका मन्त्रार्थमञ्जरी, स्कन्दस्वामिभाष्यं, वेङ्कटमाधवीयं भाष्यं, मुद्गलभाष्यं, सायणभाष्यं, कपालिशास्त्रि-भाष्यं, नीतिमञ्जरीति नव व्याख्याः एकत्रैव क्रोडीकृत्य मुद्राप्यन्ते इत्येतन्महन्मोदावहमस्माकम् ।

तदिदं भाष्यं मुद्रापयितुं अनुज्ञाय सन्देशं वितीर्य महदनुग्रहं चक्रुर्मान्याः धन्याः संस्थायाः प्रधानपोषकाः श्रीमदुत्तरादिमठाधीशाः **श्रीश्रीमत्सत्यात्मतीर्थश्रीचरणाः** । तेभ्यो नतिशत-ततीरर्पयामि ।

**प्रो. के.टि. पाण्डुरङ्गि** महोदयानां योऽयमभिलाषोऽश्वनीयः पूरणीयश्चासीत् वेदव्याख्यानप्रकाशनरूपः सोऽयमद्याश्रितः पूरितश्च शोधकेन्द्रेणेति मोमुदित्यस्मन्मनः । तेभ्यः प्रणमाञ्जलिं समर्पयामि ।

मुद्रणमिदं यथाशोभं पठनानुकूलं समपीपदत् कोविदः अस्याः संस्थाया निदेशकः डा. कृष्णाचार्य उपाध्यायः । अयञ्च विद्वान् नैकग्रन्थान् समपादयत् । ते च मुद्रापिता विद्यधीशशोधकेन्द्रेण द्वैतवेदान्ताध्ययनप्रतिष्ठानेन च । तमेनं बुधवरमभिनन्दामः । इतोऽपि नैके ग्रन्थाः अनेन विदुषा सम्पाद्यन्तामित्याशास्महे ।

अस्या ऋक्संहिताया मुद्रापणे नैकसंस्थानां ग्रन्था उपायुज्यन्त । ताभ्यः संस्थाभ्यः, संस्थाधिकारिभ्यश्च हार्दान्यभिनन्दनानि संसूचयामः ।

तामेतां संहितां अल्पीयसि काले व्यमुद्रापयन् वागर्थमुद्रणालयाधिकारिणः । तान् सर्वान् अभिनन्दामः ।

सैषा संहिता अध्येतृणां विदुषां विद्यार्थिनाञ्चोपकृतये भूयादित्याशास्महे ।

डा. कट्टि सत्यध्यानाचार्यः
*म्यानेजिङ्गट्रस्टी*
विद्याधीशशोधकेन्द्रः, बेङ्गलूरु-४.

अश्विनशुक्लप्रतिपत्, २०२१

# सम्पादकीयम्

## वेदः

संस्कृतसाहित्ये वेदानां स्थानं सर्वोपरि वर्तते । भारते धर्मव्यवस्था वेदायत्तैव । वेदो धर्मनिरूपणे स्वतन्त्रभावेन प्रमाणम्, स्मृत्यादयस्तु तन्मूलकतया । श्रुतिस्मृत्योर्विरोधे श्रुतिरेव गरीयसी । न केवलं धर्ममूलतयैव वेदाः समादृताः, अपि तु विश्वस्मिन् सर्वप्राचीनग्रन्थतयाऽपि । प्राचीनानि धर्मसमाजव्यवहारप्रभृतीनि वस्तुजातानि बोधयितुं श्रुतय एव क्षमन्ते ।

प्रधानतया वेदो द्विविधः मन्त्ररूपो ब्राह्मणरूपश्च । मन्त्रसमुदाय एव संहिताशब्देन व्यवहृतः । ब्राह्मणरूपो वेदभागस्तु संहिताभागस्य व्याख्यारूप एव । स चायं ब्राह्मणभागो यागस्वरूपबोधकतया प्रथितः । ब्राह्मण ग्रन्थोऽपि त्रिधा विभक्तो भवति– ब्राह्मणम्, आरण्यकम्, उपनिषदश्च । यज्ञस्वरूपप्रतिपादको ब्राह्मणभागः । अरण्ये पठिताः यज्ञस्याध्यात्मिकं रूपं विवेचयन्तो वेदभागा आरण्यकानि । उपनिषदो ब्रह्मबोधिकाः मोक्षसाधनानि, अयमेव भागो वेदस्यान्तरूपतया वेदान्त इत्युच्यते । ब्राह्मणभागो गृहस्थानामुपयोगी, आरण्यकभागो वानप्रस्थमाश्रितानाम्, उपनिषद्भागश्च सन्यस्तानामुपयोगीत्यपि कथयितुं शक्यते । नकेवलं सन्यासिनां किन्तु सर्वेषां साधकानामपि उपयोगी ।

## वेदशब्दार्थः

वेद्यन्ते धर्मादयः पुरुषार्था यैस्ते वेदाः, इति बह्वृचप्रातिशाख्यम् । सायणस्तु अपौरुषेयं वाक्यं वेद इत्याह । इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो वेदयति स वेद इति भाष्यभूमिकायामुक्तम् । तत्र प्रमाणमपि तत्रैवोक्तम्–

**'प्रत्यक्षेणानुमित्या वा यस्तूपायो न विद्यते ।**
**एनं विदन्ति वेदेन तस्माद् वेदस्य वेदता ।।'**

आम्नायः, आगमः, श्रुतिः वेदः, इति सर्वे शब्दाः पर्यायाः ।

यथोक्तं 'वेदास्ते नित्यविन्नत्वात् श्रुतयश्चाखिलैः श्रुतेः । आम्नायोऽनन्यथापाठात्' इति । नित्यं विद्यमानत्वात् नाम नित्यत्वात् वेदाः इति कथ्यन्ते । अनादिकालादारभ्य सर्वैः पुरुषैः श्रुता एव । न तु कृताः । अतः श्रुतय इत्यच्यन्ते । एकयैवरीत्या निरन्तरं आम्नात्वात् पठिततत्वात्

आम्नाय इत्युच्यन्ते । ''पान्ति शंसाधनाश्चेति वेदाः पशव ईरिताः'' इत्युक्तेः परतत्वस्य ज्ञानमापाद्य निरन्तरं पालनात् सुखसाधनत्वाच्च वेदाः पशवः इतीर्यन्ते ।

सोऽयं वेदस्त्रयीति पदेनापि व्यवह्रियते, वेदरचनायास्त्रिप्रकारकत्वेन त्रयीति कथ्यते । या खलु रचना पद्यमयी सा ऋक्, या गद्यमयी सा यजुः, या पुनः समग्रा गानमयी रचना सा सामेति कथ्यते, तदुक्तं जैमिनिना–

'तेषामृग् यत्रार्थवशेन पादव्यवस्था । गीतिषु सामाख्या । शेषे यजुः शब्दः' इति । द्वितीयाध्याये प्रथमपादे ३२–३३–३४ सूत्राणि ।

यास्कस्तु– 'ता ऋचः परोक्षकृताः प्रत्यक्षकृताः आध्यात्मिक्यश्चेति भेदात् त्रिविधाः। ऋक्शब्दोऽत्र मन्त्रवचनः । यासु प्रथमपुरुषक्रियास्ताः परोक्षकृताः, यासु मध्यमपुरुषक्रियास्ताः प्रत्यक्षकृताः यासु चोत्तमपुरुषक्रियास्ता आध्यात्मिक्यः' इति ।

अतः यत्र कुत्रापि प्राचीनग्रन्थे वेदार्थे 'त्रयी'ति पदं प्रयुक्तं तत्र सर्वत्र रचनात्रैविध्यं मनसि कृतं बोध्यम् ।

यत्तु केचन 'ऋग्यजुः सामाख्यास्त्रय एव वेदाः पूर्वमासन्, तद्यथा–'

**'अग्नेर्ऋचो वायोर्यजूंषि सामादित्यात् ।' छा.ब्रा.६.१७**

**'अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम् ।'**
**दुदोह यज्ञसिध्यर्थमृग्यजुःसामलक्षणम् ।। मनु.१.१३**

अतो वेदानां त्रित्वादेव तत्र त्रयीति व्यवहारो वास्तवो न प्रकारभेदकृतः' इति तदयुक्तम्, ऋग्वेदेऽपि अथर्ववेदनामोल्लेखदर्शनात् । भगवता पतञ्जलिनाऽपि 'चत्वारो वेदाः साङ्गाः सरहस्याः' इति पस्पशाह्निके स्पष्टमुक्तम् । छान्दोग्यब्राह्मणे मनुस्मृतौ च यज्ञोपयोगिनो वेदा एव परामृष्टाः, नाभिचारिकः सामवेद इति त्रित्वमेवोक्तम्, एवं परत्रापि। जैमिनिस्तु मन्त्राणां त्रिप्रकारकतामेव लक्षितवान्, न वेदसङ्ख्यां व्यवस्थापितवान् । अतो वेदाश्चत्वार एव, त्रयीति व्यवहारस्तु प्रकारकृतः। अथर्ववेदीयमन्त्रा अपि पूर्वोक्तप्रकारत्रयान्यतमरूपा एवेति बोध्यम् ।

## ऋग्वेदः

ऋच्यते स्तूयते यया सा ऋक् । तादृशीनामृचां समूह एव ऋग्वेदः । यत्रार्थवशेन

पादव्यवस्था सा ऋगिति मीमांसकाः । स ऋग्वेदः सूक्तमण्डलभेदेन द्विधा विभक्तः । तत्र सूक्तं चतुर्विधम्– ऋषिसूक्तदेवतासूक्तच्छन्दःसूक्तार्थसूक्तभेदात् । एकर्षिदृष्टमन्त्राणां समूहो ऋषिसूक्तम् । एकदेवताकमन्त्राणां समूहो देवतासूक्तम् । समानच्छन्दसां मन्त्राणां समूहो नाम च्छन्दःसूक्तम् । यावदर्थसमाप्तानां मन्त्राणां समूहोऽर्थसूक्तम् । सुष्ठूक्तत्वात्सर्वं सूक्तमित्याख्यायते ।

ऋग्वेदः सोऽयं मण्डलानुवाकवर्गभेदेन अष्टकाध्यायसूक्तभेदेन च द्विधा। बालखिल्यसूक्तानि विहाय सम्पूर्णायामृग्वेदसंहितायां दशमण्डलानि, पञ्चाशीतिश्चानुवाकाः, अष्टोत्तरशतद्वयमिताश्च वर्गाः इति प्रथमो भेदः। अष्टौ अष्टकानि, चतुष्षष्टिरध्यायाः, सप्तदशोत्तरसहस्राणि च सूक्तानि इति द्वितीयो भेदः ।

सर्वेऽपि मन्त्राः चतुर्दशसु छन्दस्सु विभक्ता बोध्याः । ऋग्वेदगतमन्त्रद्रष्टारो ऋषयः गृत्समदविश्वामित्रवामदेवात्रिभरद्वाजवसिष्ठादयः सन्ति ।

ऋग्वेदस्य दशसु मण्डलेषु नवमं मण्डलं पवमानमण्डलनाम्ना प्रथितम् । तत्र हि सोमविषयकमन्त्राणां सङ्कलनं कृतम् । पवमानः–सोमः । पूर्वोक्ताः सप्तापि मन्त्रद्रष्टारो ऋषयो द्वितीयमण्डलतः सप्तमण्डलपर्यन्तगताभिः ऋग्भिः सम्बद्धाः, दशममण्डले मन्त्रा नानर्षिसम्बद्धाः । दशमे मण्डले न केवलं देवतास्तुतय एव, अन्यप्रकारका अपि मन्त्रा दृश्यन्ते ।

**अर्थज्ञ इत्सकलं भद्रमश्नुते–**

वेदार्थहीनस्य भारवाहत्वमुक्तं वेदाङ्गे निरुक्ते–

**स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम् ।**
**योऽर्थज्ञ इत्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा ।।**

स्वयं ऋग्वेदेऽपि श्रूयते अर्थज्ञानस्य प्राशस्त्यम् ।

**उत त्वः पश्यन् न ददर्श वाचमुत त्वः शृण्वन् न शृणोत्येनाम् ।**
**उतो त्वस्मै तन्वं विसस्रे जायेव पत्य उशती सुवासाः ।। १०.७१.४ ।।**

अविज्ञातवागर्थ एकः मनसा पर्यालोचयन्नपि ऋग्यजुस्सामादिलक्षणां वाचं न ददर्श । उत अविज्ञातार्थ एकः सुमुखेनोच्चार्यमाणं वाचं शृण्वन्नपि नशृणोत्येव । कुतः? श्रवणफलं अर्थमानमेव। तन्नास्ति अतो न शृणोति ।

अप्येकस्मै विज्ञातवागर्थाय सबाह्याभ्यन्तरं तन्वं स्वशरीरं प्रकाशयति । कथम्? यथा भार्या सम्भोगं, अपत्यं भर्तारं च कामयमाना शोभनवासाः ऋतुकाले चतुर्थेऽहनि निर्णिक्तवस्त्रा सती सम्भोगकाले भर्त्रे स्वशरीरं सबाह्याभ्यन्तरं दर्शयति एवम् ।

वाक्सख्ये वाचा क्रियमाणे सखिकर्मणि विद्वत्सखिसंकथनलक्षणे स्थिरपीतं स्थिरज्ञानं परिनिष्ठितविदं प्रशंसन्ति विद्वांसः । सारभूतेषु निरूपणीयेष्वर्थेषु नैनमर्थज्ञं बहिष्कुर्वन्ति ।

यथा वन्ध्या पीना गौः किमियं द्रोणदुघेति मायामुत्पादयान्ती चरति एवं वेदपाठं ब्रुवाणश्चरतीत्यपि वेदो निगदति ।

वेदमधीत्य वेदार्थो ज्ञातव्यः । श्रौतस्मार्तकर्म कर्तव्यं फलत्यागपूर्वकम् । कृतेन स्वशाखोक्तकर्मणा चित्तशुद्धिर्भविष्यति । तत्कारणात् वेदार्थज्ञानमवश्यं साधयितव्यम् ।

**वेदैश्च सर्वैरहमेव वेद्यः**

वेदार्थस्तु भगवानेव । भगवानेव परममुख्यवृत्यावेदप्रतिपाद्यः । मुख्यवृत्या यज्ञादिरपि प्रतिपाद्यो भवति । तदेतत् आथर्वणोपनिषदि उक्तम्–

तस्मै स होवाच द्वे विद्ये वेदितव्ये परा चैवापरा च ।

तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति । अथ परा यया तदक्षरमधिगम्यते ।

वेदानां भगवतो बोधकत्वे परविद्यात्वम् । अन्यदा अपरविद्यात्वम् ।

ता एव परमा विद्या यदा विष्णोस्तु वाचकाः ।।

श्रुतिस्मृतीतिहासपुराणेषु दरीदृश्यते भगवान् सर्ववेदप्रतिपाद्य इति ।

१) काठके श्रूयते– सर्वे वेदा यत्पदमामनन्ति; इति ।

२) ऐतरेयेच– तावा एताः सर्वा ऋचः सर्वे वेदाः सर्वे घोषाः एकैव व्याहृतिः प्राण एवेति ।

गीतायां, वेदैश्च सर्वैरहमेववेद्यः'' श्रीकृष्णेनाप्युक्तम् ।

वेदे रामायणे चैव पुराणे भारते तथा ।

आदावन्ते च मध्ये च विष्णुः सर्वत्र गीयते ।

**सर्वे शब्दा विष्णुबोधकाः**

नामवाचिनः अग्न्यादिशब्दा अपि हरिमेव प्रतिपादयन्ति ।

यो देवानां नामधा एक एव ।

इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः ससुपर्णो गरुत्मान् ।

सर्वनामा सर्वकर्मा सर्वलिङ्गः ।

सर्वच्छन्दोभिधो ह्येषः सर्वदेवाभिधो ह्यसौ ।

बृंहणाद् ब्रह्मनामासौ ऐश्वर्यादिन्द्र उच्यते

आसमन्तात् काशते यदाकाशो मुख्यतो हरिः

बलज्ञानस्वरूपत्वाद्वायुः अग्निः अगं नयन् ।
आप आपालनाच्चैव पृथिवी प्रथितो यतः ।।
एवं नानाविधैः शब्दैः एक एव त्रिविक्रमः ।
वेदेषु सपुराणेषु गीयते पुरुषोत्तमः ।।

सर्वे वेदाः परममुख्यवृत्या विष्णुं बोधयन्ति । तच्चेत्थम्–

ओङ्कारो ब्रह्मवाचकः । ओमिति ब्रह्मेति श्रुतेः । ओङ्कारस्यार्थः गुणपूर्णत्वम् । ब्रह्मशब्दस्यापि स एवार्थः । अतः ओंकारो गुणपूर्णस्य ब्रह्मणो वाचकः ।

ओंकारार्थः एव व्याहृतयः । तिस्रो व्याहृतयः अ, उ म इति वर्णत्रयस्य व्याख्यानरूपाः । व्याहृतयश्चेमाः भूः भुवः सुवः । गुणपूर्णाभिधायकाः । अतो भगवद्वाचिकाः । प्रणवार्था व्याहृतयः । व्याहृतेर्व्याख्यानं त्रिपदा गायत्री । त्रिपदाया गायत्रेर्व्याख्यानं वर्गत्रयात्मकं पुरुषसूक्तम् । वर्गत्रयात्मकस्य पुरुषसूक्तस्य व्याख्यानं त्रयो वेदाः । सर्वो वेदः ओङ्कारार्थरूपः । ओङ्कारार्थश्च ब्रह्म, विष्णुः । ओङ्कारेण सर्वावाक् सन्तृण्णा । वेदाः विष्णुपराः विष्णपरोङ्कार-

व्याख्यानत्वात् इति सर्वो वेदः विष्णुपर इति बोधयामास श्रीमदानन्दतीर्थभगवत्पादाचार्यः स्वीये ऋग्भाष्ये ।

## अङ्गीचकार सायणाचार्यो न व्याचकार

सायणोऽप्याचार्यो मनुते सर्वोवेदः परमेश्वरस्य भगवतो हरेः प्रतिपादक इति । तथाहि तस्य वाक्यानि आदावेवोपाद्धाते–

अत्र केचिदाहुः ऋग्वेदस्यैव प्राथम्येन सर्वत्राम्नानात्, अभ्यर्हितं पूर्वं इति न्यायेनाभ्यर्हितत्वात् तद्याख्यानमादौ युक्तम् । प्राथम्यश्च पुरुषसूक्ते स्पष्टम्–

तस्माद्यज्ञात् सर्वहुतः ऋचःसामानि जज्ञिरे ।
छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ।। इति ।

तस्मात् "सहस्रशीर्षा पुरुषः" इत्युक्तात् परमेश्वरात् यज्ञात् यजनीयात् पूजनीयात् सर्वहुतः सर्वैः हूयमानात् । यद्यपि इन्द्रादयः तत्र तत्र हूयन्ते तथापि परमेश्वरस्यैव इन्द्रादिरूपेण अवस्थानात् अविरोधः । तथा च मन्त्रवर्णः–

इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः ससुपर्णो गरुत्मान् ।
एकं सद्विप्रा बहुधा वदन्त्याग्निं यमं मातरिश्वानमाहुः ।। ऋ.१.१६४.४६

वाजसनेयिनश्चामनन्ति–

तत्तदिदमाहुरमुं यजामुं यजेत्येकैकं देवम् ।
एकस्यैव सा विसृष्टिः एष उ ह्येव सर्वे देवाः ।।
तस्मात् सर्वैरपि परमेश्वर एव हूयते ।

सर्ववेदप्रतिपाद्यो भगवान्नारायण इत्याह परं न व्याचख्यौ तत्परतया । केवलं कर्मपरतया रचयामास व्याख्याम् ।

**ऋषिच्छन्दोदेवताः–**

अविदितार्षछन्दोदैवतब्राह्मणेन मन्त्रेण यजनयाजनादिकं अध्ययनाध्यापनश्च अनर्थनिदानम् ।

अतो ऋष्यादिज्ञानमावश्यकम् । तच्च ज्ञापयामास श्रीमदानन्दतीर्थभगवत्पादाचार्यः । सर्वविद्यानां मुनिः भगवान् पुरुषोत्तमः । अस्य महतो भूतस्य निश्वसितमेतदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरसः इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानान्यस्यैवेतानि निश्वसितानीति श्रुतिः ऋग्वेदादिकमस्य विष्णोरेव निश्वसितं प्राह । निश्वसितमिति हि निश्वसितमिव अनायासेन आदिकाले तेनोच्चरितमिति । हयग्रीवादिमा विद्या निश्वासिताः उपदिष्टाः स एव प्रथमदृष्टा ।

परमेश्वरेण युगपत्समुदीरितं अखिलं विद्याजातं सकृन्निगदमात्रेण ब्रह्मा चतुर्मुखो जग्राह । रुद्रशेषविपाः ब्रह्मणो जगृहुः । तेभ्यः शक्राद्याः । तेभ्यः दक्षाद्याः । तेभ्यः सनकादयः मनवश्च । सनकादयश्च जगति उपदिदिशुः ।

१. हयग्रीवरूपी परमात्मा श्रीः
२. चतुर्मुखब्रह्मा वायुः ब्रह्माणी भारती च
३. रुद्रशेषविपाः तेषां पत्न्यः
४. शक्राद्याः एतेषां पत्न्यः
५. दक्षाद्याः
६. सनकाद्याः
७. मनवः । इतीयमृषिपरम्परा ।

**हयग्रीवादिमा विद्या श्वसितत्वेन निसृताः ।**
**ब्रह्मणा स्वीकृतास्ताश्च रुद्रशेषविपा अपि ।**
**दक्षाद्या सनकाद्याश्च शक्राद्या मनवस्तथा ।**
**जगृहुस्ते च विश्वस्मिन् चक्रुर्व्याप्तास्ततोऽखिलाः ।**
**सकृन्निगदमात्रेण गृहीतं ब्रह्मणाऽखिलम्**
**अन्तर्गतस्य व्याप्तस्य प्रसादान्नित्यशक्तितः ।**

वेदाः परममुख्यवृत्या भगवद्बोधकाः मुख्यवृत्या अग्न्यादिबोधकाः । तदिदं मनसि निधाय श्रीमदानन्दतीर्थभगवत्पादाचार्याः अग्न्यादिदेवतापरत्वेन, तदन्तर्गतविष्णुपरत्वेन, अध्यात्म-परत्वेनार्थं प्रदर्शयामासुः । पुराणश्च इदं रीतित्रयं प्रदर्शयति ।

**त्रयोऽर्थाः सर्ववेदेषु दशार्थाः सर्वभारते ।**
**विष्णोः सहस्रनामाऽपि निरन्तरशतार्थकम् ।।**

देवताश्च ज्ञापयामास श्रीमदानन्दतीर्थभगवत्पादाचार्यः । सर्वस्यापि वेदस्य ।

नारायणः साक्षात् सर्ववेदप्रतिपाद्यः ।

भगवति प्रसिद्धाः पुरुषसूक्तादिविद्या वर्जयित्वा अन्यासां विद्यानां श्रीश्च देवता ।

श्रीदेव्यां प्रसिद्धाः अम्भृणीसूक्ताद्या वर्जयित्वा अन्यासां ब्रह्मैव देवता ।

पूर्वस्यां देवतायां प्रसिद्धा विद्या वर्जयित्वा अन्यासां विद्यानां तारतम्यक्रमेणैव शक्रान्ता देवता मताः ।

**देवता सर्वविद्यानां स्वयं नारायणः प्रभुः ।**
**ऋते तत्र प्रसिद्धाश्च देवता श्रीस्तथाऽत्र च ।**
**ऋते प्रसिद्धा ब्रह्मैव ततस्तेन क्रमेण च ।**
**पूर्वप्रसिद्धवर्जं तु शक्रान्ता देवता मताः ।।**

एतत्सर्वं विव्रियते श्रीमज्जयतीर्थश्रीचरणैः भाष्यटीकायाम् ।

छन्दांसि छन्दोऽभिमानिदेवताश्च प्रदर्श्यन्ते भाष्यकारैः ।

१) गायत्री, बृहती– श्रीः ब्रह्माणी, भारती गरुडः, स्वाहा, तारा,
२) अनुष्टुप्– ब्रह्माणी, रोहिणी,
३) त्रिष्टुप्– इन्द्राणी
४) जगती– वारुणी
५) पङ्क्तिः– शची
६) उष्णिक्– सौरी ।
७) जगती– सर्वदेवस्त्रियः
८) विराट्– मित्रावरुणभार्ये

नात्र देवतानां छन्दसामैक्यमुच्यते किन्तु तदभिमानितया तत्तन्नामवत्वम् । तच्च बह्वीनां देवतानामेकच्छन्दोऽभिमानित्वेन एकनामवत्वं न विरुध्यते । इत्येवमादिरूपेण बहवो विषया निरूपिताः स्वीये ऋग्भाष्ये ।

तदिदं श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं ऋग्भाष्यं प्रथममण्डले चत्वरिंशत्सूक्त-पर्यन्तमस्ति ।

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं ऋग्भाष्यं, श्रीमज्जयतीर्थश्रीचरणविरचिता ऋग्भाष्य-टीका, श्रीराघवेन्द्रतीर्थविरचिता मन्त्रार्थमञ्जरीटीका, श्रीस्कन्दस्वामिविरचितं भाष्यं, वेङ्कट-माधवाचार्यभाष्यं, मुद्गलभाष्यं सायणभाष्यं द्यादेवविरचिता नीतिमञ्जरी, कपालिशास्त्रिविरचितं सिद्धाञ्जनं इति उद्गीथ इति च नैका व्याख्याः सन्ति ।

स्कन्दस्वामिभाष्यं मुद्गलभाष्यं सिद्धाञ्जनश्च प्रथमाष्टकपर्यन्तमस्ति । वेङ्कटमाधवभाष्यं पूर्णतया उपलभ्यते । सायणश्च सम्पूर्णं वर्तते । दशमण्डले उद्गीथभाष्यमस्ति ।

इतःपूर्वमेता व्याख्या विशकलिततया नैकाभिः संस्थाभिः मुद्रापिताः । ता व्याख्या इदानीं एकस्मिन् सम्पुटे विद्याधीशशोधकेन्द्रेण मुद्राप्यते इत्येतन्मोदावहमस्माकम् । नैकेषु सम्पुटेषु वरीवर्ति इयं ऋक्संहिता पदपाठसहिता सव्याख्या च ।

ऋक्संहितायाः प्रथमसम्पुटत्वेन प्रथमध्यायोऽयं मुद्रापितः । अस्मिन् प्रथमाध्याये एकोनविंशतिसूक्ताः सन्ति ।

अस्या ऋक्संहिताया मुद्रापणे धृतमनस्काः जितमनस्काः अस्य शोधकेन्द्रस्य प्रधान-सम्पोषकाः गाढावगाढसुधादिनैकग्रन्थाः पाठपीठाः श्रीपद्मनाभतीर्थादिश्रीमज्जयतीर्थाद्यधिष्ठित-श्रीमदुत्तरादिमठपीठाः वृष्टिखेटाधिष्ठितश्रीमज्जयतीर्थश्रीचरणनलिनचञ्चरीकायिताः श्रीश्री श्रीमत्सत्यात्मतीर्थाः ।

तेषामादेशेन अनुग्रहेण च सम्पादितेयम् । तेभ्यो गुरुवर्येभ्यः नतिशततततीरर्प्यन्ते ।

जयतीर्थविद्यापीठस्य कुलपतयः सुधाविशारदाः, सच्छास्त्रपाठप्रवचनेषु रताः मम आबाल्यं सुधान्तं वेदान्तं उपपदिश्य भगवन्मार्गोपदेशकाः पूज्या गुरवः श्रीगुत्तलाचार्याः । तेभ्यो गुरुवर्येभ्यः नमनानि अर्पयामि ।

विद्याधीशशोधकेन्द्रप्रवर्तकाः अभिवर्धकाश्च मान्याः यशःशरीराः प्रो. के.टि. पाण्डुरङ्गीमहोदयाः । तेषमामपि भूयांसि नमांसि निवेदयामि ।

साधनशरीरनिदानान् श्रीमदाचार्यशास्त्रे दीक्षाप्रदान् श्रीपादचरणासक्तान् तातपादान् श्रीप्रल्हादाचार्यान् शिलातनयोऽहं सभक्ति नमस्कुर्वे ।

मुद्रापणे सम्पादनेच दत्तावकाशेभ्यः द्वैतवेदान्ताध्ययनसंशोधनप्रतिष्ठानाध्यक्षेभ्यः विद्याधीशस्नातकोत्तरसंस्कृतशोधकेन्द्रधर्मदर्शिभ्यो जनादरणीयपाठप्रवचनदीक्षेभ्यः संस्थायाः सर्वविधकार्येषु अनवरतमनितरसाधारण्येन प्रोत्साहकेभ्यो मान्येभ्यः डा. सत्यध्यानाचार्यकट्टि-महाभागेभ्यः मम हार्दानि नमनानि निवेदयामि । विद्याधीशस्नातकोत्तरसंस्कृतशोधकेन्द्रविश्वस्थ-धर्मदर्शिभ्यश्च हार्दानि अभिनन्दनानि । इतः पूर्वं विशकलिततया मुद्रापिताभ्यो नैकाभ्यः संस्थाभ्यश्च हार्दानि अभिनन्दनानि आवेदयामि ।

संहितामिमां सश्रद्धं अल्पियसि काले सुष्टु मुद्रापकेभ्यो वागर्थमुद्रणालयाधिकारिभ्यः धन्यवादान् वितरामि ।

सव्याख्यासपदपाठऋक्संहितासम्पादनं मुद्रापणञ्च विदुषां विद्यार्थिनाञ्चोपकृतये भवतीति विश्वासिमि । इदं कृतिकुसुमं भगवच्चरणनलिनार्पणाय गुरुणां श्रीश्रीमत्सत्यात्मश्रीचरणानां करकमलयोरर्पयामि ।

अध्येतृकरकमलयोश्चोपहारीकरोमि । अनेन कर्मणा गुरुहृद्गो भगवान् प्रीतोऽस्तु दिग्विजय-रामाभिन्नो श्रीमन्मूलसीतासमेतः श्रीमन्मूलरामः श्रीमत्सत्यात्मतीर्थाराधितः ।

सुधीजनविधेयः

**डा. कृष्णाचार्य उपाध्यायः**

**अश्विनशुक्लप्रतिपत्, २०२१** निदेशकः, विद्याधीशस्नातकोत्तरसंस्कृतशोधकेन्द्रः

# ग्रन्थाः लेखकाश्च

## सङ्केताक्षराणि - Abbreviations

| | | | |
|---|---|---|---|
| अ. | अथर्ववेदः (शौनकीयः) | नि.निघ. | निघण्टुः (यास्कीयः) |
| आगृ. | आश्वलायन-गृह्यसूत्रम् | पा. | पाणिनीयाऽष्टाध्यायी |
| आग्निगृ. | आग्निवैश्य-गृह्यसूत्रम् | पाउ. | (पाणिनीये) उणादिसूत्रम् |
| आपगृ. | आपस्तम्ब-गृह्यसूत्रम् | पाम. | (पाणिनीय) महाभाष्यम् |
| आपश्रौ. | आपस्तम्ब-श्रौतसूत्रम् | | (पतञ्जलि-कृतम्) |
| आब्रा. | आर्षेय-ब्राह्मणम् | पावा. | (पाणिनीये) वार्त्तिकम् |
| आश्रौ. | आश्वलायन-श्रौतसूत्रम् | | (कात्यायनीयम्) |
| ऋ. | ऋग्वेदः | बृउ. | बृहदारण्यकोपनिषद् |
| ऋअ.,ऋअनु. | ऋग्वेदीया सर्वानुक्रमणी | बृदे. | बृहद्देवता (शौनक-कृता) |
| | (कात्यायन-प्रणीता) | बौश्रौ. | बौधायन-श्रौतसूत्रम् |
| ऋखि. | खि. (उ.द्र.) | मभा. | महाभारतम् |
| ऋप्रा. | ऋग्वेद-प्रातिशाख्यम् | मस्मृ. | मनुस्मृतिः |
| ऐ.ऐब्रा. | ऐतरेय-ब्राह्मणम् | मा. | माध्यन्दिन-संहिता (शुक्लयजुर्वेदीया) |
| काठ. | काठक-संहिता (कृष्णयजुर्वेदीया) | माश., श. | माध्यन्दिन-शतपथ-ब्राह्मणम् |
| काश. | काण्वशाखीय-शतपथ-ब्राह्मणम् | माश्रौ. | मानव-श्रौतसूत्रम् |
| कौ. | कौथुम-संहिता (सामवेदीया) | मुंउ. | मुण्डकोपनिषद् |
| कौब्रा. | कौषीतकि-ब्राह्मणम् | मै. | मैत्रायणी-संहिता (कृष्णयजुर्वेदीया) |
| खि. | खिलसूक्त-सङ्ग्रहः (ऋग्वेदीयः) | मैउ. | मैत्र्युपनिषद् |
| गी. | भगवद्गीता | या. | यास्कीयं-निरुक्तम् |
| गोब्रा. | गोपथ-ब्राह्मणम् | यास्मृ. | याज्ञवल्क्य-स्मृतिः |
| छांउ. | छान्दोग्योपनिषद् | लुशा. | (लुप्तब्राह्मणे) शाट्यायनकम् |
| जै.जैब्रा.,जैमि. | जैमिनीय-ब्राह्मणम् | वाध. | वासिष्ठ-धर्मसूत्रम् |
| जैउ. | जैमिनीयोपनिषद्-ब्राह्मणम् | वैप. | वैदिक-पदानुक्रम-कोषः |
| तां., तांब्रा. | ताण्ड्य-ब्राह्मणम् | शांआ. | शाङ्खायनाऽऽरण्यकम् |
| तै.तैसं. | तैत्तिरीय-संहिता | शांब्रा. | शाङ्खायन-ब्राह्मणम् |
| तैआ. | तैत्तिरीयाऽऽरण्यकम् | शांश्रौ. | शाङ्खायन-श्रौतसूत्रम् |
| तैउ. | तैत्तिरीयोपनिषद् | षब्रा. | षड्विंश-ब्राह्मणम् |
| तैब्रा. | तैत्तिरीय-ब्राह्मणम् | सुबाउ. | सुबालोपनिषद् |

# समर्पणम्

श्रीमत्परमहंसपरिव्राजकाचार्यवर्यत्वाद्यनेकगुणगणालङ्कृतानाम्,
श्रीमन्मूलसीतासमेतश्रीमन्मूलरामश्रीदिग्विजयरामवेदव्यासदिव्य-
पादपद्माराधकानाम्
श्रीमद्वैष्णवसिद्धान्तप्रतिष्ठापनाचार्य
जगद्गुरुश्रीमन्मध्वाचार्यमूलमहासंस्थान
श्रीमदुत्तरादिमठाधीशानाम्,
श्री १००८ श्रीसत्यप्रमोदतीर्थकरकमलसञ्जातानां

**श्री १००८ श्रीसत्यात्मतीर्थश्रीचरणानां**

करकमलयोः कृष्णाचार्योपाध्यायेन
सभक्तिसश्रद्धं समर्पितमिदं ग्रन्थकुसुमम् ।

विद्याधीशाख्यनामा प्रकटनमकरोत् शोधकेन्द्रोऽयमद्य
मन्त्रार्थेनापि लग्नं जयमुनिसुगुरोष्टीकया युक्तमेतत् ।
ऋग्भाष्यं मध्वमातं वरगुरुकरयोरर्प्यते भक्त्युपेतं
स्कन्दस्वाम्यादिभाष्यं बलिजनिजनिना कृष्णनाम्ना बुधेन ॥

सव्याख्या सपदपाठा

# ऋक्संहिता

## ।। अथ प्रथमोऽध्यायः ।।

श्री आनन्दतीर्थभगवत्पादाचार्यविरचितं ऋग्भाष्यम्

ॐ नारायणं निखिलपूर्णगुणार्णमुच्च-
सूर्यामितद्युतिमशेषनिरस्तदोषम् ।
सर्वेश्वरं गुरुमजेशनुतं प्रणम्य
वक्ष्याम्यृगर्थमतितुष्टिकरं तदस्य ।।

ओमशेषगुणाधार इति नारायणोप्यसौ ।
पूर्णो भूतिवरोनन्तसुखो यव्याहृतीरितः ।।
गुणैस्ततः प्रसविता वरणीयो गुणोन्नतेः ।
भारतिज्ञानरूपत्वाद्भर्गो ध्येयोऽखिलैर्जनैः ।
प्रेरकोशेषबुद्धीनां स गायत्र्यर्थ ईरितः ।।
स पूर्णत्वात्पुमान्नाम पौरुषे सूक्त ईरितः ।
स एवाखिलवेदार्थः सर्वशास्त्रार्थ एव च ।
स एव सर्वशब्दार्थ इत्याहोपनिषत्परा ।
तावा एता ऋच इति विशेषेणाप्यृगर्थताम् ।
यो देवानामिति श्रुत्या देवनाम्नां विशेषतः ।
स्पष्टत्वात्तद्गतत्वेन तत्राहाग्रेऽग्निनामकम् ।
अग्रणीत्वं यदग्नित्वमित्यग्रे नाम तद्भवेत् ।
एवमेवाह भगवान्निरुक्तिं बादरायणः ।
यथैवाग्न्यादयः शब्दाः प्रवर्तन्ते जनार्दने ।
तथा निरुक्तिं वक्ष्यामो ज्ञानिनां ज्ञानसिद्धये ।।
इति तेन ........ .......... .......... ।

श्रीमज्जयतीर्थविरचिता ऋग्भाष्यटीका

**नारायणाभिधं ज्योतिः प्रत्यूहध्वान्तशान्तिकृत् ।**
**कमलाकमलानन्दमन्तःस्वान्तमुपास्महे ।। १ ।।**

**ऋचां पदान्युपादाय तेषां भाष्यपदैः सह ।**
**कुर्मः संवादितामात्रं यथाधीतं यथामति ।। २ ।।**

इहखलु संसाराकूपारपारं जिगमिषतां प्रार्थनीयस्य भगवत्प्रसादस्य तज्ज्ञानमन्तरेणासम्भवात्तदर्थं प्रवृत्ता अपि वेदा अप्रतिपत्तिविप्रतिपत्तिभ्यां न तत्करणतामश्नुवते । अतस्तेषां भगवत्परत्वप्रकारप्रदर्शनार्थं कासाञ्चिदृचां भाष्यं करिष्यन्नाचार्यः प्रारिप्सितस्याविघ्नेन परिसमाप्तये प्रचयायच नारायणप्रणामस्तवने कुर्वन्प्रयोजनं च दर्शयति– **नारायणमिति** ।। अनवधारितस्वरूपस्य प्रणामायोगात्स्वरूपावधारणस्य च लक्षणेन विनाऽसम्भवान्नारायणस्य लक्षणमाह– **निखिलेति** ।। निखिलाः निःशेषाः । पूर्णाः प्रत्येकम् । तेच ते गुणाश्च । अर्ण इत्युदकनाम ततो मत्वर्थे तद्धिता इति डप्रत्ययः । निखिलपूर्णगुणैरर्णः समुद्र इव निखिलपूर्णगुणार्णस्तम् ।

केते गुणा इत्यतो लेशेन दर्शयति– **उच्चेति** ।। अमिताश्चते सूर्याश्च सूर्यामिताः कडाराः कर्मधारय इति विशेषणस्य परनिपातः । उच्चाः सामस्त्येनाविर्भूतप्रकाशाश्च ते सूर्यामिताश्च तेषां द्युतिरिव द्युतिर्यस्यासौ तथोक्तः । यद्वोच्चाश्च ते सूर्याश्च तैरमिता अपरिच्छिन्ना द्युतिर्यस्येति व्याख्येयम् । लक्षणान्तरमाह– **अशेषेति** ।। अशेषेण निरस्ता दोषा यस्मात्सोऽशेषनिरस्तदोषः तम् । लक्षणद्वयं केवलव्यतिरेकिणा साधनीयमिति भावेनाह– **सर्वेश्वरमिति** ।। अस्वतन्त्रस्य प्रपञ्चस्येश्वरेण भाव्यमिति प्रसिद्धमेव । ऋक्प्रतिपाद्यतया नतं गुरुत्वेनापि नमति– **गुरुमिति** ।। तदुपपादयति– **अजेति** ।। ऋगर्थं वक्ष्यामीत्यनेन सन्निधापितमृगर्थस्य वचनं श्रवणं ज्ञानं च तदिति परामृशति । यस्मात्तदृगर्थवचनादिकमस्य नारायणस्यातितुष्टिकरं तस्मात् । तदस्येत्येकं वा पदम् । तस्योक्तलक्षणस्यास्य प्रतिपिपादयिषिततया बुद्धिसन्निहितस्येति ।

नन्वेवं चेत्कथं कृतनारायणनुतिप्रणामस्यापि भाष्यकारस्य वक्ष्याम्यृगर्थमिति प्रतिज्ञा न पारङ्गतेति । मैवं भोः । उक्तमेतत् कासाञ्चिदृचामेव व्याख्या प्रतिज्ञातेति । अत एव ह्युपक्षत्रमिति परमेश्वरस्य भयादिदोषराहित्यं तत्प्रसादाद्भयाभावलक्षणं मोक्षं च प्रतिपादयन्तीं

सर्वशास्त्रार्थोपसंहाररूपामृचं व्याख्याय समापितो ग्रन्थः । प्रसिद्धं धनमेव हीत्यन्ते माङ्गलिकं पदं चोपनिबद्धम् । असमस्तव्याख्यानप्रतिज्ञासूचनाय मध्य एवैको वर्गो न व्याख्यातः । नकिर्माकिरित्यादि व्याख्यानप्रकारशिक्षणं चैतमेवार्थं प्रकाशयतीति ।

नन्वग्न्यादिप्रतिपादनपराणामृचां व्याख्यानादिकं कथं नारायणस्यातितुष्टिकरम् ? न । सकलवेदानां मुख्यतो भगवत्प्रतिपत्तिहेतुत्वात् । कुत एतदित्यत आह– **ओमिति** ।। असौ परमेश्वरः । ओङ्कारार्थस्तावत् । केन निमित्तेन । **अशेषगुणाधार इति** । इतिशब्दो हेतौ । यथोक्तं ओतत्ववाचीह्योङ्कार इति । कुत इत्यतश्चोक्तमशेषेति । ओङ्कारो ह्यशेषगुणाधारत्वं वक्ति । तथाभूतश्च परमेश्वर एवेति स एवोङ्कारार्थः । किं च नारायणशब्दो हि भगवति प्रसिद्धः स च तस्य गुणपूर्तिवाची तत्समाख्यानादोङ्कारोपि तत्पर इति निश्चीयत इत्याह– **नारायणोऽप्यसाविति** ।। किमतो यद्येवमित्यत आह– **पूर्णइति** ।। यद्यस्मादेवमोङ्कारार्थस्तस्माद्व्याहृतीरितः स एव । प्रणवार्था व्याहृतय इति वचनात् । किन्निमित्तम् । यद्यस्मात्पूर्णो भूतिवरोनन्तसुखश्च तस्माद्व्याहृतीरितः । भूबहौ बहुः पूर्णतायामित्युक्तत्वाद्भवतेः कि(पि)प् पूर्णत्वाद्भूः । भूत्यैश्वर्येण वरो महैश्वर्यवानिति भुवः । भवतेरौणादिको डुप्रत्ययः । वरशब्दस्यान्तलोपश्च निरुक्तत्वात् । यथोक्तं वर्णागमो वर्णविपर्ययश्च तथा परौ वर्णविकारनाशौ । धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तमिति । सु शोभनम् वः सुखं यस्य । शोभनताच सुखस्यानन्ततयेत्यनन्तसुखत्वात्सुवः । स्वरिति पक्षे निरुक्तत्वादुकारलोपः । शब्दस्वाभाव्यादव्ययत्वम् । किं तथाऽपीत्यत आह– **गुणैरिति** ।। यस्माद्व्याहृतीरितस्तस्मात्स एव गायत्र्यर्थ ईरितः । व्याहृत्यर्थत्वाद्गायत्र्याः । केन निमित्तेन । गुणैस्तत इति तत् त्यजियजितनिभ्यो डिदिति तनातेरदिप्रत्ययः । योग्यतया गुणानां सम्बन्धः । प्रसविता जगतो जनक इति सविता । षूङ्-प्राणिप्रसव इत्यस्मात्तृच् । वरणीयो भजनीय इति वरेण्यः । वृञ एण्य इति वृणोतेः कर्मण्येण्यः । गुणोन्नतेर्हेतोर्वरणीय इति तद्वरेण्यशब्दार्थयोर्हेतुहेतुमद्भावो दर्शितः । भा दीप्तिः । रतिः क्रीडा । गत्यर्थानां ज्ञानार्थत्वाद्गमेर्ज्ञानार्थता । भादीप्तौ रमुक्रीडायां गम्लृगतौ धातुसमुदायादसुन् । उणादयो बहुलमित्युक्तत्वात् । अदिभूभ्यां डुतजिति यथा । असुन्प्रत्ययसंयोगेन भातेर्ह्रस्वता रमेर्गमेश्च टिलोपः । देवशब्दस्तूत्तरत्र व्याख्यास्यते । धीमहीत्यस्य तात्पर्यं ध्येय इति । ध्यायतेः सम्प्रसारणं विकरणलोप आत्मनेपदं च्छांदसम् । व्यत्ययो बहुलमिति वचनात् । अखिलैर्जनैरिति बहुवचनार्थः ।

तृतीयपादतात्पर्यं– **प्रेरक इति** । न इति बहुवचनप्रयोगादशेषेत्युक्तम् । चुदप्रेरण इत्यस्माल्लेट् । एवं योजनीयम् । यो नोस्माकमशेषजीवानां धियो बुद्धीः प्रचोदयात् प्रेरयेत् । तस्य सवितुर्देवस्य नारायणस्य तद्गुणैस्ततं तस्मादेव वरेण्यं भर्गो रूपं धीमहि चिन्तयाम इति । गायत्र्यर्थत्वेपि भगवतः किमायातं प्रकृते अत आह– **स इति** ।। यतो गायत्र्यर्थस्तस्मात्स हरिरेव पौरुषे सूक्त ईरितः प्रतिपादितः । गायत्र्यर्थत्वात्तस्य । न च पुरुषसूक्ते पुरुषः प्रतिपाद्यो न विष्णुरिति वाच्यम् । यतः पूर्णत्वात्पुमान्पुरुषोनाम स एव । पृपालनपूरणयोः अस्मात्पुरः कुषन्निति कुषन्प्रत्ययः । तथापि किमित्यत आह– **स एवेति** ।। यतः पुरुषसूक्तार्थो भगवांस्तस्मात्स एवाखिलवेदार्थः । पुरुषसूक्तार्थत्वात्तेषाम् । वेदार्थत्वात्स एव सर्वशास्त्रार्थश्च । स्मृतीनां श्रुतिमूलत्वात् । ततश्च स एव सर्वशब्दार्थः । तेषां वैदिकत्वादित्येतद्द्वयं प्रसङ्गादुक्तम् ।

एवमनुमानेन परमेश्वरस्य सर्ववेदार्थत्वं प्रसाध्य श्रुत्यापि साधयति– **इत्याहेति** ।। इत्येतमुक्तमर्थं परमेश्वरस्य सर्ववेदार्थत्वं तावा एताः सर्वाऋचः सर्वेवेदाः सर्वेघोषा एकैव व्याहृतिः प्राण एवेति परोत्कृष्टा विस्पष्टवादिनीति यावत् उपनिषदप्याह । अनेनैव मन्त्राणां कर्मणि विनियुक्तानामविवक्षितार्थत्वेनाव्याख्येयत्वमित्यपि परास्तम् । नन्वेवं सर्ववेदानां भगवत्परत्वाद्यस्य कस्यापि वेदस्य व्याख्यानादिकं तस्य तुष्टिकरमिति किमृचामेव व्याख्यानेनेत्यत आह– **विशेषेणेति** ।। सर्वे वेदा इत्युक्त्वा यदृच इति पुनरभिधत्ते तेन जानीमो विशेषेणाप्यृगर्थतामीश्वरस्याहोपनिषदिति । अन्यथा तद्वैयर्थ्यात् । अतस्तद्व्याख्यानादिकं तस्यातितुष्टिकरमिति तदेव क्रियत इति । तावा एता ऋच इतीत्यस्यावृत्त्या योज्यम् । वेदान्तराद्विशेषतः कथमृचां परमेश्वरपरत्वमिति तं प्रकारमाह– **य इति** ।। यो देवानां नामधा एक एवेति श्रुत्याऽग्न्यादिदेवनाम्नां तद्गतत्वेन भगवद्वाचित्वेन कारणेनर्चां तद्गतत्वेन विशेषतः स्पष्टत्वाद्विशेषेणाप्यृगर्थतामाहेति ।

इदमुक्तं भवति । वेदान्तरस्य खल्वापाततः कर्मादिप्रतिपत्तिपरस्य भगवत्परताज्ञानं मन्दानां दुःशकं भवति । ऋचां त्वग्न्यादिगुणवर्णनपराणामग्न्यादिनाममात्रस्य भगवद्वाचित्वज्ञानमात्रेण भगवत्परत्वावधारणं सुकरमिति तासां विशेषतः परमेश्वरपरत्वमुच्यत इति । तदुक्तम् । ऋचस्तु विशेषत इन्द्रादिनामवतो विष्णोर्गुणानल्पज्ञानामपि प्रकाशयन्तीति प्राणो नारायण एवेति विद्यादिति ।

एवं ऋगर्थव्याख्यानमुपपाद्य सूक्तस्य तात्पर्यं तावदाह– **तत्रेति** ।। तत्र ऋक्षु । अग्रे प्रथमसूक्ते । अग्निनामकं भगवन्तमाह प्रतिपादयति वेदः । अग्निनामवतः प्रथमप्रतिपादने को हेतुरित्यत आह– **अग्रणीत्वमिति** ।। यद्यस्मादग्रणीत्वमग्नित्वम् अग्निशब्दाभिधेयम् इति तस्मात् । तन्नाम अग्निनाम । अग्रे प्रथमसूक्ते । प्रयुक्तं भवेत् । सह्यग्रणीर्नाम यः स्तुत्यादावग्रे वर्तते । तथात्वं चेश्वरस्याग्निशब्दो वक्ति । अतस्तन्नाम्नैवाग्रे स्तुतिरुपपन्नेति । अत्र वृद्धसंमतिमाह– **एवमेवेति** ।। अनेनैवाभिप्रायेणाग्निशब्दमादिं कृत्वा भगवान्बादरायणः सर्वशब्दानामीश्वरपरतया निरुक्तिं निर्वचनमाह । तदेव कुत इत्यत आह– **यथैवेति** ।। यथा येन प्रकारेण निरुक्तौ कृतायाम् । इति भगवतः प्रतिज्ञावाक्ये-नाग्निशब्दमादिं कृत्वा निरुक्तिमाहेति ज्ञायत इत्यर्थः ।

नहि भगवतो यादृच्छिकी प्रवृत्तिः नाप्येतद्विहाय निमित्तान्तरकल्पने प्रमाणमस्ति यत एवमग्निशब्दस्य प्रथमत्वमुपपन्नं तेन कारणेन तत्राहाग्रेऽग्निनामकमिति सम्बन्धः । एवमुत्तरत्रापि सूक्तादिक्रमनियमे कारणानि विशेषशास्त्रबलेन ज्ञातव्यानीति प्रदर्शनार्थमिदमुक्तम् । चिरन्तन-निरुक्त्याद्यनुसारेण प्रवृत्तेऽस्मद्व्याख्यानेऽर्वाचीननिरुक्त्यादिविसंवादो नादरणीय इत्येतदप्यनेन सूचितं भवति । ऋगर्थश्च त्रिविधो भवति एकस्तावत्प्रसिद्धाग्न्यादिरूपः अपरस्तदन्तर्गतेश्वरलक्षणः अन्योऽ-ध्यात्मरूपः । तत्त्रितयपरं चेदं भाष्यम् ।

**श्री राघवेन्द्रतीर्थविरचिता मन्त्रार्थमञ्जरी**

अशेषगुणसम्पूर्णं सर्वदोषविवर्जितम् ।।
अनन्ताम्नायसंवेद्यं वन्देऽहं कमलापतिम् ।। १ ।।

प्रणम्य श्रीमदानन्दतीर्थादिगुरुशेखरान् ।।
सङ्ग्रहीष्यामि ऋग्भाष्यप्रोक्तानर्थानृचां स्फुटम् ।। २ ।।

ऋक्शाखागतैकोत्तरसहस्रसूक्तमध्ये कानिचिच्चत्वारिंशत्सूक्तानि भगवत्पादैरग्न्यादिदेवतापरत्वेन तदन्तर्गतविष्णुपरत्वेनाध्यात्मपरत्वेन चेत्येवं त्र्यर्थपरतया व्याख्यातानि ।। तत्रैके चोदयन्ति– ''तत्तत्कर्मणि विनियुक्तानां मन्त्राणामर्थविवक्षावत्त्वस्य पूर्वतन्त्रीयाध्याय द्वितीयपादे 'तदर्थशास्त्रात्' इति मन्त्राधिकरणे सिद्धत्वेन मीमांसकाभिमतशब्दसामर्थ्यरूपलिङ्गेन तत्तत्प्रकरणेन च तत्त-देवतार्थकत्वमेवोचितम् । न तु विष्ण्वाद्यर्थत्वमपि । मानाभावात् । अनेकार्थत्वस्यान्याय्यत्वाच्च ।

सर्वसूक्तानां विष्णुसूक्तत्वापत्त्या आग्नेयादिसूक्तव्यवस्थानुपपत्तेश्च । अनेकार्थत्वे तन्निबन्धनवाक्य-भेदापत्तेश्च । 'अर्थैकत्वादेकं वाक्यम्' (२।१।४६) इति जैमिन्युक्त्या अर्थैकत्वनिमित्तकत्वादेक-वाक्यताया इत्यादि ।।'' तत्र ब्रूमः– 'ओङ्कारस्तावद्ब्रह्मवाची' 'ओमिति ब्रह्म' (तै०उ०१) इत्यादिश्रुतेः । 'ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः' (गी.१७।२३) इत्यादिस्मृतेः ।। ब्रह्मोङ्कारवाच्यम् । गुणपूर्तिरूपोङ्कारप्रवृत्तिनिमित्तवत्त्वात् । यत् यच्छब्दप्रवृत्तिनिमित्तवत् तत् तच्छब्दवाच्यम् । यथा घटादिपदवाच्यं घटादिकमिति वा । ओङ्कारो ब्रह्मवाची । तन्निष्ठधर्म-प्रवृत्तिहेतुकत्वात् । सामान्यव्याप्त्या संमतवदिति वा । इत्यनुमानाच्च ।। ओतत्ववाची ह्योङ्कारः' (१।१।१) इत्यनुव्याख्यानसुधयोरोङ्कारस्य गुणपूर्तिनिमित्तकत्वम्, ब्रह्म च गुणपूर्णमिति, तदेव विष्णुरिति च, व्यक्तम् ।।

वेदाश्चोङ्कारस्य व्याख्यानम् । 'ओङ्कारेण सर्वा वाक् सन्तृण्णा' (२।१३) इति छन्दोगश्रुतेः ।। तथा च, विष्णुः सर्ववेदप्रतिपाद्यः । तद्व्याख्येयोङ्कारार्थत्वात् । यो यद्व्याख्येयार्थः स तद्व्याख्यान-प्रतिपाद्यः । यथा संमत इति वा । वेदा विष्णुपराः । विष्णुपरोङ्कारव्याख्यानत्वात् । यो यत्परशब्दव्याख्यानं स तत्परः । यथा संमत इति वा । इत्यनुमानेन सर्ववेदानां विष्ण्वर्थत्वसिद्धेः 'मानाभावात्' इत्ययुक्तम् ।। वेदानामोङ्कारस्य व्याख्यानव्याख्येयभावश्च साक्षादेव वा, अनुव्याख्यानऋग्भाष्ययोरुक्तदिशा व्याहृतिगायत्रीपुरुषसूक्तद्वारा वा, इति ध्येयम् ।

किं च, 'अदुःखमितरत्सर्वं जीवा एव तु दुःखिनः ।। तेषां दुःखप्रहाणाय श्रुतिरेषा प्रवर्तते' इति (परमश्रुत्या) श्रुतेर्जीवानां दुःखप्रहाणरूपबन्धनिवृत्तिलक्षणमोक्षार्थं प्रवृत्तत्वात् । सत्यबन्ध-निवृत्तेश्च 'यस्य प्रसादात्' इत्यादि (नारायण) श्रुत्या राजप्रसादसाध्यनिगडबन्धनिवृत्तिदृष्टान्तेन च परमपुरुषप्रसादसाध्यत्वात् । प्रसादस्य च 'प्रियो हि ज्ञानिनोऽत्यर्थम्' (गी.७।१७) इत्यादिना ज्ञानसाध्यत्वात् । शास्त्रैकसमधिगम्यपुरुषज्ञानस्य च वेदैरेवोत्पाद्यत्वात्, वेदानां विष्ण्वर्थत्व-सिद्धिः ।। तथा च प्रयोगः सर्वे वेदा विष्णुज्ञानजनकाः । तत्साध्यमोक्षार्थं प्रवृत्तत्वात् । यो यत्साध्ययदर्थं प्रवृत्तः स तज्जनकः । यथा भोजनक्रियासाध्यतृप्त्यर्थं प्रवृत्तो भोजनक्रियाजनक इति वा । यः शब्दो यत्साध्ययदर्थं प्रवृत्तः स तज्जनकः । यथा घटादिज्ञानसाध्यघटादिव्यवहारार्थं प्रवृत्तो घटादिशब्द इत्यादिरूपेण वा ध्येयः ।। अपि च, नापातप्रतीत एव श्रुत्यर्थः । तथात्वे, कर्मतन्त्रे नामपादीयचित्राज्याधिकरणे 'आज्यैः स्तुवते' इति वाक्यस्थाज्यपदस्य 'यदाजमीयु-

स्तदाज्यानामाज्यत्वम्' इति वाचनिकनिरुक्त्यादिबलेन मन्त्रार्थत्वं नोच्येत । ब्रह्मतन्त्रे चाकाशाधिकरणादौ 'आकाश इति होवाच' (छा.उ.१।९) इत्यादिवाक्यस्थाकाशादिशब्दस्य 'स एष परोवरीयान्' (छा.उ.१।९) इत्यादिवाक्यशेषस्थलिङ्गादिबलेन विष्ण्वर्थत्वं नोच्येत । किं तु मीमांसित एव । मीमांसा चोपक्रमोपसंहाराभ्यासापूर्वताफलार्थवादोपपत्तीनां श्रुतिलिङ्गवाक्य-प्रकरणस्थानसमाख्यानां चानुगुण्यानुसन्धानम् । उपपत्तिश्च । मानान्तरोपबृंहितत्वमानान्तर-विनियुक्तत्वादिका प्रागुक्तानुमानरूपा च, 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्' (गी.भा.उदा.स्मृ.) इत्यादेः ।। तथा च, अग्न्यादिशब्दानां निगमनिघण्ट्वादिरूपानुशासनबलेनाग्नेयादि कर्मादिसिद्धि-रूपप्रयोजनबलेन च प्रसिद्धाग्न्यादाविव 'ॐ चमसवदविशेषात् ॐ' (१।४।९) इत्यादौ भाष्योक्तदिशा 'नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति' (भाल्ल.) इति 'हन्तैतमेव पुरुषं सर्वाणि नामान्यभिवदन्ति' (१।४।२४ सू.भा.उदा.) इति 'सर्वनामा सर्वकर्मा सर्वलिङ्गः' (म.उ.) इति यो देवानां नामधा एक एव' (ऋ.म.१०।८२।३) इत्यादि श्रुतिभिः 'सर्वच्छन्दोभिधो ह्येष सर्वदेवाभिधो ह्यसौ' (वाम.पु.) इत्यादिस्मृतिभिश्च सामान्यतः' 'इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान्' (ऋ.म.१।१६४।४६) इति 'यमिन्द्रमाहुर्वरुणं यमाहुर्यं मित्रमाहुर्यमु सत्यमाहुः' (आ.उ.भा.२ उदा.) इत्यादिश्रुतिभिः 'बृंहणाद्ब्रह्मनामासावैश्वर्यादिन्द्र उच्यते । एवं नानाविधैः शब्दैरेक एव त्रिविक्रमः । वेदेषु सपुराणेषु गीयते पुरुषोत्तमः' (ब्रह्मा.पु.) इत्यादिस्मृतिभिश्च विशिष्यानु शासनरूपाभिर्विष्णावपि शक्तेः सिद्धत्वेन विष्ण्वर्थत्वस्यापि मन्त्रेषु न्याय्यत्वात् ।

एवं हि तत्त्वविदां मतं द्विविधा ह्यग्न्यादिशब्दाः । नीरसंवलितक्षीरवत् अयःपिण्डसमारूढ-वह्निवच्च । अग्न्यादितत्तज्जीवचिता संवलितं यद्भगवच्चिद्रूपं विशिष्टं सपिण्डं तद्वाचिनः केचित् । केवलशुद्धचिद्वाचिनः केचिदिति ।। शुद्धचिद्वाचिनोऽपि कचिद्भगवच्चिद्वाचिनो जीवचिद्वाचिनश्चेति द्वेधा ।। तत्राद्याः– 'अग्निमीळे' (ऋ.म.१।१।१) इत्यादौ प्रसिद्धाग्न्यादिदेवं विष्णुं च वक्ष्यमाण-परममुख्यमुख्यवृत्तिभ्याम्, 'गङ्गायां मीनघोषौ' इत्यत्र मुख्यामुख्यवृत्तिभ्यां प्रवाहतीररूपार्थद्वयं गङ्गापदमिव, 'राजा कुवलयोल्लासी' इत्यादौ रूढियोगाभ्यां कुमुदभूवलयरूपार्थद्वयं कुवलयपदमिव, युगपदेव व्युत्पत्तिमतः प्रत्याययन्ति ।। अन्त्यास्तु– 'अव्यक्तात्पुरुषः परः' (का.उ.१।३।११) इत्यादावव्यक्तादिपदं प्रकृतीश्वराविव 'शरीररूपकविन्यस्तगृहीतेः' (१।४।१) इति न्यायात्

'अयमग्निर्वैश्वानरः' (७।९) इति काण्वश्रुत्यादौ भगवच्चिन्मात्रवाचिनस्तदेव प्रत्याययन्ति । 'इन्द्रस्यात्मा' (तै.आ.३।११।३) 'वायोरात्मानम्' (तै.आ.३।११।४) इत्यादौ 'परिम्रियन्ते विद्युद्वृष्टिश्चन्द्रमा आदित्योऽग्निः' (ऐ.ब्रा.८।५।२८) इत्यादौ 'भयादस्याग्निस्तपति' (का.उ. २।३।३) इत्यादौ च केवलाग्न्यादिचिद्वाचिनस्तन्मात्रमेव प्रत्याययन्तीति, तत्रापि तदधीनत्व-न्यायानुसन्धाने तु विष्ण्वर्थत्वधीरस्त्येव, उक्तं ह्यनुव्याख्याने– 'तेषु तेषु पदार्थेषु रूढिरङ्गीकृता यतः ।। प्रयोजनबहुत्वेन तस्य तस्याविरोधतः ।। उपदेशादिसामर्थ्याद्विष्णौ शक्तिश्च गृह्यते ।। तथाप्येतद्विरोधे तु तद्वाचित्वमपोह्यते' (१।४।११) इत्यादि, तथा– 'स्वातन्त्र्यार्थमभिप्रेत्य दोषशब्दाश्च विष्णवि' (१।४।३) इति च ।

ननु च 'नामानि सर्वाणि' इति (भाल्ल.) श्रुतिरप्रसिद्धा । 'यो देवानां᳚म्' (ऋ.म. १०। ८२।३) इत्यादिका तु विश्वकर्मसूक्तस्था । कथं विष्णोः सर्वदेवनामवाच्यतया नामधारकत्वोक्तिपरा ? सूक्तानां विष्ण्वर्थत्वे विवदमानं प्रति तद्वाक्यस्य विष्णुपरत्वासिद्धेः । अन्यथान्योन्याश्रयात् । इति चेन्मैवं वोचः– अर्वाचीनानामप्रसिद्धत्वेऽप्यनेकशाखाभिज्ञभाष्यकाराद्युक्तवाक्ये श्रुतित्वासंदेहात् । अन्यथा, शाबरभाष्यादावौदुम्बराद्यधिकरणेषु 'ऊर्जपशूनाप्नोत्यूर्जोऽवरुध्य' इत्यवरुध्यान्तवाक्यस्या-प्रसिद्धस्योक्तिर्न स्यात् । परभाष्ये च 'ॐ अत एव चोपमा सूर्यकादिवत् ॐ' (३।२।१८) इत्यादौ 'यथा ह्ययं ज्योतिरात्मा विवस्वान्' इत्याद्यप्रसिद्धश्रुत्युक्तिर्न स्यात् । श्रीभाष्ये च 'ॐ ज्योतिश्चरण' (१।१।२४) इत्यत्र 'इन्द्रः शचीपतिर्बलेन पीडितः ।। दुश्च्यवनो वृषा समुत्ससास हि' इत्याद्यप्रसिद्धवाक्योक्तिर्न स्यात् ।। यद्यपि 'नाम॒धा' (ऋ.म.१०।८२।३) इति वाक्यं विश्वकर्मसूक्तस्थम्, इति तत्रोक्तः समाधिः 'नापातप्रतीत एव श्रुत्यर्थः अपि तु मीमांसित एव' इति । तथा च तत्र सूक्ते अ॒जस्य॒ नाभा॒वध्येकमर्पि॑तम्' (ऋ.म.१०।८२।६) इति वाक्यशेषोक्तेन 'अजस्य नाभाविति यस्य नाभेरभूत् श्रुतेः पुष्करं लोकसारम् ।। तस्मै नमो व्यस्तसमस्तविश्वविभूतये विष्णवे लोककर्त्रे' इति स्कान्दस्मृतिसिद्धपद्मनाभत्वलिङ्गेन निरवकाशेन विश्वकर्मश्रुतिसूक्तयोर्विष्णौ दत्तपदत्वात् ।।

न चैवमपि 'तत्रापि यौगिको मुख्यः सर्वत्रास्ति स वैदिके' इति कर्मनिर्णयोक्त्या वक्ष्यमाणादिशा च विष्णौ शब्दानां यौगिकत्वाद्योगाद्रूढे रथकाराधिकरणन्यायेन बलवत्तया न मन्त्रेष्वग्न्यादिशब्दै-

र्विष्णुधीरिति वाच्यम् । अङ्गरूढितो वाचनिकयोगस्य निरवकाशत्वेन 'आनर्थक्यप्रतिहतानां विपरीतं बलाबलम्' इति न्यायेन बलवत्त्वात् । अत एव 'ॐ कम्पनात् ॐ' (१।३।३९) इत्यत्र 'महद्भयं वज्रमुद्यतम्' (का.उ.२।३।२) इति वाक्ये वज्रशब्देन रूढ्यैवेन्द्रायुधस्य कृत्रिमाकृत्रिमयोः कृत्रिमस्य ग्राह्यत्वात्, 'यू स्त्र्याख्यौ नदी' इति सांकेतिककृत्रिमनद्या एव 'आण्नद्याः' इत्यादौ ग्रहणमिव, अन्यथा संज्ञाकरणानर्थक्यादित्युक्तम् । तदुक्तं चन्द्रिकायाम् 'श्रुत्यर्थनिर्णयार्थत्वात्स्मृतेस्तत्र निरूपितः ।। अर्थो ग्राह्यो वेदवाक्ये तदभावे तु लौकिकः' इति । अत्र वक्ष्यमाणाग्न्यादि शब्दयोगस्य वेदव्यासकृतनिरुक्त्यादिस्मृतिसिद्धत्वादिन्द्राग्न्यादिशब्दप्रवृत्ति-निमित्तस्य परमैश्वर्यादिरनन्याधीनत्वनिरवधिकत्वाभ्यां 'न ते॑ विष्णो॒ जाय॑मानो॒ न जा॒तः' (ऋ.म.७।९९।२) इत्यादिश्रुतिस्मृतिबलेन विष्णावेव मुख्यतः सम्भवेन योगस्य महायोगरूपत्वाच्च हरौ योगोऽपि बलवानेव । निमित्ताधिक्ये नैमित्तिकोत्कर्षस्य न्याय्यत्वात् । किं च, 'इन्द्रं॑ मि॒त्रम्' (ऋ.म.१।१६४।४६) इत्यादिश्रुतौ 'आ॒हुः' इत्युक्तप्रयोगबाहुल्यरूपलिङ्गबलेन हरौ विद्वद्रूढे-रनुमानाच्च । सा च पूर्वतन्त्रस्थाद्याध्यायतृतीयपादीयव्यवहाराधिकरणोक्तदिशा अङ्गरूढितो बलवती, योगवृत्तावल्पत्वमहत्त्वयोः शब्दप्रवृत्तिनिमित्तस्याल्पत्वमहत्त्वाभ्यामेव सिद्धत्वात् । रूढावङ्ग-रूढिर्विद्वद्रूढिरिति द्वैविध्यस्य तु 'ॐ समाकर्षात् ॐ' (१।४।१६) इत्यधिकरणे चन्द्रिकादौ समर्थनात् ।

न च 'इन्द्र॑म्' (ऋ.म.१।१६४।४६) इत्यादिकमभेदोक्तिपरम्, न शब्दवाच्यत्वोक्तिपरमिति वाच्यम् । ऐतरेयभाष्येऽन्तर्नयचन्द्रिकायां चास्य निरासात् । अपि च, ऐतरेये– 'तं यच्छतं वर्षाण्यभ्यार्चत्' (२।२।१) इत्यादौ 'सर्वे वेदाः सर्वे घोषा एकैव व्याहृतिः प्राण एव प्राण ऋच इत्येव विद्यात्' (२।२।२) इत्यन्तवाक्ये 'एतम्' इत्यनेन 'प्राणस्तम्' (२।१।८) इत्यत्र ब्रह्मत्वेन निर्णीतं 'प्राणो ह्येष य एष तपति' (२।२।१) इति पूर्ववाक्यस्थं प्राणं परामृश्य पुष्कलावयवार्थोक्त्या महायोगेन 'आचक्षते' इत्युक्त्या विद्वद्रूढ्या च लौकिकरूढिप्राबल्य-प्रसक्तमन्येषां मुख्यत्वमवधारणेन निरस्य 'तस्माच्छतर्चिनस्तस्माच्छतर्चिन इत्याचक्षते' (२।२।१) इत्यादिरूपेणाभ्यासेन सतात्पर्यं विष्णौ सर्वशब्दमुख्यार्थत्वस्योक्तिपूर्वं सर्ववेदानां विष्णुपरत्व-स्योक्तत्वेन मन्त्रेष्वग्न्यादावङ्गप्रसिद्धिमात्रेण विष्णुप्रतीत्यपहारो न शक्यः । तदुक्तमनुव्याख्याने 'आचक्षत इति ह्यत्र सन्तमित्यवधारणात् । योगस्य रूढेः प्राबल्यं विद्वद्रूढिं च तत्र गाम् । बहुशो दर्शयत्यञ्जस्तात्पर्यात्सनिरुक्तिकम्' (१।४।११) इति ।

'अवं स्वराति गर्गरो गोधा परिं सनिष्वणत् ।। पिङ्गापरिं चनिष्कददिन्द्राय ब्रह्मोद्यतम्' (ऋ.म.८।६९।९) इति श्रुतौ गर्गरगोधादिशब्दानामपीन्द्रशब्दिते परमेश्वरे विष्णौ मन्त्रशास्त्र-सिद्धनादरूपवर्णाभिव्यक्तिद्वारा वाचकत्वमुक्त्वा ब्रह्मशब्दार्थस्य वेदस्य विशिष्य तद्वाचित्वोक्तेश्च ।। न चेन्द्रशब्दः पुरंदरपरः । प्रागुक्तमहायोगविद्वद्रूढिविरोधात् । इन्द्रस्य गोधादिशब्दवाच्यत्वस्य मुख्यतो वेदादिबोध्यत्वस्य च बाधाच्च । 'मत्सिं सोम वरुणं मत्सिं मित्रं मत्सीन्द्रमिन्दो पवमान विष्णुम्' (ऋ.म.९।९०।५) इति सामानाधिकरण्येन विशिष्येन्द्रशब्दस्य विष्णौ सिद्धत्वाच्च 'णकारो बलं षकारः प्राण आत्मा' (३।२।६) इति विष्णुशब्दान्तर्गतणकारषकारयोर्बलचेष्टार्थकत्वमुक्त्वा ''सयोहेतौ णकारषकारावनुसंहितमृचो वेद'' (३।२।६) इत्यैतरेयश्रुतौ णकारषकारार्थो वेदे सर्वत्र पूर्वोत्तरवर्ण संहितार्थ इत्युक्तत्वाच्च । 'अः इति ब्रह्म' (ऐ.उ.२।३।८) इति ब्रह्मवाचितयोक्तेना-कारेण सह सर्वशब्दानां समानार्थत्वस्य 'अकारो वै सर्वा वाक्' (ऐ.उ.२।३। ६) इति श्रुतौ 'अकारः सर्ववागात्मा परब्रह्माभिधायकः' (गरु.पु.) इति स्मृतौ चोक्तत्वाच्च । 'सृजतो हि ते श्रुतयोऽनुवर्तन्ते नैवासृजतः कं वा विदधते कं वा निषेधन्ति स्तुतिमात्रा एव ते स्युः' इति श्रुतिगीतातात्पर्योक्त(शाण्डिल्य)श्रुतौ विध्यादिभागस्यापि भगवतः स्तुतित्वोक्तेश्च । 'यद्वै किञ्चैतदध्यगीष्ठा नामैवैतन्नाम वा ऋग्वेदो यजुर्वेदः सामवेद आथर्वणश्चतुर्थः' (१) इत्यादिना 'नामैवैतत्' (१) इत्यन्तेन च्छान्दोग्ये सप्तमाध्याये नारदसनत्कुमारसंवादे 'यद्वाच ओमिति यच्च नेति यच्चास्याः क्रूरं यदु चोल्बणिष्णु तद्वियूय कवयोऽन्वविन्दन्नामायत्ता समतृप्यन्छ्रतेऽधि' (२।३।८) इत्यैतरेये च सर्ववैदिकशब्दानां भगवन्नामतोक्तेश्च । तथा च सूत्रम्– 'ॐ संज्ञातश्चे-त्तदुक्तमस्ति तु तदपि ॐ' (३।३।९) इति 'सोऽहं (भगवो) नामविदेव' (छा.उ.७।१ शा.) इति श्रुत्या सर्वविद्यानां भगवत्संज्ञात्वाद्भगवद्गुणाभिधायकत्वात्सर्ववेदोक्तगुणोपसंहारः कार्य इति चेत्तदुक्तमुपसंहारसूत्र इति व्याख्यानात् ।

अपि च, 'कश्छन्दसां योगमा वेंद धीरः' (ऋ.म.१०।११४।९) इति श्रुतौ 'मां विधत्तेऽभिधत्ते मां विकल्प्योऽपोह्य इत्यहम् ।। इत्यस्या हृदयं साक्षान्नान्यो मद्वेद कश्चन' (भाग.११।२१।४३) इति स्मृतौ विधिभागदेवताभागादिरपि मामेव बोधयतीत्यर्थस्य दुर्ज्ञानत्वोक्तेश्च । 'नारायणपरा वेदा देवा नारायणाङ्गजाः' (१५) इति द्वितीयस्कन्धपञ्चमाध्याये 'वासुदेवपरा वेदा वासुदेवपरा मखाः' (२९) इति प्रथमस्कन्धद्वितीयाध्याये 'वेदे रामायणे चैव

पुराणे भारते तथा । आदावन्ते च मध्ये च विष्णुः सर्वत्र गीयते' इति (ह.वं.) स्मृतौ च सर्वत्र विष्णुपरत्वोक्तेश्च । 'वेदैश्च सर्वैरहमेव वेद्यः' (गी.१५।१५) इत्यवधारणेन कृष्णेन स्वस्यैव परममुख्यत्वेन सर्ववेदप्रतिपाद्यतोक्तेश्च । 'सर्वे वेदा यत्पदमामनन्ति' (का.उ.१।२।१५) इत्यत्राङ्गास्य मुख्यतोऽशेषवेदवेद्यत्वमुक्त्वा 'तद्विष्णोः परमं पदम्' (१।३।९) इत्युपसंहाराच्च काठके । समन्वयसूत्रे सूत्रकृताप्यशेषवेदसमन्वयं हरौ प्रतिज्ञाय 'ॐ आनन्दमयोऽभ्यासात् ॐ' (१।१।१२) इत्यादिनाध्यायेन तस्य । प्रपश्चनाच्च । 'ॐ ज्योतिश्चरणाभिधानात् ॐ' (१।१।२४) इत्यत्राशेषसूक्तोपलक्षकत्वेन 'वि मे कर्णा पतयतो वि चक्षुर्वी३दं ज्योतिर्' (ऋ.म.६।९।६) इत्यग्निसूक्तस्य कर्णादिविदूरत्वादि रूपान्यत्रानवकाशविष्णुलिङ्गेन विष्णुपरत्व-समर्थनाच्च । विष्ण्वर्थत्वे वेदानामपूर्वतारूपस्य तात्पर्यलिङ्गस्य प्रतीत्या मोक्षपरत्वाच्च । 'तात्पर्यं नैव दूषणे' (१।२।२) इत्यनुव्याख्यानाद्युक्तदिशा 'न तादृशी प्रीतिरीड्यस्य विष्णोर्गुणोत्कर्षज्ञातरि यादृशी स्यात् । तत्प्रीणनान्मोक्षमाप्नोति सर्वस्ततो वेदास्तत्पराः सर्व एव' इति (सौपर्ण) श्रुत्या 'प्रियो हि ज्ञानिनोऽत्यर्थमहम्' (गी.७।१७) इति स्मृत्या च विष्णुप्रतिपादने तज्ज्ञानसाध्यमोक्षाख्य महाफलवत्त्वरूपस्य 'यस्तन्न वेद किमृचा करिष्यति' (ऋ.म.१।१६४।३९) इत्यादेर्विपक्षे निन्दारूपार्थवादस्य 'य इत्तद्विदुस्त इमे समासते' ऋ.म.१।१६४।३९) इति स्तुतिरूपार्थवादस्य च भावाच्च । अनुक्रमणिकायामपि 'एकैव वा महानात्मा देवता' (२) इति सर्वसूक्तानां परमात्मदेवतात्वस्योक्तत्वाच्च ॥

यत्तु– एवं सति, विष्ण्वर्थत्वेनैवालम् । किमग्न्यादिदेवतापरत्वेनापि ? गौरवात् । इति, तन्न 'ॐ कल्पनेपदेशात्' (१।४।११) इति सूत्रतात्पर्यनिरूपणपरेऽनुव्याख्याने– तेषु तेषु पदार्थेषु रूढिरङ्गीकृता यतः ॥ प्रयोजनबहुत्वेन तस्य तस्याविरोधतः । उपदेशादि सामर्थ्याद्विष्णौ शक्तिश्च गृह्यते' इत्यत्राग्न्यादिदेवतास्वरूप सिध्यादिबहुप्रयोजनाय तत्तद्देवतार्थकत्वस्याप्यावश्यक-कत्वोक्तेर्निगमनिघण्टुव्याकरणादि सिद्धव्युत्पत्तिलभ्याग्न्यादि देवतार्थकत्वस्य त्यागायोगाच्च । 'त्रयोऽर्थाः सर्ववेदेषु दशार्थाः सर्वभारते । विष्णोः सहस्रनामापि निरन्तरशतार्थकम्' इति स्कान्दस्मृत्या त्र्यर्थत्वस्योक्तत्वाच्च । 'ॐ अन्यार्थं तु जैमिनिः' (१।४।१९) इत्यादौ सूत्रकृता ब्रह्मज्ञानार्थत्वेन कर्मदेवतारूपार्थान्तरस्योक्तत्वाच्च ॥

ननु एवं 'नामानि विश्वाभि न सन्ति लोके' इति (भाल्ल.) श्रुतावन्यस्य वाच्यत्वनिरासपूर्वकं विष्णुवाचित्वोक्तिविरोधः । तथा, 'वेदैश्च सर्वैरहमेव वेद्यः' (गी.१५।१५) इति स्मृतावव-धारणोक्तिविरोधः । तथा 'ॐ तत्तु समन्वयात् ॐ' (१।१।४) इत्यत्रावधारणार्थक'तु'शब्देन विष्ण्वाख्यं ब्रह्मैव सर्वशास्त्रप्रतिपाद्यमिति प्रतिज्ञाय 'ॐ आनन्दमयोऽभ्यासात् ॐ' (१।१।१२) इत्यादिना 'ॐ एतेन सर्वे व्याख्याता व्याख्याताः ॐ' (१।४।२९) इत्यन्तेन प्रतिनयं समन्वयसूत्रात् 'तत्तु' इति पदमनुवृत्यानन्दमयादिशब्दार्थो विष्णुरेव, इन्द्रादिशब्दार्थो विष्णुरेव, आकाशप्राणाग्निसूक्तस्थज्योतिरादिशब्दार्थो विष्णुरेव, इति प्रमाणोक्तिपूर्वं सर्वशब्दानां विष्णुमात्रार्थत्वसमर्थनाच्च तद्विरोधः । वैश्वानरनये वैश्वानरनामसूक्तादिसर्ववैश्वानरविद्यासु 'ॐ अत एव न देवता भूतं च ॐ' (१।२।२७) इति सूत्रकृता कण्ठरवेणैवान्यस्य प्रतिपाद्यत्व-निरासात्तद्विरोधश्च । 'तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ' (आ.उ.१।३।१५) इत्यन्यस्य ज्ञेयत्वनिरासविरोधश्च । अत एव अन्यप्रतिपादनस्य क्वाप्यनभिमतत्वादेव ''अनाद्यनन्तं महतः परं ध्रुवम्'' (का.उ.१।३।१५) इति वाक्ये महत्परत्वलिङ्गेन प्रधानं प्रतिपाद्यत इति प्राप्ते 'ॐ ज्ञेयत्वावचनाच्च ॐ' (१।४।४) इति सूत्रे मुमुक्षुज्ञेयत्वं क्वापि विष्णोरन्यस्य नोच्यत इत्युक्तम् । इति चेन्नैवम् । मुख्यवृत्त्यान्यार्थकत्वेऽपि परममुख्यवृत्त्यैवान्यार्थकत्वस्य श्रुतिसूत्रादौ निरासात् । 'अन्यावाचो विमुञ्चथ' (आ.उ.४।५) इत्यादि श्रुतिसूत्रयोः प्राधान्येनान्यस्य ज्ञेयत्वनिरासपरत्वोपपत्तेः । अत एव । 'ॐ अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॐ' (३।३।५७) इत्युपासनापादीयाधिकरणे ब्रह्मरुद्रेन्द्रमित्रावरुणाद्यङ्गदेवतावबद्धास्तद्विषया इति यावत्, उपासनानमनपूजनमननादयः कर्तव्या इत्युक्त्वा 'ॐ मन्त्रादिवद्वा विरोधः ॐ' (३।३।५८) इति गुणसूत्रे यथाऽधमदेवतापरमन्त्रास्तदुत्तमदेवतापरत्वेन ज्ञेयास्तथाऽधमदेवतागुणास्तदुत्तम-देवतासु ज्ञेया ध्येयाश्च, उत्तमदेवतागुणा अधमदेवतासु न ध्येया न ज्ञेयाश्च यथोत्तमदेवतापरत्वेन प्रतीता मन्त्रा अधमदेवतापरत्वेन न ज्ञेयास्तथेति चोक्तम् । न चानेकार्थत्वे वाक्यभेदः । ॐ समाकर्षात् ॐ' (१।४।१६) इति नयसिद्धेन परममुख्यमुख्यवृत्तिभेदेन विष्ण्वर्थत्वतदन्यार्थत्वयो-रभ्युपगमात् । तुल्यवृत्त्यानेकार्थत्वेऽक्षादिशब्दवदनेकार्थत्वापत्त्या वाक्यभेदादिदोषः स्यात् । तदुक्तमनुव्याख्याने– 'तस्मात्परममुख्यत्वं विष्णावन्यत्र मुख्यता' (१।४।११) इति । अत एव न सूक्तस्य व्यवस्थानुपपत्तिदोषः । अग्न्यादिदेवतापरत्वस्यापि सत्त्वेनाग्न्यादिसूक्तव्यवस्थोपपत्तेः ।।

न चैवमुभयत्र तात्पर्ये तात्पर्यभेदात्तन्निबन्धनवाक्यभेदः शङ्क्यः । महातात्पर्यार्थस्यैकत्वात् । 'सर्वोत्कर्षे देवदेवस्य विष्णोर्महातात्पर्यं नैव चान्यत्र सत्यम् । अवान्तरं तत्परत्वं तदन्यत्सर्वागमानां पुरुषार्थस्ततोऽतः' इति (पैङ्गि) श्रुतौ 'सर्वज्ञं सर्वकर्तारं नारायणमनामयम् । सर्वोत्तमं ज्ञापयन्ति महातात्पर्यमत्र हि । सर्वेषामपि वेदानामितिहासपुराणयोः ।। प्रमाणानां च सर्वेषां तदर्थं चान्यदुच्यते' इत्यादिनारदीयपुराणादौ च महातात्पर्यावान्तरतात्पर्यभेदेनानेकार्थकत्वोक्तेः । अग्न्यादिसूक्तैर्भगवदुपासकानामग्न्याद्यधिष्ठानेष्वेव भगवतोऽनुस्मर्तव्यत्वाभि व्यज्यमानत्वप्राप्यत्वरूपनिमित्तत्रयेणेदमग्निसूक्तमिदं वायुसूक्तमित्यादि व्यवस्थाया वैश्वानरनयान्ते सूत्रकारेणैव समर्थनाच्च ।। न चैवं सौरसावित्रादिसूक्तभेदायोगो हरिसूक्तविष्णुसूक्तादिभेदायोगश्च, तत्र भगवदभिव्यक्त्यादिकं प्रत्यधिष्ठानभेदस्याप्यभावात्, हरिसूक्तादावधिष्ठानस्यैवाभावादिति शङ्क्यम् । एवं तर्हि, 'पृथग्रूपाणि विष्णोस्तु देवतान्तरगाणि च ।। अग्न्यादिसूक्तवाच्यानि नाम्ना सूक्तभिदा भवेत्' इति ऋग्भाष्योक्तदिशा अग्न्यादिनामभेदादग्न्यादि सूक्तव्यवस्थास्तु ।

यापि इदमग्निसूक्तमेव न तु विष्णुसूक्तमित्याद्यध्यापकप्रसिद्धिः, सापि हि सूक्तव्यवस्थापकविष्ण्वादिनाम्नां व्यवस्थितत्वेनाग्न्यादिसूक्तेष्वभावादिदं हि हरिसूक्तं न तु विष्णुसूक्तमिति प्रसिद्धिवदज्ञानमूलेति 'ॐ ज्योतिश्चरणाभिधानात् ॐ' (१।१।२४) इत्यत्र चन्द्रिकोक्तदिशा युक्ता । यदप्यग्न्यादिसूक्तानां विष्ण्वर्थकत्वेऽभिमते सति 'नारायणो वा इदमग्र आसीत्' इत्यादाविव 'विष्णुमीळे पुरोहितम्' (ऋ.म.१।१।१) 'विष्णवायां हि दर्शत' (ऋ.म.१।२।१) इत्यादिरूपेण प्रसिद्धविष्ण्वादिशब्दप्रयोगः स्यादिति चोद्यम्, तदप्यग्न्यादि देवतापरत्वस्यापि सत्त्वादग्र्यत्वादि शब्दप्रवृत्तिनिमित्ताग्र्यत्वादि गुणविशिष्टत्वेनोपासनार्थं मग्न्यादि शब्दप्रयोग इति च्छन्दोनये सूत्रकृतैव 'तथा चेतोर्पणनिगदात्' (१।१।२५) इति समाधानाद्वा निरस्तं ध्येयम् । न चात्रोपासनाया अश्रवणं शङ्क्यम् । 'ईळे' इतयुक्तस्तुतेर्गुणानुसन्धानपूर्वकत्वात् । 'ॐ आध्यानाय प्रयोजनाभावात् ॐ' (३।३।१५) इति न्यायाच्च । तत्र हि सर्वत्र गुणोक्तेः प्रयोजनान्तराभावेनाध्यानार्थं त्वज्ञानार्थत्वयोरुक्तेरिति संक्षेपः ।' इति श्रीमन्मन्त्रार्थमञ्जर्यां सर्वतन्त्रस्वतन्त्र श्रीसुधीन्द्रगुरुपादशिष्यश्रीराघवेन्द्रयतिविरचितायामुपोद्घातः ।

## ।। प्रथमो वर्गः ।।

### (सूक्तम् १)

### ऋक्संहिता पदपाठसहिता

९ मधुच्छन्दा वैश्वामित्रः । अग्निः । गायत्री ।

**ओ३म् ।। अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् । होतारं रत्नधातमम् ।। १ ।।**

अग्निम् । ईळे । पुरःऽहितम् । यज्ञस्य । देवम् । ऋत्विजम् । होतारम् । रत्नऽधातमम् ।।

### ऋग्भाष्यम्

**अग्निशब्दोऽयमग्र एवाभिपूज्यताम् ।**
**अग्र्यत्वमग्रनेतृत्वमत्तिमङ्गागनेतृताम् ।**
**आह तं स्तौम्यशेषस्य पूर्वमेव हितं प्रभुम् ।**
**ऋत्विङ्नियामकत्वेन यज्ञानामृत्विजं सदा ।**
**द्योतनाद्विजयात्कांत्या स्तुत्या व्यवहृतेरपि ।**
**गत्या रत्याच देवाख्यं होतृसंस्थं विशेषतः ।**
**अग्निसंस्थेन रूपेण यतोग्निर्होतृदेवता ।**
**इन्द्रियाग्निषु चार्थानां यद्धोता होतृनामकः ।**
**रतिधारकोत्तमत्वात्स रत्नधातम ईरितः ।। १ ।।**

### श्रीमज्जयतीर्थविरचिता ऋग्भाष्यटीका

तत्राग्निमीळ इत्याद्यामृचं व्याचक्षाणोग्निशब्दार्थं तावन्निर्वक्ति– **अग्निशब्दोऽयमिति** । अयमादितः प्रयुक्तोऽग्निशब्दोग्नेस्तदन्तर्गतहरेश्च बाह्ययज्ञे अध्यात्मं च हरेर्ज्ञानयज्ञे मुख्या-मुख्यत्वाभ्यामग्र एवाशेषपूज्येभ्यः पूर्वमेवाभिपूज्यतामभिपूज्यत्वमाहेति सम्बन्धः । अग्र-शब्दात्सप्तमीसमर्थादभिपूज्य इत्यर्थे तद्धितो निप्रत्ययो रशब्दलोपश्च तथाग्र्यत्वमग्रेभवत्व-मुत्तमत्वम् । पूर्ववद्भवार्थे निप्रत्ययो रशब्दलोपश्च । तथाग्रनेतृत्वं प्रथमप्रवर्तकत्वम् । अग्रशब्दो-पपदान्नयतेः कर्तरि डिप्रत्यय उपपदरशब्दलोपश्च । तथात्तिमत्तृत्वं धातुनिर्देशोयम् । तेन तदर्थस्य कर्ता लक्ष्यते । बहिः संहर्तृत्वं हविषोऽत्तृत्वं च । अध्यात्मं विषयाणाम् । अत्तेः कर्तरि निप्रत्ययो दस्यच गः । तथाऽङ्गनेतृतां अध्यात्मं विष्णोरग्नेश्च सर्वशरीराणां प्रवर्तकत्वम् । अङ्गशब्दोपपदा-

न्नयतेर्डिप्रत्यय उपपदानुस्वाराकारलोपश्च । तथाऽगनेतृतां स्वतो न गच्छति न प्रवर्तते यद्विश्वं तस्य प्रवर्तकत्वम् । पूर्ववन्निरुक्तिः । नेतृशब्दस्तृन्नन्तः तेन द्वितीयायाः समासः । अग्निमीळ इत्यस्य व्याख्यानं– **तं स्तौमीति** । ईडस्तुतौ । ऋक्षु डस्य ळः प्रायेण । कुतः पुरोहितं पुरः पूर्वमेवानादित एव हितम् । प्रतिसम्बध्यपेक्षायामशेषस्येति शेषोक्तिः । बहुलं छन्दसीति चतुर्थ्यर्थे षष्ठी । प्रभुमित्युदात्तस्वरार्थः । उदात्तस्योच्चतार्थतेति हि वक्ष्यति । हितो हि स्तुत्यो भवति ।

किञ्च यज्ञस्य ऋत्विजम् । जातावेकवचनम् । यज्ञानां बाह्यानामाध्यात्मिकानां च ऋत्विजम् । तत्कथमित्यत आह– **सदा ऋत्विङ्नियामकत्वेनेति** । तदधीनत्वादर्थवदिति सूत्रात् । अध्यात्ममिन्द्रियदेवा ऋत्विजः । कर्माङ्गत्वादृचामृत्विग्वाक्यतायामात्मनो नियामकस्य ज्ञानप्रदस्य च स्तुतिरुपपन्नैव । किञ्च देवं द्योतनाद्विजयात्कांत्या व्यवहृतेरपि गत्या रत्याचेति द्योतनादेः कर्तृत्वात्तथा स्तुत्या स्तुतिकर्मत्वाद्देवाख्यम् । दीव्यतेर्द्योतनाद्यर्थात्कर्तरि पचाद्यच् । स्तुत्यर्थात्कर्मणि घञ् । गुणाधिको हि स्तुत्यः स्यात् । किञ्च **होतारं** होतृसंस्थम् । ऋत्विजमित्युक्तत्वाद्धोतारमिति पुनरुक्तिरित्यत आह– **विशेषत इति** ।। तत्कथमित्यत आह– **अग्निसंस्थेनेति** ।। ऋत्विक्षु परमेश्वरः सन्निहित एव । होतरि पुनरत्र स्तुत्येनाग्निसंस्थेनैव रूपेणेति विशेषतो(ऽग्निसंस्थता)होतृसंस्थता । अनयाच विवक्षया न पुनरुक्तिरिति । एतदपि कुत इत्यत आह– **यत इति** ।। होतृदेवता सन् यतोऽग्निर्होतरि स्थितोऽतोऽग्निसंस्थेन रूपेण होतृसंस्थता युक्तैवेत्यर्थः । एवं विष्णौ होतृशब्दं व्याख्यायाग्नौ व्याख्याति– **यत इति** ।। अतो होतोच्यत इति शेषः । तथा च श्रुतिः– तद्येयं वाक् सोऽयमग्निः सहोतेति । ऋग्वेदिनो हि होतृत्वापेक्षिणो होतृसंस्थस्य स्तुतिर्युक्तैव । अध्यात्मं होतृशब्दं व्याख्याति– **इन्द्रियेति** ।। यद्यस्मादिन्द्रियाख्येष्वग्निष्वर्थानां तत्तदिन्द्रियविषयलक्षणानां हविषां होता हरिस्तस्माच्च होतृनामकः । भोगप्रदस्य स्तुतिः कर्तव्यैव । परमसुखत्वाच्च तस्य स्तुतिः सुखार्थिनां युक्तेति । रत्नधातमशब्दं व्याख्याति– **रतीति** ।। रमतेर्भावे क्त्नप्रत्ययः । रत्नं रतिं धत्त इति रत्नधाः । आतो मनिन् क्वनिब्वनिपश्चेति विच् । अतिशयेन रत्नधाः रत्नधातमः । नवा एकेनाक्षरेण छन्दांसि वियंतीति वचनान्न छन्दोभङ्गः । यद्यपि रत्नशब्दो धननामसु पठितः तथापि तदपरित्यागेनार्थान्तरस्योक्तत्वान्न दोषः ।। १ ।।

## मन्त्रार्थमञ्जरी

ऋषिच्छन्दोदेवतोक्तिपदार्थान्वयपूर्वकम् ।
मन्त्रार्थसङ्ग्रहं कुर्मो बालानां बोधसिद्धये ।। ३ ।।

'ऋषिच्छन्दोदैवतानि ज्ञात्वार्थं चैव भक्तितः ।। स्वाध्यायेनैव मोक्षः स्याद्विरक्तस्य हरिस्मृतेः' (ऋ.भा.उदा.) इति स्मृत्या 'यो ह वाविदितार्षेच्छन्दोदैवत ब्राह्मणेन मन्त्रेण यजति याजयत्यध्यापयति वा स्थाणुं वर्च्छति गर्ते वा पद्यते प्रवा मीयते' (छ.ब्रा.शे.) इति श्रुत्या च ऋष्यादिज्ञाने सत्येव मन्त्रार्थज्ञानस्य फलवत्त्वम् । अन्यथा त्वनर्थ इत्यस्यावगमेन ऋष्यादि ज्ञानस्यावश्यकत्वम् । छन्दोज्ञानमावश्यकमित्यत्र न वर्णसमावेश रूपच्छन्दोज्ञानमात्रं विवक्षितम् । किं तु, तदभिमानिदेवताज्ञानं च । श्रुतौ स्मृतौ च च्छन्दःपदस्य 'ॐ अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॐ' (२।१।६) इत्यत्रोक्तदिशा मुख्यामुख्यवृत्तिभ्यामभिमान्यभिमन्य मानोभयपरत्वात् । श्रुतौ ब्राह्मणशब्दो विनियोगार्थकः द्वन्द्वगर्भो बहुव्रीहिः, मन्त्रोऽन्यपदार्थः । तत्र– आद्यं नवर्चं वर्गद्वयात्मकमाग्नेयं सूक्तं गायत्रीछन्दस्कमग्निदेवताकं तदन्तर्गततन्नामकविष्णुदेवताकं च । वेदस्य मूलवेदोपवेदावान्तरवेदरूपेण त्रैविध्यान्मूलवेदे ऋचां यः क्रमस्तत्रर्चोऽनन्तरिताः कृत्वा यावत्पठितं तावदुपवेदे सूक्तमुच्यते । उपवेदगतसूक्तान्तर्गतऋक्प्रबन्धोऽवान्तरवेदे सूक्तमिति ज्ञेयम्, 'सूक्तं त्वनारतं प्रोक्तम्' (ऋ.भा.) इत्युक्तेः । वर्ग इति तु सांकेतिकं नाम । तत्र अग्निसूक्तस्य प्राथम्ये बीजं तु 'अग्रणीत्वं यदग्नित्वमित्यग्रे नाम तद्भवेत्' इति भाष्योक्तदिशा अग्रशब्दात्सप्तमीसमर्थात् 'अभिपूज्यः' इत्यर्थे 'तद्धिताः' इति सूत्रेण निप्रत्यये रशब्दलोपे सिद्धस्याग्निशब्दस्य प्रथमपूज्यताभिधायित्वं ध्येयम् । ऋषिस्तु 'अ॒ग्निमी॑ळे' इत्यारभ्य 'अ॒ग्निं दू॒तम्' इत्यतः प्राक्तनस्य दशोत्तरऋक्शतस्य मधुच्छन्दा एव ज्ञेयः । विनियोगो विष्णुप्रीतिद्वारा मोक्षे । अवान्तरविनियोगः कर्मणि ।। अ॒ग्निमी॑ळे' इत्यारभ्य 'गाय॑न्ति त्वा' इत्यतः प्राक्सूक्तनवकं गायत्रीछन्दस्कम् ।

गायत्रीछन्दसोऽभिमानिदेवतास्तु– श्रीर्ब्रह्माणी भारती गरुडः स्वाहेति पञ्च । पुरोहितम्, अनादितः सर्वप्राणिनामनुकूलम्, 'उदात्तस्योच्चतार्थता' (ऋ.भा.) इत्युक्तेरुदात्तस्वरेणोच्चत्वलाभात्प्रभुम् । यज्ञस्य ऋत्विजं, जातावेकवचनम्, यज्ञानां ज्योतिःष्टोमादीनां कर्तृतया

ऋत्विङ्नामकेष्वध्वर्युहोत्रुद्गातृप्रभृतिषु नियामकतया स्थिततया 'ॐ तदधीनत्वादर्थवत् ॐ' (१।४।३) इत्युक्तन्यायेन ऋत्विङ्नामकम् । होतारम्, 'तद्येयं वाक्सोऽयमग्निः स होता' (बृ.उ.५।१।३) इति श्रुत्या होतृनियामकतया विशिष्य तत्र सांनिध्यात् 'ॐ तदधीनत्वात्' (१।४।३) इति प्रागुक्तन्यायेनैव होतृनामकम् ऋत्विजं होतारम्' इति कुरुपाण्डवन्यायेन (भाग.१०।१।६) सामान्यविशेषभावादपुनरुक्तिः ।

रत्नधातमम्, रमेः औणादिके क्त्नप्रत्यये 'लशक्वतद्धिते' इति ककारलोपे 'अनुदात्तोपदेशवनति तनोत्यादीनामनुनासिकलोपो झलि क्ङिति' इति धातोर्मकारलोपे 'रत्न' इति रूपत्वाद्रत्नं सुखं धत्त इति रत्नधाः 'डुधाञ् धारणपोषणयोः' इत्यतः 'आतो मनिन्क्वनिब्वनिपश्च' इति चाद्विच्प्रत्यये रूपत्वात्, अतिशयेन रत्नधा रत्नधातमस्तम् 'अतिशायने तमबिष्ठनौ' इति तमप्प्रत्ययः, निरवधिकानन्दमित्यर्थः, 'ॐ उभयव्यपदेशात्त्वहिकुण्डलवत् ॐ' (३।२।२८) इति नये 'ॐ प्रतिषेधाच्च ॐ' (३।२।३१) इति सूत्रे गुणगुणिभेदस्य निवारणेऽपि, 'ॐ प्रकाशाश्रयवद्वा तेजस्त्वात् ॐ' (३।२।२९) 'ॐ पूर्ववद्वा ॐ' (३।२।३) इति सूत्रद्वये विशेषबलाद्गुणगुणिभाव इत्युक्ते रतिधारकोत्तमत्वोक्तिर्भाष्ये नायुक्तेति ज्ञेयम् । रत्नशब्दस्य धननामसु पाठाद्धनाढ्यमिति वार्थः । देवम्, 'दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुति मोदमदस्वप्नकान्तिगतिषु' इत्युक्तेः क्रीडाद्यर्थकाद्दीव्यतेः कर्तरि 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः' इत्यनेन पचादेराकृतिगणत्वादच्प्रत्यये 'पुगन्तलघूपधस्य च' इति गुणे 'देवम्' इति निष्पत्तेः क्रीडादिकर्तारमित्यर्थः, तथा– स्तुत्यर्थाद्दीव्यतेः कर्मणि 'अकर्तरि च कारके संज्ञायाम्' इति घञ्प्रत्यये गुणे च 'देवम्' इति रूपसिद्धेः स्तुत्यमित्यर्थः । अग्निम्, प्रागुक्तव्युत्पत्त्या सर्वपूज्येभ्यः प्रथमपूज्यम्, 'अग्रे भवः' इत्यर्थे तद्धितनिप्रत्यये रशब्दलोपे 'अग्निः' इति सिद्धेः अग्निमग्रेभवं सर्वोत्तममिति वा, अग्रशब्दोपपदान्नयतेः डिप्रत्यये टिलोप उपपदरशब्दलोपे च अग्निः इति सिद्धेः प्रथमप्रवर्तकं वा, 'अग्निनाग्निः समिध्यते' इति वक्ष्यमाणत्वेनाग्निनियन्तृत्वात्तदधीनत्वन्यायेन चाग्निनामकं विष्णुं तदधिष्ठानं प्रसिद्धाग्निं वा । ईळे, स्तौमि, 'ईडस्तुतौ' ऋक्षु डस्य ळः प्रायेण । अत्रोक्तगुणानां हरौ निरवधिकत्वम्, तदधिष्ठानेऽग्नौ तु यथायोग्यम् ।

**एवमग्रेऽपि** ।। अत्र विशेषणानां कृत्यम्– अग्निनाम्नोऽस्य स्तुत्यत्वोपपादनमेव, ऋचां कर्माङ्गत्वेन ऋत्विग्वाक्यतयात्मनियामकस्य सर्वदा हितरूपस्य ऋग्वेदिनो होतृत्वापेक्षितया होतृ-

स्थितस्य सुखाद्यर्थिनः पूर्णसुखरूपस्य धनाढ्यस्य देवशब्दोक्तगुणाढ्यस्य च स्तुतेः कार्यत्वात्तस्य स्तुतिर्युक्तेति ।। अत्र सर्वापेक्षितसुखप्रदोपासन विषयनिरतिशयसुखस्वरूपत्वमहागुण प्रतिपादकत्वादस्य मन्त्रस्यादित्वं ध्येयम् । तदधीनत्वन्यायसिद्धं स्वातन्त्र्यं शब्दप्रवृत्तौ निमित्तं भवति न वेति सन्देहे भृत्यगतबन्धमृतिदुःखादे राजाधीनत्वेऽपि भृत्ये बद्धे मृते दुःखिनि 'राजा बद्धो मृतो दुःखी' इत्यप्रयोगाद्व्यभिचारेण न निमित्तमिति प्राप्ते, भृत्यजयस्य राजाधीनत्वेन भृत्ये जयिनि 'राजा जयी' इति प्रयोगदर्शनेन 'यदधीनो गुणो यस्य तद्गुणी सोऽभिधीयते' (स्कां.पु.) इति स्मृत्या च भवति स्वातन्त्र्यं शब्दप्रवृत्तौ निमित्तम् । राज्ञि बद्धादि शब्दाप्रयोगस्तु सत्यपि निमित्तेऽमङ्गलत्वादिभयेन प्रतिरोधादिति ।।

अध्यात्मपरत्वे त्वयमर्थः – पुरोहितम्, अनादितः सर्वानुकूलम् । यज्ञस्य, ज्ञानयज्ञस्य । ऋत्विजम्, ऋत्विग्भूतेन्द्रियाभिमानिनि यामकतया तत्र स्थितत्वेन ऋत्विङ्नामकम् । होतारम्, इन्द्रियाख्याग्निषु विषयलक्षणहविषां होतारम्, 'हु दानादनयोः' इत्युक्तेर्दातारम्, विषयभोगप्रदमिति यावत् । अग्निम्, अङ्गं शरीरं नयति प्रेरयतीत्यङ्गशब्दोपपदान्नयतेः डिप्रत्यय उपपादानुस्वाराकारलोपे 'अग्निः' इति रूपसिद्धेः सर्वशरीरप्रवर्तकम् । ईळे इति । अत्राध्यात्मं सर्वत्र मोक्षसाधको यः कश्चित्सात्त्विक एव यजमानो ज्ञेयः । शिष्टं प्राग्वद्व्याख्येयम् ।। अत्रापि विशेषणानां कृत्यं तु– ज्ञानार्थिनः सर्वेन्द्रियप्रेरकस्य यथोचितभोगप्रदस्य च स्तुत्यता युक्तेति स्तुत्यत्वोपपादनमेवेति ।। १ ।।

## श्रीस्कन्दस्वामिविरचितं भाष्यम्

**विघ्नेश विधिमार्तण्डचन्द्रेन्द्रोपेन्द्रवन्दित ।**
**नमो गणपते तुभ्यं ब्रह्मणां ब्रह्मणस्पते ।। १ ।।**

**मन्त्राणामवबोद्धव्यो यतोऽर्थोऽङ्गत्वसिद्धये ।**
**ऋग्वेदस्यार्थबोधार्थमतो भाष्यं करिष्यते ।। २ ।।**

ते मन्त्राः पञ्चप्रकाराः – प्रैषाः, करणाः, प्रियमाणानुवादिनः, शस्त्राभिष्टवनादिगताः, जपानुवचनादिगता इति । प्रैषास्तावद् 'दैव्याः शमितार आरभध्वम्' (ऐ.ब्रा.२,६) इत्येवमादयः । करणाः 'इदमहमर्वावसोः सदने सीदामि' (माश १,५,१,२४) इत्येवमादयः । क्रियमाणानुवादिनः 'युवा सुवासाः' (ऋ ३,८,४) इत्येवमादयः । शस्त्राभिष्टवनादिगताः 'आ त्वा रथं यथोतये'

(ऋ ८,६८,१), 'ब्रह्म जज्ञानम्' (कौ.१,३२१) इत्येवमादयः । जपानुवचनादिगताः 'तदद्य वाचः प्रथमं मसीय' (ऋ १०,५३,४), 'आपो रेवती' (ऋ १०,३०,१२) इत्येवमादयः । एते सर्वे प्रयोगकाले स्वार्थान् प्रतिपादयन्तः कर्मणोऽङ्गत्वं प्रतिपद्यन्ते, नोच्चारणमात्रेण । कुत एतत् । ये तावत् प्रैषाः करणाः क्रियमाणानुवादिनस्तेषां योऽर्थस्तस्य कर्मणोऽङ्गभूतत्वाद् अङ्गभूतस्य चास्मृतस्यानुष्ठातुमशक्यत्वात् स्मरणस्य करणापेक्षितत्वात् प्रैषादिभिश्च कर्तुं शक्यत्वात् । ये तु शस्त्राभिष्टवनादिगतास्तेषां योऽर्थः, स यद्यपि कर्मणो नाङ्गभूतः, तथाऽपि ते तमर्थं प्रतिपादयन्तः कर्मणोऽङ्गत्वं प्रतिपद्यन्ते नोच्चारणमात्रेण । स्तुतिर्हि शस्त्रमभिष्टवनश्च । गुणैश्च गुणिनः सम्बन्धिताप्रतिपादनं स्तुतिरित्युच्यते, न तदर्थाक्षरोच्चारणमात्रम् । नहि ग्रहणार्थमभ्यासार्थं वा स्तुत्यर्थान्यप्यृगक्षराणि श्लोकाक्षराणि वोच्चारयन् लोके स्तौतीत्युच्यते । अतः शस्त्राभिष्टवनादिगता अपि स्वार्थमेव प्रतिपादयन्तः कर्मणोऽङ्गत्वं प्रतिपद्यन्ते, नोच्चारणमात्रेण । एवमेषां चतुर्विधानां मन्त्राणामर्थप्रस्थापनेन कर्माङ्गभावादनवदुद्धार्थाच्च मन्त्रात् तदर्थस्य प्रत्येतुमशक्यत्वात् बोद्धव्य एषामर्थः । येऽपि जपानुवचनादिगतास्तेषां यद्यपि जपिनाऽनुवचिना वा धातुनाऽक्षरोच्चारणमात्रं चोदितं नार्थप्रत्यायनम्, तथापि 'यो ह वाऽविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाऽध्यापयति वा स्थाणुं वर्च्छति गर्ते वा पद्यते' (आ ब्रा१,१) इत्याद्यार्षेयब्राह्मणश्रुतेरविदितदैवतस्य मन्त्रस्य कर्मण्यङ्गभावाभावादज्ञाय-मानार्थस्य च मन्त्रस्य दैवतस्य वेदितुमशक्यत्वाज्जपानुवचनादिगतानामपि बोद्धव्य एवार्थः । एवं सर्वमन्त्राणां कर्माङ्गत्वसिद्ध्यर्थं यतो बोद्धव्योऽर्थः, अत ऋग्वेदस्यार्थबोधार्थमस्माभिर्भाष्यं करिष्यते । तत्रार्षदैवतयोरर्थावबोध उपयुज्यमानत्वात् ते दर्शयिष्येते, न छन्द अनुपयुज्यमानत्वादिति ।

'ऋषिराद्यो मधुच्छन्दाः विश्वामित्रः' । ऋग्वेदस्याद्यः ऋषिर्मधुच्छन्दा नाम । विश्वामित्रस्य पुत्रः । 'आग्नेयं प्रथमं सूक्तं मधुच्छन्दस आदितः' (बृ दे २,१२६) । मधुच्छन्दस ऋषेरादौ यत् सूक्तम् ऋग्वेदस्य प्रथमं तदग्निदैवतम् ।

अग्निं अहं स्तौमि । कीदृशम् । **पुरोहितम्** शान्तिकपौष्टिकैः कर्मभिर्यो राजानमापच्चस्त्रायते स पुरोहित इत्युच्यते, तत्स्थानीयम् । कस्य ? **यज्ञस्य** यज्ञाधिकृतस्य 'यज्ञो वै यजमानः' (तु.ऐ.ब्रा.१,२८) इति श्रुतेः । आपदामपहन्तारमित्यर्थः । **देवम्** 'दीव्यतिर्दानार्थे दीप्त्यर्थे वा । दातारं दीप्तं वा । अथवा पुरोहितशब्दः क्रियाशब्दः । पूर्वस्यां दिशि निहितमाहवनीयात्मना

स्थापितम् । यज्ञस्येत्येतत्तु देवमित्यनेन सम्बध्यते । यज्ञस्य दातारं दीपयितारं वा । यज्ञं हि देवेभ्यो मनुष्येभ्यश्चाग्निर्ददाति, तदायत्तत्वात् । दीपयति च । न च यज्ञस्य देवतैव केवलम्, किं तर्हि । **ऋत्विजम्** । कतमम् । **होतारम्** 'अग्निर्वै देवानां होता' (ऐब्रा.१,१८) इति श्रुतेः । अग्निर्दैव्यो होता । तदधिकृतस्तु मानुषो होता हौत्रं कर्म करोति । अथवा ऋत्विग्घोतृ-शब्दावपि क्रियाशब्दावेव । ऋतावृतौ यष्टारम् ऋत्विजम् । यो यो यागकालस्तत्र तत्र यष्टार-मित्यर्थः । होतारमाह्वातारम् । कस्य, सामर्थ्याद् देवानाम् । **रत्नधातमम्** रत्नमिति धननाम । दधातिर्दानार्थः । धनानामतिशयेन दातारम् ।। १ ।।

## वेङ्कटमाधवाचार्यविरचितं भाष्यम्

श्रीवेङ्कटार्यतनयो व्याचिकीर्षति माधवः ।
ऋक्संहितामस्य देवः प्रसीदतु विनायकः ।। १ ।।

लोकसिद्धं विभक्त्यर्थमनुक्ते तत्र न त्यजेत् ।
निरुक्तमग्रतः कुर्याद् यावत्प्राणं तथा स्वरम् ।। २ ।।

पदानि पूर्वं जानीयात् पदस्वरमनन्तरम् ।
उपसर्गान् क्रियाशब्दैः संयोज्यार्थं प्रदर्शयेत् ।। ३ ।।

निघाततिङ्पदस्यार्थे वाक्यार्थं पर्यवस्यति ।
अनिघातोऽपि पादादौ विशेषस्तत्र वक्ष्यते ।। ४ ।।

निघाततिङ्पदस्यार्थं वाक्यान्ते दर्शयेच्छनैः ।
उदात्ततिङ्पदस्यार्थमुच्चैरादौ प्रदर्शयेत् ।। ५ ।।

यद्यदीत्यादिभिर्युक्तं तिङर्थं च स्फुटं वदेत् ।
अवान्तराणां वाक्यानामन्तेऽर्थं तं च दर्शयेत् ।। ६ ।।

अथात्र कारणं ब्रूहि वाक्यादौ तिङुदात्तवत् ।
सर्वानुदात्तमन्यत्र नार्थभेदस्तु कश्चन ।। ७ ।।

अर्थभेदादिति ब्रूमः श्रोतारमिह तिङ्पदम् ।
उदात्तवत् समाहन्ति स यथाऽभिमुखो भवेत् ।। ८ ।।

उदात्तकारकपदैस्तत्र पूर्वं समाहते ।
पदं सर्वानुदात्तं स्यान्मध्येऽन्ते वाऽथ यद्भवेत् ॥ ९ ॥

अनुपादं विरम्यार्थमृषयः कथयन्त्यतः ।
पुनश्चोद्बोधनं कर्तुं पादादौ तिङुदात्तवत् ॥ १० ॥

अनुदात्ते पदे यत्र तत्र संस्थापयेद् द्विधा ।
वायविन्द्रश्च चेतथः', 'तावा यातमुपद्रवत्' ॥ ११ ॥

भगवान् पाणिनिर्वेत्ति वाक्यवृत्तीः समञ्जसम् ।
प्रतिषेधो निघातस्य बोद्धव्यो विहितैरतः ॥ १२ ॥

तत्र सम्बोधनपदैर्नरः संबोधितोऽपि सन् ।
वाक्यार्थोद्बोधनं कर्तुं पुनराहन्यते तिङा ॥ १३ ॥

'ननूदात्तं पदं दृष्टं वाक्यमध्येऽपि तद्यथा ।
'मानः शंसो अररुषः,' 'इन्द्र सोमं पिबे'ति च ॥ १४ ॥

तत्र ब्रूमोऽर्थसंस्थानमिह यस्मिन् भवेत्तिङि ।
तत्तु सर्वानुदात्तं स्यादसंस्थित उदात्तवत् ॥ १५ ॥

मा प्राप्नोतु कदर्थस्य शंसोऽस्मान् ब्रह्मणस्पते ।
रक्षैवमिति मन्त्रार्थः पाने चावेशनं फलम् ॥ १६ ॥

लुडर्थे ननु वाक्यार्थः स्पष्टं सन्तिष्टते तव ।
सत्यमाह भवानेतत् काकुस्तत्र तु विद्यते ॥ १७ ॥

यथा तिङ्क्षु हि युक्तेषु ह्यर्थे वाक्यस्य संस्थितिः ।
एवं लुट्यपि संस्थानं तस्मिन् काकाविति स्थितिः ॥ १८ ॥

'परा हि मे विमन्यवः' 'आहिष्मा सूनवे पिता ।
'नहि वामस्ति दूरके,' 'आयजी वाजसातमा' ॥ १९ ॥

आश्चर्य एषु मन्त्रेषु तिङर्थः पर्यवस्यति ।
हेतौ 'सं यन्मदाये'ति तेष्वतस्तिङुदात्तवत् ॥ २० ॥

एवं येनेह युक्तं सत् तिङन्तं न निहन्यते ।
तदर्थे तत्र संस्थानं न तिङर्थ इति स्थितिः ।। २१ ।।

एवं पदे समासे च यत्रोदात्तो व्यवस्थितः ।
वर्णे पदे वा तत्रापि काकुरस्तीति निश्चयः ।। २२ ।।

तत्रैकस्मिन् पदे काकुर्देवैरेवावगम्यते ।
सूक्ष्मविद्भिः समासस्थः प्राकृतैरपि तिङ्स्वरः ।। २३ ।।

म्लेच्छेन ...................... हर्तृषु ।
वाक्यवृत्तिप्रकारोऽयं सदृशो लौकिकेष्वपि ।। २४ ।।

मन्यन्ते पण्डितास्त्वन्ये यथाव्याकरणं स्वरम् ।
व्यवस्थितो व्यवस्थायां 'हेतुः कश्चिन्न विद्यते ।। २५ ।।

माधवस्य त्वयं पक्षः स्वरेणैव व्यवस्थितिः ।
अर्थमभीप्सत् ....... ....... .... ।। २६ ।।

अर्थज्ञानं ऋषिज्ञानं भूयिष्टमुपकारकम् ।
वक्ष्यन्त ऋषयस्तस्मात् स्वरूपस्थास्तु देवताः ।। २७ ।।

पादावसानविज्ञानं छन्दोज्ञानेन सिध्यति ।
पारुच्छेपादिषु ज्ञेयमतश्छन्दश्च यत्नतः ।। २८ ।।

विनियोगपरिज्ञानाद् यजुषामर्थनिश्चयः ।
इतिहासैर्ऋगर्थानां बहुब्राह्मणदर्शितैः ।। २९ ।।

उपक्रमेषु सूक्तानामुद्युक्त 'इव दृश्यते' ।
संहरन्निव चान्तेषु सूक्तं ज्ञेयमतो बुधैः ।। ३० ।।

मधुच्छन्दा वैश्वामित्र ऋषिः । अग्निं स्तौमि पुरो निहितमुत्तरवेद्यां यज्ञस्य द्युस्थानं स्वे स्वे काले देवानां यष्टारम्, ह्वातारं देवानाम्, रमणीयानां धनानां दातृतमम् ।। १ ।।

## मुद्गलविरचितभाष्यम्

सच्चिदानन्तरूपाय नित्याय विमलाय च ।
प्रत्यक्चेतनरूपाय जगद्रूपाय ते नमः ।। १ ।।

गणेशाय नमस्तुभ्यं निर्विघ्नकरणाय च ।
सरस्वत्यै नमस्तुभ्यं ज्ञानबोधे स्थिरा भव ।। २ ।।

आलोच्य पूर्वभाष्यं च बह्वृचस्य समन्ततः ।
गहनं मन्यमानेन सुबोधेन समुद्धृतम् ।। ३ ।।

नवनीतं यथा क्षीरात् सिकतायाश्च काञ्चनम् ।
तथा समुद्धृतं सारं प्राणिनां बोधसिद्धये ।। ४ ।।
मौद्गल्यगोत्रेण च मुद्गलेन ह्यात्मानुभूतेन सुसंस्कृतेन ।
यथार्थभूतेन सुसाधकेन समुद्धृतं सारमिदं यदिष्टम् ।। ५ ।।

वेदार्थहीनस्य भारवाहत्वं वेदाङ्गे निरुक्ते उक्तम्–

'स्थाणुरयं भारहारः किलाऽभूदधीत्य वेदं न विजनाति योऽर्थम् ।
योऽर्थज्ञ इत् सकलं भद्रमश्नुते नाकमति ज्ञानविधूतपाप्मा ।।' (शाआ.१४,२, या १,१८) ।

वेदमधीत्य वेदाऽर्थो ज्ञातव्यः । तदुक्तम्– श्रौतस्मार्तकर्म कर्तव्यं फलत्यागपूर्वकम् । कृतेन स्वशाखोक्तकर्मणा चित्तशुद्धिर्भविष्यति । तत्कारणात् वेदार्थज्ञानमवश्यं साधयितव्यम् । ऋग्वेदस्याश्वलायनी शाङ्खायनी शाकला बाष्कला माण्डूका चेति पञ्च शाखाः । तत्र शाकलसंहितायां दश मण्डलानि । तत्र प्रथमे मण्डले चतुर्विंशतिरनुवाकाः । तत्र प्रथमानुवाके त्रीणि सूक्तानि देवताच्छन्दऋषीणां सम्यग्बोधाय प्रकाशितानि । तत्र अग्निमीळ इति नवर्चं प्रथमं सूक्तम् । विश्वामित्रपुत्रो मधुच्छन्दा ऋषिः । गायत्रम् । आग्नेयम् ।

**अग्निं** देवं **ईळे** स्तौमि । कीदृशं अग्निम् ? **यज्ञस्य पुरोहितं** यज्ञस्य पूर्वभागे आहवनीयरूपेणावस्थितम् । पुनः कीदृशम् ? **देवं** दानादिगुणयुक्तम् । **होतारं ऋत्विजम्** । देवानां यज्ञेषु होतृनामक ऋत्विक् अग्निरेव । पुनः कीदृशम् ? **रत्नधातमं** यागफलरूपाणां रत्नानामतिशयेन धारयितारम् ।। १ ।।

## श्रीमत्सायणाचार्यविरचितं भाष्यम्

### उपोद्घातप्रकरणम्

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमासि गजाननम् ।। १ ।।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ।। २ ।।

यत्कटाक्षेण तद्रूपं दधद्बुक्कमहीपतिः ।
आदिशन्माधवाचार्यं वेदार्थस्य प्रकाशने ।। ३ ।।

ये पूर्वोत्तरमीमांसे ते व्याख्यायातिसङ्ग्रहात् ।
कृपालुर्माधवाचार्यो वेदार्थं वक्तुमुद्यतः ।। ४ ।।

आध्वर्यवस्य यज्ञेषु प्राधान्याद्व्याकृतः पुरा ।
यजुर्वेदोऽथ हौत्रार्थमृग्वेदो व्याकरिष्यते ।। ५ ।।

एतस्मिन् प्रथमोऽध्यायः श्रोतव्यः सम्प्रदायतः ।
व्युत्पन्नस्तावता सर्वं बोद्धुं शक्नोतिबुद्धिमान् ।। ६ ।।

अत्र केचिदाहुः । ऋग्वेदस्य प्राथम्येन सर्वत्राम्नातत्वात् 'अभ्यर्हितं पूर्वम्' इति न्यायेनाभ्यर्हितत्वात् तद्व्याख्यानमादौ युक्तम् । प्राथम्यं च पुरुषसूक्ते विस्पष्टं–

'तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे ।
छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत' (ऋ.सं.१०,९०,९) इति ।

तस्मात् 'सहस्रशीर्षा पुरुषः' (ऋ.सं.१०९०,१) इत्युक्तात् परमेश्वरात् यज्ञात् यजनीयात् पूजनीयात् सर्वहुतः सर्वैर्हूयमानात् । यद्यपीन्द्रादयस्तत्र तत्र हूयन्ते तथापि परमेश्वरस्यैव इन्द्रादिरूपेणावस्थानादविरोधः । तथा च मन्त्रवर्णः–

इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् ।
एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः' (ऋ.सं. १०,१६४,४६) इति ।

वाजसनेयिनश्चामनन्ति– 'तद्यदिदमाहुरमुं यजामुं यजेत्येकैकं देवमेतस्यैव सा विसृष्टिरेष उ ह्येव सर्वे देवाः' (बृ.उ.१,४,६) इति । तस्मात् सर्वैरपि परमेश्वर एव हूयते ।

न केवलमृचां प्राठे प्राथम्येनाभ्यर्हितत्वं किंतु यज्ञाङ्गदार्ढ्यहेतुत्वादपि । तथा च तैत्तिरीया आमनन्ति– 'यद्वै यज्ञस्य साम्ना यजुषा क्रियते शिथिलं तद्यदृचा तद्दृढम्' (तै.सं. ६,५,१०,३) इति । तथा च सर्ववेदगतानि ब्राह्मणानि स्वाभिहितेऽर्थे विश्वासदार्ढ्याय 'तदेतदृचाऽभ्युक्तम्' इति ऋचमेवोदाहरन्ति ।

मन्त्रकाण्डेष्वपि यजुर्वेदगतेषु तत्र तत्राध्वर्युणा प्रयोज्या ऋचो बहव आम्नाताः । साम्नां तु सर्वेषामृगाश्रितत्वं प्रसिद्धम् । आथर्वणिकैरपि स्वकीयसंहितायामृच एव बाहुल्येनाधीयन्ते । अतोऽन्यैः सर्वैर्वेदैरादृतत्वादभ्यर्हितत्वं प्रसिद्धम् । छन्दोगाश्च प्राथम्ये सनात्कुमारं प्रति नारदवाक्यमेवमामनन्ति– 'ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थम् (छां.उ.७.१,२) इति । मुण्डकोपनिषद्यप्येवमाम्नायते– 'ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः' (मुं.उ.१,१,५) इति । तापनीयोपनिषद्यपि मन्त्रराजपादेषु क्रमेणाध्ययनमेवमामनन्ति– 'ऋग्यजुः-सामाथर्वाणश्चत्वारो वेदाः साङ्गाः सशाखाश्चत्वारः पादा भवन्ति' (नृ.ता.उ.१,२) इति । एवं सर्वत्रोदाहरणीयम् । तस्मात् ऋग्वेदस्याभ्यर्हितस्यादौ व्याख्यानमुचितमिति तान् प्रत्येतदुच्यते ।

अस्त्वेवं सर्ववेदाध्ययनतत्पारायणब्रह्मयज्ञजपादौ ऋग्वेदस्यैव प्राथम्यम् । अर्थज्ञानस्य तु यज्ञानुष्ठानार्थत्वात् तत्र तु यजुर्वेदस्यैव प्रधानत्वात् तद्याख्यानमेवादौ युक्तम् । तत्प्राधान्यं च काचिदृगेवाह–

'ऋचां त्वः पोपमास्ते पुपुष्वान् गायत्रं त्वो गायति शक्वरीषु ।
ब्रह्मा त्वो वदति जातविद्यां यज्ञस्य मात्रां विमिमीत उत्वः ।। (ऋ.सं.१०,७१,११) इति ।

एतस्या ऋचस्तात्पर्यं निरुक्तकारो यास्कः संक्षिप्य दर्शयति– 'इत्यृत्विक्कर्मणां विनियोगमाचष्टे' इति । पुनरपि स एव प्रथमं पादं विवृणोति– 'ऋचामेकः पोषमास्ते पुपुष्वान् होतर्गर्चनी' (निरु.१,८) इति । अस्यायमर्थः । त्वशब्द एकशब्दपर्यायो होतृविशेषणम् । होतृनामक एक ऋत्विक् यज्ञकाले स्वकीयवेदगतानामृचां पुष्टिं कुर्वन्नास्ते । भिन्नप्रदेशेष्वाम्नातानामृचां सङ्घमेकत्र सम्पाद्यैतावदिदं शस्त्रमिति क्लृप्तिं करोति । सेयं पुष्टिः । अर्चनीत्यमुमर्थमृक्शब्द आचष्टे । अर्च्यते प्रशस्यतेऽनया देवविशेषः क्रियाविशेषस्तत्साधनविशेषो वा इति ऋक्शब्दव्युत्पत्तिरिति ।

अथ द्वितीयं पादं विवृणोति– 'गायत्रमेको गायति शक्वरीषूद्गाता । गायत्रं गायतेः स्तुतिकर्मणः शक्वर्य ऋचः शक्नोतेस्तद्यदाभिर्वृत्रमशकद्धन्तुं तच्छक्वरीणां शक्वरीत्वमिति विज्ञायते' इति । अस्यायमर्थः– उद्गातृनामकः एकः ऋत्विक् गायत्रशब्दाभिधेयं स्तोत्रं शक्वरीशब्दाभिधेयासु ऋक्षु गायति । धातूनामनेकार्थत्वेन स्तुतिक्रियावाचिनो गायतिधातोरुत्पन्नोऽयं गायत्रशब्दः । शक्वरीशब्दस्तु शक्नोतिधातोरुत्पन्नः । वृत्रं शत्रुं हन्तुं शक्नोत्याभिः ऋग्भिरित्येषा व्युत्पत्तिः कस्मिंश्चित् ब्राह्मणे विज्ञायते इति ।

अथ तृतीयं पादं विवृणोति– 'ब्रह्मैको जाते जाते विद्यां वदति । ब्रह्मा सर्वविद्यः सर्वं वेदितुमर्हति' इति । अस्यायमर्थः– ब्रह्मनामकः एकः ऋत्विक् जाते जाते तदा तदोत्पन्ने यज्ञे प्रस्तुते प्रणयनादिकर्मणि विद्यां अनुज्ञां वदति, 'ब्रह्मन्नपः प्रणेष्यामि' इत्येवं सम्बोधितः सन् 'ॐ प्रणय' इत्यनुजानाति । स च ब्रह्मा वेदत्रयोक्तसर्वकर्माभिज्ञः । तस्मात् योग्यतां दृष्ट्वा तत्तदनुज्ञातुं सति प्रमादे समाधातुं च समर्थः इति । तच्च सामर्थ्यं छन्दोगा आमनन्ति– 'एष एव यज्ञस्तस्य मनश्च वाक् च वर्तनी तयोरन्यतरां मनसा संस्करोति ब्रह्मा वाचा होताध्वर्युरुद्गातान्यतराम्' (छां.उ.४,१६,१-२) इति । कृत्स्नो यज्ञः प्रमादराहित्याय मनसा सम्यगनुसन्धेयो वाचा च वेदत्रयोक्तमन्त्राः पठनीयाः । तत्र होत्रादयस्त्रयो मिलित्वा वाग्रूपं यज्ञमार्गं संस्कुर्वन्ति । ब्रह्मा तु एक एव मनोरूपं यज्ञमार्गं कृत्स्नमपि संस्करोति । तस्मादस्यास्ति सामर्थ्यमिति ।

अथ चतुर्थं पादं विवृणोति– 'यज्ञस्य मात्रां विमिमीत एकोऽध्वर्युरध्वर्युरध्वरयुरध्वरं युनक्त्यध्वरस्य नेता' इति । अस्यायमर्थः– अध्वर्युनामकः एकः ऋत्विक् यज्ञस्य मात्रां स्वरूपं विमिमीते विशेषेण निष्पादयति । मीयते निर्मीयते इति मात्रा स्वरूपम् । तन्निष्पादकत्वं च अध्वर्योर्नामनिर्वचनादवगम्यते । 'अध्वर्युः' इत्यत्र छान्दस्या प्रक्रियया लुप्तं अकारं पुनः प्रक्षिप्य 'अध्वरयुः' इति नाम सम्पादनीयम् । अध्वरं युनक्तीत्यवयवार्थः । अध्वरस्य नेतेति तात्पर्यार्थ इति । एतदेवाभिप्रेत्याध्वर्युवेदस्य यागनिष्पादकत्वद्योतकं निर्वचनं यास्को दर्शयति– 'मन्त्रा मननाच्छन्दांसि छादनात् स्तोमः स्तवनाद्यजुर्यजतेः' (निरु.७.१२) इति । एवं सति अध्वर्युसम्बन्धिनि यजुर्वेदे निष्पन्नं यज्ञशरीरमुपजीव्य तदपेक्षितौ स्तोत्रशस्त्ररूपावयवौ इतरेण वेदद्वयेन पूर्येते इत्युपजीव्यस्य यजुर्वेदस्य प्रथमतो व्याख्यानं युक्तम् । तत ऊर्ध्वं साम्नामृगाश्रितत्वादुभयोर्मध्ये प्रथमत ऋग्व्याख्यानं युक्तमिति ऋग्वेद इदानीं व्याख्यायते ।

ननु वेद एव तावन्नास्ति कुतस्तदवान्तरविशेष ऋग्वेदः । तथा हि । कोऽयं वेदो नाम । न हि तत्र लक्षणं प्रमाणं वाऽस्ति । न च तदुभयव्यतिरेकेण किञ्चिद्वस्तु प्रसिध्यति । 'लक्षणप्रमाणाभ्यां हि वस्तुसिद्धिः' इति न्यायविदां मतम् ।

प्रत्यक्षानुमानागमेषु प्रमाणविशेषेषु अन्तिमो वेद इति तल्लक्षणमिति चेत् । न । मन्वादिस्मृतिष्वतिव्याप्तेः । समयबलेन 'सम्यक्परोक्षानुभवसाधनम्' इत्येतस्यागमलक्षणस्य तास्वपि सद्भावात् । 'अपौरुषेयत्वे सति' इति विशेषणात् अदोषः इति चेत् । न । वेदस्यापि परमेश्वरनिर्मितत्वेन पौरुषेयत्वात् । शरीरधारिपुरुषनिर्मितत्वाभावादपौरुषेयत्वमिति चेत् । न । 'सहस्रशीर्षा पुरुषः' (ऋ.सं.१०,९०,१) इत्यादिश्रुतिभिरीश्वरस्यापि शरीरित्वात् । कर्मफलरूपशरीरधारिजीवनिर्मितत्वाभावमात्रेण अपौरुषेयत्वं विवक्षितमिति चेत् । न । जीवविशेषैरग्निवाय्वादित्यैर्वेदानामुत्पादितत्वात् । 'ऋग्वेद एवाग्नेरजायत यजुर्वेदो वायोः सामवेद आदित्यात् (ऐ.ब्रा. ५.३२) इति । श्रुतेः ईश्वरस्य अग्न्यादिप्रेरकत्वेन निर्मातृत्वं द्रष्टव्यम् । मन्त्रब्राह्मणात्मकः शब्दराशिर्वेद इति चेत् । न । ईदृशो मन्त्रः ईदृशं ब्राह्मणम् इत्यनयोरद्याप्यनिर्णीतत्वात् । तस्मान्नास्ति किञ्चित् वेदस्य लक्षणम् ।

नापि तत्सद्भावे प्रमाणं पश्यामः । 'ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थम्' (छां.उ.७.१.२) इत्यादिवाक्यं प्रमाणमिति चेत् । न । तस्यापि वाक्यस्य वेदान्तःपातित्वेन आत्माश्रयत्वप्रसङ्गात् । न खलु निपुणोऽपि स्वस्कन्धमारोढुं प्रभवति । 'वेद एव द्विजातीनां निःश्रेयसकरः परः' (याज्ञ.१.४०) इत्यादिस्मृतिवाक्यं प्रमाणमिति चेत् । न । तस्याप्युक्तश्रुतिमूलत्वेन निराकृतत्वात् । प्रत्यक्षादिकं तु शङ्कितुमप्ययोग्यम् । वेदविषया तु लोकप्रसिद्धिः सार्वजनीनाऽपि 'नीलं नभः' इत्यादिवत् भ्रान्ता । तस्मात् लक्षणप्रमाणरहितस्य वेदस्य सद्भावो नाङ्गीकर्तुं शक्यते इति पूर्वः पक्षः ।

अत्रोच्यते– मन्त्रब्राह्मणात्मकत्वं तावददुष्टं लक्षणम् । अत एव आपस्तम्बो यज्ञपरिभाषायामेवमाह– 'मन्त्रब्राह्मणयोर्वेदनामधेयम्' (आप.परि.१.३३) इति । तयोस्तु स्वरूपमुपरिष्टान्निर्णेष्यते । अपौरुषेयवाक्यत्वमितीदमपि यादृशमस्माभिर्विवक्षितं तादृशमुत्तरत्र स्पष्टीभविष्यति । प्रमाणान्यपि यथोक्तश्रुतिस्मृतिलोकप्रसिद्धिरूपाणि वेदसद्भावे द्रष्टव्यानि । यथा घटपटादिद्रव्याणां स्वप्रकाशकत्वाभावेऽपि सूर्यचन्द्रादीनां स्वप्रकाशकत्वमविरुद्धं, तथा मनुष्यादीनां स्वस्कन्धारोहा-

सम्भवेऽपि अकुण्ठितशक्तेर्वेदस्य इतरवस्तुप्रतिपादकत्ववत् स्वप्रतिपादकत्वमप्यस्तु । अत एव सम्प्रदायविदः अकुण्ठितां शक्तिं वेदस्य दर्शयन्ति– 'चोदना हि भूतं भवन्तं भविष्यन्तं सूक्ष्मं व्यवहितं विप्रकृष्टमित्येवं जातीयकमर्थं शक्नोत्यवगमयितुम्' (शाब.भा.१,१,२) इति । तथा सति वेदमूलायाः स्मृतेस्तदुभयमूलाया लोकप्रसिद्धेश्च प्रामाण्यं दुर्वारम् । तस्मात् लक्षणप्रमाणसिद्धो वेदो न केनापि चार्वाकादिना अपोढुं शक्यते इति स्थितम् ।

नन्वस्तु नाम वेदाख्यः कश्चित् पदार्थः । तथापि नासौ व्याख्यानमर्हति । अप्रमाणत्वेनानुपयुक्तत्वात् । न हि वेदः प्रमाणम् । तल्लक्षणस्य तत्र दुःसम्पादत्वत् । तथा हि 'सम्यगनुभवसाधनं प्रमाणम्' इति केचिल्लक्षणमाहुः । अपरे तु 'अनधिगतार्थगन्तृ प्रमाणम्' इत्याचक्षते । न चैतदुभयं वेदे सम्भवति । मन्त्रब्राह्मणात्मको हि वेदः । तत्र मन्त्राः केचिदबोधकाः । 'अम्यक् सा त इन्द्र ऋष्टिः' (ऋ.सं.१,१६९,३) इत्येको मन्त्रः । 'यादृश्मिन् धायि तमपस्यया विदत्' (ऋ.सं.५,४४,८) इत्यन्यः । 'सृण्येव जर्भरी तुर्फरीतू' (ऋ.सं.१०,१०६,६) इत्यपरः । एवं 'आपान्तमन्युस्तृपलप्रभर्मा' (ऋ.सं.१०,८९,५) इत्यादय उदाहार्याः । न ह्येतैर्मन्त्रैः कश्चिदप्यर्थोऽवबुध्यते । एतेष्वनुभव एव यदा नास्ति तदा तत्सम्यक्त्वं तदीयसाधनत्वं च दूरापेतम् । 'अधः स्विदासी३दुपरि स्विदासी३त्' (ऋ.सं.१०,१२९,५) इति मन्त्रस्य बोधकत्वेऽपि स्थाणुर्वा पुरुषो वा इत्यादिवाक्यवत् सन्दिग्धार्थबोधकत्वान्नास्ति प्रामाण्यम् । 'ओषधे त्रायस्वैनम्' (तै.सं.१,२,१,१) इति मन्त्रो दर्भविषयः (आश्व.गृ.१,१७,८) । 'स्वधिते मैनं हिंसीः' (तै.सं.१,२,१,१) इति क्षुरविषयः (आश्व.गृ.१,१७,९) । 'शृणोत ग्रावाणः' (तै.सं.१,३,१३,१) इति पाषाणविषयः । एतेष्वचेतनानां दर्भक्षुरपाषाणानां चेतनवत् सम्बोधनं श्रूयते । ततो 'द्वौ चन्द्रमसौ' इति वाक्यवद्विपरीतार्थबोधकत्वादप्रामाण्यम् । 'एक एव रुद्रो न द्वितीयाय तस्थे' (तै.सं.१,८,६,१) 'सहस्राणि सहस्रशो ये रुद्रा अधि भूम्याम्' (तै.सं.४,५,११,१) इत्यनयोस्तु मन्त्रयोः 'यावज्जीवमहं मौनी' इति वाक्यवत् व्याघातबोधकत्वादप्रामाण्यम् । 'आप उन्दन्तु' (तै.सं.१,२,१,१) इति मन्त्रो यजमानस्य क्षौरकाले जलेन शिरसः क्लेदनं ब्रूते । 'शुभिके शिर आरोह शोभयन्ती मुखं मम' इति मन्त्रो विवाहकाले मङ्गलाचरणार्थं पुष्पनिर्मितायाः शुभिकाया वरवध्वोः शिरस्यवस्थानं ब्रूते । तयोश्च मन्त्रयोर्लोकप्रसिद्धार्थानुवादित्वात् अनधिगतार्थगन्तृत्वं नास्ति । तस्मात् मन्त्रभागो न प्रमाणम् ।

अत्रोच्यते– अम्यगादिमन्त्राणामर्थो यास्केन निरुक्तग्रन्थेऽवबोधितः । तत्परिचयरहितानाम-नवबोधो न मन्त्राणां दोषमावहति । अत एवात्र लोकन्यायमुदाहरन्ति– 'नैष स्थाणोरपराधो यदेनमन्धो न पश्यति पुरुषापराधः स भवति' (निरु.१,१६) इति । 'अधः स्विदासीत्' इति मन्त्रश्च न सन्देहप्रबोधनाय प्रवृत्तः । किं तर्हि जगत्कारणस्य परवस्तुनोऽतिगम्भीरत्वं निश्चेतुमेव प्रवृत्तः । तदर्थमेव हि गुरुशास्त्रसम्प्रदायरहितैर्दुर्बोधत्वम् 'अधः स्वित्' इत्यनया वचोभङ्ग्योप-न्यस्यति । स एवाभिप्राय उपरितनेषु 'को अद्धा वेद' (ऋ.सं.१०,१२९,६) इत्यादिमन्त्रेषु स्पष्टीकृतः । ओपध्यादिमन्त्रेष्वपि चेतना एव तत्तदभिमानिदेवताः तेन तेन नाम्ना सम्बोध्यन्ते । ताश्च देवता भगवता बादरायणेन 'अभिमानिव्यपदेशस्तु' (ब्र.सू.२,१,५) इति सूत्रे सूत्रिताः । एकस्यापि रुद्रस्य स्वमहिम्ना सहस्रमूर्तिस्वीकारान्नास्ति परस्परव्याघातः । जलादिद्रव्येण शिरः-क्लेदनादेर्लोकप्रसिद्धत्वेऽपि तदभिमानिदेवतानुग्रहस्याप्रसिद्धत्वात् तद्विषयत्वेनाज्ञातार्थज्ञापकत्वम् । ततो लक्षणसद्भावादस्ति मन्त्रभागस्य प्रामाण्यम् ।

एतदेवाभिप्रेत्य भगवान् जैमिनिः मन्त्राधिकरणे मन्त्राणां विवक्षितार्थत्वमसूत्रयत् (जै.सू. १,२,३१-४५) । तानि च सूत्राणि क्रमेणोदाहृत्य व्याख्यास्यामः । तत्र पूर्वपक्षं सूत्रयति– 'तदर्थशास्त्रात्' इति । यस्यार्थस्याभिधाने समर्थो मन्त्रः स एवाभिधेयो यस्य शास्त्रस्य ब्राह्मण-वाक्यस्य तदिदं वाक्यं तदर्थशास्त्रम् । तस्मात् शास्त्रादविवक्षितार्थो मन्त्रः इत्यवगम्यते । तथा हि 'उरु प्रथस्व' (तै.सं.१,१,८; वा.सं.१,२२) इति मन्त्रेण पुरोडाशप्रथनमभिधीयते । 'पुरोडाशं प्रथयति' (तै.ब्रा.३,२,८,४; श.ब्रा.१,२,२,८) इति ब्राह्मणेनापि तदेवाभिधीयते । तथा सति मन्त्रेणैव प्रतीतत्वात् तदर्थबोधनाय प्रवृत्तं ब्राह्मणमनर्थकं स्यात् । मन्त्रस्याविवक्षितार्थत्वे तु विनियोगबोधनाय ब्राह्मणमुपयुक्तम् । तस्मात् मन्त्रा उच्चारणेनैवानुष्ठाने उपकुर्वन्ति । ननु उच्चारणार्थत्वे सति अदृष्टं प्रयोजनं परिकल्प्येत । अर्थाभिधायकत्वे तु दृष्टं लभ्यते । तस्मात् ब्राह्मणस्यानुवादकत्वमभ्युपेत्यापि मन्त्रस्याभिधानार्थत्वमेव इत्याशङ्क्य उत्तरं सूत्रयति– 'वाक्यनियमात्' इति । 'अग्निर्मूर्धा दिवः ककुत्' (ऋ.सं.८,४४,१६) इत्येवमेव वाक्यं पठितव्यमिति मन्त्रे नियम उपलभ्यते । अर्थप्रत्यायनं तु मूर्धाग्निरित्येवं व्युत्क्रमपाठेऽपि भवत्येव । तस्मात् नियतपाठक्रमसाफल्याय उच्चारणमेव मन्त्रप्रयोजनम् ।

ननु पाठक्रमनियममात्रस्य अदृष्टार्थत्वेऽपि मन्त्रपाठोऽर्थबोधार्थ एव इत्याशङ्क्य तत्र दोषान्तरं सूत्रयति–

'बुद्धशास्त्रात्' इति । 'अग्नीदग्नीन्विहर' (तै.सं.६,३,१,२) इति प्रैषमन्त्रः प्रयोगकाले पठ्यते । तच्च अग्निविहरणादिकं आग्नीध्रेण अध्ययनकाले एव स्वकर्तव्यत्वेन बुद्धम् । तस्य च बुद्धस्यार्थस्य पुनर्मन्त्रोच्चारणेन शासनमनर्थकम् । न हि सोपानत्के पादे पुनरप्युपानहं प्रतिमुञ्चति ।

ननु बुद्धस्याप्यर्थस्य प्रामादिकविस्मरणपरिहाराय मन्त्रेण स्मारणमस्तु इत्याशङ्क्य दोषान्तरं सूत्रयति– 'अविद्यमानवचनात्' इति । 'चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य' (ऋ.सं.४,५८,३) इति मन्त्र आम्नायते । न खलु चतुःशृङ्गत्वाद्युपेतं किञ्चित् यज्ञसाधनं विद्यते यन्मन्त्रपाठेनानुस्मर्येत ।

ननु ईदृशी काचिद्देवता स्यात् इत्याशङ्क्य अन्यं दोषं सूत्रयति– 'अचेतनेऽर्थबन्धनात्' इति । 'ओषधे त्रायस्वैनम्,' 'शृणोत ग्रावाणः' इत्यादौ अचेतने द्रव्ये चेतनोचितरक्षणश्रवणाद्यर्थं बध्नाति । स चायुक्तः । ननु 'अभिमानिव्यपदेश' इति वैयासिकशास्त्रे सूत्रितत्वात् ओषध्याद्यभिमानिचेतनदेवताऽत्र विवक्ष्यतामित्याशङ्क्य दोषान्तरं सूत्रयति– 'अर्थविप्रतिषेधात्' इति । 'अदितिर्द्यौरदितिरन्तरिक्षम्' (ऋ.सं.१,८९,१०) इति मन्त्रः आम्नायते । यदेव द्यौस्तदेवान्तरिक्षमित्ययमर्थो विप्रतिषिद्धः । एवम् 'एक एव रुद्रः' (तै.सं.१,८,६,१), 'सहस्राणि सहस्रशो ये रुद्राः' (तै.सं.४,५,११,१) इत्यादिकमप्युदाहर्तव्यम् ।

ननु 'त्वमेव माता च पिता त्वमेव' इत्यादिवत् अन्तरिक्षादिरूपत्वेन अदितिः स्तूयते । एवमेकस्यापि रुद्रस्य योगसामर्थ्यात् बहुमूर्तिस्वीकारोऽस्तु । ततो नार्थविप्रतिषेधः इत्याशङ्क्य दोषान्तरं सूत्रयति–'स्वाध्यायवदवचनात्' इति । पूर्णिका नाम काचित् योषित् अवघातं करोति । तत्समीपे माणवकः स्वाध्यायग्रहणार्थं कदाचित् अवघातमन्त्रमधीते । न च तस्यार्थप्रकाशन-विवक्षाऽस्ति, प्रतिमुसलप्रहारं तस्य मन्त्रस्यापठ्यमानत्वात् । अक्षरग्रहणायैव तं मन्त्रमन्यांश्च मन्त्रानभ्यस्यति । तत्र स्वाध्यायकाले पठितोऽप्यवघातमन्त्रो यथा पूर्णिकां प्रति स्वार्थं न ब्रूते तथा कर्मकालेऽपि स्वार्थं न वक्ष्यति । ननु तत्र माणवकस्य अर्थे विवक्षा नास्ति । पूर्णिकाऽप्यवबोद्धुमक्षमा । कर्मणि तु अध्वर्योरर्थविवक्षा विद्यते, बोधश्च सम्भवति इत्याशङ्क्य दोषान्तरं सूत्रयति–

'अविज्ञेयात्' इति । केषाञ्चिन्मन्त्राणामर्थो विज्ञातुं न शक्यते । तद्यथा– 'अम्यक्सा त इन्द्र ऋष्टिरस्मे' इत्येको मन्त्रः । 'सृण्येव जर्भरी तुर्फरीतू' इत्यपरो मन्त्रः । ननु ईदृश-मन्त्रार्थबोधायैव निगमनिरुक्तव्याकरणानि प्रवृत्तानीत्याशङ्क्य दोषान्तरं सूत्रयति– 'अनित्यसंयोगान्मन्त्रानर्थक्यम्' इति । 'किं ते कृण्वन्ति कीकटेषु' (ऋ.सं.३,५३,१४) इति मन्त्रे कीकटो नाम जनपद आम्नातः । तथा नैचाशाखं नाम नगरं प्रमगन्दो नाम राजा इत्येतेऽर्था अनित्या आम्नाताः । तथा च सति प्राक् प्रमगन्दात् नायं मन्त्रो भूतपूर्व इति गम्यते । तदेवमेतैः तदर्थशास्त्रादिभिर्हेतुभिर्मन्त्राणामर्थप्रत्यायनार्थत्वं नास्ति । किन्तु उच्चारणाददृष्टार्था एवेति पूर्वपक्षः ।।

तत्र सिद्धान्तं सूत्रयति– 'अविशिष्टस्तु वाक्यार्थः' इति । तुशब्देन मन्त्राणामदृष्टार्थ-मुच्चारणमात्रं वारयति । क्रियाकारकसम्बन्धेन प्रतीयमानो वाक्यार्थो लोकवेदयोरविशिष्टः । तथा सति यथा लोकेऽर्थप्रत्यायनायैव वाक्यमुच्चार्यते तथा वैदिकयागप्रयोगेऽपि द्रष्टव्यम् । मन्त्रेण प्रकाशितस्त्वर्थोऽनुष्ठातुं शक्यते न त्वप्रकाशितः । तस्मात् मन्त्रोच्चारणस्यार्थप्रकाशनरूपं दृष्टमेव प्रयोजनम् ।

ननु 'अभ्रिरसि नारिरसि' इत्यारभ्य 'त्रैष्टुभेन त्वा छन्दसा ददे' (तै.सं.४,१,१,३-४) इति मन्त्र आम्नातः । तेनैव मन्त्रेण प्रतीतेऽपि अभ्र्यादाने पुनर्ब्राह्मणे 'तां चतुर्भिरभ्रिमादत्ते' (तै.सं.५,१,१,४) इति विधीयते । तदेतद्विधानं त्वत्पक्षे व्यर्थं स्यादित्याशङ्क्योत्तरं सूत्रयति– 'गुणार्थेन पुनः श्रुतिः' इति । मन्त्रेण प्रतीतस्यैवार्थस्य ब्राह्मणे यत्पुनः श्रवणं तदेतच्चतुःसङ्ख्या-लक्षणगुणविधानार्थत्वेनोपयुज्यते । एतस्य विधानस्याभावे चतुर्णां मन्त्राणां मध्ये येन केनाप्येकेन अभ्रिरादीयेत ।

ननु 'इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते (तै.सं.५,१,२,१) इत्यत्र मन्त्रसामर्थ्यादेव प्राप्तस्य रशनादानस्य पुनर्ब्राह्मणवाक्यं विनियोजकमाम्नायते । तदेतत् त्वन्मते व्यर्थमित्याशङ्क्योत्तरं सूत्रयति– 'परिसङ्ख्या' इति । 'गर्दभाभिधानीं नादत्ते' इति निषेधः परिसङ्ख्या । तदर्थमिदं ब्राह्मणवाक्यम् । ननु परिसङ्ख्यायां त्रयो दोषाः प्राप्नुयुः । 'आदत्ते' इति शब्दो रशनादानलक्षणं स्वार्थं जह्यात् । निषेधलक्षणः परार्थोऽस्य शब्दस्य कल्प्येत । रशनात्वसामान्येन च प्राप्तं गर्दभरशनाया आदानं बाध्येत इति त्रयो दोषाः । मैवम् । गर्दभरशनाया अप्राप्तत्वात् । तथाहि । त्वत्पक्षे प्रकरणपाठान्यथानुपपत्त्या मन्त्रेणानेन आदानं कुर्यात् इति वाक्यं परिकल्प्यते । तेन

च वाक्येन मन्त्रादानयोः सम्बन्धे सिद्धे सति पश्चात् किं विषयकमादानमिति वीक्षायां लिङ्गात् रशनामात्रस्यादानमुपेत्य गर्दभरशनायाः प्राप्तिर्वक्तव्या । साच विलम्ब्यते । 'इत्यश्वाभिधानीम्' इति प्रत्यक्षेण वाक्येन मन्त्रादानयोः सम्बन्धे सति लिङ्गात् रशनामात्रे प्राप्तमादानम् 'अश्वाभिधानीम्' इति श्रुत्या विशेषे व्यवस्थाप्यते । ततो मन्त्रस्य निराकाङ्क्षत्वात् गर्दभरशनाया अप्राप्तत्वान्नास्ति प्राप्तबाधः । अत एव निषेधार्थो न कल्प्यते । विध्यर्थश्च न त्यज्यते । तत्र कुतो दोषत्रयम् । ईदृशमप्राप्तिरूपमेव गर्दभरशनाया निवारणमभिप्रेत्य 'परिसङ्ख्या' इति सूत्रितम् । ननु 'उरु प्रथस्वेति प्रथयति' इति ब्राह्मणस्य वैयर्थ्यं तदवस्थमेव इत्याशङ्क्य उत्तरं सूत्रयति– 'अर्थवादो वा' इति । वाशब्दो वैयर्थ्यं वारयति । अस्त्यत्रार्थवादः 'यज्ञपतिमेव तत्प्रथयति' इति । तेनार्थवादेन सम्बन्धाय ब्राह्मणे विधिः पठ्यते ।

ननु प्रथयतीत्यनेनैव विधिशब्देन प्रथनमनूद्य 'यज्ञपतिमेव' इत्यादिनाऽर्थवादेन स्तोतव्यम् । तदेव तु प्रथनं कुतः प्राप्तमित्याशङ्क्य उत्तरं सूत्रयति –'मन्त्राभिधानात्' इति । अध्वर्युः पुरोडाशमुद्दिश्य मन्त्रे 'प्रथस्व' इत्येवमभिधत्ते । तस्मादभिधानादध्वर्युकर्तृकं प्रथनं प्राप्तम् । यथा लोके यः कुरु इति ब्रूते स कारयत्येव, तथात्रापि यः प्रथस्व इति ब्रूते स प्रथयत्येव ।।

यदुक्तम् 'अग्निर्मूर्धादिवः' (ऋ.सं.८,४४,१६) इति पाठक्रमनियमात् अदृष्टार्थो मन्त्र इति तत्रोत्तरं सूत्रयति–'अविरुद्धं परम्' इति । परं द्वितीयसूत्रोक्तम् अस्मत्पक्षेऽप्यविरुद्धम् । न हि वयं पाठक्रमनियमाददृष्टं निवारयामः । किं तर्हि । मन्त्रोच्चारणेन जायमानमर्थप्रत्यायनं दृष्टप्रयोजनत्वान्नोपेक्षितव्यम् इत्येतावदेव ब्रूमः । ननु 'प्रोक्षणीरासादय' (वा.सं.१.२८) इति मन्त्रो बुद्धमेवार्थं शास्ति तदयुक्तम् । सोपानत्कस्य उपानदन्तरासम्भवात् इत्युक्तमिति चेत् तस्य परिहारं सूत्रयति– 'सम्प्रैषकर्मणो गर्हानुपलम्भः संस्कारत्वात्' इति । सम्प्रैषकर्मणो गर्हा त्वदुक्तदोषो नोपलभ्यते । बुद्धस्याप्यर्थस्य मन्त्रेणैवानुस्मरणे सति नियमादृष्टलक्षणस्य संस्कारस्य सद्भावात् । यच्चोक्तं 'चत्वारि शृङ्गाः' (ऋ.सं.४,५८,३) इति मन्त्रोऽसन्तमेवार्थमभिधत्ते इति तस्योत्तरं सूत्रयति– 'अभिधानेऽर्थवादः' इति । असतोऽर्थस्याभिधायके वाक्ये गौणस्यार्थस्योक्तिर्द्रष्टव्या । तद्यथा । चत्वारो होत्रध्वर्यूद्गातृब्रह्माणोऽस्य कर्मणः शृङ्गाणि । प्रातः- सवनादयस्त्रयः पादाः । पत्नीयजमानौ द्वे शीर्षे । गायत्र्यादीनि सप्त छन्दांसि हस्ताः । ऋग्वेदादिभिस्त्रिभिर्वेदैस्त्रेधा बन्धनम् । कामान् वर्षतीति वृषभः । रोरवीति स्तोत्रशस्त्रादिशब्दान् पुनः पुनः करोति । महो

देवः सोऽयं प्रौढो यज्ञरूपो देवो मर्त्यानाविवेश इति मनुष्या एवात्राधिकारिणः । लोकेऽप्येवं गौणप्रयोगा दृश्यन्ते । 'चक्रवाकस्तनी हंसदन्तावली काशवस्त्रा शैवलकेशिनी' इत्येवं नद्याः स्तूयमानत्वात् । एवं 'ओषधे त्रायस्व,' 'शृणोत ग्रावाणः' इत्याद्यचेतनसम्बोधनानि स्तुतिपरत्वेन योजनीयानि । यस्मिन् वपने ओषधिरपि त्रायते तत्र वपनकर्ता त्रायते इति किमु वक्तव्यम् । तथा ग्रावाणोऽपि प्रातरनुवाकं शृण्वन्ति किमुत विद्वांसो ब्राह्मणा इत्यामन्त्रणाभिप्रायः । योऽपि 'अदितिर्द्यौरदितिरन्तरिक्षम्' (ऋ.सं.१,८९,१०) इति विप्रतिषेध उक्तः तस्योत्तरं सूत्रयति– 'गुणादविप्रतिषेधः स्यात्' इति । यथा 'त्वमेव पिता त्वमेव माता' इत्यत्र गौणप्रयोगादविरोधः तद्वत् । एवम् एकरुद्रदेवत्ये कर्मण्येको रुद्रः शतरुद्रदेवत्ये शतं रुद्रा इत्यविरोधः ।

यदप्युक्तं स्वाध्यायमधीयानो माणवकः पूर्णिकाया अवहतिं न प्रकाशयितुमिच्छतीति तत्रोत्तरं सूत्रयति– 'विद्यावचनमसंयोगात्' इति । वेदविद्याग्रहणकालेऽर्थस्य यदवचनं तदयज्ञसंयोगादुपपद्यते । न हि पूर्णिकाया अवघातो यज्ञसंयुक्तः । नापि माणवको यज्ञमनुतिष्ठति । अतो यज्ञानुपकारात् न तत्रार्थविवक्षा । यदप्युक्तम् । 'अम्यक्सा त इन्द्रः' 'सृण्येव जर्भरी तुर्फरीतू' इत्यादावर्थस्य ज्ञातुमशक्यत्वात् नास्त्येवाऽर्थः इति तत्रोत्तरं सूत्रयति– 'सतः परमविज्ञानम्' इति । विद्यमान एवार्थः प्रमादालस्यादिभिर्न विज्ञायते । तेषां निगमनिरुक्तव्याकरणवशेन धातुतोऽर्थः परिकल्पयितव्यः । तद्यथा 'जर्भरी तुर्फरीतू' इत्येवमादीनि अश्विनोरभिधानानि । तेषु हि द्विवचनान्तत्वं लक्ष्यते । आश्विनं चेदं सूक्तम् 'अश्विनोः काममप्राः' (ऋ.सं.१०,१०६,११) इति दर्शनात् । एतदेवाभिप्रेत्य निरुक्तकारो व्याचष्टे– 'जर्भरी भर्तारावित्यर्थस्तुर्फरीतू हन्तारावित्यर्थः' (निरु.१३,५) इति । एवं 'अम्यक्सा ते' इत्यादावप्युन्नेयम् । यदप्युक्तं प्रमगन्दाद्यनित्यार्थसंयोगात् मन्त्रस्य अनादित्वं न स्यात् इति तत्रोत्तरं सूत्रयति–'उक्तश्चानित्यसंयोगः' इति । प्रथमपादस्यान्तिमाधिकरणे सोऽयमनित्यसंयोगदोष उक्तः परिहृतः । तथा हि तत्र पूर्वपक्षे वेदानां पौरुषेयत्वं वक्तुं काठकं कालापकमित्यादिपुरुषसम्बन्धाभिधानं हेतूकृत्य 'अनित्यदर्शनाच्च' (जै.सू.१,१,२८) इति हेत्वन्तरं सूत्रितम् । तस्यायमर्थः– 'बबरः प्रावाहणिरकामयत' (तै.सं.७,१,१०,२) इत्यनित्यानां बबरादीनामर्थानां दर्शनात् ततः पूर्वमसत्वात् पौरुषेयो वेद इति तस्योत्तरमेवं सूत्रितं– 'परं तु श्रुतिसामान्यमात्रम्' (जै.सू.१,१,३१) इति । तस्यायमर्थः– यत्काठकादिसमाख्यानं तत्प्रवचननिमित्तम् । यत्तु परं बबराद्यनित्यदर्शनं

तच्छब्दसामान्यमात्रम् । न तु तत्र अनित्यो बबराख्यः कश्चित्पुरुषो विवक्षितः । किन्तु बबरः इति शब्दानुकृतिः । तथा सति बबरेति शब्दं कुर्वन् वायुरभिधीयते । स च प्रावाहणिः प्रकर्षेण वहनशीलः । एवमन्यत्राप्यूहनीयम् । तदेवं कस्यचिदपि दोषस्यासम्भवात् विवक्षितार्था मन्त्राः स्वार्थप्रकाशनायैव प्रयोक्तव्याः । ननु अर्थप्रकाशनार्थत्वे सति दृष्टं प्रयोजनं लभ्यते इति युक्तिमात्रमिदमुच्यते । न त्वेतदुपोद्बलकं किञ्चित् श्रौतं लिङ्गं पश्यामः इत्याशङ्क्य उत्तरं सूत्रयति–

'लिङ्गोपदेशश्च तदर्थवत्' इति । 'आग्नेय्याऽग्नीध्रमुपतिष्ठेत' इति श्रूयते । तस्यायमर्थः– अग्निर्देवता यस्या ऋचः सेयमाग्नेयी । तया आग्नीध्रस्थानमुपतिष्ठेत इति । अत्र ह्युपस्थान-मुपदिशद्ब्राह्मणम् 'अग्ने नय' (ऋ.सं.१,१८९,१) इत्यनया 'उपतिष्ठेत' इति मन्त्रप्रतीकं पठित्वा नोपदिशति; किन्तु आग्नेयीत्वलिङ्गेन उपदिशति । यदा तस्यामृचि अग्निः प्राधान्येन प्रतिपाद्यते तदा तस्या ऋचः अग्निर्देवता भवति । तथा सति आग्नेय्या इति देवतावाचितद्धितान्तनिर्देश उपपद्यते । तस्मात् अयमुपदेशः तन्मन्त्रवाक्यमर्थवत् इति बोधयति । अतो विवक्षितार्थत्वात् अर्थप्रत्यायनार्थं प्रयोगकाले मन्त्रोच्चारणम् । तस्मिन्नेव विवक्षितार्थत्वे लिङ्गान्तरं सूत्रयति–

'ऊहः' इति । प्रकृतावाम्नातस्य मन्त्रस्य विकृतौ समवेतार्थत्वाय तदुचितपदान्तरस्य प्रक्षेपेण पाठः ऊहः । तद्यथा 'अन्वेनं माता मन्यताम् अनु पिता अनु भ्राता' (तै.ब्रा.३,६,६,१) इति प्राकृतः पशुविषयो मन्त्रपाठः । तस्य च मन्त्रस्य विकृतौ पशुद्वये सति 'अन्वेनौ माता मन्यताम्' इत्यूहः । पशुबहुत्वे सति 'अन्वेनान् माता मन्यताम्' इत्यूहः कर्तव्यः । एतन्मन्त्र-व्याख्यानरूपं ब्राह्मणमेवमाम्नायते– 'न माता वर्धते न पिता' इति । तत्रेदं चिन्तनीयम् । किमत्र शरीरवृद्धिर्निषिध्यते आहोस्वित् शब्दवृद्धिरिति । एकवचनान्तस्य मातृशब्दस्य मातरौ इति द्विवचनान्तत्वेन वा मातरः इति बहुवचनान्तत्वेन वा प्रयोगः शब्दवृद्धिः । तत्र न तावत् शरीरवृद्धिर्निषेद्धुं शक्यते, बाल्यकौमारयौवनादिवयोऽनुसारेण तद्वृद्धेः प्रत्यक्षत्वात् । अतः शब्दवृद्धिनिषेध एव परिशिष्यते । मातृशब्दपितृशब्दयोर्विशेषाकारेण वृद्धिनिषेधात् इतरस्य एनम् इति शब्दस्य अर्थानुसारिणी वृद्धिः सूचिता भवति । तत्र यद्यर्थो न विवक्ष्येत तदा पशुद्वित्वे द्विवचनं पशुबहुत्वे बहुवचनं च कथमूह्येत । तस्मात् विवक्षितार्था मन्त्राः । तस्मिन्नेवार्थे लिङ्गान्तरं सूत्रयति– 'विधिशब्दाच्च' इति । मन्त्रव्याख्यानरूपो ब्राह्मणगतः शब्दो विधिशब्दः इत्युच्यते । स चैवमाम्नायते– 'शतं हिमाः शतं वर्षाणि जीव्यास्मेत्येवैतदाह' (श.ब्रा.२,३,४,२१)

इति । तत्र 'शतं हिमाः' इत्येतत् व्याख्येयमन्त्रस्य प्रतीकम् । अवशिष्टं तु तस्य तात्पर्यव्याख्यानम् । मन्त्रस्याविवक्षितार्थत्वे तु किं नाम तात्पर्यं मन्त्रे व्याख्यायेत । तस्मात् विवक्षितार्था मन्त्राः प्रयोगकाले स्वार्थप्रकाशनायैवोच्चारयितव्याः । तत्र सङ्ग्रहश्लोकौ–

मन्त्रा उरु प्रथस्वेति किमदृष्टैकहेतवः ।
यागेषूत पुराडाशप्रथनादेश्च भासकाः ।।
ब्राह्मणेनापि तद्धानान्मन्त्राः पुण्यैकहेतवः ।
न तद्धानस्य दृष्टत्वाद्दृष्टं वरमदृष्टतः ।। (जै.न्या.१,२,४) इति ।।

नन्वस्तु मन्त्रभागस्य प्रामाण्यम् । ब्राह्मणभागस्य तु न तद्युज्यते । तथा हि । द्विविधं ब्राह्मणं विधिरर्थवादश्चेति । तथा च आपस्तम्बः– 'कर्मचोदना ब्राह्मणानि । ब्राह्मणशेषोऽर्थवादः' (आप.परि.३४-३५) इति । विधिरपि द्विविधः अप्रवृत्तप्रवर्तनम् अज्ञातार्थज्ञापनं चेति । 'आग्नावैष्णवं पुरोडाशं निर्वपन्ति दीक्षणीयम्' (ऐ.ब्रा.१,१) इत्याद्याः कर्मकाण्डगतविधयोऽप्रवृत्तप्रवर्तकाः । 'आत्मा वा इदमेक एवाग्र आसीत्' (ऐ.आ.२,४,१) इत्यादयो ब्रह्मकाण्डगता अज्ञातज्ञापकाः । तत्र कर्मकाण्डगतानां 'जर्तिलयवाग्वा वा जुहुयाद्गवीधुकयवाग्वा वा' (तै.सं.५,४,३,२) इत्यादिविधीनां नास्ति प्रामाण्यम्, प्रवृत्त्ययोग्यद्रव्यविधानेन सम्यगनुभवसाधनत्वाभावात् । अयोग्यत्वं च वाक्यशेषे समाम्नातम्– 'अनाहुतिर्वै जर्तिलाश्च गवीधुकाश्च' (तै.सं.५,४,३,२) इति । तत्र हि आरण्यतिलानाम् आरण्यगोधूमानां चाहुतिद्रव्यत्वं निषिद्धम् । तस्मात् बाधितो जर्तिलादिविधिरप्रमाणम् । एवम् ऐतरेयतैत्तिरीयादिब्राह्मणेषु 'तत्तन्नादृत्यम्' (ऐ.ब्रा.२,२३), 'तत्तथा न कार्यम्' (तै.ब्रा.१,१,८,६) इति वाक्याभ्यां बहवो विधयो निषिद्धाः । अपि च ऐतरेयब्राह्मणे अनुदितहोमं बहुधा निन्द्रित्वा 'तस्मादुदिते होतव्यम्' (ऐ.ब्रा.५,३१) इत्यसकृन्निगमितम् । तैत्तिरीयाश्च तथैवामनन्ति– 'यदनुदिते सूर्ये प्रातर्जुहुयात् । उभयमेवाग्नेय .... स्यात् । उदिते सूर्ये प्रातर्जुहोति' (तै.ब्रा.२,१,२,७) इति । पुनरपि त एव उदितहोमे दोषमामनन्ति– 'यदुदिते सूर्ये प्रातर्जुहुयात् । यथाऽतिथये प्रद्रुताय शून्यायाऽऽवसथायाऽऽहार्यं हरन्ति । तादृगेव तत्' (तै.ब्रा.२,१,२,१२) इति । तथैव 'अतिरात्रे षोडशिनं गृह्णाति' इति विधिः 'नातिरात्रे षोडशिनं गृह्णाति' इति निषेधेन बाध्यते । ज्योतिष्टोमादिष्वपि अनुष्ठानानन्तरमेव स्वर्गादिफलं नोपलभ्यते । न हि भोजनानन्तरं तृप्तेरनुपलम्भोऽस्ति । तस्मात् कर्मविधिषु प्रामाण्यं दुःसम्पादम् ।।

अज्ञातज्ञापकेषु ब्रह्मविधिष्वपि परस्परविरोधान्नास्ति प्रामाण्यम् । 'आत्मा वा इदमेक एवाग्र आसीत्' इति ऐतरेयिण आमनन्ति । 'असद्वा इदमग्र आसीत्' (तै.आ.८,७) इति तैत्तिरीयाः । सोऽयं विरोधः । तस्मात् वेदे विधिभागः सर्वोऽप्यप्रमाणमिति प्राप्ते ब्रूमः–

अस्त्वेवं जर्तिलादिविधेरप्रामाण्यं तदर्थस्याननुष्ठेयत्वात् । अनुष्ठेयस्त्वर्थः उपरितने 'अजाक्षीरेण जुहोति' (तै.सं.५,४,३,२) इति वाक्ये विधीयते । तत्प्रशंसार्थमत्र जर्तिलादिकमनूद्य निन्द्यते । यथा गवामश्वानां च प्रशंसार्थम् 'अपशवो वा अन्ये गोअश्वेभ्यः' (तै.सं.५,२,९,४) इति वाक्येनार्थवादरूपेण अजादीनां पशुत्वं निन्द्यते तद्वत् । एवं तर्हि अजादेर्यथा वस्तुतः पशुत्वमस्ति तथा जर्तिलादिविधिरत्र निन्द्यमानोऽपि क्वचित् शाखान्तरे भवेदिति चेत्, भवतु नाम । प्रामाण्यमपि तच्छाखाध्यायिनं प्रति भविष्यति । यथा गृहस्थाश्रमे निषिद्धमपि परान्नभोजनमाश्रमान्तरेषु प्रामाणिकं तद्वत् । अनेन न्यायेन सर्वत्र परस्परविरुद्धौ विधिनिषेधौ पुरुषभेदेन व्यवस्थापनीयौ । यथा मन्त्रेषु पाठभेदः शाखाभेदेन व्यवस्थितः तद्वत् । तैत्तिरीयाः 'वायवः स्थोपायवः स्थ' (तै.सं.१,१,१) इति मन्त्रमामनन्ति । वाजसनेयिनस्तु 'उपायवः स्थः' इत्येतं भागं नामनन्ति (वा.सं.१,१) । प्रत्युत शतपथब्राह्मणे स भागोऽनूद्य निराकृतः (श.ब्रा.१,७,१,३) । तथा सूक्तवाकमन्त्रे शाखान्तरपाठं निराकृत्य पाठान्तरं तैत्तिरीयाः आमनन्ति– 'यद्ब्रूयात्सूपावसाना च स्वध्यवसाना चेति प्रमायुको यजमानः स्यात्' (तै.सं.२,३,९,६) इति निराकरणम् । 'सूपचरणा च स्वधिचरणा चेत्येव ब्रूयात्' इति पाठान्तरोपदेशः । तत्रानुष्ठातृपुरुषभेदेन व्यवस्था । तद्वत् विधिषु द्रष्टव्यम् । षोडशिग्रहणादिदूषणं तु अश्रुतमीमांसावृत्तान्तस्य तवैव शोभते । पूर्वमीमांसायां दशमाध्यायस्याष्टमपादे षोडशिनो ग्रहणाग्रहणविकल्पो निर्णीतः (जै.सू.१०,८,६) । द्वितीयस्याध्यायस्य प्रथमपादे कालान्तरभाविफलसिध्यर्थमपूर्वं निर्णीतम् (जै.सू.२,१,५) । तद्वदुत्तरमीमांसायां प्रथमाध्यायस्य चतुर्थपादे 'कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः' (ब्र.सू.१,४,१४) इत्यस्मिन् सूत्रे जगत्कारणे परमात्मनि श्रुतिविप्रतिपत्तिर्निराकृता । द्वितीयस्याध्यायस्य प्रथमपादे आरम्भणाधिकरणे तु 'असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात्' (ब्र.सू.२,१,१७) इति सूत्रे तैत्तिरीयवाक्यगतस्य असच्छब्दस्य न शून्यपरत्वं किन्तु अव्यक्तावस्थापरत्वम् इति निर्णीतम् । तथा जैमिनिः चोदनासूत्रे विधिवाक्यं धर्मे प्रमाणमिति प्रतिज्ञाय औत्पत्तिकसूत्रे तत्प्रामाण्यं समर्थयामास (जै.सू.१,१,२;५) । व्यासोऽपि

'लिङर्थे लेट्' इति लेटि तस्य तिपि 'लेटोऽडाटौ' इत्यडागमे 'सिब्बहुलं लेटि' इति सिप्प्रत्यये 'हो ढः' इति हस्य ढत्वे 'षढोः कः सि' इत ढस्य कत्वे 'इण्कोः' इति सस्य षत्वे कषयोगे 'क्ष' इति 'वक्षति' इति रूपम् । आङः 'व्यवहिताश्च' इति सूत्रेण क्रियान्वयः ।। 'दीर्घादटि समानपादे' इति 'देवान्' इति नकारस्य रुः । 'अत्रानुनासिकः पूर्वस्य तु वा' इति रोः पूर्ववर्णस्यानुनासिकः । 'भोभगोअघो' इत्यादिना रोर्यत्वम् । 'लोपः शाकल्यस्य' इति यलोपः । 'देवाँ'इति सिद्धिः ।। २ ।।

**स्कन्द–** किं कारणम् । उच्यते । यस्मात् **अग्निः पूर्वेभिः** पूर्वैरस्मत्तः पूर्वकालैर्भृग्वङ्गिरः-प्रभृतिभिः । ईड्यः स्तुत्यः । **नूतनैः उत** नूतनमिति नवनाम । उतशब्दोऽप्यर्थे समुच्चये । नवैश्चेत्यर्थः । यावान् कश्चिदृषिः तेन सर्वेण यतः स्तोतव्यः, 'अतोऽहं स्तौमीत्यर्थः । एवमस्यार्धर्चस्य पूर्वयर्चैकवाक्यता । अपरः पादो भिन्नं वाक्यम् । स प्रकृतोऽग्निः **देवान् आ इह वक्षति** । आ इत्युपसर्गो व्यवहितोऽपि वक्षतीत्याख्यातेन सम्बध्यते । लडर्थे लेट् । इहेति कृत्स्नस्य जगतः प्रतिनिर्देशः । इहेति कृत्स्ने जगति । स एव देवान् आवहति यज्ञेषु, नान्यः कश्चिदित्यर्थः । अथवा अनयोरर्धर्चयोरेकवाक्यताप्रसिद्ध्यर्थं यत्तदोरुद्देशप्रतिनिर्देशार्थयोः नित्यसम्बन्धात् स देवानिति च प्रतिनिर्देशार्थतच्छब्दश्रुतपूर्वस्मिन्नर्धर्चे उद्देशार्थो यच्छब्दोऽ-प्याहर्तव्यः । यः पूर्वैर्नवैश्च स्तुत्यः अग्निः स देवान् **इह** जगति **आवक्षति** आवहति । अथवा इहेति प्रकृतस्य कर्मणः प्रतिनिर्देशः । वक्षतीति लोडर्थे लेट् । इह कर्मणि देवानावहत्विति ।।

**वेङ्कटमाधव–** अग्निः पूर्वैः ऋषिभिः स्तोतव्यः अस्माभिश्च नवतरैः । स देवान् इह आ वहतु ।। २ ।।

**मुद्गल–** अग्निः अयमग्निः **पूर्वेभिः** पुरातनैः भृग्वङ्गिरःप्रभृतिभिः **ऋषिभिः ईड्यः** स्तुत्यः । **उत** अपि च **नूतनैः** नरैरस्माभिः स्तुत्यः । **सः** अग्निः स्तुतः सन् **इह** यज्ञे **देवान् आवक्षति** आवहतु ।। २ ।।

**सायण–** अयम् **अग्निः पूर्वेभिः** पुरातनैर्भृग्वङ्गिरःप्रभृतिभिः **ऋषिभिः ईड्यः** स्तुत्यः, **नूतनैः उत** इदानीन्तनैरस्माभिरपि स्तुत्यः । **सः** अग्निः स्तुतः सन् **इह** यज्ञे **देवान्** हविर्भुजः **आ वक्षति** । 'वह प्रापणे' इति धातुः । आवहतु इत्यर्थः । पूर्वेभिरित्यत्र 'बहुलं छन्दसि'

(पा.सू.७,१,१०) इति भिस ऐसादेशाभावः । 'पूर्व पर्व अर्व पूरणे' इति धातुः । पूर्वतिधातोः अनुप्रत्यय औणादिकः । इन् प्रत्ययान्त ऋषिशब्दः 'ऋष्यन्धक' (पा.सू.४,१,११४) इति निपातनात् लघूपधगुणाभावः । (पा.सू.७.३,८३) । कित्प्रत्ययो वाऽत्र ज्ञेयः (उ.सू.४, ५५९) । तौ शब्दौ नित्स्वरेणाद्युदात्तौ । ईड्यशब्दस्य ण्यत्प्रत्ययान्तत्वात् (पा.सू.३,१,१२४) 'तित्स्वरितम्' (पा.सू.६,१,२१४) इत्यादिनाऽऽद्युदात्तत्वम् । 'नवस्य नू त्नप्तनखाश्च' (पा.सू. ५,४,३०,६) इति वार्तिकेन नवशब्दस्य नू इत्यादेशः तनन्प्रत्ययश्च महावार्तिके विहितः । ततो नित्स्वरेणाद्युदात्तः । अवशिष्टस्वरा अग्न्यादिषु नूतनान्तेषु पूर्ववदुन्नेयाः । उतशब्दो यद्यपि विकल्पार्थे प्रसिद्धस्तथाऽपि निपातत्वेनानेकार्थत्वादौचित्येनात्र समुच्चयार्थो द्रष्टव्यः । 'उच्चावचेष्वर्थेषु निपतन्ति' इति निपातत्वम् । तर्हि 'निपाता आद्युदात्ताः' (फि.सू.८०) इत्युकारस्योदात्तः प्राप्त इति चेत्, न । प्रातःशब्दवदन्तोदात्तत्वात् । यथा प्रातःशब्दोऽन्तोदात्तत्वेनैव स्वरादिषु (पा.सू.१,१,३७) पठितः, एवमुतशब्दस्यापि पाठो द्रष्टव्यः, स्वरादेराकृतिगणत्वात् ।

यद्वा 'एवादीनामन्तः' (फि.सू.८२) इत्यन्तोदात्तः । स इत्यत्र फिट्स्वरः । देवशब्दः पूर्ववत् । देवान् इत्यस्य नकारस्य संहितायां 'दीर्घादटि' (पा.सू.८,३,९) इति रुत्वम् । 'अत्रानुनासिकः' (पा.सू.८,३,२) इत्यनुवृत्तौ 'आतोऽटि नित्यम्' (पा.सू.८,३,३) इत्याकारः सानुनासिकः । 'भोभगो' (पा.सू.८,३,१७) इति रोर्यकारः । स च 'लोपः शाकल्यस्य' (पा.सू. ८,३,१९) इति लुप्यते । तस्यासिद्धत्वात् (पा.सू.८,२,१) न पुनः सन्धिकार्यम् । आङो निपातत्वादाद्युदात्तत्वम् । इदमो हप्रत्यये सति निष्पन्नत्वात् (पा.सू.५,३,११) इहशब्दे प्रत्ययस्वरः । वहति धातोर्लोडर्थे छान्दसो लृट् । तस्य स्यप्रत्ययगतस्य यकारस्य लोपोऽपि छान्दसः । यद्वा । लेटि 'सिब्बहुलम्' (पा.सू.३,१,३४) इति सिप्प्रत्ययः । 'लेटोऽडाटौ' (पा.सू.३,४,९४) इत्यडागमश्च ततो वक्षतीति सम्पद्यते । तस्य तिङन्तत्वान्निघातः । संहितास्वराः पूर्ववत् ॥ २ ॥

**सिद्धाञ्जनम्– अग्निः** पूर्वोक्तः पुरोहितत्वादियोग्यताविशिष्टः देवः, **पूर्वेभिः** पुरातनैः **ऋषिभिः** मन्त्रद्रष्टृभिः भृग्वङ्गिरःप्रभृतिभिः **ईड्यः** स्तुत्यः पूज्यः अभिकाङ्क्षणीय इति यावत् । **नूतनैः उत** नवैः ऋषिभिरपि ईड्यः । **सः** य एवमीड्यः उक्तः स देवः **देवान्** इतरान् इन्द्रादीन् **इह**

अस्मिन् यज्ञ **आवक्षति** आवहति । इह अस्मिन् जगतीति वा इति स्कन्दस्वामी । द्युस्थानान् देवान् पृथिवीस्थानमानयति पृथिवीस्थानोऽग्निरिति भावः । अन्तर्यजने सुगमो भावः। अशक्यः कालनिर्णयः पूर्वेषां अङ्गिरःप्रभृतीनाम् । मधुच्छन्दा इव तत्समकालिकाः सूक्तकृत ऋषयोऽन्ये च आसन् इति गम्यते 'नूतनैरुत' इत्युक्तेः । अतिचिरन्तना दृष्टफलका रूढमूला च अग्नेरुपास्तिः इत्याचारबलं च द्योत्यते ।। २ ।।

### ऋक्संहिता पदपाठसहिता

**अ॒ग्निना॑ र॒यिम॑श्नव॒त्पोष॑मे॒व दि॒वेदि॑वे । य॒शसं॑ वी॒रव॑त्तमम् ।। ३ ।।**

अ॒ग्निना॑ । र॒यिम् । अ॒श्न॒व॒त् । पोष॑म् । ए॒व । दि॒वेऽदि॑वे । य॒शस॑म् । वी॒रव॑त्ऽतमम् ।।३।।

### ऋग्भाष्यम्

**तेनैव रयिमाप्नोति वित्तं विद्याधनात्मकम् ।**
**दिवसे दिवसे नित्यं पुष्टिमेव नहीनताम् ।**
**यशश्च पुत्रसंयुक्तं वीर्यवत्तममेव वा ।। ३ ।।**

**ऋग्भाष्यटीका–** किं च । **अग्निना रयिम्** । तेनैव । स्तोता तेनैव **अग्निना** तत्प्रसादेन **रयिं** बाह्ये धनात्मकं अध्यात्मं विद्यात्मकं वित्तं **अश्नवत्** आप्नोति । अनेन पोषमेवेत्येवशब्द-स्याग्निनेत्यनेनापि सम्बन्धः सूचितः । अश्नवदित्यश्नोतेर्व्याप्तिकर्मणो लडर्थे व्यत्ययो बहुलमिति पञ्चमो लकारः परस्मैपदं च । सिब्बहुलं लेटीति बहुलग्रहणात्सिबभावः । प्राप्तस्य तस्य वित्तस्य **दिवेदिवे** दिवसे दिवसे नित्यमिति यावत् । **पोषमेव** पुष्टिमेव प्राप्नोति । न पुनर्लोकवद्धीनता-मित्येवशब्दव्यावर्त्यकथनम् । किञ्च **यशसं** यशश्चाप्नोति । यशःशब्दादमोऽलुक् पुँलिङ्गत्वं वा छान्दसम् । कथंभूतम् । **वीरवत्तमं** वीरः पुत्रः । सोऽस्मिन्नस्तीति वीरवत् अतिशयेन वीरवदिति वीरवत्तमं पुत्रेण सम्यग्युक्तम् । सामर्थ्यात्सम्यक्ता पुत्रविशेषणम् । इदं बाह्ये । अध्यात्मं वीरशब्दो भावप्रधानः । वीरवत्तमं यशो वीर्यवत्तमं ज्ञानं सुखं च । एवेति बाह्यपुत्रादिव्यावृत्तौ । वेति व्यवस्थितो विकल्पः ।। ३ ।।

**मन्त्रार्थमञ्जरी–** अभीष्टदातृत्वाच्चाग्नेः स्तुतिर्युक्तेति भावेनात्राभीष्टदातृत्वमुच्यते– एवशब्दोऽग्निनैवेत्यप्यन्वेति । (स्तोता) । अग्निना (एव), अग्निनामकयोः प्रसादेनैव । रयिम्,

बाह्ययज्ञे– धनात्मकम्, अध्यात्मम्, ज्ञानाख्यम्, वित्तम् । अश्नवत्, प्राप्नोति ।। (प्राप्तस्य वित्तस्य) दिवेदिवे, दिवसे दिवसे नित्यमिति यावत् । पोषम् एव, पुष्टिमेव । (अश्नवत्), प्राप्नोति, न तु लोकवद्धीनतामित्यर्थः । वीरवत्तमम्, वीरः पुत्रोऽस्यास्तीति वीरवत्, अतिशयेन वीरवद्वीरवत्तमम्, अतिशयितत्वं योग्यतया वीरेऽन्वेति, अतिशयितपुत्रवत् । यशसम् (च), यशश्च कीर्तिं च । (अश्नवत्), प्राप्नोतीत्यर्थः । वीरपदं भावप्रधानं कृत्वा वीर्यवत्तमं यशो ज्ञानं सुखं चाश्नवदित्यध्यात्ममर्थो ज्ञेयः ।। 'अशू व्याप्तौ' इत्यतः 'व्यत्ययो बहुलम्' इति लडर्थे लेटि परस्मैपदे च सति 'स्वादिभ्यः श्नुः' इति श्नुप्रत्यये 'लेटोऽडाटौ' इत्यडागमे बहुलग्रहणात्सिबभावे 'सार्वधातुकार्धधातुकयोः' इति गुणेऽवादेशे तिप इकारस्य लोपे 'अश्नवत्' इति रूपम् ।। 'यशसम्' इति यशस्शब्दादमोऽलुक्त्वं पुंलिङ्गत्वं वा छान्दसम् ।। ३ ।।

**स्कन्द–** अग्निना इति तृतीयानिर्देशाद् दत्तमिति वाक्यशेषः । पञ्चम्यर्थे वा तृतीया । **अग्निना** दत्तमग्नेर्वा सकाशात् । **रयिं** धनम् । **अश्नवत्** अश्नुते प्राप्नोति । कः सामर्थ्यात् स्तोता । न च केवलं धनम्, किं तर्हि । **पोषमेव** एवशब्दोऽवधारणासम्भवात् चार्थे । पुष्टिं च । कदा । **दिवे दिवे** अहन्यहनि । सर्वकालमित्यर्थः । **यशसम्** यशःशब्दः कीर्तिपर्यायः । छान्दसत्वाच्चामो न लुक् । यशश्च कीर्तिं चेत्यर्थः । कीदृशं यशः । उच्यते– **वीरवत्तमम्** वीराः पुत्राः, ते यस्मिन् सन्ति तद् वीरवत्, अतिशयेन वीरवद् वीरवत्तमम् । बहुभिः पुत्रैः सहितमित्यर्थः ।। ३ ।।

**वेङ्कटमाधव– अग्निना** स्तुतेन पशून् प्रजाश्च प्राप्नोति । पोषञ्च प्रजानां पशूनाञ्च । अन्वहं यशश्च । अतिशयेन वीरपुरुषयुक्तम् । यशसशब्दो यशःशब्दपर्यायो मध्योदात्तः ।। ३ ।।

**मुद्गल–** योऽयं होत्रा स्तुत्योऽग्निः तेन **अग्निना** यजमानः **रयिं** धनं **अश्नवत्** प्राप्नोति । कीदृशं रयिम् । **दिवे दिवे पोषमेव** प्रतिदिनं पुष्यमाणतया वर्धमानमेव । **यशसं** दानादिना यशोयुक्तम् । **वीरवत्तमं** अतिशयेन पुत्रभृत्यादिवीरपुरुषोपेतम् ।। ३ ।।

**सायण–** आधाने तृतीयेष्टौ प्रथमाज्यभागम्यानुवाक्या (आश्व.श्रौ.२,१) । सूक्तगता तृतीया । योऽयं होत्रा स्तुत्योऽग्निस्तेन **अग्निना** निमित्तभूतेन यजमानः **रयिं** धनं **अश्नवत्** प्राप्नोति । कीदृशं रयिम् । **दिवे दिवे पोषमेव** प्रतिदिनं पुष्यमाणतया वर्धमानमेव न तु कदाचिदपि क्षीयमाणम् ।

**यशसं** दानादिना यशोयुक्तं **वीरवत्तमं** अतिशयेन पुत्रभृत्यादिवीरपुरुषोपेतम् । सति हि धने पुरुषाः सम्पद्यन्ते । रयिशब्दो 'मघम्' इत्यादिधननामसु (नि.२,१०,८) पठितः । तत्र फिट्स्वरः । अश्नोतेर्धातोर्लेटि व्यत्ययेन तिप् । 'इतश्च लोपः' (पा.सू.३,४,९७) इति इकारलोपः । 'लेटोऽडाटौ' (पा.सू.३,४,९४) इत्यडागमः । ततः 'अश्नवत्' इति भवति । तस्य निघातः । घञन्तत्वात् (पा.सू.६,१,१९७) पोषशब्द आद्युदात्तः । एवशब्दस्य निपातत्वेऽपि 'एवादीनामन्तः' (फि.सू.८२) इत्यन्तोदात्तत्वम् । वकारान्तात् दिवृशब्दात् परस्याः सप्तम्याः 'सुपां सुलुक्' (पा.सू.७,१,३९) इत्यादिना शेभावे सति'सावेकाचः' (पा.सू.६,१,१६८) इत्यादिना 'ऊडिदम्पदात्' (पा.सू.६,१,१७१) इत्यादिना वा तस्योदात्तत्वम् । 'नित्यवीप्सयोः' (पा.सू. ८,१,४) इति द्विर्भावे सति उत्तरभागस्य 'अनुदात्तं च' (पा.सू.८.१,३) इत्यनुदात्तत्वम् । यशोऽस्यास्तीति विग्रहे सति 'अर्शआदिभ्योऽच्' (पा.सू.५,२,१२७) इति अच्प्रत्ययः । चित्स्वरं व्यत्ययेन बाधित्वा मध्योदात्तत्वम् । फिट्स्वरेणान्तोदात्तात् वीरशब्दात् उत्तरयोर्मतुप्तमपोः पित्त्वादनुदात्तत्वम् । 'ह्रस्वनुड्भ्याम्' (पा.सू.६,१,१७६) इति तु न साववर्णान्तत्वात् । 'न गोश्वन्' (पा.सू.६,१,१८२) इति प्रतिषेधः ।। ३ ।।

**सिद्धाञ्जनम्– अग्निना** देवेन निमित्तभूतेन **रयिं** धनं किमप्यान्तरं न केवलं बाह्यं **अश्नवत्** प्राप्नोति यजमानः । कीदृशम् रयिम् ? **दिवे दिवे** अनुदिनं **पोषमेव** पोषोपेतमेव पुष्यमाणं न कदाऽपि क्षीयमाणम् । पुनः कीदृशम् ? **यशसं** यशोयुक्तं वैभवसम्पन्नम्। **वीरवत्तमं** अतिशयेन वीरबलोपेतं च रयिं अश्नवदिति सम्बन्धः ।

अत्र पोषशब्दस्य घञन्तत्वाद्रयिविशेषणत्वेन न ग्राह्यमित्येकेषामाक्षेपः । पोषं पुष्टिं रयिं (धनं) च 'अश्नवत्' इत्याहुः । एवं चेत् समुच्चयार्थकश्चकारोऽध्याहार्यः । 'पोषमेव' इत्यत्र एवकारस्य प्रयोजनं अलक्षितं स्यात् । 'पोषं' 'यशसं' इत्युभयमपि मत्वर्थलक्षणया रयिविशेषणमिति बोध्यम् । एतादृशः प्रयोगः साधारणो वेदे । 'वपुषामिदेकम्' (४.७.९), 'वपुषामपश्यम्' (५.६२.१) इत्यादिस्थलेषु वपुषां वपुष्मतां देवानां इति मत्वर्थलक्षणया व्याचक्षते पदार्थं व्याख्यातारः । साध्वेतत् । एवमिहापि लक्षणाश्रयणं साधु । वैभवद्योतनाय 'यशसं' इति रयिविशेषणम् । 'अश्नवत्' इति लेटि रूपं, तस्माल्लोडर्थो वक्तव्य इत्येके नव्याः । लडर्थ एवोपपन्नतरः, पूर्वेषां व्याख्यातॄणामभिमतश्च ।

पूर्वोक्तलक्षणेन देवानामाह्वात्रा अग्निना तत्प्रसादमहिम्ना वैभवशालिनीं वीर्यातिशयसम्प-न्नां रयिपदवाच्यां अन्तःसमृद्धिं प्राप्नोति यजमान इति भावः ।। ३ ।।

### ऋक्संहिता पदपाठसहिता

**अग्ने॒ यं य॒ज्ञम॑ध्व॒रं वि॒श्वतः॑ परि॒भूरसि॑ । स इद्दे॒वेषु॑ गच्छति ।। ४ ।।**
अग्ने॑ । यम् । य॒ज्ञम् । अ॒ध्व॒रम् । वि॒श्वतः॑ । प॒रि॒ऽभूः । असि॑ । सः । इत् । दे॒वेषु॑ । ग॒च्छ॒ति ।।

### ऋग्भाष्यम्

**यं यज्ञं परितो भूत्वा रक्षसि त्वं सदैवच ।**
**विधिमार्गस्थितं देवान्स एवाप्नोत्यसंशयम् ।। ४ ।।**

**ऋग्भाष्यटीका–** एवं स्तुतेरुपपत्तिं तृचेनोक्त्वा स्तौति– **अग्ने यम् । यं** यज्ञम् । हे **अग्ने** त्वं यं **अध्वरं** यज्ञमिति पृथग्वचनादध्वनि रतम् । ञमन्ताड्ड इति डः । विधिमार्गस्थितं विहितप्रकारेणानुष्ठितं यज्ञं बाह्यमान्तरं च । **विश्वतः** विश्वस्मिन् काले । सदैव । परितो भवतीति **परिभूः** । **असि** भवसि । परितो भूत्वा रक्षसीति यावत् । ततोन्यत्रापि दृश्यत इति परियोगे द्वितीया । **स इत्** सएव यज्ञो **देवेषु गच्छति** देवानाप्नोति । असंशयमित्येवशब्दतात्पर्यम् । परमेश्वररक्षितमेव यज्ञं देवाः स्वीकुर्वन्ति । तादृशस्यैव ज्ञानस्य देवादिकं विषयो भवतीति ।। ४ ।।

**मन्त्रार्थमञ्जरी–** एवं स्तुतेरुपपत्तिं तृचेनोक्त्वाधुनाग्निं स्तौति– (हे) अग्ने (त्वम्) अध्वरम्, अध्वनि मार्गे रतं विधिमार्गस्थितं विहितप्रकारेणानुष्ठितम् । यम् । यज्ञम्, बाह्यमान्तरम् । विश्वतः, विश्वस्मिन्काले सदेति यावत् । परितो भवतीति परिभूः । असि भवसि । परितो भूत्वा रक्षसीति यावत्, 'ततोऽन्यत्रापि दृश्यते' इति परियोगे 'यज्ञम्' इति द्वितीया ।। सः इत्, स एव यज्ञः । देवेषु गच्छति, देवानाप्नोति, परमेश्वररक्षितमेव यज्ञं देवाः स्वीकुर्वन्ति, तादृशस्यैव ज्ञानयज्ञस्य देवादिकं विषयीभवतीत्यध्यात्ममभिप्रायो ध्येयः ।। ४ ।।

**स्कन्द–** हे **अग्ने ! यं यज्ञं अध्वरम्** । अध्वरशब्दोऽयं यज्ञमित्यनेन पौनरुक्त्यान्न यज्ञनाम । किं तर्हि । तद्विशेषणम् । ध्वरतिः हिंसाकर्मा । ध्वरणं ध्वरो हिंसा यस्मिन् नास्ति सोऽध्वरः ।

यज्ञे हि सर्वस्यानुग्रहः न हिंसा । येऽपि हि तत्र पश्वादयो हिंस्यन्ते तेषामप्यनुग्रहमेव शिष्टाः स्मरन्ति–

ओषध्यः पशवो वृक्षास्तिर्यञ्चः पक्षिणस्तथा ।
यज्ञार्थं निधनं प्राप्ता प्राप्नुवन्त्युच्छ्रितीः पुनः ।।' (मस्मृ ५,४०) इति ।

तस्मादुपपन्नं हिंसावर्जितत्वम् । अथवा षष्ठ्यर्थे बहुव्रीहिः । अविद्यमानो ध्वरो यस्य सोऽध्वरः । रक्षोभिरहिंसितः । सर्वत्र षष्ठ्यर्थे द्वितीया । यस्य यज्ञस्य हिंसावर्जितस्य । **विश्वतः** सर्वतः । **परिभूः** परिपूर्वो भवतिः सर्वस्य परिग्रहे । परिग्रही **असि** भवसि । **स इत्** इति इच्छब्दः एवार्थे । स एव देवेषु गच्छति । देवास्तमेव परिगृह्णन्ति नान्यमित्यर्थः ।। ४ ।।

**वेङ्कटमाधव–** अग्ने ! यं यज्ञम् हिंसारहितमहिंसितं त्वत्सन्निधानादसुरैः, सर्वतः परिभवसि । गार्हपत्यादिव्यूहेन अरानिव नेमिः स एव देवेषु गच्छति ।। ४ ।।

**मुद्गल–** हे **अग्ने!** त्वं **यं यज्ञं विश्वतः** सर्वासु दिक्षु **परिभूः** परितः प्राप्तवान् **असि** । **स इत्** स एव यज्ञः **देवेषु** तृप्तिं जनयितुं स्वर्गे **गच्छति** ।। ४ ।।

**सायण–** अभिप्लवषडहस्य मध्यवर्तिपूक्थेषु तृतीयसवने मैत्रावरुणस्य 'अग्ने यं यज्ञम्' इत्यादिको वैकल्पिकोऽनुरूपस्तृचः । एतच्च सप्तमाध्याये 'एह्यूषु' इत्यादिखण्डे सूत्रितम्– 'अग्निं वो वृधन्तमग्ने यं यज्ञमध्वरम्' (आश्व.श्रौ.७,८) इति ।।

हे **अग्ने** त्वं **यं यज्ञं विश्वतः** सर्वासु दिक्षु **परिभूः** परितः प्राप्तवान् **असि सः इत्** स एव यज्ञो **देवेषु** तृप्तिं प्रणेतुं स्वर्गे **गच्छति** । प्राच्यादिचतुर्दिगन्तेषु आहवनीयमार्जालीय-गार्हपत्याग्नीध्रीयस्थानेषु अग्निरस्ति । परिशब्देन होत्रीयादिधिष्ण्यव्याप्तिर्विवक्षिता । कीदृशं यज्ञम् । **अध्वरं** हिंसारहितम् । न ह्यग्निना सर्वतः पालितं यज्ञं राक्षसादयो हिंसितुं प्रभवन्ति । अग्निशब्दस्य षाष्ठिकम् (पा.सू.६,१,१९८) आमन्त्रिताद्युदात्तत्वम् । न विद्यते ध्वरोऽस्येति बहुव्रीहौ 'नञ्सुभ्याम्' (पा.सू.६,२,१७२) इत्यन्तोदात्तत्वम् । विश्वतः इत्यत्र तसिलः प्रत्ययस्वरत्वं बाधित्वा पूर्ववर्णस्य 'लिति' (पा.सू.६,१,१९३) इत्युदात्तत्वम् । परिभूरित्यत्र अव्ययपूर्वपद-प्रकृतिस्वरत्वे प्राप्ते (पा.सू.६,२,२) तदपवादत्वेन कृदुत्तरपदप्रकृतिस्वरत्वम् (पा.सू.६,२, १३९) । असि इति तिङन्तम्य 'यद्वृत्तान्नित्यम्' (पा.सू.८,१,६६) इति निघाताभावः ।।४।।

**सिद्धाञ्जनम्– अग्ने** त्वं **यं अध्वरं** अध्वगमनशीलं **यज्ञं** यागं **विश्वतः** सर्वतः **परिभूः** परिवृत्य भवन् **असि । स इत्** स एव यज्ञः **देवेषु** देवानां मध्ये गच्छति गन्तव्यं स्थानम् ।

अध्वरो हिंसारहित इति कर्मपराणां व्याख्यासरणिः । 'न हिंस्यात्सर्वभूतानि' इति धर्मशास्त्रस्य अपवादः पश्वालम्भो यज्ञे। ततोऽत्र हिंसा न दोषायेत्युपपादयितुं न ध्वरो हिंसा अस्मिन्निति अध्वरपदं निष्पादयन्ति बाह्यार्थपक्षीयाः । यज्ञः पुरुषाकारतया वर्ण्यते वेदे। स च द्रव्यत्यागा-परपर्यायः सर्वस्वार्पणरूपो यजमानस्यान्तराविर्भूय प्रतिष्ठत ऊर्ध्वं स्वर्लोकं प्रति देवानधिगन्तुम् । तस्मात् स प्रयाणं करोति, अध्वानं राति ददाति यजमानस्योर्ध्वगत्यै । तथाविधस्य यज्ञस्य यात्रायां सर्वतः पापेभ्यो राक्षसादिभ्यो रक्षणं अग्नेरेव सम्भवति। तस्माद् यो यज्ञोऽग्निना परिरक्षितः स एव देवान् प्राप्नोतीत्युक्तम् ।। ४ ।।

### ऋक्संहिता पदपाठसहिता

**अ॒ग्निर्होता॑ क॒विक्र॑तुः स॒त्यश्चि॒त्रश्र॑वस्तमः । दे॒वो दे॒वेभि॒राग॑मत् ।। ५ ।।**

अ॒ग्निः । होता॑ । क॒विऽक्र॑तुः । स॒त्यः । चि॒त्रश्र॑वःऽतमः । दे॒वः । दे॒वेभिः॑ । आ । ग॒मत् ।।

### ऋग्भाष्यम्

**सोऽखिलग्रहणप्रज्ञः सद्गुणैः सन्ततोऽखिलम् ।**
**यमयत्यग्र्यकीर्तीनामुत्तमो विबुधैः सह ।**
**आगन्ताऽखिलभक्तानां पूजास्वीकारतत्परः ।। ५ ।।**

**ऋग्भाष्यटीका– अग्निर्होता । सोऽखिलः ।** सोऽग्निः । होता पूर्ववत् । कवित्वेऽखिलग्रहणे सर्वज्ञानाय क्रतुः प्रज्ञा यस्यासौ **कविक्रतुः** । सद्भिर्गुणैस्ततः सन्ततोऽखिलं विश्वं यमयति चेति **सत्यः** । सद्भावे साधुभावे चेति वचनात्सच्छब्दो गुणवाची । सदुपपदात्तनोतेः क्विप्प्रत्ययो डिच्च । यमेश्च डः । सच्चासौ यश्चेति सत्यः । यमयतीति स्वार्थे णिच् । चित्रमद्भुतं श्रवः कीर्तिर्यस्यासौ चित्रश्रवाः । अतिशयेन चित्रश्रवाश्चित्रश्रवस्तमः । अग्र्यकीर्तीनां पुरुषाणां मध्ये उत्तम इति यावत् । देवः पूर्ववत् । एवं भूतो भगवान्देवेभिर्विबुधैर्यज्ञभुग्भिरिन्द्रियाभिमानिभिश्च देवैः सह यज्ञस्थानं भक्तशरीरं च प्रत्यागमत् । सार्वकालिको लुङ् लेड्वा । आगन्ता भवति । तत्र विशेषतः सन्निहितो भवति । अखिलभक्तानां बाह्याध्यात्मिकपूजास्वीकारतत्परः सन्निति शेषः । आगमनं न हविराद्याशया किंतु भक्तप्रियतयेति भावः ।। ५ ।।

**मन्त्रार्थमञ्जरी–** होता, प्रागुक्तदिशा होतृप्रेरकतया विशिष्य होतरि स्थितत्वेन 'होता' इत्युक्तः । कविक्रतुः, कवित्वे सर्वविषयकज्ञानाय क्रतुः प्राज्ञायस्यासौ कविक्रतुः । सत्यः, सद्गिर्गुणैस्त ततः, यो नियामकः, सच्चासौ यश्चेति सत्यः, 'सद्भावे साधुभावे च । सच्छब्दः पार्थ युज्यते' (गी.१७।२६) इति वचनात्सच्छब्दो गुणवाची, 'तनु विस्तारे' इति धातोः क्विप्प्रत्यये तस्य डित्त्वे च 'त्' इति व्याप्तवाची, यच्छति नियमयतीति यमेः डप्रत्यये डित्त्वादभस्यापि टेर्लोपे 'य' इति रूपम्, साधुगुणव्याप्तो नियन्ता चेत्यर्थः । चित्रश्रवस्तमः, चित्रमद्भुतं श्रवः कीर्तिर्यस्यासौ चित्रश्रवाः, अतिशयेन चित्रश्रवाश्चित्रश्रवस्तमः, अग्र्यकीर्त्तीनां पुंसां मध्य उत्तम इति यावत् । देवः, क्रीडाविजयादिकर्ता स्तुतिविषयश्चेति पूर्ववत् अर्थो ज्ञेयः । एवंभूतः, अग्निः । देवेभिः, देवैर्यज्ञभाग्विबुधैः, अध्यात्मम्– इन्द्रियाभिमानिभिश्च । आ गमत्, सार्वकालिको लुङ् आगन्ता भवति, यज्ञस्थानं भक्तशरीरं वा प्राप्नोति, एवं भूतो भगवान्भक्तानां बाह्याध्यात्मिकपूजास्वीकारतत्परः सँस्तत्र विशेषतः संनिहितो भवतीत्यर्थः ।। ५ ।।

**स्कन्द– अग्निः होता** देवानाम् । **कविक्रतुः** कविशब्दोऽत्र क्रान्तवचनः, न मेधाविनाम । क्रतुशब्दः प्रज्ञानाम कर्मनाम वा, क्रान्तं गतं सर्वत्राप्रतिहतं प्रज्ञानं कर्म वा यस्य स कविक्रतुः । **सत्यः** अविसंवादकः यथाभिलषितफलद इत्यर्थः । **चित्रश्रवस्तमः** चायृ पूजानिशामनयोः इत्यस्य चित्रमिति रूपम् । चित्रं पूजनीयम् । विचित्रपर्यायो वा चित्रशब्दः । श्रव इत्यन्ननाम वा, धननाम वा, कीर्तिपर्यायो वा । अतिशयेन पूज्यं विचित्रं वा अन्नादीनामन्यतमं यस्य स चित्रश्रवस्तमः । **देवः** दानादिगुणः **देवेभिः** सहयोगलक्षणा एषा तृतीया । देवैः सह **आगमत्** आगच्छतु ।। ५ ।।

**वेङ्कटमाधव–** अग्निः होता क्रान्तप्रज्ञः सत्यकर्मा अतिशयेनाश्चर्यश्रवणः देवः देवैः सह आच्छतु ।। ५ ।।

**मुद्गल–** अयम्, अग्निः **देवः देवेभिः** अन्यैर्देवैर्हविर्भोक्षिभिः सह **आगमत्** अस्मिन् यज्ञे समागच्छतु । कीदृशोऽग्निः । **होता** होमनिष्पादकः । **कविक्रतुः** क्रान्तप्रज्ञः । **सत्यः** अनृतरहितः फलमवश्यं प्रयच्छतीत्यर्थः । **चित्रश्रवस्तमः** श्रवः कीर्तिः । अतिशयेन विचित्रकीर्तियुक्तः ।।

**सायण–** अयम् **अग्निः देवः** अन्यैर्देवैर्हविर्भोजिभिः सह **आगमत्** अस्मिन् यज्ञे समागच्छतु । कीदृशोऽग्निः । **होता** होमनिष्पादकः । **कविक्रतुः** । कविशब्दोऽत्र क्रान्तवचनो न तु मेधाविनाम ।

क्रतुः प्रज्ञानस्य कर्मणो वा नाम । ततः क्रान्तप्रज्ञः क्रान्तकर्मा वा । **सत्यः** अनृतरहितः फलमवश्यं प्रयच्छतीत्यर्थः । **चित्रश्रवस्तमः** श्रूयते इति श्रवः कीर्तिः । अतिशयेन विविधकीर्तियुक्तः । कविक्रतुः चित्रश्रवस्तमः इत्यत्रोभयत्र बहुव्रीहित्वात् पूर्वपदप्रकृतिस्वरत्वम् (पा.सू.६,२,१) । सत्सु साधुः सत्यः 'सत्यादशपथे' (पा.सू.५,४,६६) इत्यत्रान्तोदात्तो हरदत्तेन निपातितः । लोडन्तस्य गच्छतु इति शब्दस्य छत्वाभावः । उकारलोपश्छान्दसः । ततो रूपं गमत् इति भवति । स्पष्टमन्यत् ।। ५ ।।

**सिद्धाञ्जनम्**– **अग्निः** स्वयं **देवः देवेभिः** अन्यैर्देवैः सह **आगमत्** आगच्छतु । अग्नेः चत्वारि विशेषणानि । **होता** आह्वाता देवानाम् । **कविक्रतुः** कविर्मेधाविनाम् । क्रान्तदर्शी अतीन्द्रियार्थदर्शी कविरिति वेदे। एवमेव सायणव्याख्या बहुत्र । क्रतुः प्रज्ञा कर्म वा यथासन्दर्भं व्याख्यायते कर्मठैः । कर्मकरणसामर्थ्यवत् अध्यवसायात्मकं प्राज्ञं बलं निष्प्रकम्पसङ्कल्पो वा क्रतुरिति ज्ञेयम् । एवं कविक्रतुः अतीन्द्रियार्थदर्शी प्राज्ञसङ्कल्प इच्छाबलं वेति वेद्यम् । **सत्यः** दर्शने प्राज्ञकर्मणि स्वरूपतोऽपि सत्य अनृतैरभिघातः सम्पर्को वा नास्त्यस्य, अतो न व्यभिचरति दर्शनादिकर्तव्येषु । **चित्रश्रवस्तमः** श्रव इति कीर्तिनाम । तथा बाह्यार्थपक्षे ग्रहणं नासाधु। श्रवःश्रवणश्रुतिशब्दाः शृणोतेर्निष्पन्नाः समानमेवार्थं स्मारयन्ति। सर्वतः श्रूमाणत्वादेव श्रवः कीर्तिरुच्यते । तस्मादत्र चित्रं अद्भुतं विविधं चायनीयं वा, श्रवः श्रवणं अस्य अग्नेरतिशये-नास्तीति पदार्थः । अतीन्द्रियार्थविचित्रश्रवणशाली भगवानग्निः स्वयं श्रुतिमान् उपासकं अद्भुताः श्रुतीः श्रावयितुं प्रभुरिति बोध्यम् ।। ५ ।।

।। इति प्रथमाष्टके प्रथमाध्याये प्रथमो वर्गः ।। १ ।।

## ।। अथ द्वितीयो वर्गः ।।

### ऋक्संहिता पदपाठसहिता

**यदङ्ग दाशुषे त्वमग्ने भद्रं करिष्यसि । तवेत्तत्सत्यमङ्गिरः ।। ६ ।।**

यत् । अङ्ग । दाशुषे । त्वम् । अग्ने । भद्रम् । करिष्यसि । तव । इत् । तत् । सत्यम् । अङ्गिरः ।। ६ ।।

### ऋग्भाष्यम्

**यजमानाय यद्भद्रं कर्तुमिच्छसि सत्प्रिय ।**
**त्वच्चेष्टयैव कर्माणि वर्तयित्वा तदीहनम् ।**
**तवैव सत्यमङ्गानां रसयद्वह्निगो हरिः ।**
**अङ्गिरा अङ्गिरः पुत्रो यतोऽग्निरभवत्क्वचित् ।। ६ ।।**

**ऋग्भाष्यटीका–** यदङ्ग । यजमानाय । प्रियसम्बोधनेऽङ्गशब्दः योग्यतया सत्सम्बन्धः । अङ्ग सत्प्रिय । अङ्गिरः अङ्गानां रस । सर्वशरीराणां प्रेरक । पूर्वपदस्येकार उत्तरपदलोपश्च च्छान्दसः । तथा च श्रुतिः । "एतमु एवाङ्गिरसं मन्यन्तेऽङ्गानां यद्रसस्तेनेति" । अग्ने त्वं दाशुषे यजमानाय । दाशृ दाने । "दाश्वान्साह्वान् मीढ्वांश्चे"ति निपातनात् । भद्रं करिष्यसीति यत् सनर्थे लृट् । भविष्यद्विषयत्वसाम्यात् । कर्तुमिच्छसीति **यत्** तदिच्छारूपमीहनं तवेत् तवैव । सत्यं अवितथम् । अस्मा इदं दास्यामीतीच्छसि चेददास्येव । यत्करिष्यसि तत्सत्यमिति यथास्थितयोजनायां स्तुतिर्न स्यात् । यजमानः पूजयति स्वयं फलं ददातीत्येवं विनिमयमात्रं न भवतीति भावेनोक्तं– **त्वच्चेष्टयेति** । वर्तयित्वा यजमानेनेति शेषः । पूजादिकर्मणां प्रवर्तकोपि त्वमेवेति । अनेनाङ्गिरः शब्दप्रयोगस्य प्रयोजनमुक्तं भवति । अङ्गानां रसेत्यध्यात्मं व्याख्यानम् । बहिर्विष्णौ योजयति– **यदिति** । यद्यस्माद्धरिर्वह्निगस्तस्मादङ्गिराः । वह्निगत्वेऽपि कथमङ्गिरा इत्यत आह– **अङ्गिरः पुत्र इति** ।। यतः कारणात् क्वचित्कालेऽग्निरङ्गिरसः पुत्रोङ्गिराः पुत्रोस्यवाऽभवत्तेनाङ्गिराः । कार्यकारणशब्दानां साङ्कर्यदर्शनात् । तद्गतोऽपि तदधीनत्वादर्थवदित्यङ्गिरा इति । अनेनाग्रावपि व्याख्यातम् ।। ६ ।।

**मन्त्रार्थमञ्जरी–** 'अङ्ग' इति प्रियसम्बोधनम् ।। (हे) अङ्ग, सज्जनप्रिय । अङ्गिरः, कालविशेषेऽग्नेरङ्गिरसः पुत्रत्वात्कार्यकारणशब्दानां 'गोभिः श्रीणीत मत्सरम्' (ऋ.म.९।४६।४) इत्यादौ सांकर्यदर्शनात् 'यत्र वा पितुस्तद्वा पुत्रस्य' (ऐ.उ.२।१।८) इति श्रुतेश्चाङ्गिरसः पुत्रोऽग्निरपि 'अङ्गिराः' इत्युच्यते, तत्स्थत्वाद्धरिरपि तथोच्यते, तस्य सम्बुद्धिरङ्गिरः, अध्यात्मं तु– अङ्गानां रसोऽङ्गिरास्तस्य सम्बुद्धिरङ्गिरः सर्वशरीरप्रेरकेत्यर्थः, 'अङ्गरस' इति वाच्ये पूर्वपदस्येकारोऽन्तादेशो रसशब्दस्यान्तलोपश्च च्छान्दस इति 'अङ्गिरः' इति निर्देशो ध्येयः, तथा हि श्रुतिः 'एतमु एवाङ्गिरसं मन्यन्तेऽङ्गानां यद्रसस्तेन' (छा.उ.१।२।६) इति । (हे) अग्ने त्वम् । दाशुषे, दात्रे

यजमानाय, 'दाशृ दाने' 'दाश्वान्साह्वान्मीढ्वाँश्च' इति निपातनात् । भद्रम् । करिष्यसि (इति) यत्, सनर्थे लृट्, कर्तुमिच्छसीति यत् । तत्, इच्छारूपमीहनम् । तव इत्, तवैव । सत्यम्, अवितथम् । अस्मा इदं दास्यामीतीच्छसि चेद्दास्यस्ये वेति भावः ॥ ६ ॥

**स्कन्द–** अङ्ग इति निपातोऽत्र पादपूरणः क्षिप्रार्थो वा सामर्थ्यात् । **यत्** क्षिप्रं **दाशुषे** दाश्वान् यजमानः । हविषां दातृत्वात् तस्मै । **त्वं हे अग्ने! भद्रं** भजनीयं स्तुत्यमुत्कृष्टं । इष्टमित्यर्थः । किं पुनस्तत् ? धनमन्नं वा । **करिष्यसि** दाशुषे इति सम्प्रदानचतुर्थीश्रुतेरिह करोतिः क्रियासामान्यवचनो दाने वर्तते । दास्यसि इत्यर्थः । **तव इत् तत्** इच्छब्द एवार्थे वर्तते । तथैव तत् । यज्ञान्तरे हविः कृत्वा तुभ्यमेव प्रदास्यत इत्यर्थः । सत्यम् । अविसंवाद्येवैकं, नैतदनृतं मयोच्यत इत्यर्थः । अथवा करिष्यसि इत्ययं करोतिरन्तर्णीतसनर्थो द्रष्टव्यः । लडर्थे लुट् । यद् यजमानाय भद्रं धनमन्नं वा चिकीर्षसि । तथैव तत् सत्यं नान्यस्य कस्यचित् । यथाचिकीर्षितदानकरणसमर्थो नान्यः कश्चिदित्यर्थः । हे **अङ्गिरः** । अङ्गिरा ऋषिः । तस्योत्पत्तिकारणमग्निः नाग्निरङ्गिरा । एव ह्यैतिहासिकाः स्मरन्ति–

'त्रिसांवत्सरिकं सत्रं प्रजाकामः प्रजापतिः ।
आहरत् सहितः साध्यैर्विश्वैर्देवैस्तथा सह ॥
तत्र वाग्दीक्षणीयायामाजगाम शरारिणी ।
रेतश्चस्कन्द तां दृष्ट्वा कस्याथ वरुणस्य च ॥
तच्छुक्रं प्रवहन् वायुरग्नौ प्रास्यद् यदृच्छया ।
ततोऽर्चिषि भृगुर्जज्ञे अङ्गारेष्वङ्गिरा ऋषिः ॥' (तु बृदे ५, ९७,९९) इति ॥

तेन अङ्गिरसः कारणमग्निः, नाग्निरङ्गिराः । अत इदं सोऽयमित्यभिसम्बन्धात् कार्यशब्देन कारणस्याभिधानम् । अङ्गिरसः कारणभूत इत्यर्थः । अथवा गुणतः अग्नेरिदमभिधानम् । अङ्गानि शरीरावयवा तद्वदङ्गि शरीरं, तस्य स्थितिहेतुः अशितपीतरसोऽङ्गिरसः, तं करोति अङ्गिरसयति । 'तत् करोति तदाचष्टे' (पावा ३,१,२६) इति णिच् । ण्यन्तात् क्विप् । हे अङ्गिरः शरीरस्थिति-हेतोरशितपीतरसस्य कर्तरित्यर्थः । जाठरो अग्निरत्र रसीकरोति । रसो लोहितमांसस्नाय्वस्थि-मज्जाशुक्रभावेन परिणममानः शरीरस्थितिहेतुर्भवति ॥ ६ ॥

**वेङ्कटमाधव–** यत् त्वं क्षिप्रं अग्ने । हविः प्रयच्छतेऽनन्तरमेव कल्याणं करिष्यसि । तव एव तत् सत्यं अङ्गिरः, त्वं एकः अन्यस्तु कृतं विस्मरत्यपि ।। ६ ।।

**मुद्गल–** हे **अङ्ग** अग्ने ! **त्वं** दाशुषे हविर्दत्तवते यजमानाय **भद्रं** वित्तगृहप्रजापशुरूपं कल्याणं करिष्यसि । **तत्** भद्रं **तव इत्** तवैव । सुखहेतुरिति शेषः । हे **अङ्गिरः** अग्ने तच्च **सत्यम्** । न त्वत्र विसंवादोऽस्ति ।। ६ ।।

**सायण–** अङ्ग इत्यभिमुखीकरणार्थो निपातः । **अङ्ग अग्ने** हे अग्ने त्वं **दाशुषे** हविर्दत्तवते यजमानाय तत्प्रीत्यर्थं **यत् भद्रं** वित्तगृहप्रजापशुरूपं कल्याणं करिष्यसि **तत्** भद्रं **तव इत्** तवैव । सुखहेतुरिति शेषः । हे **अङ्गिरः** अग्ने एतच्च **सत्यं** न त्वत्र विसंवादोऽस्ति । यजमानस्य वित्तादिसम्पत्तौ सत्यामुत्तरक्रत्वनुष्ठानेनाग्नेरेव सुखं भवति । भद्रशब्दार्थं शाट्यायनिनः समामनन्ति– 'यद्वै पुरुषस्य वित्तं तद्भद्रं गृहा भद्रं प्रजाभद्रं पशवो भद्रम्' इति ।

अङ्गशब्दस्य निपातत्वेऽपि अभ्यादित्वात् (फि.सू.८१) अन्तोदात्तत्वम् । 'दाश्वान् साह्वान्' (पा.सू.६,१,१२) इति सूत्रेण 'दाशृ दाने' इति धातोः क्वसुप्रत्ययो निपातितः । तत्र प्रत्ययस्वरः (पा.सू.३,१,३) । आमन्त्रितस्य अग्निशब्दस्य पदात्परत्वेन आष्टमिकानुदात्तत्वं (पा.सू.८,१,१९) न शङ्कनीयम्, 'अपादादौ' (पा.सू.८,१,१८) इति पर्युदस्तत्वात् । ततः षाष्ठिकम् (पा.सू.६,१,१९८) आद्युदात्तत्वमेव । भद्रशब्दस्य नब्विषयत्वेन (फि.सू.२६) आद्युदात्तत्वप्रसक्तावपि 'भदि कल्याणे' इति धातोरुपरि रक्प्रत्ययेन निपातनादन्तोदात्तत्वम् । अस्मिन् वाक्ये यच्छब्दप्रयोगात् 'निपातैर्यद्यदिहन्त' (पा.सू.८,१,३०) इति निघाते प्रतिषिद्धे स्यप्रत्ययस्वरेण सति शिष्टेन करिष्यसिशब्द उपान्त्योदात्तः । तवेत्यत्र 'युष्मदस्मदोर्ङसि' (पा.सू.६,१,२११) इत्याद्युदात्तत्वम् । 'अङ्गिरा अङ्गाराः' (निरु.३,१७) इति यास्कः । ऐतरेयिणोऽपि प्रज्ञापतिदुहितृध्यानोपाख्याने समामनन्ति– 'येऽङ्गारा आसंस्तेऽङ्गिरसोऽभवन्' (ऐ.ब्रा.३,३४) इति । तस्मात् अङ्गिरोनामकमुनिकारणत्वात् अङ्गाररूपस्याग्नेरङ्गिरस्त्वम् । अत्र पदात्परत्वेनाष्टमिकानुदात्तत्वम् ।। ६ ।।

**सिद्धाञ्जनम्– अङ्ग! अग्ने!** हे अग्ने **दाशुषे** दत्तवते यजमानाय **त्वं यद् भद्रं** कल्याणं करिष्यसि **तवेत्** तवैव तत् **सत्यं** हे **अङ्गिरः** एतन्नामक अग्ने ।

अत्रायं सायणीयोऽभिप्रायो भवति, हविर्दत्तवते यजमानाय पशुप्रजादिरूपं धनं अग्निर्ददाति। तदेव कल्याणं भद्रशब्देनोक्तम्। तथा लब्धेन धनेन साधनेन पुनरग्निं यजते यजमानः। तस्मादग्नेरेव तत् 'तवेत्तत्'। सत्यं न विसंवादोऽत्र। रमणीयार्थेऽस्मिन् मन्त्रे अग्नेः सत्यं किमपि स्वच्छमुक्तं लक्ष्यते, व्याख्यातृभिर्महाननर्थः कृतः। 'दाशुषे' दत्तवते 'यद्भद्रं करिष्यसि' 'तत्सत्यं' तवैव 'तवेत्' इति साधीयान् ऋजुरन्वयः। तर्हि अयमाशयः। अग्निना यजमानाय करिष्यमाणं भद्रं अग्नेरेव सत्यम्। किं तद्भद्रं यदग्नेरेव सत्यं उच्यते ? प्रजाः पशवो वित्तं गृहा इतीदं सर्वं भद्रमिति ब्राह्मणवाक्यबलेन प्रतिपादयन्ति। भवतु प्रजापश्वादि कल्याणम्। मास्तु विवादः। ऋग्वेदे भद्रपदं सत्यसम्बन्धि किमपि विशिष्टं कल्याणं द्योतयतीति न संशयः। 'विश्वानि देव सवितर्दुरितालि परा सुव। यद्भद्रं तन्न आसुव।' 'परा दुष्वप्न्यं सुव' (५.८२.४,५) इत्यादौ दुष्वप्न्यदुरितप्रतिद्वन्द्वित्वेन भद्रपदं प्रयुज्यते। अनृतज्ञानजन्यदुर्गतानामन्तकं भद्रपदवाच्यं कल्याणमेव अग्नेः सत्यमिति तात्पर्यपरिग्रहे, पूर्वस्यां ऋचि अग्नेः सत्यविशेषणं, अत्र तथाविधं भद्रं अग्नेरेव सत्यं इति प्रतिपादनं च उपपद्यते। तस्मान्नेह कल्याणसामान्यं विवक्षितम्। अनृतप्रज्ञापरिपन्थिकल्याणं सत्यं अग्नेरेव तत्त्वं स्वभावो वेति बोध्यम्। सर्वथा भद्रपदं अशुभ-अनृतज्ञानजन्यदुरितप्रतिद्वन्द्वित्वेन प्रयुज्यते वेदे। दुःस्वप्नसूक्ताच्च इदमवगम्यते, यत्र पापदेवताया निर्ऋतेर्विरोधितया 'भद्रं वरं वृणते' (१०.१६४) इत्यादि गीयते। ये भद्रं दूषयन्ति ते निर्ऋतेरन्तिके क्षिप्यन्त इत्यर्थको मन्त्रश्च अन्यत्र श्रूयते–

'ये वा भद्रं दूषयन्ति स्वधाभिः। अहये तान् प्रददातु सोमः आ वा दधातु निर्ऋतेरुपस्थे। (७.१०४.९) अपि च, अग्नेः स्वावासभूतऋतपदवाच्यस्य बृहतः सत्यस्य विशेषणतया, मनसः क्रतोश्च प्राप्यत्वेन च 'भद्रं' कीर्त्यते। 'भद्रं मनः कृणुष्व' (४.१९.२०) 'भद्रं नो अपि वातय मनो दक्षमुतक्रतुम्' (१०.२५.१) 'आ भन्दिष्टस्य सुमतिं चिकिद्धि बृहत्ते अग्ने महि शर्म भद्रम् (५.१.१०)– इत्येवंजातीयको मन्त्रवर्णः कल्याणपर्यायत्वेऽपि भद्रस्य वैशिष्ट्यं द्योत-यतीत्यवधार्यम्। आङ्गिरसस्य कुत्सस्य मन्त्रदृष्टिरपि 'यदङ्ग दाशुषे' इत्यस्या ऋचोऽस्माभिरुक्तमर्थं दृढीकरोति। सेयं भवति– 'तत्ते भद्रं यत्समिद्धः स्वे दमे सोमाहुता जरसे मृळयत्तमः। दधासि रत्नं द्रविणं च दाशुषेऽग्ने सख्ये मारिषामा वयं तव (१.९४.१४)। पुरस्तात् 'राजन्तं' इति मन्त्रस्य अर्थावगाहने स्मरणीयेयं कुत्सस्य ऋक्॥ ६॥

**नीतिमञ्जरी–** पूर्वं हरितोषकरमग्निमभिवन्द्य उत्तरेणाग्नेर्गुणानाह–

**अग्निर्ददाति भद्राणि पितृवद्यज्वने धनम् ।**
**अमृतत्वं मृतायैव तं त्यक्त्वा कमुपास्महे ।। ४ ।।**

विधिना तोषितोऽग्निः यज्वने यजमानाय भद्राणि कल्याणानि ददाति ।

अत्रार्थे ऋक् (ऋ.१.१.६)–

यदङ्गदाशुषे त्वमग्ने भद्रं करिष्यसि । तवेत्तत्सत्यमङ्गिरः ।

यत् । अङ्गः । दाशुषे । त्वम् । अग्ने । भद्रम् । करिष्यसि । तव । इत् । तत् । सत्यम् । अङ्गिरः ।। ४ ।।

मधुच्छन्दाः गायत्र्याऽग्निं तुष्टाव । अङ्गेत्याभिमुखीकरणे । अङ्ग हे अग्ने त्वं दाशुषे हविःप्रदात्रे यजमानाय यद्भद्रं वित्तगृहप्रजापशुरूपं कल्याणं करिष्यसि तत्तवेत् तवैव सुखहेतुः । हे अङ्गिरः अङ्गारेष्वङ्गिर इति (नि.३,१७) यास्कोक्तरङ्गिरःशब्दोऽग्निपर्यायः । हे अग्ने एतच्च सत्यम् । नत्वत्र विसंवादोऽस्ति । अतः यजमानस्य वित्तादिसंपत्तौ सत्यां उत्तरत्र क्रत्वनुष्ठानेऽग्नेरेव सुखं भवति ।

भद्रशब्दार्थं शाट्यायनिनः समामनन्ति । 'यद्वै पुरुषस्य वित्तं तद्भद्रं प्रजा भद्रं पशवो भद्रम्' इति ।

करिष्यसीति- तिङ्ङतिङः (पा० ८।१।२८) इति अनुदात्तत्वे प्राप्ते यच्छब्दान्निघाताभावः ।

अग्निः पुनः किं किं ददातीति श्लोकशेषेणाह– पितृवद्यजते धनं ददाति । यथा पिता पुत्राय धनं दद्यात् । तथा पितृस्थानीयोऽग्निः पुत्रस्थानीययजमानाय धनाद्यभिलषितं दद्यात् । मृताय मरणं प्राप्ताय तस्मै अमृतत्वं दद्यात् । तमेवंगुणोपेतमग्निं त्यक्त्वा कं देवं तुच्छं वयमुपास्महे परिचरामः ।

अत्रार्थे ऋक् (ऋ.१.१.९)–

स नः पितेव सूनवेऽग्ने सूपायनो भव । सचस्वा नः स्वस्तये ।।

सः । नः । पिताऽइव । सूनवे । अग्ने । सुऽउपायनः । भव । सचस्व । नः । स्वस्तये ।।

पूर्ववत् सर्वम् । हे अग्ने सः त्वं नः अस्मभ्यं अस्मदर्थं सूपायनः शोभनमुपायनं यस्य सः शोभनधनादिप्राप्तियुक्तो भव । क इव ? पिता सूनवे इव । यथा पिता पुत्राय सूपायनो भवति तद्वत् । नः अस्माकं स्वस्तये अविनाशाय सचस्व सेवस्व । सिषक्तु सचत इति सेवमानस्य (नि.३,२१)। सेवस्व नः स्वस्तये इति यास्कः । त्वं तमग्ने अ० (ऋ.१.३१.७) इति निगमान्तरम् । अथ यत्स्वैरग्निभिर्यजमानं संस्थापयन्तीति यजमानस्याग्नेः सकाशादमृतत्वमुक्तम् ।

अग्ने इत्यामन्त्रितत्वेन सर्वानुदात्तत्वे प्राप्ते पादादित्वान्न (पा०८.१.१९) ।

स न इत्येतत्तदोरिति सुलोपः (पा०६.१.३२) । सूनवेऽग्ने इति पादादित्वादेकीभवति । पादादिरकार (ऋ.प्रा.२,३३) इत्येकीभावः ।

सचस्वा नः स्वस्तय इति (ऋ.प्रा०८,५४) स्वस्तये ग्रहणाद्दीर्घः ।

### ऋक्संहिता पदपाठसहिता

**उप॑त्वाग्ने दि॒वेदि॑वे॒ दोषा॑वस्तर्धि॒या व॒यम् । नमो॒ भर॑न्त॒ एम॑सि ।। ७ ।।**

उप॑ । त्वा॒ । अ॒ग्ने॒ । दि॒वेऽदि॑वे । दोषा॑ऽवस्तः । धि॒या । व॒यम् । नमः॑ । भर॑न्तः । आ । इ॒म॒सि॒ ।। ७ ।।

### ऋग्भाष्यम्

**वस्तर्दिनमहोरात्रमभीष्टं प्राणिनां सदा ।**
**अल्पा अपि वयं बुद्ध्या त्वामुच्चगुणमीश्वरम् ।**
**उपयाम मनःकर्मवाग्भिस्त्वन्नमसम्भराः ।। ७ ।।**

**ऋग्भाष्यटीका–** **उपत्वा** । वस्तः । अत्र वस्तरिति पदं तावदनूद्य व्याचष्टे ।। **वस्तर्दिनमिति** । अहरित्यर्थः । हे **अग्ने धिया** बुद्ध्या । बुद्ध्यादिभिर्गुणैः । अल्पा अपीति शेषः । **वयं दिवेदिवे** दिवसेदिवसे । तत्रापि **दोषावस्तः** अहोरात्रम् । सदेति यावत् । **नमोभरंतः** अध्यात्मं मनसा बहिः कर्मवाग्भ्यां त्वन्नमसम्भराः । तव नमनं सम्बिभ्राणाः सन्तः । नमनं नमः संबिभ्रतीति सम्भराः । उच्चगुणमीश्वरमपि **त्वा** त्वां **उपेमसि** उपयाम । इदन्तोमसीति

इत् । शरणं व्रजेम । बुध्येति पदसामर्थ्यादल्पा अपीति शेषे वक्तव्ये स्तुतित्वसिध्यर्थमीश्वरं त्वामुच्चगुणमपीत्यपि शेषो वक्तव्यो भवति । धियोपेमसीत्यपि सम्भवे गुणाधिक्यलाभाय शेषोक्तिः । महागुणस्य शरणप्राप्तौ साधनहीनश्चेत्कथं शरणं याया इत्यतः प्रागुक्तमंगेत्येतदत्राप्याकृष्य व्याख्यातं प्राणिनामभीष्टेति । केवलं भक्त्यतिशयवशाच्छरणमुपयामेति ।। ७ ।।

**मन्त्रार्थमञ्जरी–** (हे) अग्ने । धिया, उपलक्षणम्– बुद्ध्यादिगुणैः । (अल्पा अपि) इति शेषः । वयम् । दिवेदि वे, दिवसे दिवसे । तत्रापि– दोषावस्तः, दोषा रात्रिः वस्तरहः, अहोरात्रम्, सदेति यावत् । नमः भरन्तः, त्वन्नमनं बिभ्राणाः, विकरणव्यत्ययश्छान्दसः, 'भृञ् भरणे' शब्विकरणं वा । त्वा, त्वाम् । '(उच्चगुणमपि)' इति शेषः । उप आइमसि, उपयाम, 'व्यवहिताश्च' इत्युपसर्गान्वयः, 'इदन्तो मसि' इति 'मस्' इति बहुवचनस्य च्छन्दसीकारोऽन्तागमो भवतीति विधानात् 'इण् गतौ' इत्यस्याङ्पूर्वस्य लटि रूपम्, शरणं व्रजेमेत्यर्थः ।। 'धिया' इति पदसामर्थ्यात् 'अल्पा अपि' इति शेषे वक्तव्ये स्तुतित्वसिद्ध्यर्थमीश्वरं त्वाम् 'उच्चगुणमपि' इत्यपि शेषो वाच्यो भवति । 'धिया वयं त्वामुपेमसि' इत्येवोक्तौ गुणाधिक्यालाभात् ।।७।।

**स्कन्द–** उपेत्युपसर्ग इमसीत्यन्तेनारूपातेन सम्बन्धयितव्यः । हे **अग्ने! दिवेदिवे** अहन्यहनि **दोषावस्तः** दोषेति रात्रिनाम । वस आच्छादने । रात्रौ स्वेन ज्योतिषा तमसामाच्छादयितः । **धिया** यादृश्यस्माकं प्रज्ञा तादृश्या **वयं नमः** स्तुतिं **भरन्तः** हृञ् हरणे इत्येतस्यैवैतद् रूपम् । 'हृग्रहोर्भश्छन्दसि' (पावा ८,२,३२) इति हस्य भः । हरन्तः प्रापयन्तः स्तुतिं कुर्वन्त इत्यर्थः । **त्वा** त्वाम् **उप एमसि** आङत्र धात्वर्थानुवादी । उपगच्छामः ।। ७ ।।

**वेङ्कटमाधव–** उपगच्छामः त्वाम् अग्ने ! वयम् अन्वहं सायञ्च प्रातश्च अग्निहोत्रकर्मणा अन्नं भरन्तः ।। ७ ।।

**मुद्गल–** हे **अग्ने! वयं** अनुष्ठातारः **दिवेदिवे** प्रतिदिनं **दोषावस्तः** रात्रावहनि च **धिया** बुद्ध्या **नमः भरन्तः** नमस्कारं सम्पादयन्तः **उप** समीपे **त्वा एमसि** त्वामागच्छामः ।। ७ ।।

**सायण–** अग्नीषोमप्रणयने 'उप त्वाग्ने' इत्यादिकोऽनुवचनीयस्तृचः । एतच्च ब्राह्मणे समाम्नातम्– 'उप त्वाग्ने दिवेदिवे उप प्रियं पनिप्नतमिति तिस्रश्चैकां चान्वाह' (ऐ.ब्रा.१,३०) इति ।

हे **अग्ने वयम्** अनुष्ठातारः **दिवेदिवे** प्रतिदिनं **दोषावस्तः** रात्रावहनि च **धिया** बुद्ध्या **नमः भरन्तः** नमस्कारं सम्पादयन्तः **उप** समीपे **त्वा एमसि** त्वामागच्छामः ।

उपशब्दस्य निपातस्वरः (फि.सू.८०) । 'त्वामौ द्वितीयायाः' (पा.सू.८,१,२३) इति युष्मच्छब्दस्यानुदात्तस्त्वादेशः । दोषाशब्दो रात्रिवाची । वस्तर् इति अहर्वाची । द्वन्द्वसमासे कार्तकौजपादित्वात् (पा.सू.६,२,३७) आद्युदात्तः । 'सावेकाचः' (पा.सू.६,१,१६८) इति धियो विभक्तिरुदात्ता । नम इति निपातः । भरन्त इत्यत्र शपः (पा.सू.३,१,६८) पित्त्वात् शतुर्लसार्वधातुकत्वाच्च अनुदात्तत्वे सति (पा.सू.६,१,१८३) धातुस्वरः शिष्यते । इमसि इत्यत्र 'इदन्तो मसिः' (पा.सू.७,१,४६) इत्यादेशो निघातश्च ॥ ७ ॥

**सिद्धाञ्जनम्– हे अग्ने त्वा** त्वां **दिवे दिवे** प्रत्यहं **दोषावस्तः** नक्तंदिवं **वयं धिया** धारणसमर्थया बुद्ध्या **नमः** प्रणतिं **भरन्तः** बिभ्रतः सन्तः उपेमसि उपगच्छामः उपास्महे इत्यर्थः। अत्रैके 'दोषावस्ता रात्रेराच्छादकः स्वप्रकाशेन अग्निः तस्य सम्बोधनं 'दोषावस्तः' इत्याहुः। वस्तुतस्तु दोषा रात्रिवाची तेन तमो लक्ष्यते । वस्तः दिनवाची तेन प्रकाशो लक्ष्यते । तमसि प्रकाशे वा सर्वास्ववस्थासु प्रत्यहमविरतं त्वामुपास्महे इति भावः । एवं नमो भरन्तो 'वयम्' इत्युपपद्यते । प्रणतिभारधारणसामर्थ्यं धियो वर्तते । तस्माद्ध्यानदृढा धीरेवात्र साधनं अनुदिनमविच्छेदं अन्तःप्रकाशे अप्रकाशे वा सर्वासु दशास्वग्न्युपास्तेरिति बोध्यम् ॥ ७ ॥

### ऋक्संहिता पदपाठसहिता

**राजन्तमध्वराणां गोपामृतस्य दीदिविम् । वर्धमानं स्वे दमे ॥ ८ ॥**

राजन्तम् । अध्वराणाम् । गोपाम् । ऋतस्य । दीदिविम् । वर्धमानम् । स्वे । दमे ॥

### ऋग्भाष्यम्

**देदीप्यमानं स्वे सद्मन्यध्वरेशं सदा वृधम् ।**
**यथार्थज्ञानगोपं त्वामुपेमसि ॥ ८ ॥**

**ऋग्भाष्यटीका– राजंतम्** । देदीप्यमानम् । **अध्वराणां** यज्ञानाम् । **राजंतं** राजानम् । राजतेरौणादिको झः झोऽतः । बाह्याध्यात्मिकाध्वरेशम् । **ऋतस्य गोपां** यथार्थज्ञानगोपम् । यथार्थज्ञानस्य गोप्तारम् । ऋचि गुपेराकारः । भाष्ये पचाद्यच् । **स्वेदमे** स्वे सद्मनि स्वर्गादौ

हृदये च । **दीदिविं** देदीप्यमानम् । दीव्यतेर्यङ्लुगन्तादिकारप्रत्ययोऽभ्यासस्य चेकारः । **वर्धमानं** सार्वकालिकः शानच् । ताच्छील्यार्थश्चानश् वा । **सदावृधं** सदापूर्णम् । इगुपधलक्षणः कः क्विप् वा । त्वामुपेमसीति पूर्वेण सम्बधः ॥ ८ ॥

**मन्त्रार्थमञ्जरी–** '(हे) अग्ने' इत्याद्यनुवृत्तिः । अध्वराणाम्, यज्ञानाम् । राजन्तम्, राजानम्, 'राजृदीप्तौ' इत्यस्मादौणादिके झप्रत्यये 'झोऽन्तः' इत्यन्तादेशे 'राजन्तम्' इति रूपसिद्धेः, बाह्याध्यात्मिकाध्वरेशम् । ऋतस्य, यथार्थज्ञानस्य । गोपाम्, गोप्तारम्, रक्षकम्, 'गुपू रक्षणे' इत्यस्मादाकारप्रत्ययः । स्वे दमे, स्वसद्मनि, स्वर्गादौ हृदये च । दीदिविम्, देदीप्यमानम्, द्युत्यर्थाद्दीव्यतेः 'धातोरेकाचो हलादेः क्रियासमभिहारे यङ्' इति यङ्प्रत्यये 'सन्यङोः' इति द्विर्वचने हलादिशेषे 'यङोऽचि च' इति यङो लुकि तस्मादिकारप्रत्यये 'दीर्घोऽकितः' इत्यभ्यासस्येकारे 'दीदिविम्' इति रूपसिद्धेः । वर्धमानम्, सार्वकालिकः शानच्छान्दसः, 'ताच्छील्यवयोवचनशक्तिषु चानश्' इति ताच्छील्यार्थश्चानश्वा, 'आने मुक्' 'कर्तरि शप्' 'पुगन्त' इति गुणः, सदा पूर्णम् । 'त्वामुपेमसि' इत्यनुवर्त्य योज्यम् ॥ ८ ॥

**स्कन्द–** कीदृशं त्वाम् ? उच्यते । **राजन्तम्** राजतिरैश्वर्यकर्मा (तु.निघ २,२१) ईशानम् । कस्य ? **अध्वराणाम्** यज्ञानाम् । **गोपाम्** रक्षितारं च । कस्य ? **ऋतस्य** यज्ञस्यैव । ऋतशब्दो ह्यपठितोऽपि भूयिष्ठं यज्ञनाम दृश्यते । **दीदिविं** अत्यर्थं दीप्तम् । **वर्धमानं स्वे** आत्मीये **दमे** यज्ञगृहे । 'दमे' (निघ ३,४) इति गृहनाम । सामर्थ्यादत्र यज्ञगृहे वर्तते ॥ ८ ॥

**वेङ्कटमाधव–** दीप्यमानं यज्ञानां गोपायितारं सत्यस्य दीप्तं **स्वे दमे** आहवनीये समिध्यमान-मुपेमः ॥ ८ ॥

**मुद्गल– राजन्तम्** दीप्यमानम् **अध्वराणाम्** यागानां **गोपाम्** रक्षकम् **ऋतस्य** सत्यस्य अवश्यंभाविनः कर्मफलस्य **दीदिविम्** पौनःपुन्येन द्योतकं **स्वे दमे** स्वकीये गृहे यज्ञशालायां हविर्भिः वर्धमानम् ॥ ८ ॥

**सायण–** पूर्वमन्त्रे त्वामुपेम इत्यग्निमुद्दिश्योक्तम् । कीदृशं त्वाम् ? **राजन्तं** दीप्यमानं **अध्वराणां** राक्षसकृतहिंसारहितानां यज्ञानां **गोपां** रक्षकम् **ऋतस्य** सत्यस्यावश्यं भाविनः

कर्मफलस्य **दीदिविं** पौनःपुन्येन भृशं वा द्योतकम् । आहुत्याधारमग्निं दृष्ट्वा शास्त्रप्रसिद्धं कर्मफलं स्मर्यते । **स्वे दमे** स्वकीयगृहे यज्ञशालायां हविर्भिः **वर्धमानम्** । राजन्तं वर्धमानमित्यत्रोभयत्र पूर्ववत् धातुस्वरः शिष्यते । दीदिविशब्दस्य 'अभ्यस्तानामादिः' (पा.सू.६,१,१८९) इत्याद्युदात्तत्वम् । दमशब्दो वृषादित्वात् (पा.सू.६,१,२०३) आद्युदात्तः ।। ८ ।।

**सिद्धाञ्जनम्**– पूर्वमन्त्रे अग्ने त्वां उपेम इत्युक्तम् । अत्र कीदृशं त्वामिति पादत्रयस्थ-विशेषणत्रयेणाह- **अध्वराणां राजन्तं** अध्वरपदवाच्यानां यज्ञानां ईशानम् । **ऋतस्य दीदिविं गोपां** सत्यस्य दीप्यमानं रक्षकम् । **स्वे दमे वर्धमानं** स्वीये गृहे वृद्धिमाप्नुवन्तम् ।

पादशोऽन्वयसम्भवे 'अध्वराणां गोपाम्' इति योजना न युक्ता । 'ऋतस्य गोपाः' स च 'दीदिविः', 'स्वे दमे' वर्धते, इत्यस्य तात्पर्यं पर्यालोचनीयम् । अत्रैव सूक्ते 'सत्यः' 'तवेत् तत् सत्यम्' इति द्विरग्नेः सत्यधर्मत्वं प्रतिपादितम् । अस्यामृचि सत्यस्य रक्षिता इति तस्य स्वगृहे वर्धनमिति चोच्यते । किं अग्नेः स्वीयं गृहं भवितुमर्हति सत्यादन्यत्र ? 'सत्यं ऋतं बृहत्' एव अग्नेरावासगृहं भवति । तच्च सत्यं परं धाम यजमानेन प्राप्यं, यज्ञस्तत्र साधनम् । निर्वोढा तु 'कविक्रतुः' 'सत्यः' सत्यधर्मा सत्यरक्षकः सत्यावासभूः अग्निरेव भवति । 'यजा नो मित्रावरुणा यजा देवान् ऋतं बृहत् । अग्ने यक्षि स्वं दमम् । (१.७५.५) ऋषिर्गोतमो राहूगणः अग्निं प्रार्थयते– 'अस्मदर्थं मित्रावरुणौ यज, अन्यान् देवान् यज, ऋतं बृहत् स्वं दमं यज' इति । अनयर्चा स्पष्टं भवति न केवलमग्नेर्यजमानार्थं यज्ञनिर्वाहित्वं, किं तु 'ऋतं बृहत्' अग्नेः स्वीयं गृहं, तदेव परमं यष्टव्यमिति च। 'गोपा ऋतस्य दीदिविं स्वे दमे' (३.१०.२) इत्यत्रापि श्रूयते ।

कर्मपरव्याख्यानेन कदर्थीकृतो गम्भीरार्थोऽयं मन्त्रः । यज्ञशालां अग्नेः 'स्वं दमं आहुः' । तत्र हविर्भोजनेन 'वर्धमानं' अग्निं सायं प्रातरुपासतेऽग्निहोत्रिणः! ।। ८ ।।

## ऋक्संहिता पदपाठसहिता

**स नः॑ पि॒तेव॑ सू॒नवेऽग्ने॑ सूपाय॒नो भ॑व । सच॑स्वा नः स्व॒स्तये॑ ।। ९ ।।**

सः । नः॒ । पि॒ताऽइ॑व । सू॒नवे॑ । अग्ने॑ । सु॒ऽउ॒पा॒य॒नः । भ॒व । सच॑स्व । नः॒ । स्व॒स्तये॑ ।।

ऋग्भाष्यम्

........................ **पितेव नः ।**
**सूपाश्रयो भवत्वं च यद्वदौरससूनवे ।**
**रक्ष सन्ततसौख्याय सम्यक्सत्त्वाय वासदा ।।**

**ऋग्भाष्यटीका– सनः** । पितेव । **हे अग्ने** स एवमस्माभिः शरणं प्राप्तस्त्वं च त्वं तु **नः** अस्माकं **पितेव** पुत्राणां **सूपायनः** अधिकरणे ल्युट् । सूपाश्रयः । शोभनोपाश्रयो भव । पितेवेत्यनेनैव (सूनव इति) लब्धेऽपि पुनः सूनव इत्युक्तस्य तात्पर्यमाह– **यद्वदिति** ।। न केवलं पितेव पुत्रमात्राणां किन्तु पितौरससूनवे । छन्दसि षष्ठ्यर्थे चतुर्थी वक्तव्या । औरस-सूनोर्यद्वत्तथेति । अत एव भिन्नवाक्यतासूचनायेवेत्युक्त्वा पुनर्यद्वदित्युक्तम् । किञ्च त्वं नोऽस्मान् **स्वस्तये** सन्ततसौख्याय सदा सम्यक् सत्वाय वा **सचस्व** रक्ष । यथा रक्षणेन सन्ततसौख्यादिकं भवति तथा रक्षेति । स्वस्तय इति सुपूर्वकं सत्तावाचिविभक्तिप्रतिरूपकमव्ययम् । सत्तावाचिनां सौख्यवाचित्वमपि ''सद्भाववाचिनः शब्दाः सर्वे ते सुखवाचकाः'' इति प्रमाणसिद्धम् । तस्मादुभयथा व्याख्यातम् । अनेकार्थत्वाद्धातूनां सचतिरिह रक्षायां वर्तते । सेवाया अयोगात् ।।

**मन्त्रार्थमञ्जरी–** (हे) अग्ने । सः, एवमस्माभिः शरणं प्राप्तः । (त्वम्) नः अस्माकम् । पितेव । सूनवे, पुत्राय, पुत्रस्येति यावत् । षष्ठ्यर्थे चतुर्थी । सूपायनः, 'सु, उप' इत्युपसर्गद्वय-पूर्वकात् 'इण् गतौ' इत्यतोऽधिकरणे ल्युट्, 'हलन्त्यम्' 'लशक्वतद्धिते' इति द्वाभ्यां लकार-टकारयोरित्संज्ञया लोपे 'युवोरनाकौ' इत्यनादेशे 'सार्वधातुकार्धधातुकयोः' इति गुणे 'एचोऽयवायावः' इत्ययादेशे 'अकः सवर्णे दीर्घः' इति सवर्णदीर्घे च सति 'सूपायनः' इति रूपसिद्धिः, शोभनोपाश्रयः । भव । किं च, (त्वम्) नः, अस्मान् । स्वस्तये, संततसौख्याय, सदा सम्यक्सत्त्वाय वा । सचस्व, रक्ष । यथा रक्षणेन सन्ततसौख्यादिकं भवति तथा रक्षेति भावः ।। 'स्वस्तये' इति सुपूर्वस्य सत्तावाचिनोऽस्तेः विभक्तिप्रतिरूपकमव्ययम् । सत्तावाचिनां सौख्यवाचित्वं च– 'सद्भाववाचिनः शब्दाः सर्वे ते सुखवाचिनः' (ऋ०भा०टी०उदा.) इति स्मृतिसिद्धम् ।। सचतेः सेवार्थकत्वेऽपीह तदयोगादनेकार्थत्वाद्धातूनां रक्षार्थत्वं ध्येयम् ।।९।।

**स्कन्द– सः** इति पूर्वप्रतिनिर्देशो वा तच्छब्दश्रुतिसामर्थ्यादेव वा योग्यार्थसम्बन्धो

यच्छब्दोऽध्याहर्तव्यः यं त्वामस्तोष्महि इति । स त्वं **नः** अस्माकं **पितेव सूनवे** 'सूनुः' (निघ २,१) इत्यपत्यनाम । षष्ठ्यर्थे चात्र चतुर्थी । यथा पिता पुत्रस्य, एवं हे **अग्ने! सूपायनः** सूपगमः सुखोपसर्पो भव । सचस्व सेवस्व च **नः** अस्मान् **स्वस्तये** 'स्वस्तीत्यविनाशनाम' (या ३,२१) अविनाशाय । रक्षितुमस्मानस्मत्समीपे नित्यं भवेत्यर्थः ।। ९ ।।

**वेङ्कटमाधव– सः** त्वम् अस्मभ्यं यथा **पिता** पुत्राय **अग्ने!** सूपचरः, एवं सूपचरो भव । सेवस्व चास्मान् अविनाशाय ।। ९ ।।

**मुद्गल– हे अग्ने! सः** त्वं **नः** अस्मदर्थं **सूपायनः** शोभनप्राप्तियुक्तः भव । तथा **नः** अस्माकं **स्वस्तये** विनाशराहित्यार्थं सचस्व समवेतो भव । दृष्टान्तः– **पितेव** यथा सूनवे पुत्रार्थं पिता सुप्रापः प्रायेण समवेतो भवति, तद्वत् ।। ९ ।।

**सायण– हे अग्ने** सः त्वं **नः** अस्मदर्थं सूपायनः शोभनप्राप्तियुक्तः **भव** । तथा **नः** अस्माकं **स्वस्तये** विनाशराहित्यार्थं **सचस्व** समवेतो भव । तत्रोभयत्र दृष्टान्तः । यथा **सूनवे** पुत्रार्थं **पिता** सुप्रापः प्रायेण समवेतो भवति तद्वत् ।। अस्मच्छब्दादेशस्य न इत्येतस्य 'अनुदात्तं सर्वम्' (पा.सू.८,१,१८) इत्यनुदात्तत्वम् । 'चादयोऽनुदात्ताः' (फि.सू.८४) इति इवशब्देऽनुदात्तः । 'इवेन नित्यसमासः पूर्वपदप्रकृतिस्वरस्वं च वक्तव्यम्' (पा.सू.२,१,४,२) इति समस्तः पितेवेति शब्दो मध्योदात्तः । शोभनमुपायनं यस्येति बहुव्रीहौ 'नञ्सुभ्याम्' (पा.सू. ६,२,१७२) इत्यन्तोदात्तत्वम् । सचस्वेत्यत्र पदात्परत्वं नास्तीति न निघातः । लसार्वधातुकानुदात्तत्वे सति धातुस्वरावशेषः ।। २ ।।

**सिद्धाञ्जनम्– अग्ने स त्वं सूनवे** पुत्राय **पितेव** जनक इव **नः** अम्माकं **सूपायनः** सुखेन उपायनं समीपगमनं यस्य सः सुप्रापो भव । **नः** अस्मान् **स्वस्तये** कल्याणाय **सचस्व** सेवस्व। अस्मासु सक्तो भव । अस्मासु समवेतो भवेति यावत् ।

व्याख्यातं माधुच्छन्दसमाग्रेयं सूक्तम् । दाशतय्यां अत्र प्रथमसूक्त एव वेदरहस्यं किञ्चिद्विस्पष्टं द्योतितम् । तथा व्याख्याने यावदपेक्षं सङ्क्षेपतो मन्त्रपरमार्थपद्धतिः प्रदर्शिता । यद्यपि याज्ञिकपक्षानुसारेण सूक्तेऽस्मिन् कासाञ्चिदृचां यथाकथञ्चदर्थाविष्कारः शक्यो भवति। तथाऽपि न सर्वत्र ऋजुर्भवति पन्थाः कर्मपरतया व्याख्यानाय । 'कविक्रतुः' 'सत्यः चित्रश्रवस्तमः' 'धिया नमो

भरन्तः' 'स्वे दमे (ऋते बृहति) वर्धमानम्' इत्यादिस्थलेषु महता क्लेशेन जघन्योऽर्थः सम्पादितः कर्मठव्याख्याने । 'यदङ्ग दाशुषे' इति मन्त्रस्य व्याख्याने साधितस्य तात्पर्यस्योपहसनीयता परां काष्ठां गता । ऋज्वर्थस्तु, स्वात्मीयं 'स्वात्मानमेव वा योऽग्रयेऽर्पयति तस्मै अनृतज्ञान-तज्जन्यदुःखान्तकरं भद्रपदवाच्यं कल्याणं करोत्यग्निः । यदिदं भद्रं तत् सत्यं अग्निनिष्ठमेव' इति ।

एवं ऋजुना वेदरहस्यमुद्घाटयता द्वारेण सूक्तमन्वार्थोपपत्तिर्द्रष्टव्या । देवोऽग्निरेव पुरोहित ऋत्विग्भूतश्च यजमानस्य यज्ञनिर्वाहार्थमध्येष्यते प्रथमे मन्त्रे । सा चाग्नेरध्येषणारूपोपास्तिर्न नूतना मधुच्छन्दसाऽवलम्बिता, किं तु बहोः कालादृषिपरम्परागता, यया देवानां प्रमुखोऽग्निरितरान् देवानावहति इति द्वितीये प्रतिपादितम् । अग्नेः प्रसादाल्लब्धा सम्पद् न लौकिकीव क्षयभयाभिमृष्टा, किं तु उत्तरोत्तराभिवृद्धिशालिनी इति तृतीये। न केवलं असहायेन पुरुषकारेण साधितो यज्ञो देवान् गच्छति। किं तु अग्निना सर्वथा पापेभ्यो रक्षोभ्योऽभिरक्षितं यजनमेव देवान् प्राप्नोतीति चतुर्थे । दृष्टिश्रुतिसम्पन्नः प्राज्ञदृढसङ्कल्पोऽग्निर्देवानां सहाय इति पञ्चमे । अनृतपरिपन्थि-सत्यज्ञानात्मकभद्रप्रदत्वं अग्नेस्तत्वं इति षष्ठे । प्रत्यहं सर्वास्ववस्थासु ध्यानदृढाः प्रणतिभरोपेता ऋषयोऽग्निमुपासत इति सप्तमे । तस्याग्नेः ऋतम् । सत्य बृहत् । स्वीयं धाम, स यजमानाय तत्र वर्धते। तद् रक्षतीति अष्टमे। एवंविधमग्निं साक्षात्कृतं साक्षात्कर्तुं वा महता विस्रम्भेण ऋषिः पिता तनुजन्मनीव सक्तः सन् नः सुगमो भव, इति प्रार्थनां करोति नवमे ।

नैतादृशोऽग्निर्बहिः सङ्केतमात्रतयाऽवस्थितो याज्ञिको भवितुमर्हति । न वा केवलं भौतिक-तेजस्तन्मात्राधिदैवतम् । किं तु अस्माभिः प्रदर्शितप्रभावः सूक्तप्रतिपादितलक्षणः सत्य एवायं भगवान् भद्रात्मा नः 'कविक्रतुः' ईडितोऽस्मिन् प्रथमे सूक्ते । तदिदं वेदरहस्यरसास्वादरसनाभूतं आग्नेयं, यतश्चेदं सूक्तसहस्राधिकवेदपाठप्रत्याम्नायत्वेन लघुब्रह्मयज्ञ इति प्रतिपिपादयिषया–

'अग्निमीळे' जपेत् सूक्तं पापघ्नं श्रीकरं च यत् ।
पारायणफलं तस्य वेदानां चैव सर्वशः ।।

इत्याहुः पूर्वे । अग्निष्टोम इति विख्याते सोमयागे प्रातरनुवाके सोमाभिषवात् प्रागिदं होत्रा शस्यते ।

।। इति प्रथमाष्टके प्रथमाध्याये द्वितीयो वर्गः ।।

ऋग्भाष्यम्

मुनिस्तु सर्वविद्यानां भगवान्पुरुषोत्तमः ।
विशेषतश्च वेदानां यो ब्रह्माणमिति श्रुतिः ।
ऋग्वेदादिकमस्यैव श्वसितं प्राह चापरा ।
वाचो बभूवुरुशतीर्हयग्रीवादिति स्फुटम् ॥
वचो भागवतेऽप्यस्ति ब्रह्माण्डेऽपि तथा परम् ।
हयग्रीवादिमा विद्याः श्वसितत्वेन निःसृताः ॥
ब्रह्मणा स्वीकृतास्ताश्च रुद्रशेषविपा अपि ।
दक्षाद्याः सनकाद्याश्च शक्राद्या मनवस्तथा ॥
जगृहुस्तेच विश्वस्मिंश्चक्रुर्व्याप्तास्ततोऽखिलाः ।
उक्तं पद्मपुराणेच कपिलो भगवानजः ॥
प्रोवाच ब्रह्मणे विद्या हृदिस्थो बादरायणः ।
ओङ्कारपूर्विकाविद्याः प्रेरयत्यखिलेष्वपि ॥
सदैव ब्रह्मणे पूर्वमिति सात्वतसंहिता ।
सकृन्निगदमात्रेण गृहीतं ब्रह्मणाऽखिलम् ॥
अन्तर्गतस्य व्यासस्य प्रसादान्नित्यशक्तितः ।
तेन चानंतशक्तित्वाद्युगपत्समुदीरितम् ॥
प्रथमप्रतिपत्तृत्वान्मुनिर्ब्रह्माऽखिलस्य च ।
सुपर्णोऽखिलवेदानां पञ्चरात्रस्य नागराट् ॥
द्वितीयप्रतिपत्तृत्वान्मुनित्वे सम्प्रकीर्तितौ ।
यः पश्यति स्वयं वाक्यं स ऋषिस्तस्य कीर्तितः ॥
अर्वाक्तु द्वादशावृत्तेरधीत्याप्यृषिरेव सः ।
यत्स्वयं प्रतिभातस्य संशयार्थं गुरोर्वचः ॥
सुपर्णादिर्विरिंचस्य केवलं धर्मकारणम् ।
ऋचामृषिस्ततः शक्रो यजुषां सूर्य एव च ॥
सोमः साम्नां तृतीयास्ते प्रतिपत्तार ईरिताः ।
अथर्वाङ्गिरसामग्निरेकर्षिश्चाप्यथर्वणाम् ॥

**इत्युक्ताः समुदायस्य संत्यन्येच पृथक्पृथक् ।**
**एतज्ज्ञानाददृष्टस्य फलस्याप्तिः स्फुटं भवेत् ।।**
**द्रष्टृणां तु चतुर्थानां ज्ञानादप्यैहिकं भवेत् ।**
**ते चैकस्यापि बहवः स्युः सूक्तस्यर्च एव वा ।।**
**तस्यां तस्यामवस्थायां तत्तत्प्राप्तिविशेषतः ।**
**तेषां वाक्यस्वरूपेण प्रार्थनादिषु पश्यति ।।**
**विष्णुर्ब्रह्मा सुपर्णोवा तत्तद्योग्यार्थभेदतः ।**
**सर्ववेदाभिमानित्वाच्छ्रीर्ब्रह्माणीच भारती ।।**
**द्रष्ट्र्यश्च सर्वविद्यानां व्याख्यातो ब्रह्मणा मरुत् ।**
**स्वभर्त्रनंतरं द्रष्ट्र्यस्तेभ्यस्तन्नोदिता हिरुक् ।**
**ताः स्तुवंति हरिं नित्यं विद्याभिस्ते च सर्वशः ।।**

**ऋग्भाष्यटीका–** एवं व्याख्यातस्य सूक्तस्य व्याकरिष्यमाणानां च ज्ञानादिकमृष्यादिज्ञाने सत्येव सफलं नान्यथा । ''योहवा अविदितार्षे (र्षेयछं) च्छन्दो दैवतब्राह्मणेन मन्त्रेण (यजति) याजयति वाऽध्यापयति स्थाणुं वर्च्छति गर्ते वा पद्यत प्रवामीयते च'' इति श्रुतेः । तस्मा-दृषिच्छन्दोदैवतादिकं ज्ञापयन् ऋषिं तावदाह– **मुनिस्त्विति** ।। विशेषतश्च वेदानां भगवानृषिः । पौरुषेयवाक्यानामुत्पत्त्यनन्तरमेव दर्शनं वेदानां तु सर्वदेति विशेषः । कुत एतदित्यत आह– **यो ब्रह्माणमिति** ।। ''यो ब्रह्माणं विदधाति पूर्वं योवै वेदांश्च प्रहिणोति तस्मै'' इति श्रुतिस्तावद् ब्रह्मणोऽपि भगवान् वेदादिकमुपदिदेशेति प्राह । तेन ज्ञायते स एव सर्वविद्यानामृषिरिति । नह्येवंविधस्यान्योऽध्यापकः सम्भवति । श्रुतिः प्राहेति वक्ष्यमाणेनान्वयः । ''अस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानान्यस्यैवैतानि निश्वसितानि' इत्यपराच श्रुतिः ऋग्वेदादिकमस्य विष्णोरेव निश्वसितं प्राह । तेनापि तस्यर्षित्वं ज्ञायते । निश्वसितमिति हि निश्वसितमिवा-नायासेनादिकाले तेनाचरितमित्यर्थः । 'वाचो बभूवुरुशतीः श्वसतोऽस्य नस्तः' इति भागवतेऽपि स्फुटमेतमर्थं प्रतिपादयद्वचोऽस्ति । उशतीरुशत्यः प्रकाशमानाः । ब्रह्माण्डेऽपि पुराणे । तथा एतदर्थस्याभिधायकं परं वचोऽस्ति । तत्पठति– **हयग्रीवादिति** । रुद्रशेषविपा अपि ब्रह्मणो जगृहुः । तेभ्यः शक्राद्याः तेभ्यो दक्षाद्याः तेभ्यः सनकाद्याः मनवश्च । तेच विश्वस्मिंश्चक्रुः

जगत्युपदिदिशुः । ततस्तेषामुपदेशादखिला जगति व्याप्ताश्च । हृदिस्थ इत्यादि सात्वतसंहिता-वाक्यम् । सदैवाखिलेषु प्रेरयति तत्रापि पूर्वं ब्रह्मणे ददाविति । यो ब्रह्माणमिति श्रुतौ वेदपदं सर्वविद्यापरमिति ज्ञापयितुं द्वितीयश्रुत्युदाहरणम् । उभयत्रापि विष्णोरप्रतीतेः पुराणाद्युदाहरणमिति । एवं परमेश्वरः सर्वविद्यानामृषिरित्युपपाद्य ब्रह्माऽपि तथेत्याह– **सकृदिति** ।। यस्मात्तेन परमेश्वरेणा-नन्तशक्तित्वाद्युगपत्समुदीरितमखिलं विद्याजातमादिकाले सकृन्निगदमात्रेण ब्रह्मणाऽन्तर्गतस्य व्यासस्य प्रसादान्नित्यशक्तित इति तत्प्रसादायत्तनित्यशक्त्या गृहीतं तस्मादेवं सर्वविद्यानां प्रथम-प्रतिपत्तृत्वाद् ब्रह्माऽप्यखिलस्य विद्याजातस्य मुनिर्भवति । एवं सर्वविद्यानामृषिमुक्त्वा तत्प्रभेदा-नामृष्यन्तरं चाह– **सुपर्ण इति** ।। मुनिरिति सम्बन्धः । एतौ च द्वितीयप्रतिपत्तृत्वात् ब्रह्मणोऽनन्तरप्रतिपत्तृत्वान्मुनित्वे विषये द्वितीयौ सम्प्रकीर्तितौ ।

ननु परमेश्वरः स्वयमेव सर्वविद्यानां प्रतिपत्तेति मुनिर्भवतु अधीतविद्यास्तु ब्रह्मादयः कथमृषय इत्याशङ्कापरिहारार्थमृषित्वं तावदाह– **य इति** ।। यथा यः स्वयमध्ययनेन विनैव यद्वाक्यं पश्यति स तस्य वाक्यस्यर्षिः प्रकीर्तितः । एवं यो द्वादशावृत्तेरर्वागधीत्यापि प्रतिपद्यते सोऽप्यृषिरेव । तथाभूतो हि स्वयं प्रतिभातविद्यकल्प एव भवेत् । नह्यन्य एतावन्मात्रेणाध्ययनेन सर्वविद्याः प्रतिपत्तुं शक्नोति । ब्रह्माद्यास्तु भगवत्प्रसादात्स्वयं प्रतिभाताखिलविद्याः सकृदधीतवंत इत्यृषित्वं तेषामुपपन्नमिति भावः । यद्येवं ब्रह्मादीनां स्वयं प्रतिभातविद्यत्वादृषित्वं तर्हि तेषामध्ययनं किमर्थमित्यत आह– **यत्स्वयमिति** ।।

सुपर्णादिर्यत्स्वयं प्रतिभातस्य वेदादेर्गुरोर्वचो निगदरूपं तदस्माभिर्दृष्टोऽयं वेदोवा यत्किञ्चिद्वेति संशयनिवृत्त्यर्थं वेद एवायमिति निश्चयार्थं भवति । विरिंचस्य तु संशयाभावात्केवलं धर्मकारणं भवति । महतोहि धर्मस्य कारणं परमेश्वरादध्ययनम् । एवं पौरुषेयापौरुषेयभेदेन सर्वविद्यानामृषिभेद-मुक्त्वा वेदेष्वेवावान्तरभेदेन तमाह– **ऋचामिति** ।। ततः सुपर्णाद्यनन्तरमृगादीनामथर्वाद्यंतानां शक्राद्या एकर्षिपर्यन्ता ऋषयः । कुतस्तेषामृषित्वे सुपर्णाद्यानंतर्यम् । यतस्ते तृतीया प्रतिपत्तार ईरिताः । एवशब्दः ऋचामेवेत्यादिना सम्बध्यते । चस्त्वर्थः । अथर्वणामङ्गिरसाश्च । द्विभाग-स्याप्यथर्ववेदस्येत्यर्थः । तद्भेदानामथर्वणां त्वेकर्षिरप्यृषिर्भवति । ततोऽर्वाक्तनानप्यृषीन् पूर्वोक्तानु-वादेनाह– **इत्युक्ता इति** ।। इत्येते प्रायेणाविभक्तविद्यासमुदायानामृषयस्त्रिविधा उक्ताः । एतेभ्योऽन्ये चतुर्थाश्च । पृथक् पृथक् एकैकस्मिन्नप्यृगादिसमुदायेऽवान्तरभेदानां शाखादीनामृषयः सन्ति ।

प्राणोऽपि भवन् बिभर्ति नाडीचक्रव्यवस्थाम् । तस्मादाधारोऽयं मानवे मनोमयव्यापारस्य। तर्हि कोऽसौ सोमः यस्याभिषवानां पानाय वायुराहूयते ? ब्रूमः । ऋतचित्पदवाच्य-सत्यज्ञानभुवः क्षरन् यो दिव्यः सदानन्दरसो मनोमयभुवि प्रवहति, स हि सोमपदवाच्यो वेदे व्यवह्रियते । लताविशेषः सोमस्तु बाह्यः सङ्केतो याज्ञे कर्मणि। पुरस्ताद् अस्य तृचस्य व्याख्यानान्ते तत्त्वमिदं प्रपञ्चयिष्यते ।। १ ।।

### ऋक्संहिता पदपाठसहिता

**वाय॒ उ॒क्थेभि॑र्जरन्ते॒ त्वाम॒च्छा ज॑रि॒तार॑ः । सु॒तसो॑मा अह॒र्विद॑ः ।। २ ।।**

वायो॒ इति॑ । उ॒क्थेभि॑ः । ज॒रन्ते॒ । त्वाम् । अच्छ॑ । ज॒रि॒तार॑ः । सु॒तऽसो॑माः । अ॒हः॒ऽविद॑ः ।।

### ऋग्भाष्यम्

## स्तुवन्ति शस्त्रैः स्तोतारो यथावद्यज्ञवेदिनः ।। २ ।।

**ऋग्भाष्यटीका– वाय उक्थेभिः** । स्तुवन्ति शस्त्रैः । हे **वायो** सुतः सोमो यैस्ते **सुतसोमाः** । अच्छेति निपातोऽभेरर्थे वर्तते । अहरिति यज्ञोपलक्षणम् । अच्छा **अहर्विदः** अभितो यथावद्यज्ञवेदिनः । **जरितारः** स्तोतारः । स्तोतृनामसु पाठात् । **उक्थेभिः** उक्थैः शस्त्रैस्त्वां **जरन्ते** स्तुवन्ति । स्तुतिकर्मसु पाठात् ।। २ ।।

**मन्त्रार्थमञ्जरी–** (हे) वायो सुतसोमाः, सुतः सोमो यैस्ते सुतसोमाः । 'अच्छ' इति निपातः 'अभि' इत्यर्थे 'अहर्विदः' इत्यत्रान्वेति, अच्छाहर्विदः । 'अहः' इति यस्मिन्दिने सोमाभिषवस्तद्दिनमुच्यते, यज्ञोपलक्षणमेतत्, अच्छ, अभितः । अहर्विदः, यथावद्यज्ञवेदिनः । जरितारः, स्तोतारः । उक्थेभिः, उक्थैः शस्त्रैः । त्वाम् । जरन्ते, स्तुवते ।। २ ।।

**स्कन्द–** उक्थशब्द मोक्षवचन । स्तोत्रैः । **जरन्ते त्वामच्छ** । अच्छशब्दोऽभेः स्थाने वर्तते । उपसर्गार्थावर्तितत्वाच्च जरन्ते इत्याख्यातेन सम्बन्ध्यते । जरतिश्चात्र स्तुत्यर्थः । 'जरते ह्वयते' (निप.३.१४) इत्यर्चतिकर्मसु पठितत्वात् । **अभिजरन्ते** अभिष्टुवन्ति त्वां **जरितारः** स्तोतारः । 'जरिता' (निघ ३,१६) इति स्तोतृनाम । कीदृशाः । **सुतसोमाः** कृतसोमाभिषवाः । तुभ्यं यः प्रदास्यते सोमः स्तुताय, तमभियषुत्येत्यर्थः । **अहर्विदः** अहश्शब्दोऽत्राह्ना यः समाप्यते ज्योतिष्टोमादिः सोमयागः तस्य वाचकः, न दिदसस्य । प्रक्रान्तस्य ज्योतिष्टोमादेरहः-परिमितस्य सोमयागस्य ज्ञातार इत्यर्थः ।। २ ।।

**वेङ्कटमाधव–** वायो! त्वाम् प्रति शस्त्रैः स्तुवन्ति स्तोतारः अभिषुतसोमाः अहर्विदः लब्धाहर्मुखाः ॥ २ ॥

**मुद्गल–** हे **वायो! जरितारः** स्तोतारः ऋत्विग्यजमानाः **त्वां अच्छ** अभिलक्ष्य **उक्थेभिः** आज्यप्रउगादिभिः शस्त्रैः जरन्ते स्तुवन्ति । कीदृशाः । **सुतसोमाः** अभिषुतेन सोमेनोपेताः । अहःशब्द एकेनाह्ना निष्पाद्ये अग्निष्टोमादिक्रतौ वैदिकव्यवहारेण प्रसिद्धः । क्रत्वभिज्ञा इत्यर्थः ॥

**सायण– हे वायो जरितारः** स्तोतार ऋत्विग्यजमानाः **त्वामच्छ** त्वामभिलक्ष्य **उक्थेभिः** आज्यप्रउगादिशस्त्रैः **जरन्ते** स्तुवन्ति । कीदृशाः । **सुतसोमाः** अभिषुतेन सोमेनोपेताः । **अहर्विदः** । अहःशब्द एकेनाह्ना निष्पाद्येऽग्निष्टोमादिक्रतौ वैदिकव्यवहारेण प्रसिद्धः । क्रत्वभिज्ञा इत्यर्थः । 'अर्चति गायति' इत्यादिषु चतुश्चत्वारिंशत्स्वर्चतिकर्मसु धातुषु 'जरते ह्वयति' (नि.३, १४,८) इति पठितम् । स्तुतेरपि अर्चनाविशेषत्वात् औचित्येनात्र स्तुत्यर्थो जरतिधातुः । अच्छशब्दस्य संहितायां 'निपातस्य च' (पा.सू.६,३,१३६) इति दीर्घः । सुतसोमा इत्यत्र बहुव्रीहित्वात् पूर्वपदप्रकृतिस्वरः (पा.सू.६,२,१) । अहर्विद इत्यत्र समासस्वरं (पा.सू.६,१, २२३) बाधित्वा 'तत्पुरुषे तुल्यार्थ' (पा.सू.६,२,२) इत्यादिना द्वितीयापूर्वपदप्रकृतिस्वरे प्राप्ते तदपवादत्वेन 'गतिकारकोपपदात्कृत्' (पा.सू.६,२,१३९) इति कृदुत्तरपदप्रकृतिस्वरः ।

**सिद्धाञ्जनम्– वायो** प्राणदेव, **त्वां अच्छ** त्वां अभिलक्ष्य **जरितारः** स्तोतारः (त्वत्कामाः) **उक्थेभिः** स्तोत्रवचनैः त्वदाविष्कारकैः **जरन्ते** स्तुवन्ति । कीदृशास्ते ? **सुतसोमाः** सोमाभिषवं कृतवन्तः, पुनः कीदृशाः ? **अहर्विदः** अहश्शब्दलक्षितं प्रकाशं विदितवन्तो दृष्टवन्त इत्यर्थः ।

अत्रेदमवधेयम् । यद्यपि 'रेभः कारुर्जरिता' इत्यादीनि स्तोतृनामानि पठितानि निघण्टौ, तथाऽपि एकैकमपि स्तोतुः किमपि वैशिष्ट्यं द्योतयति । वेदे जारशब्द इव जरितृपदमपि गूढं प्रेमाणं गमयति, अत एव स्तोतारः त्वत्कामा इति व्याख्यातम् । एवं वेदे वाचः सर्जनसामर्थ्यं आविष्कारकत्वं वा प्रसिद्धम् । अत एव वचेर्निष्पन्नस्य 'उक्थ' शब्दस्य, त्वदाविष्कारकैः स्तोत्रवचनैः इति व्याख्यानं उपपन्नम् ।

### ऋक्संहिता पदपाठसहिता

**वायो तव प्रपृञ्चती धेना जिगाति दाशुषे । उरूची सोमपीतये ॥ ३ ॥**

वायो इति । तव । प्रऽपृञ्चती । धेना । जिगाति । दाशुषे । उरूची । सोमऽपीतये ॥

### ऋग्भाष्यम्

**वाक्त्वत्संपर्किणी यज्ञकृते प्रापयतीप्सितम् ।**
**सोमपायातिमहती महार्थत्वात्त्वदर्थतः ।। ३ ।।**

**ऋग्भाष्यटीका–** वायो तव । वाक् । **हेवायो तव** त्वाम् । **प्रपृश्चती** पृश्ची सम्पर्के । त्वत्संपर्किणी त्वत्स्तुतिरूपा । **उरूची** अतिमहती । आधिक्येऽधिक-मित्युक्तत्वात् । **धेना** वाक् । वाङ्नामसु पाठात् । **सोमपीतये** सोमस्य पीतिर्यस्येति व्यधिकरणो बहुव्रीहिः । तस्मै सोमपाय । ''आतोऽनुपसर्गे कः'' । **दाशुषे** यज्ञकृते । निपातनात्साधुः । **जिगाति** गतिकर्माऽयम् । अन्तर्णीतण्यर्थश्च प्रापयति । ईप्सितमिति शेषः । कथं वाचोऽतिमहत्वं महार्थत्वात् अतिमहार्थ-त्वात् । तदपि कुतः त्वदर्थः त्वदर्थत्वात् । त्वं ह्यतिमहान् । अनेन यतस्तव प्रपृश्चती तत एवोरूचीत्युक्तं भवति । यद्वा महार्थत्वादित्युरुमश्चतीत्युरूचीशब्दस्य निर्वचनान्तरम् । तस्योपपादनं त्वदर्थत इति । त्वत्स्तुतिर्हि यजमानाभीप्सितसाधनस्वभावाऽतः स्तुवतामस्माकमभीप्सितं कुर्विति ।

**मन्त्रार्थमञ्जरी–** (हे) वायो । तव, द्वितीयार्थे षष्ठी, त्वाम् । प्रपृश्चती, 'पृची संपर्के' संस्पृशन्ती, त्वद्विषयिणीति यावत् । अत एव – उरूची, अतिमहती । धेना; वाक् । सोमपीतये, सोमस्य पीतिः पानं यस्य स सोमपीतिस्तस्मै । दाशुषे, यजमानाय । जिगाति, गत्यर्थोऽयं धातुः अन्तर्णीतण्यर्थः, प्रवर्तयतीत्यर्थः । '(ईप्सितम्)' इति शेषः । तव स्तुतिर्यजमानाभीप्सितसाधिका । अतः स्तुवतामस्माकमभीप्सितं कुर्विति भावः ।। ३ ।। इति प्रथमो वायव्यस्तृचः ।। १ ।।

**स्कन्द–** हे **वायो! तव** अवयवभूता **प्रपृञ्चती** पृची सम्पर्के । सामर्थ्याच्च सोमसम्पर्के वर्तते, न च यत्र क्वचित् । सम्पर्केण चात्र स्वहेतुरभिलाषो लक्ष्यते । अभिलाषार्थ एव वा पृश्चतिः । प्रकर्षेण सोममभिलषन्तीत्यर्थः । अथवा 'पपृक्षाः, महयति' (निघ ३,१४) इत्यर्चतिकर्मसु पाठात् पृश्चतिः स्तुत्यर्थोऽपि । न सम्पर्कार्थ एवेति गम्यते । व्यत्ययेन वा शतृप्रत्ययः कर्मणि । प्रपृश्चती प्रकर्षेण स्तूयमानेत्यर्थः । **धेना** जिह्वा । किं करोति । उच्यते । **जिगाति** गतिकर्माऽयं 'जिगाति' 'इन्वति' (निघ २,१४) इति गतिकर्मसु पाठात् । गच्छति । **दाशुषे** 'गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ (पा.२,३,१२) इत्येवमियं कर्मणि चतुर्थी । दाश्वांसं यजमानं प्रतीत्यर्थः । कीदृशी । **उरूची** उरुशब्दो बहुनाम (तु.निघ. ३,१) । अञ्चतिर्गत्यर्थः ।

बहून् यजमानान् प्रति गन्त्री । अवयवभूतजिह्वागमनेनात्रावयविनो वायोरेव गमनं लक्ष्यते । त्वं गच्छसीत्यर्थः । किमर्थम् । **सोमपीतये** सोमपानार्थम् ।। ३ ।।

**वेङ्कटमाधव–** वायो! धनेन स्तोतॄन् प्रपृञ्चती संयोजयन्ती शतं युष्मभ्यं सहस्रं युष्मभ्यमित्येवं बह्वश्नन्ती तव वाक् दाश्वांसमुद्दिश्य सोमपानार्थं निष्क्रामति ।। ३ ।।

**मुद्गल–** हे वायो! तव **धेना** वाक् **सोमपीतये** सोमपानार्थं **दाशुषे** दाश्वांसं दत्तवन्तं यजमानं **जिगाति** गच्छति । हे यजमान! त्वया दत्तं सोमं पास्यामीत्येवं वायुर्ब्रूते इत्यर्थः । कीदृशी धेना । **प्रपृञ्चती** प्रकर्षेण सोमसम्पर्कं कुर्वती सोमगुणं वर्णयन्तीत्यर्थः । **उरूची** उरून् बहून् यजमानान् गच्छन्ती । सोमयाजिनः सर्वान् वर्णयन्तीत्यर्थः ।। ३ ।।

**सायण–** हे **वायो** तव **धेना** वाक् **सोमपीतये** सोमपानार्थं **दाशुषे** दाश्वांसं दत्तवन्तं यजमानं **जिगाति** गच्छति । हे यजमान त्वया दत्तं सोमं पास्यामीत्येवं वायुर्ब्रूते इत्यर्थः । कीदृशी धेना । **प्रपृञ्चती** प्रकर्षेण सोमसंपर्कं कुर्वती सोमगुणं वर्णयन्तीत्यर्थः । **उरूची** उरून् बहून् यजमानान् गच्छन्ती । ये ये सोमयाजिनस्तान् सर्वान् वर्णयन्तीत्यर्थः । प्रपृञ्चतीत्यत्र 'शतुरनुमः' (पा.सू.६,१,१७३) इति ङीप् उदात्तः । 'श्लोकः धारा' इत्यादिषु सप्तपञ्चाशत्सु वाङ्नामसु 'गणः धेना ग्नाः' (नि.१,११,३९) इति पठितम् । 'वर्तते अयते' इत्यादिषु द्वाविंशाधिकशतसङ्ख्येषु गतिकर्मसु 'गातिजिगाति' (नि.२,१४,११३) इति पठितम् । दाशुषे इत्यत्र 'गत्यर्थकर्मणि' (पा.सू.२,३,१२) इति चतुर्थी । उरूचीत्यत्र गौरादित्वेन (पा.सू.४,१,४१) ङीपि कृते प्रत्ययस्वरः । सोमपीतये इत्यत्र बहुव्रीहित्वाभावेऽपि व्यत्ययेन पूर्वपदप्रकृतिस्वरः ।।

**सिद्धाञ्जनम्– वायो! प्रपृञ्चती** प्रकर्षेण सम्पर्कं कुर्वती । पूरयित्रीत्यर्थः । **तव धेना** वागुपलक्षिता रसनाधारा **सोमपीतये** सोमपानाय **उरूची** सती विस्तारं प्राप्नुवन्ती **दाशुषे** यजमानाय **जिगाति** गच्छति वहतीत्यर्थः ।

धेना वाङ्नामसु पठितम् । तथा सर्वत्र ऋक्षु सायणीयं व्याख्यानम् । धेना 'धारा' इति सर्वत्रास्माभिर्व्याख्यायते । अत्रेदं कारणं भवति । प्रायश ऋग्वेदे नद्यः धेनव इति क्वचिदुपमया क्वचिदभेदाध्यवसायेन वर्ण्यते। तत्र प्रीणनं पोषणं वा साधर्म्यं भवति । अत एव सायणः धेना प्रीणयित्री वाक् इति क्वचित् , प्रीणयित्री नदी इति क्वचित्, प्रीणयित्री योषिद् इत्यन्यत्र व्याचष्टे ।

यथा पयस्विन्यो धेनवः प्रीणयित्र्यो नद्यः भवन्ति, तथा धेनाऽपि प्रीणयित्री धारा भवति । वाचो धारारूपत्वं सायणव्याख्यायामप्यङ्गीकृतं भवति । 'एकं गर्भं दधिरे सप्त वाणीः' (३-१-६) 'सप्तवाणीः नद्यः' इत्याह । वाग्वाहिनी सरस्वती प्रथिता वेदे । 'सरस्वती देवतारूपेण नदीरूपेण च वर्तते, देवतारूपा स्तुता । अधुनाऽनया नदीरूपां स्तौति' इति 'इयं शुष्मेभिः' (६-६१-२) इति मन्त्रव्याख्यानारम्भे सरस्वत्या द्विरूपत्वकल्पनया सायणीयः क्लेशः स्पष्टो भवति । एवमेव तृतीयसूक्ते 'महो अर्णः' इति अन्तिमर्चो व्याख्यानेऽपि। तदिह वाक्पर्यायत्वेन निघण्टुपठितमपि धेनापदं धारात्वं न जहातीति बोध्यम् ।

'सम्यक्स्रवन्ति सरितो न धेनाः' (४.५८.६), 'व्यस्य धारा असृजद् वि धेनाः' (३. १.९) इत्यादिषु स्थलेषु विस्पष्टा भवेदस्मदुक्ता युक्तिः । तर्हि धेना धारेत्येवालं स्यात् , कुतो 'वागुपलक्षितरसनाधारा' इत्युक्तमिति चेत्, ब्रूमः । अस्यामृचि वायोः धारा सोमपानाय यजमानकृते वहतीत्युक्तम् । वाचा (वचनेन) पानस्यासम्भवात् लक्षणाश्रयणेन रसनामयत्वविशिष्टधारा प्रोक्ता । तस्माद्विवरणार्थोऽयं न केवलपदार्थः धेनापदस्य । प्रीणयित्री पोषयित्रीति वा केवलावयवार्थः । सा धारा चेत् सङ्कच्छते, धारकत्वात् । एवं हि उरूचीति विशेषणं उपपद्यते । सोमरसादानाय सङ्कोचं उज्झित्वा विपुला भवति धारा। प्रपृञ्चतीति धेनाविशेषणमप्युपपन्नम्। अभिषुते सोमे दातरि यजमाने च धारायाः सम्पर्कप्रकर्ष उक्तः । वायोः प्राणदेवस्य धारा यजमाने सर्वोत्कृष्टं स्पर्शं विदधती, अत एव स्वयं पूरयित्री यथेष्टं सोमाभिषवं ग्रहीतुं प्रभवति ।

अत्र बाह्यार्थपरा एवमाहुः--'हे यजमान ! त्वया दत्तं सोमं पास्यामि' इति वायुः ब्रूत इति। एवं 'धेना वाक्' इति मुख्यार्थपरिग्रहः सायणीयः । तदनुसारेण वाग्विशेषणद्वयं व्याख्यातम् । 'प्रपृञ्चती' वाक् सोमगुणवर्णनपरा किल । 'उरूची' वाक् तु बहून् यजमानान् वर्णयितुं गच्छतीति चाहुः । स्कन्दस्वामी तु धेनापदस्य मुख्यार्थबाधात् वाचा लक्षिता जिह्वेति अब्रुवन्नपि 'धेना' 'जिह्वा' इत्याह ।

अन्तरर्थपरेऽस्मिन् व्याख्याने त्विदं विचारयितव्यम् । कोऽसौ सोमः ? यस्याभिषुतस्य स्वीकाराय वायुः सम्प्रार्थितः स्वीयां धारां विवृतां कुर्वन् यजमानार्थं गच्छति । ऋतचिद्भुवः पवमानो रसापरपर्याय आनन्दो मनोमयं क्षेत्रं आविश्य प्रवहतीत्यवोचाम पूर्वम् । कथं तर्हि तादृशं सोमं यजमानः सुनुते, वायवेऽर्पयितुं वा प्रभवति? तथ्यमेव इदं यत् सोम ऊर्ध्वं

विश्वातीतसत्यचिदानन्दरसः स्वयंप्रकाशो मनोमयभुवमवतीर्य प्राधान्येन मनोमयधामाधिराजायेन्द्राय क्षरतीति । 'अपाम सोमं अमृता अभूम' 'रसो वै सः' 'को ह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यात्' इत्यादिवाक्यैः प्रतिपादितः सोम एव अध्यण्डमधिपिण्डं च बहुसोपानपदे विश्वसर्गे उपाध्यनुरोधेन प्राप्नोत्याविर्भावम् । तद्यथा दिव्यं सत्यं ज्योतिरिहापि तमसि पार्थिवे लोके सर्वत्र निलीनं सत् परिणामवशात् क्वचिद् व्यक्तं भवति, तथा सोमोऽपि सर्वत्र निगूढः पृथिव्यां पृथिवीरुहेषु इन्द्रियार्थेषु इन्द्रियार्थानुभूतिषु च सारांशभूतरसात्मकतयाऽवस्थितो भवति। स एष रसात्मा बहिः सोमलतया सङ्केतितो निष्पीड्य संस्कृतो देवेभ्यो दीयते। इन्द्रियार्थानुभवेषु यः सुखमयो रसो लसति तं निष्कृष्य तत्र स्वीयतां स्वार्थतां च सन्त्यज्य देवेभ्यः समर्पयति सोमयाजी देवभक्तोऽन्तर्यजने । अयं च रसोऽमृतं अन्नं भवति देवानाम् , येनामृतान्धसो यजमाने देवा अमृताः पुष्टिं लभन्ते । देवेभ्यः, अग्नये, वायवे, इन्द्राय वा 'स्वाहा इदं न मम' इति आहुतिवाच इदमेव तात्पर्यं बोध्यम् । सोमस्वरूपं समासेन प्रतिपादितम् ।

अथ सोमाभिषवसंस्काराहुतिनिर्वाहाय दिवमारुरुक्षोः भूस्थस्य यजमानस्य शारीरकनाडीचक्रं शुद्धं प्राणबलसमृद्धं स्यात् । तस्मात् प्रथमं वायोरनुग्रहोऽभ्यर्थनीयः। तत्रापि न केवलं प्राणदेवताया वायोरनुग्रहेण इन्द्रियानुभूतीनां परिष्कारः प्रसन्नता वा निष्पाद्यते मनोमयाधिदेवतायाः प्रसादमन्तरेण । अत एवेन्द्रं वायुं च प्रार्थयते द्वितीयेन तृचेन । शरीरे प्राणमनसोः साधुर्व्यापारो वाय्विन्द्राभ्यां निरुह्यत इति बोध्यम् । यद्यपि, ऋतचित्प्रकाशात्मनः सूर्यस्य उदयभूमिरिव स्वर्भूमिः शुद्धसत्त्वमनः- प्रधाना इन्द्रस्य विशिष्टं धाम भवति, तथाऽपि बहुभूमिकस्य मनसः स एव देवता । इन्द्रियात्मकस्यापि मनसः स एवेश्वरः । इन्द्रशब्दान्निष्पन्नं हि इन्द्रियपदम् । सर्वेन्द्रियाणां आद्यं गुप्तमिन्द्रियं मन इत्यपि शक्यं वदितुम् । 'मनः षष्ठानीन्द्रियाणि' इत्यपि स्मर्यते । 'इन्द्रियमिन्द्रलिङ्गं इन्द्रदृष्टं इन्द्रसृष्टं इन्द्रजुष्टं इन्द्रदत्तं इति वा' इति पाणिनिः (५.२.९३)। अत्र लिङ्गं दृष्टं इत्यादीनां विकल्प उक्तः, 'अत्र वाशब्दः प्रत्येकमभिसम्बध्यमानः विकल्पानां स्वातन्त्र्यं दर्शयति' इति वृत्तिकारोक्तं स्मरणीयम् । एवं सर्वेन्द्रियसार्वभौमस्येन्द्रस्य साहाय्यमन्तरेण वायुर्यथाभागं सोममादातुं न प्रभवेदित्यार्षोऽयं आशयः । मनोबलवर्जं प्राणवृत्तिर्न साध्वीति सर्वेषां अनुभवसिद्धम् । एवं हि, अत्र द्वितीयतृचस्य विनियोगे ऐन्द्रवायवग्रहे त्रयो भागा वायोरिन्द्रस्यैको भागः 'तुरीयभागिन्द्रोऽभवत् त्रिभाग्वायुः' (ऐ.ब्रा.अ.९,खं.१) इति ऐतरेयिणः समामनन्ति । वायोरिन्द्रः

सारथिरित्यप्युक्तं ब्राह्मणे 'नियुत्वा इन्द्रसारथिः' । एतेन इन्द्रानुग्राह्यमनोबलस्य नेतृत्वरूपं उपकारकत्वं शारीरकनाडीगतप्राणबलस्य सोमभागभूयस्त्वं च द्योतिते ।। ३ ।।

ऋक्संहिता पदपाठसहिता

**इन्द्र॑वायू इ॒मे सु॒ता उप॒ प्रयो॑भि॒रा ग॑तम् । इन्द॑वो वामु॒शन्ति॒ हि ।। ४ ।।**

इन्द्र॑वायू॒ इति॑ । इ॒मे । सु॒ताः । उप॑ । प्रयः॑ऽभिः । आ । ग॒त॒म् । इन्द॑वः । वा॒म् । उ॒शन्ति॑ । हि ।। ४ ।।

ऋग्भाष्यम्

**इन्द्रः स परमैश्वर्यादिदमुद्दिश्य च द्रुतेः ।**
**ददर्शेदं दीप्तिमत्त्वादिदं रातीति वा भवेत् ।**
**सोमाभिमानिनो देवा वामिच्छंति हि सोमगाः ।**
**प्रियैरुपागतं तेनोपेन्द्रः सङ्कर्षणो हरिः ।**
**द्विरूपत्वाद्बहुत्वं च विशेषादेव केवलम् ।**
**एकस्यैव हरेर्नात्र भेदः शङ्क्यः कथञ्चन ।**
**एकमेवाद्वितीयं तन्नेह नानास्ति किञ्चन ।**
**मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ।**
**यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति ।**
**एवं धर्मान्पृथक्पश्यंस्तानेवानु विधावति ।**
**उक्त्वा धर्मान्पृथक्त्वस्य निषेधादेवमेव हि ।**
**विशेषो ज्ञायते श्रुत्या भेदादन्यश्च साक्षितः ।। ४ ।।**

**ऋग्भाष्यटीका–** द्वितीयस्तृच ऐन्द्रवायवः । इन्द्रवायू इमे । अत्रेन्द्रशब्दं व्याख्याति – इन्द्र इति ।। इन्दतेः परमैश्वर्यार्थादौणादिको रप्रत्ययः । इदं विषयजातमुद्दिश्य द्रुतेर्द्रवणात्सर्वविषयोपभोगाच्चेन्द्रः । इदं शब्दोपपदाद्द्रुगतावित्यस्माड्डुः । उपपदस्य चेमित्यादेशः । इदं सर्वं ददर्शेति चेन्द्रः । पूर्ववत् दृशेर्डः । तथा च श्रुतिः । ''इदमदर्शम्'' इत्यादि । दीप्तिमत्त्वाच्चेन्द्रः । इन्धी दीप्तावित्यस्माद्रप्रत्ययः । धस्य च दः । ''इन्धो हवै नाम'' इत्यादि श्रुतिः । इदमभीष्टं राति ददातीति वा निर्वचनं भवेत् । रातेः कः । इदमश्चेन्दादेशः । हे इन्द्रवायू इमे

सुताः सोमाः सम्पादिताः सन्ति । ते च **इन्दवः** सोमाः सोमानामचेतनत्वाद् बहिः सोमगाः सोमाभिमानिनो देवाः । अध्यात्ममस्मन्मनोवृत्तयो हि । यस्माद् **वां** युवां **उशन्ति** इच्छन्ति युवयोरागमनं कामयन्ते । तेन कारणेन । **प्रयोभिः** प्रेयोभिः । ईयसुन ईकारस्याकारः । अतिशयेन प्रियैः सह **उपागतं** उपागच्छतम् । छान्दसः छत्वाभावः । अत्रेन्द्रवायुशब्दाभ्यां विवक्षितं भगवद्रूपद्वयमाह– **उपेन्द्र इति** । इन्द्रशब्देनोपेन्द्रो वायुशब्देन सङ्कर्षणो हरिरुच्यत इत्यर्थः ।

ननु परमेश्वरे द्विवचनं कथमित्यत आह– **द्विरूपत्वादिति** ।। नन्वेकस्यैव हरे-र्द्विरूपत्वं च कथम् । द्वित्वस्य भेदाविनाभूतत्वात्तत्राह– **बहुत्वं चेति** ।। चशब्देन द्वित्वम् । बहुत्वग्रहणमन्यत्र बहुवचनसम्पादनार्थम् । द्विवचनादिकं भेदेनैव सम्पाद्यतामित्यत आह– **नात्रेति** ।। कथञ्चन केवलोऽभेदसहितश्च । कुत इति चेत् श्रुतिविरोधादित्याह– **एकमेवेति** ।। अनेन विग्रहभेदोऽपि द्विवचनादिविषयो निरस्तः । भेदं विना विशेषमात्रेणैव द्विवचनादिकं घटत इत्ययुक्तम् । भेदादन्यस्य विशेषस्यैवाप्रमाणिकत्वादिति । तत्राह– **उक्त्वेति** ।। तं दुर्दर्शमित्यादिना काठके परमेश्वरस्यानेकान् धर्मानुक्त्वैकमेवाद्वितीयमित्येवं पुनः पृथक्त्वस्य निषेधात् भेदादन्यो विशेषो भगवति श्रुत्या ज्ञायते । अखण्डत्वे धर्मकथनानुपपत्तेः । भेदेच निषेधायोगात् । किं च घटादौ भेदादन्यो विशेषः साक्षितश्च ज्ञायत इति ।। ४ ।।

**मन्त्रार्थमञ्जरी–** अत्र वायुशब्दनिरुक्तिः प्राग्वत् । 'इदि परमैश्वर्ये' इत्यस्मादौणादिके रन्प्रत्यये 'इदितो नुम्धातोः' इति नुमागमे सति 'इन्द्र' इति वा । इदं विषयजातमुद्दिश्य द्रवति सर्वविषयाननुभुङ्क्ते इति 'इन्द्र' इति वा, इदम्शब्दोपपदात् 'द्रु गतौ' इति धातोर्डप्रत्यय उपपदेदम्शब्दस्येमादेशे च 'इन्द्र' इति सिद्धेः । इदं सर्वं पश्यतीति 'इन्द्र' इति वा, इदम्शब्दोपपदाद्दृशेः ड्रप्रत्यय उपपदेदम्शब्दस्येमादेशे सति 'इन्द्र' इति सिद्धेः 'इदमदर्शमिती३ तस्मादिदं द्रो नामेदंद्रो ह वै नाम तमिदंद्रं सन्तमिन्द्र इत्याचक्षते परोक्षेण' (२।४।३) इत्यैतरेय श्रुतेः । 'इन्धो ह वै नामैष योऽयं दक्षिणेऽक्षन्पुरुषस्तं वा एतमिन्धँ सन्तमिन्द्र इत्याचक्षते परोक्षेण– (६।२।२) इति काण्वश्रुतेर्दीप्तिमत्त्वात् 'इन्द्र' इति वा, 'ञिइन्धी दीप्तौ' इत्यतो रन्प्रत्यये धकारस्य च दकारे सति 'इन्द्र' इति सिद्धेः, इदमभीष्टं राति ददातीति वा 'इन्द्र' इति ध्येयम्, 'रा दाने' इत्यतः कप्रत्यये 'आतो लोप इटि च' इत्याकारलोप इदमश्चेन्दादेशे सति 'इन्द्र' इति सिद्धेः ।। (हे) इन्द्रवायू इमे । सुताः, सोमाः । (सम्पादिताः सन्ति) (ते

च) इन्दवः, सोमाः अभिमानिनयन्यायेन बाह्ययज्ञे– सोमाभिमानिनो देवाः, अध्यात्मम्– मनोवृत्त्यभिमानिनः । हि, यस्मात् । वाम्, युवाम् । उशन्ति, इच्छन्ति, 'वश कान्तौ' इति धातोर्युवयोरागमनं कामयन्ते । (तेन), कारणेन प्रयोभिः, प्रियतमैः सहेत्यर्थः, ईयसुन्प्रत्ययेकार-स्याकारश्छान्दसः, 'अतो गुणे' इति पररूपत्वम् । उप आ गतम्, उपागच्छतम्, 'व्यवहिताश्च' इत्युपसर्गान्वयः, गमेः 'इषुगमियमां छः' इति मकारस्य च्छादेशाभावश्छान्दसः, 'अनुदात्तोपदेश' इत्यनुनासिकलोपः । अत्रेन्द्रवायुशब्दाभ्यां प्रसिद्धेन्द्रवायू तदन्तर्गतावुपेन्द्रसंकर्षणौ च गृह्येते । भगवद्रूपयोर्भेदस्य 'ॐ न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॐ' इति युक्तिपादीयाष्टमाधिकरणे निषिद्धत्वेन भेदाविनाभूतद्वित्वस्यैकत्ववति भगवत्ययोगेन द्विवचनायोगेऽप्यधिष्ठानभूतयो-रिन्द्रवाय्वोर्द्वित्वाद्विवचनं युक्तम् ।

यद्वा– यथा पूर्वतन्त्रे नवमे 'मेधपतित्वं स्वामिदेवताख्यं समवायात्' इति तृतीयपादीय-द्वादशाधिकरणे– 'मेधपतये मेधम्, मेधपतिभ्यां मेधम्' इथ्यत्राग्नीषोमीय पशावध्रिगुप्रेषे मेधपति-शब्दार्थयोरग्नीषोमयोरेकवचननिर्वाहाय देवतात्वेनैकत्वम्, देवतात्वस्य व्यासज्यत्वात्, द्विवचन-निर्वाहाय तु देवतात्वाधिष्ठानत्वरूपेण द्वित्वम्' इति द्वित्वैकत्वयोः समुच्चय उक्तस्तथेहापि हरेः स्वरूपेणैकत्वं रूपविशेषेण द्वित्वमिति द्वित्वैकत्वयोः समुच्चयोऽस्तु । 'इन्द्रो॑ मा॒याभिः॑ पुरु॒रूप॑ ईयते' (ऋ.म.६।४७।१८) 'यदे॑कमव्य॑क्तमन॑न्तरूपम्' (य.वे.) 'एकं रूपं बहुधा यः करोति' (का.उ.२।२।१२) 'पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः' (गी.११।५) इत्यादि श्रुतिस्मृतिभिरेव समुच्चयावगतेः । 'ॐ गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॐ' (१।२।११) इति सूत्रकृतापि 'ऋतं पिबन्तौ' (का.उ.१।३।१) इति श्रुतिगतद्विवचनस्यात्मान्तरात्माख्य-रूपद्वयाभिप्रायेण निर्वाहोक्तेश्च । उक्तं हि तत्रानुव्याख्याने– 'द्वित्वं चैकस्य युज्यते' (१।२।११) इति । किं चैतरेये– 'अथ देवरथः' (२।३।६) इत्यादिना 'तदयं प्राणोऽधितिष्ठति' (२।३।८) इत्यन्तेन वाक्येनोक्ते 'ॐ प्राणस्तथानुगमात् ॐ' (१।१।२८) इति पादान्त्यप्राणनये विष्णुतया निर्णीतैकवचनान्तप्राणशब्दार्थस्य देहाख्यरथाधिष्ठातृत्वरूपेऽर्थे संमतित्वेन 'तदुक्तमृषिणा' (ऐ.२।३।८) इत्युपनिषदुदाहृतयोः 'आ तेन॑ यातं मन॑सो जवी॑य सा॒ रथं॒ यं वा॑मृभव॑श्चक्रुर॑श्विना ।। यस्य॒ योगे॑ दुहि॒ता जाय॑ते दिव उ॒भे अह॑नी सु॒दिने॑ वि॒वस्व॑तः' (ऋ.म.१०।३९।१२) 'निमि॒षश्चि॒ज्जवी॑यसा॒ रथे॒ना या॑तमश्विना ।। अन्ति॒ षद्भू॑तु वा॒मव॑ः' (ऋ.म.८।७३।२) इति

मन्त्रयोरेकस्यैव विष्णो रूपद्वयाभिप्रायेण द्विवचनान्तशब्दवाच्यत्वोक्तेश्च । भेदाभावेऽपि भेदकार्यनिर्वाहकेण भेदप्रतिनिधिस्वरूपसामर्थ्यशब्दितेन विशेषेण द्वित्वसङ्ख्योपपत्तेश्च । तदुक्तम्– विशेषाद्विवचनविषयाभ्यामुभाभ्याम्' (वा.स्तु.२६) इति । सोमवत्सोमभृत्यानामपि केषाञ्चित्सोम-रश्मिगततया च सोमभृत्यतया च सोमशब्दवाच्यानां सोमरसानां मनसां च देवतात्वात् 'इन्दवः' इति बहुवचनोपपत्तिः, 'सोमानां मनसां चैव देवताः सोमरश्मिगाः । सोमभृत्याः समस्तस्य सोम एवाधिपो हरिः' (ऋ.भा.) इति ।। ४ ।।

**स्कन्द–** 'तृच ऐन्द्रवायव' । ऐन्द्रवायवोऽपि तृच एव । हे इन्द्रवायू इमे **सुताः** अभिसुताः सोमाः । एतद् ज्ञात्वा **उप प्रयोभिः आ गतम्** उपेत्युपसर्ग आगतमित्याख्यातेन सम्बध्यते । प्रयश्शब्दो यातेर्धातोः । गन्तृवचनः । प्रकर्षेण गन्तृभिः अत्यन्तशीघ्रैरश्वैरुपागच्छतम् । अथवा प्रयश्शब्दोऽपठितोऽप्यन्ननाम । सहयोगलक्षणा चात्र तृतीया । इमे अभिषुताः सोमाः । न च केवलाः । किं तर्हि । सवनीयपुरोडाशादिभिरन्नैः सह । एतद् ज्ञात्वोपागच्छतमिति । अथवा उपागच्छतमित्येतदपेक्ष एव सहयोगः । अन्नैः सहोपागच्छतम् । मह्यं यानि दातव्यान्यन्नानि, तानि गृहीत्वोपागच्छतमित्यर्थः । कस्मात् । **इन्दवः वाम् उशन्ति हि** हिशब्दो यस्मादर्थे । यस्मादिन्दव एते सोमा वां युवाम् उशन्ति कामयन्ते वयमिन्द्रवायुभ्यां पीयेमहि इत्येवम् । तस्मादुपागच्छतमिति ।। ४ ।।

**वेङ्कटमाधव– इन्द्रवायू !** इमे सोमा सुताः अस्माकं प्रदित्सितैरन्नैः सह उपागच्छतम् । एते सोमा वाम् कामयन्ते हि ।। ४ ।।

**मुद्गल– हे इन्द्रवायू!** भवदर्थम् इमे सोमाः **सुताः** अभिषुताः । तस्माद्युवां **प्रयोभिः** अन्नैः अस्मभ्यं दातव्यैस्सह **उप आगतम्** अस्मत्समीपं प्रत्यागच्छतम् । हि यस्मात् **इन्दवः** सोमा **वां** युवाम् **उशन्ति** कामयन्ते । तस्मादागमनमुचितम् ।। ४ ।।

**सायण–** एतस्या ऋच ऐन्द्रवायवग्रहे द्वितीयपुरोनुवाक्यारूपेण विशेषविनियोगः पूर्वमेवोक्तः । हे **इन्द्रवायू** भवदर्थम् **इमे** सोमाः **सुताः** अभिषुताः । तस्मात् युवां **प्रयोभिः** अन्नैः अस्मभ्यं दातव्यैः सह **उप आ गतम्,** अस्मत्समीपं प्रति आगच्छतम् । **हि** यस्मात् **इन्दवः** सोमाः **वां** युवाम् **उशन्ति** कामयन्ते तस्मात् आगमनमुचितम् ।

इन्द्रवायूशब्दस्यामन्त्रिताद्युदात्तत्वम् । प्रीणयन्ति भोक्तॄनिति प्रयांस्यन्नानि । प्रीञ्धातोरन्तर्भावितण्यर्थात् (पा.सू.३,१,२६) असुन्प्रत्यये सति नित्स्वरः । गमिधातोर्लोण्मध्यमपुरुषद्विवचने 'बहुलं छन्दसि' (पा.सू.२,४,७३) इति शपो लुकि सति 'अनुदात्तोपदेश:' (पा.सू.६,४,३७) इत्यादिना मकारलोपः । ततो गतमिति भवति । 'उन्दी क्लेदने' इति धातोः 'उन्देरिच्चादेः' (उ.सू.१,१२) इति उन्प्रत्ययः । आद्यक्षरस्य इकारादेशः । तत इन्दुशब्दस्य नित्स्वरः । सोमरसस्य द्रवत्वात् क्लेदनं सम्भवति । युष्मच्छब्दादेशस्य वामित्येतस्य 'अनुदात्तं सर्वमपादादौ' (पा.सू.८,१,१८) इत्यनुदात्तः । उशन्तीत्यस्य निघाते 'हि च' (पा.सू.८,१,३४) इति सूत्रेण प्रतिषिद्धे सति प्रत्ययस्वरः । हिशब्दस्य निपातस्वरः ।। ४ ।।

**सिद्धाञ्जनम्–** **हे इन्द्रवायू ! इमे** सोमाः **सुताः** अभिषुताः । **प्रयोभिः** प्रीणयितृभिः (वस्तुभिः सह) **उपागतम्** उपागच्छतम् । **हि** यस्माद् **इन्दवः** क्लेदनकरा (सुखप्रदाः सोमाः) **वां** युवां इन्द्रं वायुं च **उशन्ति** कामयन्ते ।

'प्रयोभिः अन्नैः अस्मभ्यं दातव्यैः सह' इति सायणः । प्रयः प्रीणयितृ प्रीञ्धातोर्निष्पन्नत्वात् । यत् प्रीणयति यजमानं तत् प्रयः । अत एव इन्द्रवायुगतानि यानि कानि वा भवन्तु 'प्रयांसि' प्रीणयितॄणि वस्तूनि वैभवानि वा, तैः सह उपागच्छतम् इति अस्माभिर्व्याख्यातम् ।

## ऋक्संहिता पदपाठसहिता

**वायविन्द्रश्च चेतथः सुतानां वाजिनीवसू । तावायातमुपद्रवत् ।। ५ ।।**

वायो इति । इन्द्रः । च । चेतथः । सुतानाम् । वाजिनीवसू इति वाजिनीऽवसू ।। तौ । आ । यातम् । उप । द्रवत् ।। ५ ।।

## ऋग्भाष्यम्

**विजानतः सुतानन्नपतौ सूर्ये सदा स्थितौ ।**
**द्रवद्द्रुतं सुतात्पर्ययोतकोऽभ्यास इष्यते ।। ५ ।।**

**ऋग्भाष्यटीका–** वायविंद्रश्च चेतथः । विजानतः । हेवायो वाजमन्नं तदेव वाजि तृतीयोऽतिशय इत्युक्तत्वात् । तन्नयतीति **वाजिनीः** सूर्यः । सहि वर्षणादिनाऽन्नं प्रवर्तयति । ''सत्सूद्विषे''त्यादिना क्विप् । तत्र वसत इति **वाजिनीवसूः** । वसतेरुः । अन्नपतौ सूर्ये सदा

स्थितौ । इन्द्रः चशब्दात्त्वं च । **सुतानां** सुतान् । **चेतथः** चितीसंज्ञाने विजानतः विजानीथः । द्विविकरणतावर्णव्यत्ययश्चछान्दसः । अस्मत्स्वीकारयोग्या भवन्तीमे सोमा इति युवां विजानीथः । अतः कारणात् **द्रवत्** द्रुतम् । क्षिप्रनामसु पाठात् । **तौ** युवां उपायातम् । यद्वा **चेतथः** चेततो विजानतो युष्मत् ज्ञानिनो यजमानस्य सुतानुपायातमिति योज्यम् । वायवायाहि उपप्रयोभिरागतं तावायातमिति पुनरुक्तिरित्यत आह– **सुतात्पर्येति** ।। ५,३ ।।

**मन्त्रार्थमञ्जरी–** (हे) वायो । वाजिनीवसू, वाजमन्नम् तदेव वाजि, 'तृतीयोऽतिशये' (म.व्या.सू.) इत्युक्तेरकारस्येकारः, वाजि नयतीति वाजिनीः सूर्यः, 'सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप्' इति क्विप् । स हि वर्षादिनान्नं प्रवर्तयति, तत्र वसति इति वाजिनीवसू, वसतेः उः, अन्नपतौ सूर्ये सदा स्थितौ । इन्द्रः । चकारात् (त्वं च) सुतानाम्, सुतान्सोमान्मनोवृत्तीर्वा, 'व्यत्ययो बहुलम्' इत्युक्तेः । चेतथः, 'चिती संज्ञाने' विजानीथः, अस्मात्स्वीकरणयोग्याः सोमा इति विजानीथ इति यावत् ।। अतः, द्रवत्, द्रुतम् । तौ (युवाम्) उप आ यातम्, उपागच्छतम् । 'वायवा याहि' 'उप प्रयोभिरा गतम्' 'तावा यातम्' इति पुनः पुनरुक्तिस्तात्पर्यज्ञापनार्था ।। ५ ।।

**स्कन्द–** 'तावायातमिति तच्छब्दाद् यच्छब्दोऽप्राध्याहर्तव्यः । यौ हे **वायो इन्द्रः च ।** चशब्दात् त्वं च । चेतथः जानीथः । किम् । सुतानाम् द्वितीयार्थे षष्ठी । अथवा षष्ठीश्रुतिसामर्थ्यादिव वा शेषमिति वाक्यशेषः । सुतान् सोमान्, सुतानां सोमानां वा शेषः स्वांशम् । **वाजिनीवसू** वाजिनीत्येतदिहासम्भवान्नोषोनाम । किं तर्हि । यौगिकम् । वाजो हविर्लक्षणमन्नम्, तद् यस्या अस्ति सा वाजिनी यागसन्ततिः तद्वन्तौ । हविष्मद्यागसन्ततिधनावित्यर्थः । अथवा वाजो वेगो बलं वा तद्वती **वाजिनी** सेना, तद्वनौ वेगबलयोरन्यतरेण युक्तया सेनयोपेतावित्यर्थः । **तौ आयातम् उप** इत्युपसर्ग पुरस्तादाख्यातस्य सम्बन्धयितव्यः । उपागच्छतम् । द्रवत् क्षिप्रम् । 'मक्षु, द्रवत्' (निघ.२,१५) इति हि क्षिप्रनामसु पठितम् ।। ५ ।।

**वेङ्कटमाधव– वायो!** त्वम् अयश्च इन्द्रो दूरस्थावेव सुतान् सोमान् जानीथः । तौ क्षिप्रम् उपागच्छतम् । अन्नेन वासयितारौ **वाजिनीवसू** इति ।

सुतसोमपरिज्ञानं तदागमनकारणम् ।
नचोदात्तमिहाख्यातं वक्ष्यते तत्र कारणम् ।।
ऋचामभिहितार्थानां यथा पश्चात् समन्वयः ।
हेतुत्वहेतुमद्भावौ तथैवात्रापि सङ्गतौ ।। इति ।। ५ ।।

**मुद्गल–** चकारेणान्यः समुच्चीयते । सन्निहितत्वाद्वायुरेव । हे **वायो!** त्वम् **इन्द्रश्च** युवामुभौ **सुतानाम्** अभिषुतान् सोमान् **चेतथः** जानीथः । कीदृशौ युवाम् । **वाजिनीवसू** वाजोऽन्नं तद्यस्यां हविस्सन्ततावस्ति सा वाजिनी । तस्यां वसत इति वाजिनोवसू । **तौ** तथाविधौ युवां **द्रवत्** क्षिप्रम् **उप** समीपे **आयातम्** आगच्छतम् ।। ५ ।।

**सायण–** अत्र चकारेणान्यः समुच्चीयते । संनिहितत्वाद्वायुरेव । हे **वायो** त्वम् **इन्द्रश्च** युवामुभौ **सुतानाम्** अभिषुतान् सोमान् **चेतथः** जानीथः । यद्वा । अभिषुतानां सोमानां विशेषमित्यध्याहारः । कीदृशौ युवाम् । **वाजिनीवसू** वाजिनीशब्दो यद्यप्युषोनामसु पठितस्तथाप्यत्रासम्भवान्न गृह्यते । वाजोऽन्नम् । तद्यस्यां हविः सन्ततावस्ति सा वाजिनी । तस्यां वसत इति तौ वाजिनीवसू । आमन्त्रितत्वादनुदात्तः । **तौ** तथाविधौ युवां **द्रवत्** क्षिप्रम् **उप** समीपे **आयातम्** आगच्छतम् । षड्विंशतिसङ्ख्याकेषु क्षिप्रनामसु 'नु क्षिप्रं मक्षु द्रवत्' (नि.२,१५,३) इति पठितम् । तत्र फिट्स्वरः ।। ५ ।।

**सिद्धाञ्जनम्– हे वायो** त्वं इन्द्रश्च उभावपि **सुतानां** अभिषुतान् सोमान् (द्वितीयार्थे षष्ठी) **चेतथः** जानीथः । **वाजिनीवसू** सत्त्वसमृद्धिसम्पन्नौ **तौ** युवां द्रवत् क्षिप्रं **उपायातम्** उपागच्छतम् ।

वाजिनीवसूवाजिनी यागक्रियासन्ततिः तत्र वसतः इन्द्र-वायू इति कर्मठव्याख्यानम् । अन्नं, बलं, युद्धं, वेगः इति बहुधा वाजपदार्थः कथ्यते सायणेन । अत्र वाजोऽन्नं, तद् अस्यां हविस्सन्ततावस्ति इति वाजिनी, तत्र वसत इत्युक्तम् । अस्मदीयो वाजपदार्थस्तु सर्वत्र एकरूपः, समृद्धिः पूर्णता वा यत्र बलस्य अन्नादेर्वा अन्तर्भावेऽङ्गीकारक्षमेऽपि सङ्केतरूपत्वं ग्राह्यम् । वसुपदं धनवाचकं सर्वत्र तत्त्वं द्रव्यं इति गृह्यतेऽस्माभिः। वाजस्येव वसोरपि नैकोऽर्थः सायणीयः ।। ५ ।।

।। इति प्रथमाष्टके प्रथमाध्याये तृतीयो वर्गः ।।

## ।। अथ चतुर्थो वर्गः ।।

### ऋक्संहिता पदपाठसहिता

**वायविन्द्रश्च सुन्वत आयातमुपनिष्कृतम् । मक्ष्वि१त्था धिया नरा ।। ६ ।।**
वायो इति इन्द्रः । च । सुन्वतः । आ । यातम् । उप । निःऽकृतम् । मक्षु । इत्था । धिया । नरा ।। ६ ।।

### ऋग्भाष्यम्

**यजन्सुन्वन्कृतस्यानुसारिकर्मैव निष्कृतम् ।**
**तदर्थं क्षिप्रमायातं धियेत्थं भूतयाऽचलौ ।**
**नरौ तावविनाशित्वादुपचारः क्वचिद्भवेत् ।**
**अमरत्ववद्यतो मोक्षो देवतानां सुनिश्चितः ।। ६ ।।**

**ऋग्भाष्यटीका–** वायविन्द्रश्च सुन्वतः । सुन्वत इति व्याख्याति– **यजन्निति ।।** यजन्यजमानः सुन्वन्नित्युच्यते । ऋत्विग्भिः क्रियमाणस्यापि सवनस्य यजमानार्थत्वात् । सुन्वानिति क्वचित्पाठः । तत्र दीर्घश्छान्दसः । निष्कृतशब्दार्थमाह– **कृतस्येति ।।** यद्वै निष्कृतं तत्संस्कृतमाहेति श्रुतावप्ययमेवार्थः । कृतप्रतीकारेऽस्य शब्दस्य रूढत्वादित्येवार्थः । विभक्त्यर्थमाह– **तदर्थमिति ।। हेवायो । नरा** नरौ । सुपांसुलुगित्यादिना प्रथमाद्विवचन-स्यात् । युवामिन्द्रश्च त्वं च । **सुन्वतः** यजतः । **निष्कृतं** तत्कृतपूजानुसारिफलदानं प्रति तदर्थं तत्कर्तुम् । **इत्था** इत्थंभूतया ददान्येवास्मै फलमित्येवंभूतया धिया । **मक्षु** क्षिप्रं तन्नामसु पाठात् । उपायातम् । नरौ तावित्यनूद्याचलाविति व्याख्यातम् । निर्विकारौ । लापरिवर्तने । ततो नपूर्वात्कः । अविनाशित्वादित्यर्थान्तरम् । रीङ्क्षये रिषहिंसायां ततो डः । किमेवं नरशब्दव्याख्यानं सर्वत्र? नेत्याह– **उपचार इति ।।** क्वचित्प्रसिद्धे वायाविन्द्रेच । उपचारो गौणी वृत्तिः । विष्णावेव च मुख्यता । अमरत्ववत् । नहि देवानां मुख्यतो मरणाभावः । उपचारे बीजमाह– **यत इति ।।** मोक्षे चाविनाशित्वं नियतमिति सर्वदाप्युपचर्यत इत्यर्थः ।। ६ ।।

**मन्त्रार्थमञ्जरी–** (हे) वायो । नरा, नरौ, 'सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः' इति सूत्रेण द्विवचनस्य 'आ' इत्ययमादेशः, 'ला परिवर्तने', नञ्पूर्वात्कप्रत्यये रलयोरभेदात् 'नर'

इति रूपसिद्धेर्निर्विकारावित्यर्थः, अविनाशिनौ वा, 'रीङ् क्षये' इत्यतो वा 'रिष हिंसायाम्' इत्यतो वा नञ्पूर्वाड्डुः (उभयत्र) नलोपाभावश्छान्दसः, नसमासो वा । (युवाम्) । इन्द्रः । चकारात् (त्वं च) । सुन्वतः, यजतः । निष्कृतम्, तत्कृतपूजानुसारिफलदानं प्रति, तत्कर्तुमिति यावत् । इत्था, इत्थंभूतया, 'ददाम्येवास्मै फलम्' इत्येवम्भूतया । धिया । मक्षु, क्षिप्रम् संहितादैर्ध्यमतिशयार्थम् । उप आ यातम्, उपागच्छतम् । अत्र नरपदोक्ताविकाराविनाशित्वे–विष्णुरूपयोरुपेन्द्रसङ्कर्षणयोः 'ॐ असम्भवस्तु सतोऽनुपपत्तेः ॐ' (२।३।९) 'ॐ नात्माश्रुते-र्नित्यत्वाच्च ताभ्यः ॐ' (२।३।१७) इति नयद्वयसिद्धतया मुख्ये । प्रसिद्धवाय्विन्द्रयोस्तु गौणे, मुक्तावविनाशित्वादेर्निश्चितत्वात्प्रागपि तथोपचर्येते, मुख्याविनाशित्वादित्वे तु 'ॐ तदुपर्यपि' (१।३।२६) इत्यादि देवताधिकरणविरोधः, तत्र देवानां स्वस्वपदविशिष्टानामाद्यन्तवत्त्वोक्तेरिति ज्ञेयम् ।। ६ ।। **इति द्वितीय ऐन्द्रवायवस्तृचः ।। २ ।।**

**स्कन्द– 'हे वायो! इन्द्रः च** चशब्दात् त्वं च । **सुन्वतः** सोममभिषुण्वतः यजमानस्य स्वभूतम् **आ यातं** उप उपागच्छतम् । **निष्कृतं** निरित्येषः समित्येतस्य स्थाने । संस्कृतं वेद्याख्यं प्रदेशम् । **मक्षु** क्षिप्रम् । इत्थाशब्दोऽमुत इत्यस्यार्थे । अमुतोऽन्तरिक्षात् स्वस्मात् स्थानात् । 'धीः' (निघ.२,१) इति कर्मनाम । हेतौ च तृतीया । प्रयोजनस्य च हेतुत्वेन विवक्षा । कर्मणा हेतुना । अस्मदीययागकर्म परिसमापयितुमित्यर्थः । नहि युवयोरनागतयोरेतत् परिसमाप्यते । अथवा 'इत्था' (निघ.३,१०) इति सत्यनाम धियश्च विशेषणम् । सत्येन भवतोरविसंवादिना सर्वदैव युष्मत्सम्बद्धेन कर्मणा हेतुनाऽस्मदीययागकर्म परिसमापयितुमित्यर्थः । **हे नरा!** मनुष्यनामैतत् । देवानां च मनुष्यत्वासम्भवात् सर्वत्र तदाकारत्वान्मनुष्यनामभिर्व्यपदेशः । मनुष्याकारौ । यथा मनुष्यो हस्ताद्युपेतशरीरः, तद्वद्हस्ताद्युपेतशरीरावित्यर्थः ।। ६ ।।

**वेङ्कटमाधव–** वायो! इन्द्रः च सुन्वतः संस्कृतं सोमम् उपागच्छतं शीघ्रम् । इत्थं क्रियमाणं कर्मोद्दिश्य नेतारौ ।। ६ ।।

**मुद्गल– हे वायो!** त्वम् **इन्द्रश्च सुन्वतः** सोमाभिषवं कुर्वतो यजमानस्य **निष्कृतं** संस्कर्तारं सोमं **उपायातं** आगच्छतम् । **हे नरा!** नरौ । पौरुषेण सामर्थ्येनोपेतौ । युवयोरागतयोश्च सतोः **धिया** अमुना कर्मणा **मक्षु** त्वरया संस्काराः सम्पत्स्यन्ते । **इत्था** सत्यम् ।। ६ ।।

**सायण– हे वायो** त्वम् **इन्द्रश्च सुन्वतः** सोमाभिषवं कुर्वतो यजमानस्य **निष्कृतं** संस्कृतं संस्कर्तारं वा सोमं **उप आ यातं** आगच्छतम् । **नरा** हे नरौ पुरुषौ पौरुषेण सामर्थ्येनोपेतौ युवयोरागतयोश्च सतोः **धिया** अमुना कर्मणा **मक्षु** त्वरया संस्कारः सम्पत्स्यते । **इत्था** सत्यम् ।

वायो इत्यस्य 'आमन्त्रितस्य' (पा.सू.६,१,१९८) इति षाष्ठिकमाद्युदात्तत्वम् । इन्द्रशब्दः 'ऋज्रेन्द्रा' (उ.सू.२,१८६) इत्यादिना रन्प्रत्ययान्तत्वेन निपातितो 'ञ्नित्यादिर्नित्यम्' (पा.सू. ६,१,१९७) इत्याद्युदात्तः । चशब्दः 'चादयोऽनुदात्ताः' (फि.सू.८४) इत्यनुदात्तः । सुन्वत इत्यत्र 'शतुरनुमो नद्यजादी' (पा.सू.६,१,१७३) इति विभक्तेरुदात्तत्वम् । 'निरित्येष समित्येतस्य स्थाने' (निरु.१२,७) इति । यास्कः । कृतशब्द आदिकर्मणि कर्तरि क्तः (पा.सू.३,४,७१) । संस्कर्तुं प्रवृत्त इत्यर्थः । 'कुगतिप्रादयः' (पा.सू.२,२,१८) इति समासेऽ-व्ययपूर्वपदप्रकृतिस्वरत्वे प्राप्ते 'थाथघञ्क्ताजबित्रकाणाम्' (पा.सू.६,२,१४४) इत्यन्तोदात्तः । 'गतिरनन्तरः' (पा.सू.६,२,४९) इति तु निसः उदात्तत्वं न भवति । तद्धि कर्मणि क्ते विहितम् (पा.सू.६,२,४८) । निष्करोतीति निष्कृदिति क्विबन्तव्याख्याने तु, 'गतिकारकोपपदात्कृत्' (पा.सू.६,२,१३९) इति ऋकार उदात्तः स्यात् । धिया । 'सावेकाचस्तृतीयादिः' (पा.सू. ६,१,१६८) इति विभक्तिरुदात्ता । नरा । 'सुपां सुलुक्' (पा.सू.७,१,३९) इत्यादिना सम्बोधनद्विवचनस्य डादेशः । पदात्परत्वात् 'आमन्त्रितस्य' (पा.सू.८,१,१९) इत्याष्टमिको निघातः ॥ ६ ॥

**सिद्धाञ्जनम्– वायो इन्द्रश्च** उभौ युवां **सुन्वतः** सोमाभिषवं कुर्वतः यजमानस्य **निष्कृतं** निश्शेषेण साधितं (युष्मदर्थं देयं वस्तु उद्दिश्य) **मक्षु** शीघ्रं **इत्था** इत्थं (अस्मद्दानपरिग्रहक्षमया सिद्धया) सत्यया वा **धिया** बुद्ध्या (धारणात्मिकया प्रज्ञया) युक्तौ **उपायातम्** उपागच्छतम् । **नरा** नरौ नेतारौ हे देवौ इति सम्बोधनम् ।

इत्था–इत्थं सत्यमिति वा यथासम्भवं अर्थो ग्राह्यः । उभयथाऽपि वेदे प्रयोगदर्शनात् । निष्कृतंसंस्कृतं सोमं इत्याह सायणः । वेद्याख्यप्रदेशमिति स्कन्दस्वामी । निश्शेषेण सम्पादितं किमपि सोमाभिषवफलितमिति वयम् । इदं चास्य तृचस्य तात्पर्यपर्यालोचनया स्पष्टं भवेदिति ब्रूमः समासत इन्द्रवायुप्रसादवैभवम् ।

प्रथमं सोमाः सुताः इन्द्रं वायुं च कामयन्ते, तस्मात्, तत प्रवहन्तं सोमरसं चेततोः तयोरागतयोः वाय्विन्द्रयोः क्षिप्रं तल्लाभः प्रार्थितः। प्राणमनसोरधीश्वरौ हि वाय्विन्द्रौ । अनेन सोमपदवाच्यामृतानन्दरसः ऊर्ध्वदेशात्प्रवहन् प्राणबलपूरिते नाडीचक्रे सत्त्वसमृद्धे मनसि च लब्धान्तरो भवतीत्युक्तम् । अत एव समृद्धिसम्पदं द्योतयितुं वाजिनीवसू इत्युक्तम् । अथ तस्मिन् रसे प्राणमनसोः पवमाने सति कोऽपि अपूर्वो व्यापारः फलितो भवति, यस्मात् मर्त्ये अमृतचिद्विलासः प्रारभते । इदं च फलितं कर्म निश्शेषेण सम्पादितं 'निष्कृतम्' इत्युक्तम् । अस्य कर्मणः सम्पूरणे वाय्विन्द्राभ्यां भागहराभ्यां भाव्यम् । तस्मात् तन्निर्वर्तनार्थया सिद्धया धिया युक्तौ उभावपि आगमनार्थं प्रार्थितौ । धीः बुद्धिरिति सामान्येनावोचाम । वस्तुतस्तु तस्याः स्थानं इन्द्रियात्मनो युक्तायुक्तविचारशीलस्य वा मनस ऊर्ध्वं 'ऋतचितः' अधस्ताच्च, एवमुभयो-र्मध्यमिति बोध्यम् । अत्रैव प्रथमं धीपदं प्रयुक्तम् । अस्य प्रयोजनं तृतीयतृचार्थविचारे विशदं स्यात् ॥ ६ ॥

## ऋक्संहिता पदपाठसहिता

**मित्रं हुवे पूतदक्षं वरुणं च रिशादसम् । धियं घृताचीं साधन्ता ॥ ७ ॥**

मित्रम् । हुवे । पूतऽदक्षम् । वरुणम् । च । रिशादसम् । धियम् । घृताचीम् । साधन्ता ॥

## ऋग्भाष्यम्

**मित्वा त्रातीति मित्रोऽयं मितमह्रा करोति वा ।**
**मितं रातीति वा नित्यं मितं रमयतीति वा ।**
**आवृणोतीति वरुणस्तमसाऽज्ञानतोऽपि वा ।**
**वरमुन्नयतीत्यस्माद्वरानंदत्वतोऽपि वा ।**
**पूता दक्षा अनेनेति पूतदक्ष इतीरितः ।**
**तमाह्वयामि सुखिनं शमदन् रमते यतः ।**
**अनूनसुखभोक्तृत्वाद्रिशादा इति कीर्तितः ।**
**हरिर्घृतः सुशुद्धत्वाद्धृताचीच तदश्चनात् ।**
**स्वधीतिसाधको विष्णुर्भक्तानां च यथार्थतः ॥ ७ ॥**

**ऋग्भाष्यटीका–** तृतीयस्तृचो मैत्रावरुणः । मित्रं हुवे । मित्रावरुणशब्दौ निर्वक्ति–

**मित्वेति** । मित्वा रक्षणीयं ज्ञात्वा । त्रातीति प्रकृत्यन्तरस्येदं रूपम् । मात्रा इत्येताभ्यां क(अकार)प्रत्ययः । आद्यस्य चेकारः । माति त्राति चेति मित्रः । तस्य तात्पर्यं मित्वा त्रातीति । अयं विष्णुः । अह्ना निमित्तेन वस्तुजातं मितं ज्ञातं करोतीति मित्रस्तदन्तर्गतो हरिश्च । मितशब्दोपपदाद्रातेः करोत्यर्थादकार उपपदलोपश्च । मितं परिमितं यथा योग्यमेव राति ददाति । रमयतीत्यनेन रमेरन्तर्णीतण्यर्थात् ''ञमंताड्डः'' इति डप्रत्यय उक्तो भवति । तमसा बहिः अज्ञानतोऽध्यात्मम् । ''कृवृतृदारिभ्य उनन्''इति वृणोतेरुन(त्)न् । वरमुत्तमं जीवमुन्नयति ऊर्ध्वं नयति । वरशब्दोपपदादुत्पूर्वान्नयतेर्डः । उपपदोपसर्गयोर्लोपश्च । वरानन्दत्वतः ''णोहि निर्वृतिवाचक'' इति वचनात् णशब्द आनन्दवाची । वरो णो यस्यासौ वरुणः । पूर्वपदस्योकारः । दक्षा यजमानाः । पूर्वार्धं योजयति– **तमिति** ।। **हुवे** आह्वयामि । बहुलं छन्दसीति ह्वयतेः सम्प्रसारणम् । शपो लुक्च । रिशादसमित्येतत्सुखिनमिति व्याख्यातं तत्कथमित्यवयवार्थमाह– **शमिति** ।। तस्मादिति शेषः । ननु रमणमपि सुखम् अतः पुनरुक्तिरित्यतोऽभिप्रायमाह– **अनूनेति** ।। रमेर्भावे डिः । रिशमनूनसुखमत्त्यनुभवतीति रिशादा इत्यर्थः । अदेरौणादिकोऽसुन्-प्रत्ययः । घृक्षरणदीप्त्योरित्यस्माच्छुध्यर्थात्कर्तरि क्तः । तदञ्चनात् तं प्रति गमनात् विषयीकरणात् । उत्तरार्धं योजयति– **स्वेति** ।। स्वविषया धीतिर्ध्यानं स्वधीतिः । यथार्थत्वं स्वधीतेर्विशेषणम् । यद्वा शोभनाऽधीतिरधिगतिः स्वधीतिः । शोभनत्वस्य विवरणं यथार्थत इति । भक्तानामित्यादि शेषकथनम् । **साधंता** साधयन्तौ ।। ७ ।।

**मन्त्रार्थमञ्जरी–** मातिजानाति त्रायते चेति मित्रः, रक्षणीयं ज्ञात्वा रक्षतीत्यर्थः, 'मा माने' 'त्रैङ् पालने' इत्याभ्यां कः, पूर्वस्याकारस्येकारः । वर उत्कृष्टो ण आनन्दो यस्यासौ वरणः, स एव वरुणः, 'णो हि निर्वृतिवाचकः' (ऋ०भा.) इत्युक्तेर्णशब्दः सुखवाची, वरशब्दाकारस्योकारो निरुक्तत्वात् । पूतदक्षम्, पूताः पवित्रा दक्षा यजमाना अनेनेति पूतदक्षस्तम् । रिशादसम्, रमः भावे डिप्रत्यये 'रि' इति रूपम्, रि च तच्छं च रिशम्, सुखसुखम्, अतिशयितसुखमिति यावत्, रिशमत्त्यनुभवतीत्यदेः औणादिकोऽसुन्प्रत्ययः, रिशादास्तं रिशादसम्, अतिशयितसुख-भोक्तारम् । मित्रम्, मित्रदेवतां तदन्तर्गतं हरिं च । वरुणम् च, वरुणदेवतां तदन्तर्यामिणं हरिं च । हुवे, ह्वयामि, ह्वयतेः शपो लुक् सम्प्रसारणं च छान्दसम्, तेन वकारस्योकारे 'सम्प्रसारणाच्च' इति पूर्वरूपे 'अचि श्नुधातु' इत्युवङादेशे रूपम् ।। घृताचीम्, 'घृ क्षरणदीप्त्योः'

इत्यतः कर्तरि क्तः, घृतो विष्णुः, तमश्वतीति घृताची, तां विष्णुविषयिणीम् । धियम् । साधन्ता, साधन्तौ, 'सुपां सुलुक्' इत्यादिना द्विवचनस्य 'आ' इत्यादेशः, अन्तर्णीतणिच्, साधयन्तौ । (युवाम्) यतोऽतो ह्वयामीत्यर्थः ।। ७ ।।

**स्कन्द–** 'मैत्रावरुणः' । मित्रावरुणदेवतोऽपि तृच एव । **मित्रम् हुवे** आह्वयाम्यहम् । कीदृशम् । **पूतदक्षं** 'दक्षः' (निघ. २,९) इति सकारान्तं बलनामसु पठितम् । अकारान्तमपि तु तस्यैव पर्यायान्तरं द्रष्टव्यम् । पूतं शुद्धं अपगतदोषं बलं यस्य स पूतदक्षः । तं पूतदक्षम् । न च केवलं मित्रम् । किं तर्हि । **वरुणं च** कीदृशम् । **रिशादसं** रिशिर्हिंसार्थः । असु क्षेपणे । रिशतोऽस्यतीति रिशादसः । रिशदास इति प्राते छान्दसो ह्रस्वदीर्घव्यत्ययः । तं रिशादसम् । हिंसकान् क्षेप्तारम् । प्रतिहिंसितारमित्यर्थः । एवमर्धर्चो विभक्तस्तुतिः । परस्तु सहस्तुतिः । **धियं** वृष्ट्याख्यं कर्म धीः, ताम् । **घृताचीं** 'घृतम्' (निघ १,९०) इत्युदकनाम । अश्वतिर्गत्यर्थः । सामर्थ्याच्चात्रान्तर्णीतण्यर्थः । उदकं पृथिवीं प्रति या गमयति, सा घृताची, ताम् । **साधन्ता** साधयन्तौ । वृष्टिं कुर्वन्तावित्यर्थः ।। ७ ।।

**वेङ्कटमाधव–** **मित्रं** ह्वयामि शुद्धबलं वरुणं च रिशतां हिंसितॄणां क्षेप्तारं उदकाभिमुखं कर्म साधयन्तौ वृष्टेरीश्वरौ । 'अहोरात्रे वै मित्रावरुणावहोरात्राभ्यां खलु वै पर्जन्यो वर्षति' (तैसं २,४,१०,१) इति ब्राह्मणम् ।। ७ ।।

**मुद्गल–** अहमस्मिन् कर्मणि हविष्यदानाय **पूतदक्षं** पवित्रबलं **मित्रं हुवे** । तथा **रिशादसं** रिशानां हिंसकानामदसमत्तारं **वरुणं च हुवे** आह्वयामि । कीदृशौ मित्रावरुणौ । घृतमुदकमश्वति भूमिं प्रापयति या धीः वर्षणकर्म,तां **घृताचीं धियं साधन्ता** साधयन्तौ कुर्वन्तौ ।। ७ ।।

**सायण–** 'मित्रं हुवे' इति मैत्रावरुणस्तृचो गवामयने आरम्भणीये चतुर्विंशेऽहनि प्रातःसवने मैत्रावरुणस्य स्तोत्रियः । तत्रैव अभिप्लवषडहेऽपि विनियुक्तः । तथा चाश्वलायनेन 'चतुर्विंशे होताऽजनिष्ट' इत्यादिखण्डे 'मित्रं वयं हवामहे मित्रं हुवे पूतदक्षम्' (आश्व.श्रौ.७,२) इत्यादि सूत्रितम् । तथाह 'अभिप्लवपृष्ट्याहानि' इति खण्डे परिशिष्टानावापानुद्धृत्य 'मित्रं वयं हवामहे मित्रं हुवे पूतदक्षम्' (आश्व.श्रौ.७,५) इति च ।

अहमस्मिन् कर्मणि हविष्प्रदानाय **पूतदक्षं** पवित्रबलं **मित्रं हुवे** । तथा **रिशादसं** रिशानां हिंसकानाम् अदसम् अत्तारं **वरुणं च हुवे** आह्वयामि । कीदृशौ मित्रावरुणौ । घृतमुदकमञ्चति भूमिं प्रापयति या धीर्वर्षणकर्म तां **घृताचीं धियं साधन्ता** साधयन्तौ कुर्वन्तौ ।

मित्रशब्दः पुल्लिङ्गः प्रातिपदिकस्वरेणान्तोदात्तः । हुवे इति ह्वयतेः 'बहुलं छन्दसि' (पा.सू.२,४,७३) इति शपो लुकि सति 'ह्वः सम्प्रसारणम्' (पा.सू.६,१,३२) इत्यनुवृत्तौ 'बहुलं छन्दसि' (पा.सू.६,१,३४) इति सम्प्रसारणे उवङादेशः । 'तिङ्ङतिङः' (पा.सू.८,१,२८) इति निघातः । पूतशब्दः प्रत्ययस्वरेणान्तोदात्तः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । वरुणशब्दः 'कृवृदारिभ्य उनन्' (उ.सू.३,३३३) इति उनन्प्रत्ययान्तो नित्त्वादाद्युदात्तः । रिशन्ति हिंसन्तीति रिशाः शत्रवः । 'इगुपधज्ञाप्रीकिरः कः' (पा.सू.३,१,१३५) प्रत्ययस्वरेणोदात्तः । तानत्तीति रिशादाः, तम् । 'सर्वधातुभ्योऽसुन्' (उ.सू.४,६२८) इत्यसुन्प्रत्यये नित्स्वरेणोत्तर-पदमाद्युदात्तम् । कृदुत्तरपदप्रकृतिस्वरेण स एवावशिष्यते । शेषनिघाते सति 'एकादेश उदात्तेनोदात्तः' (पा.सू.८,२,५) इति सवर्णदीर्घोऽप्युदात्त एव । 'धीः' इति 'अपः' इत्यादिषड्-विंशतौ कर्मनामसु (नि.२,१,२१) पठितः । प्रातिपदिकस्वरेणान्तोदात्तः । घृतमञ्चतीति घृताची । 'ऋत्विग्दधृक्' (पा.सू.३,२,५९) इत्यादिना किनि 'अनिदिताम्' (पा.सू.६,४,२४) इति नकारलोपः । 'अञ्चतेश्चोपसङ्ख्यानम्' (पा.सू.४,१,६,२) इति ङीप् । 'अचः' (पा.सू.६,४,१३८) इत्यकारलोपे 'चौ' (पा.सू.६,३,१३८) इति दीर्घत्वम् । घृतशब्दः 'नब्विषयस्या-निसन्तस्य' (फि.सू.२६) इत्याद्युदात्तं बाधित्वा 'घृतादीनां च' (फि.सू.२१) इत्यन्तोदात्तः । 'समासस्य' (पा.सू.६,१,२२३) इत्यन्तोदात्तस्यापवादकं 'तत्पुरुषे तुल्यार्थ' (पा.सू.६,२,२) इतिपूर्वपदप्रकृतिस्वरं बाधित्वा 'गतिकारकोपपदात्' (पा.सू.३,२,१३९) इति उत्तरपदप्रकृति-स्वरेणोदात्तस्य धात्वकारस्य लोपे सति 'अनुदात्तस्य च यत्रोदात्तलोपः' (पा.सू.६,१,१६१) इति ङीप उदात्तत्वे प्राप्ते 'चौ' (पा.सू.६,१,२२२) इति पूर्वपदान्तोदात्तत्वम् । साधन्ता । 'राध साध संसिद्धौ' इत्यस्मादन्तर्भावितण्यर्थात् लटः शत्रादेशे (पा.सू.३,२,१२४) श्नुं बाधित्वा व्यत्ययेन शप् । अदुपदेशत्वादुपरि शतृप्रत्ययस्य लसार्वधातुकानुदात्तत्वम् (पा.सू.६,१,१८६) । द्वितीयाद्विवचनस्य शपश्च 'अनुदात्तौ सुप्पितौ' (पा.सू.३,१,४) इत्यनुदात्तत्वे 'धातोः' (पा.सू.६,१,१६२) इति धातुस्वर एव शिष्यते । 'सुपां सुलुक्' (पा.सू.७,१,३९) इत्यादिना विभक्तेराकारादेशः ॥

**सिद्धाञ्जनम्– पूतदक्षं** पवित्रं धीकौशलं यस्य तं **मित्रं हुवे** आह्वयामि । **रिशादसं** हिंसकानां अत्तारं भक्षकं (विनाशनमित्यर्थः) **वरुणं च हुवे** आह्वयामि । कथंभूतौ तौ मित्रावरुणौ ? **घृताचीं** घृतं दीप्तिं अञ्चति प्राप्नोतीति घृताची तां दीप्तां **धियं** धारणावतीं बुद्धिं **साधन्ता** साधयन्तौ निष्पादयन्तौ ।

दक्षपदं सर्वत्र बलार्थे वर्तते, तथैव सायणो व्याचष्टे । अपि तु बहुप्रयोगस्थलपरिशोधनेन धीकौशलरूपं बलमिति वक्तव्यम् । बलस्य वैविध्यमङ्गीकृत्य साध्वसाधुसत्यासत्यादिविवेचनपरां तत्त्वनिर्णायिकां प्रज्ञां दक्षपदवाच्यां ब्रूमः । अत एव धीकौशलं इति सामान्येन दक्षपदार्थो दत्तः। महीधरो ज्ञानेन्द्रियकौशलं दक्षपदार्थमाह । अन्ये पुनर्नव्याश्च अत्र विप्रतिपपन्नाः । पुरस्तात् पुनर्विचारयिष्यामः अस्य सूक्तस्य अन्तिमर्चो व्याख्यानावसरे ।

घृताचीम्-धीविशेषणम् । जिघर्तिर्जुहोत्यादिः क्षरणे दीप्तौ च । जिघर्म्यग्निं हविषा घृतेन' इत्यादिः दीप्त्यर्थे मन्त्रवर्णेषु प्रयोगो लक्षणीयः । दीप्तां अत एव प्रकाशमानां धियं इति विशेषणं उपपद्यते। क्षरणे प्रस्रवणे च वर्तते । अत एव घृतं सर्पिर्वाचकं लोके। वेदे तु 'दीप्तिमत्' घृतम् । ऋक्सहितायां अत्रैव प्रथम 'घृताची' इति घृतपदं धीविशेषणतया प्रयुक्तम् । इदं च वेदरहस्यार्थोद्घाटनप्रधानानां सङ्केतपदानां एकम्, कवि-क्रतु-भद्र-दक्ष-ऋतादिपदानीव यौगिकत्व-मजहत् सर्वत्र नियतेऽर्थे प्रयुक्तं मन्त्रेषु । अस्य तृचस्य तात्पर्यं पुरस्तात् पर्यालोचयामः ।।

### ऋक्संहिता पदपाठसहिता

**ऋतेन॑ मित्रावरुणावृतावृधावृतस्पृशा । क्रतुं॑ बृहन्त॑माशाथे ।। ८ ।।**

ऋतेन॑ । मित्रावरुणौ । ऋतऽवृधौ । ऋतऽस्पृशा । क्रतु॑म् । बृहन्त॑म् । आशाथे इति॑ ।।

### ऋग्भाष्यम्

**नित्यवृद्धः स भगवानृतेनानुपचारतः ।**
**ऋतस्पृग्वेदवाच्यत्वादन्यौ चेद्भगवानृतः ।**
**ऋगतावित्यतः सर्ववस्तुष्वनुगतत्वतः ।**
**तेन वृद्धौ तत्स्पृशौ च सर्वदा मित्रवारिपौ ।**
**संहितायां तु दैर्घ्यादिरुक्ताधिक्ये पदेऽन्यथा ।**

**अनन्यार्थत्वविज्ञप्त्या ईशाथे च महाक्रतुम् ।**
**महत्सुखं वा .................. ॥ ८ ॥**

**ऋग्भाष्यटीका–** ऋतेन । नित्यवृद्धः । यस्मान्नित्यवृद्धः स भगवांस्तस्मात् **ऋतवृधः** । ऋतमनुगतं सर्वकाल इति ऋतशब्दो नित्यपर्यायः । वर्धतेरिगुपधलक्षणः कः । ऋतं नित्यं वृधो वृद्धः ऋतवृधः । ऋतेन सत्येन सत्यतयैव नतूपचारत इत्यभिप्रायोक्तिः । यथार्थत्वादृतो वेदः तं स्पृशतीति **ऋतस्पृक्** । स्पृशोनुदके क्विन् । वेदवाच्यः । एवं पूर्वार्धं विष्णौ योजयित्वा देवतान्तरे योजयितुमाह– **अन्यौ चेदिति** ।। भगवतोऽन्यौ मित्रावरुणौ विवक्षितौ चेत्तदा द्वितीयतृतीयाभ्यामृतशब्दाभ्यां हरिरुच्यते । कुतः ऋगतावित्यतो धातोः कर्तरि क्ते कृते सर्ववस्तुष्वनुगतत्वतः सर्वगतत्वादृतो हरिः । तथा च तेनर्तेन हरिणा वृद्धाविति मित्रवारिपौ **ऋतवृधौ** । तत्स्पृशौ तत्सम्बन्धिनाविति **ऋतस्पृशौ** । सर्वदेति प्रथमऋतशब्दार्थः । ऋतावृधावित्यत्र संहितायां दैर्ध्यं पदे ह्रस्वता । तदभिप्रायमाह– **संहितायामिति** ।। आदिपदेनान्ये वर्णविकारा गृह्यन्ते । यः संहितायां दैर्ध्यादिः पदे त्वन्यथा स उक्ताधिक्ये उक्तार्थस्याधिक्यज्ञापनार्थम् । अनन्यार्थविज्ञप्त्यै उक्तस्यावधारणार्थं चेति यावत् । उत्तरार्धं व्याख्याति– **ईशाथे इति** ।। प्रेरयथः । तृतीयोऽतिशये । क्रतुशब्दः सुखनामापि भवतीति बृहन्तं क्रतुं महत्सुखं वा । छन्दस्त्वात् ''अधीगर्थदयेशां कर्मणी''ति न भवति ।। ८ ।।

**मन्त्रार्थमञ्जरी–** ऋतवृधौ, ऋतमनुगतं सर्वकाल इत्यृतशब्दोऽत्र नित्यपर्यायः, 'वृधु वृद्धौ' इति धातोः 'इगुपधज्ञाप्रीकिरः कः' इति क प्रत्यये 'क्ङिति च' इति गुणाभावे 'वृध' इति रूपसिद्धेर्ऋतवृधौ नित्यवृद्धावित्यर्थः । ऋतेन, भावप्रधानम्, ऋतत्वेन सत्यत्वेन, न तूपचारत इति यावत् । ऋतस्पृशा, ऋतस्पृशौ, ऋतशब्दोऽत्र यथार्थत्वाद्वेदवाची, ऋतं वेदं स्पृशत इत्यृतस्पृशौ, 'स्पृशोऽनुदके क्विन्' इति स्पृशधातोः क्विन्प्रत्यये 'ऋतस्पृश्' इति सिद्धेर्वेदप्रतिपाद्याविति यावत् । मित्रावरुणौ, मित्रश्च वरुणश्च मित्रावरुणौ, 'देवताद्वन्द्वे च' इति पूर्वपदस्य दीर्घः, मित्रवरुणशब्दितभगवद्रूपविशेषौ । बृहन्तम् ऋतुम्, महज्ज्ञानं सुखं वा । आशाथे, ईशाथे, 'ईश ऐश्वर्ये' प्रेरयथ इति यावत्, 'ईशाथे' इति वक्तव्य ईकारस्य 'तृतीयोऽतिशये' (म.व्या.सू.) इत्याकारः, व्युत्क्रमेणाकारस्येकारापेक्षया तृतीयत्वात्, 'अधीगर्थदयेशां कर्मणि' इति षष्ठी क्रतुशब्दे छान्दसत्वान्न कृता । प्रसिद्धमित्रावरुणपक्षे तु 'ऋतवृधौ' इत्यादावृतशब्द ऋतः सर्वगत इति

विष्णुपरः, ऋतेन भगवता वृधौ, ऋतस्पृशौ, 'ऋतेन' इत्यस्य नित्यपर्यायत्वेनात्र विवक्षया सदेत्यर्थः, शिष्टं प्राग्वत् । अत्र संहितायां दैर्घ्यमुक्तार्थस्यावधारणार्थम्, एवमन्यत्रापि, उक्तं हि 'संहितायां तु दैर्ध्यादिरुक्ताधिक्ये पदेऽन्यथा ।। अनन्यार्थत्वविज्ञप्त्यै' (ऋ.भा.) इति ।।८।।

**स्कन्द– ऋतेन** इति हेतौ तृतीया, यज्ञेन हेतुना । यस्मान्मनुष्यैरिज्येथे, तस्मात् । **हे मित्रावरुणौ** । **ऋतावृधौ** यज्ञेन वर्धितारौ । यज्ञे हि यद्हविस्तदुपभुञ्जानाः स्तूयमानाश्च देवता वीर्येण वर्धन्ते । तदायत्तत्वात् तासां स्थितेः । अथवा वृद्धिरत्रान्तर्णीतण्यर्थः । ऋतशब्दोऽपि यज्ञनामैव उदकनाम (तु.निघ.१,१२) वा । यज्ञस्योदकस्य वा वर्धयितारावित्यर्थः । अथवा ऋतम् (निघ.३.१०) इति सत्यनाम । सत्यस्य स्तोतुर्यजमानस्य वर्धयितारौ । **ऋतस्पृशौ** यज्ञस्योपभोगकाले स्प्रष्टारौ । यज्ञे हविषा प्रतिग्रहीतारावित्यर्थ । अथवा ऋतस्य सत्यस्य स्तोत्रस्य स्प्रष्टारौ श्रोतारावित्यर्थः । अथवा ऋतस्योदकस्य वृष्टिकाले स्प्रष्टारौ वर्षितारावित्यर्थः । **क्रतुं** कर्म । **बृहन्तं** महत् । **आशाथे** व्याप्नुथः । कुरुथ इत्यर्थ । अथवा ऋतेनेत्ययमृतशब्द उदकनाम । करणे च तृतीया । उदकेन क्रतुं कर्म यज्ञाख्यं व्याप्नुथः । यत्र यज्ञः तस्मिन् विषये वर्षथ इत्यर्थः ।। ८ ।।

**वेङ्कटमाधव–** सत्येनैव मित्रावरुणौ ! सत्यस्य वर्धयितारौ! सत्यस्य स्प्रष्टारौ । यज्ञं महान्तं आनशाथे ।। ८ ।।

**मुद्गल– हे मित्रावरुणौ!** युवाम् **क्रतुं** प्रवर्तमानमिमं सोमयागं **आशाथे** आनशाथे व्याप्तवन्तौ । केन निमित्तेन । **ऋतेन** अवश्यंभावितया सत्येन फलेन । अस्मभ्यं फलं दातुमित्यर्थः । कीदृशौ युवाम् । **ऋतावृधौ** 'ऋतमित्युदकनाम' (वा २,२५) । उदकस्य वर्धयितारौ । अत एव च **ऋतस्पृशा** उदकं स्पृशन्तौ । कीदृशं क्रतुम् । **बृहन्तं** अङ्गैरुपाङ्गैश्चातिप्रौढम् ।। ८ ।।

**सायण– हे मित्रावरुणौ** युवां **क्रतुं** प्रवर्तमानमिमं सोमयागं **आशाथे** आनशाथे व्याप्तवन्तौ । केन निमित्तेन । **ऋतेन** अवश्यम्भावितया सत्येन फलेन । अस्मभ्यं फलं दातुमित्यर्थः । कीदृशौ युवाम् । **ऋतावृधौ** 'ऋतमित्युदकनाम' (निरु.२,२५), 'सत्यं वा यज्ञं वा' (निरु.४,१९) इति यास्कः । उदकादीनामन्यतमस्य वर्धयितारौ । अत एव **ऋतस्पृशा** उदकादीन् स्पृशन्तौ । कीदृशं क्रतुम् । **बृहन्तं** अङ्गैरुपाङ्गैश्च अतिप्रौढम् ।

ऋतशब्दो घृतादित्वादन्तोदात्तः । मित्रावरुणावित्यत्र मित्रश्च वरुणश्चेति मित्रावरुणौ । 'देवताद्वन्द्वे च' (पा.सू.६,३,२६) इति पूर्वपदस्य आनङादेशः । ऋतस्य वर्धयितारौ इत्यर्थेऽन्तर्भावितण्यर्थात् वृधेः क्विप् । 'अन्येषामपि दृश्यते' (पा.सू.६,३,१३७) इति पूर्वपदस्य दीर्घः । ऋतस्पृशा । 'सुपां सुलुक्' (पा.सू.७,१,३९) इति डादेशः । मित्रावरुणावित्याद्यामन्त्रितत्रयस्य स्वस्वपूर्वपदात् परत्वात् 'आमन्त्रितस्य' (पा.सू.८,१,१९) इति आष्टमिको निघातः । ननु ऋतेन इत्येतस्य 'सुबामन्त्रिते पराङ्गवत्स्वरे' (पा.सू.२,१,२) इति पराङ्गवद्भावेन आमन्त्रितानुप्रवेशात् पादादित्वेन पदादपरत्वेन वा आष्टमिकनिघाताभावात् 'आमन्त्रितस्य च' (पा.सू.६,१,१९८) इत्याद्युदात्तेन भवितव्यमिति चेत् । पराङ्गवद्भावस्य सुबामन्त्रिताश्रयत्वेन पदविधित्वात् 'समर्थः पदविधिः' (पा.सू.२,१,१) इति नियमात् । इह च ऋतेन मित्रावरुणौ इत्यनयोः आशाथे इति आख्यातेनैवान्वयेन परस्परमसामर्थ्यात् । यत्र पुनः परस्परान्वयेन सामर्थ्यं तत्र पराङ्गवद्भावात् पादादेः आद्युदात्तत्वं भवत्येव । यथा 'मरुतां पितस्तदहं गृणामि' इति । 'मृग्रोरुतिः' (उ.सू.१,९४) इति उतिप्रत्ययान्तत्वेन 'पृश्न्यै वै पयसो मरुतो जाताः' (तै.सं.२,२,११,४) इत्यादौ अन्तोदात्तोऽपि हि मरुच्छब्दो 'मरुतां पितः' इत्यत्र सामर्थ्यात् पराङ्गवद्भावादेव आद्युदात्तो जातः । प्रकृते तु ऋतेन इत्यस्यासामर्थ्यादेव न पराङ्गवद्भाव इति । ऋतावृधावित्यत्र द्वितीयामन्त्रितस्य निघाते कर्तव्ये 'आमन्त्रितं पूर्वमविद्यमानवत्' (पा.सू.८,१,७२) इति प्रथमामन्त्रितेन अविद्यमानवद्भवितव्यमिति चेत्, भवतु । अत एव तस्याव्यवधायकत्वात् ऋतेन इति प्रथमपदात् परत्वेनैव द्वितीयामन्त्रितं निहनिष्यते । यथा 'इमं मे गङ्गे यमुने' (ऋ.सं.१०,७५,५) इत्यादौ गङ्गेशब्दस्याविद्यमानवद्भावेऽपि तस्याव्यवधायकत्वादेव मे इत्येतदेव पदमुपजीव्य यमुनेशब्दस्य निघातः । किं च प्रकृते मित्रावरुणौ इत्यामन्त्रितं सामान्यवचनम् । तस्य विशेषणतया विशेषवचनम् ऋतावृधाविति । अतः 'नामन्त्रिते समानाधिकरणे सामान्यवचनम्' (पा.सू.८,१,७३) इति पूर्वस्याविद्यमानवद्भावप्रतिषेधादपि निरन्तरायो द्वितीयस्य निघातः ।

ननु एवमपि 'अपादादौ' (पा.सू.८,१,१८) इत्यनुवृत्तेर्ऋतावृधेत्यस्य द्वितीयपादादित्वान्न भवितव्यं निघातेन । अत एव हि 'इमं मे गङ्ग' इत्यत्र शुतुद्रिपदस्य पदात् परस्य आमन्त्रितस्यापि पादादित्वादेव अनिघातादाद्युदात्तत्वं जातम् । तद्वदत्रापि भवितव्यं वक्तव्यो वा विशेष

इति । उच्यते– मित्रावरुणपदस्य 'सुबामन्त्रिते' (पा.सू.२,१,२) इति पराङ्गवद्भावेन परानुप्रवेशादेव ऋतावृधेत्यस्य न पादादित्वम् । शुतुद्रिपदमपि तर्ह्येवमेव पूर्वस्य सरस्वतिपदस्य पराङ्गवद्भावेन न पादादिरिति निहन्येत इति चेत्, न । पराङ्गवद्भावस्तावत् सुबन्तमामन्त्रितं चाश्रित्य प्रवृत्तेः पदविधिः । अतस्तयोः सत्येव परस्परान्वये पराङ्गवद्भावेन भवितव्यं 'समर्थः पदविधिः' (पा.सू.२,१,१) इति नियमात् । शुतुद्रिसरस्वतिपदयोश्च न परस्परेणान्वयः किन्तु सचत इत्यनेन इत्यसामर्थ्यात् न पराङ्गवद्भावः । प्रकृते तु मित्रावरुणौ ऋतावृधौ इति द्वयोरपि सामानाधिकरण्येन परस्परान्वयादस्तिसामर्थ्यमिति भवितव्यं पराङ्गवद्भावेन । यथा 'मरुतां पितः' इत्यत्रेति विशेषः ।

ननु अत एव तर्हि मित्रावरुणपदस्य पराङ्गवद्भावेन पादादित्वात् 'अपादादौ' इति पर्युदासादामन्त्रितनिघातो न स्यादिति चेत्, न । पूर्वं सुबन्तं परं चामन्त्रितमाश्रित्य यः स्वरः प्रवर्तते तत्र 'सुबामन्त्रिते' इति पराङ्गवद्भावः । भवति चैवंविध ऋतावृधपदनिघात इति । तत्र पूर्वस्य पराङ्गवद्भावेनापादादित्वात् स प्रवर्तते । मित्रावरुणपदनिघातस्तु पूर्वमेव पदमुपजीवति न परमामन्त्रितमिति न पराङ्गवद्भावः । ननु पराङ्गवद्भाववन्निघातोऽपि पदविधिरिति ऋतेन इत्यनेनासामर्थ्यात् ततः पदात्परस्य मित्रावरुणपदस्य न स्यात् इति चेत्, न । 'समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः' (पा.सू.२,१,१,११) इति निघाते पदविधावपि समानवाक्यत्वमेव पर्याप्तं, न पराङ्गवद्भाववत् परस्परान्वयोऽपीत्यलम् । क्रतुम् । 'कृञः कतुः' (उ.सू.१,७७) । प्रत्ययस्वरेणादिरुदात्तः । आशाथे आनशाथे । 'छन्दसि लुङ्लङ्लिटः' (पा.सू.३,४,६) इति वर्तमाने लिट् नुडभावश्छान्दसः ॥ ८ ॥

**सिद्धाञ्जनम्**– मैत्रावरुणे तृचे द्वितीयामृचमाह– **ऋतेन** सत्येन सत्येनैव साधनेन **हे मित्रावरुणौ** मित्रो वरुणश्च (उभौ युवां) **बृहन्तं** महान्तं क्रतुं प्राज्ञं दृढसङ्कल्पं (कर्मसाधकं इच्छाबलमित्यर्थः) **आशाथे** आनशाथे (व्याप्तवन्तौ, प्राप्तौ उपभोगायेत्यर्थः) कीदृशौ मित्रावरुणौ ? **ऋतावृधौ** ऋतस्य सत्यस्य वर्धयितारौ । पुनः कौ? ऋतस्पृशा ऋतं सत्यं स्पृशन्तौ ।

ऋतं सत्यं सत्यधर्मो वा भवति सर्वत्र वेदे । वेदगूढार्थाविष्कारायोपयुक्तानां पदानां इदमाद्यं वक्तव्यम् । ऋतं यजमाने वर्धयन्तौ मित्रावरुणौ 'ऋतावृधौ' । स्वभावतः सिद्धस्तयोः सत्यस्पर्शः 'ऋतस्पृशौ'। तथा सत्यवर्धनकर्मणः सत्यमेव साधनं भवति तयोः । अत एव करणे तृतीया प्रयुक्ता 'ऋतेन'। तादृशव्यापारस्य तयोः प्राज्ञकर्मणि स्यादध्यवसायः। अत एव 'क्रतुं आशाथे'

इत्युक्तम् । बहिः, क्रतुर्यज्ञ इति प्रसिद्धम् । तर्हि बाह्येऽर्थे, अन्नबहुलं महान्तं 'बृहन्तम्' अङ्गैश्चोपाङ्गैश्च अतिप्रौढं यज्ञं भोक्तुं यज्ञदेशं प्राप्तौ यज्ञभुजौ मित्रावरुणौ इति तात्पर्यं प्राहुः । अस्मत्पक्षे तु, अन्तर्यजने समारब्धे, कविक्रतौ समिद्धे भगवत्यन्तर्ज्वलने, प्रसादितयोरिन्द्रवाय्वोरनुग्रहबलात् सोमाभिषवसामर्थ्यं प्राप्ते च मनस्सारथौ मुख्यप्राणे, मित्रावरुणौ उक्तगुणविशिष्टौ ऋतवर्धनौ विपुलं विशालं वा ऋतवत् बृहद्भूतं ऋतुपदवाच्यं कर्मसाधकं अध्यवसायबलं प्राप्तौ भुञ्जात इति ग्राह्यम् ।। ८ ।।

## ऋक्संहिता पदपाठसहिता

**कवीनो॑ मि॒त्रावरु॑णा तुवि॒जा॒ता उ॑रु॒क्षया॑ । दक्षं॑ दधाते अ॒पस॑म् ।। ९ ।।**

क॒वी इति॑ । न॒: । मि॒त्रावरु॑णा । तु॒वि॒ऽजा॒तौ । उ॒रु॒ऽक्षया॑ । दक्ष॑म् । द॒धा॒ते इति॑ । अ॒पस॑म् ।।

## ऋग्भाष्यम्

**..........तुविजौ ब्रह्मजातौ तथाविधौ ।**
**हरिस्तथैव भूतत्वात् स्थानं क्षय इहोच्यते ।**
**कर्मापसंचकर्तारं दक्षं कर्तारमेव वा ।**
**अस्मदर्थे दधाते तौ नित्यं बुद्धौ गतागतौ ।। ९ ।।**

**ऋग्भाष्यटीका–** कवीनः । तुविजातावित्यनूद्य द्वेधा व्याचष्टे– **तुविजाविति** ।। तुवीति बहुनाम । बहुशब्दश्च पूर्णवाची अतः परब्रह्मणो जातौ **तुविजातौ** । तथाविधौ तुवित्वेन पूर्णत्वेन जाताववस्थितौ तुविजाताविति वा । अर्थद्वयस्य व्यवस्थां दर्शयति– **हरिरिति** । तथैव भूतत्वात्तुवित्वेनावस्थितत्वात्तुविजातो हरिः । अन्यौ मित्रावरुणौ तु ब्रह्मजातत्वेन तुविजाताविति भावः । उरुक्षयावित्यत्र क्षयशब्दार्थमाह– **स्थानमिति** । क्षिनिवासगत्योरित्यस्मादेरजित्यधिकरणेऽच् । शिष्टं व्याख्याति– **कर्मेति** । **कवी** नित्यं बुद्धौ सर्वज्ञौ । तुविजातौ । **उरुक्षयौ** महास्थानौ सर्वगतौ । तौ मित्रावरुणौ । **नः** अस्मदर्थे । नो **दक्षं** यजमानं प्रति **अपसं** कर्म **दधाते** तं कर्तारं कुर्वात इति यावत् । अपःशब्दः कर्मनाम । ततश्छान्दसोऽमोऽलुक् । अथवा नः अपसं कर्तारम् अर्शादिभ्योऽच् । यजमानं दक्षं पटुं **दधाते** कुर्वाते । अत्र दक्षमिति पूर्वोत्तरयोः संयोजनीयम् । गतागतावित्युरुक्षयशब्दस्यार्थान्तरम् । क्षयो गतिः भावेऽच् । उरुः क्षयो ययोस्तौ तथोक्तौ । गतागतौ गत्यागतिमन्तौ ।। ९,४,२ ।।

**मन्त्रार्थमञ्जरी–** कवी, सर्वज्ञौ । तुविजातौ, तुवित्वेन पूर्णत्वेन जातौ स्थितौ, तुविना पूर्णेन ब्रह्मणा जाताविति देवतान्तरे । उरुक्षया, 'सुपां सुलुक्' इत्यादिना विभक्तेराकारः, क्षयशब्दः स्थानवाची गतिवाची च, 'क्षि निवासगत्योः' इत्यतः 'एरच्' इत्यधिकरणेऽच्प्रत्यये 'सार्वधातुक' इति गुणेऽयादेशे च 'क्षय' इति सिद्धेर्महास्थानौ सर्वगताविति यावत्, नित्यं गतिमन्ताविति वा । मित्रावरुणा, मित्रावरुणौ– भगवद्रूपविशेषौ, प्रसिद्धमित्रावरुणदेवौ वा । नः, अस्मदर्थे । दक्षम्, यजमानं प्रति । अपसम्, कर्म । दधाते, कुर्वाते, यजमानं कर्मकर्तारं कुर्वाते इति यावत् । अपस्शब्दः कर्मवाची क्लीबश्च, छान्दसत्वात् 'स्वमोर्नपुंसकात्' इत्यमो लुङ्न भवति ।। यद्वा नः, अस्मदीयम् । अपसम्, 'अर्शआदिभ्योऽच्' इति मतुबर्थेऽच्प्रत्ययः, कर्मकर्तारम् । दक्षम्, समर्थम् । दधाते, कुर्वाते इति । ऋचां यज्ञे विनियुक्तानामृत्विग्वाक्यतया 'नः' इत्यृत्विजामुक्तिर्ध्येया ।। ९ ।। इति तृतीयो मैत्रावरुणस्तृचः ।। ३ ।।

**स्कन्द– कवी** मेधाविनौ **नः** तादर्थ्ये एषा चतुर्थी । अस्माकमर्थम् । **मित्रावरुणा** द्विवचनस्यायमाकारः **मित्रावरुणौ** । **तुविजातौ** 'तुवि' (निघ ३,९) इति बहुनाम । बहूनामर्थाय जातौ तुविजातौ । सर्वेषां प्राणिनामुपकर्तुमुत्पन्नावित्यर्थः । जननं जातं जन्मोच्यते । बहूनि जन्मानि ययोस्तौ तुविजातौ । यच्चानयोः कर्मात्मना पुनःपुनर्जन्म तदपेक्षया जन्मबहुत्वम् । **उरुक्षया** 'उरु' (निघ ३,१) इति बहुनाम विस्तीर्णपर्यायो वा । बहुनिवासौ विस्तीर्णनिवासौ वा । **दक्षं** बलं सेनालक्षणम् । **दधाते** धारयतः **अपसं** कर्म च । 'अपः' (निघ २,१) इति हि कर्मनाम । अस्मदर्थं स्वसेनां पुष्णीतः, तया च वृष्ट्यादिकर्म कुरुतः । अथवा न इति सम्प्रदाने चतुर्थी । दधातिरपि दानार्थः । अस्मभ्यं बलं यागादिकर्म च दत्त इत्यर्थः ।। ९ ।।

**वेङ्कटमाधव–** क्रान्तदर्शिनौ मित्रावरुणौ अस्माभ्यम् अहोरात्रयोः प्रादुर्भावादनेकजन्मानौ बहुनिवासावनेकयज्ञौ वा बलं प्रयच्छतः वेगं च ।

'प्रउगतृचानां मध्ये सूक्तविच्छेदो दक्षं दधाते अपसमित्यभिमताशंसनादित्याहुः । अर्थमिच्छन्तो हि सूक्तैः स्तुवन्ति देवता इति ।। ९ ।।

**मुद्गल–** मित्रावरुणावेतौ देवौ **नः** अस्माकं **दक्षं** बलं **अपसं** कर्म च **दधाते** पोषयतः । कीदृशौ । **कवी** मेधाविनौ । **तुविजातौ** बहूनामुपकारकतया समुत्पन्नौ । **उरुक्षया** बहुनिवासौ ।।

**सायण–** मित्रावरुणावेतौ देवौ **नः** अस्माकं **दक्षं** बलं **अपसं** कर्म च **दधाते** पोषयतः । कीदृशौ । **कवी** मेधाविनौ । **तुविजातौ** बहूनामुपकारकतया समुत्पन्नौ । **उरुक्षया** बहुनिवासौ । 'विप्रः धीरः' इत्यादिषु चतुर्विंशतिसङ्ख्याकेषु मेधाविनामसु 'कविः मनीषी' (नि.३,१५,१०) 'उरु तुवि' (नि३,१,१,२) इत्येतौ शब्दौ द्वादशसु बहुनामसु पठितौ । 'ओजः पाजः' इत्यादिषु अष्टाविंशतिसङ्ख्याकेषु बलनामसु 'दक्षः वीळु' (नि.२,९,१३) इति पठितम् । अपःशब्दः षड्विंशतिसङ्ख्याकेषु कर्मनामसु पठितः (नि.२,१,१) ।

मित्रावरुणा । मित्रशब्दः प्रातिपदिकस्वरेणान्तोदात्तः । वरुणशब्दो नित्स्वरेणाद्युदात्तः । द्वन्द्वे 'देवताद्वन्द्वे च' (पा.सू.६,२,१४१) इत्युभौ अवशिष्येते । तुविजातौ । बहूनामुपकारकतया तत्सम्बन्धित्वेन जाताविति षष्ठीसमासे समासान्तोदात्तत्वम् । चतुर्थी समासे हि 'क्ते च' (पा.सू.६,२,४५) सति पूर्वपदप्रकृतिस्वरः स्यात् । उरूणां बहूनां क्षयौ उरुक्षयौ । 'क्षि निवासगत्योः' इति धातोः क्षियन्त्यस्मिन्निति क्षयः । अधिकरणे 'एरच्' (पा.सू.३,३,५६) इत्यच्प्रत्ययान्तस्य 'चितः' (पा.सू.६,१,१६३) इत्यन्तोदात्तत्वे प्राप्ते 'क्षयो निवासे' (पा.सू. ६,१,२०१) इत्याद्युदात्तस्वं विहितम् । समासे तु 'समासस्य' (पा.सू.६,१,२२३) इत्यन्तोदात्तत्वं बाधित्वा कृदुत्तरपदप्रकृतिस्वरेण प्राप्तमुत्तरपदाद्युदात्तत्वं यद्यपि थाथादिस्वरेणान्तोदात्तेन बाध्यते, तथापि 'परादिश्छन्दसि बहुलम्' (पा.सू.६,२,१९९) इत्युत्तरपदाद्युदात्तत्वं द्रष्टव्यम् । दक्षो दक्षतेरुत्साहकर्मणो घञ् । त्रित्वादाद्युदात्तः । आप्यते फलमनेन इति अपः कर्म । 'आपः कर्माख्यायां ह्रस्वो नुट् च वा' (उ.सू.४,६४७) इत्यसुनन्तस्य 'अपसस्पारे' (ऋ.सं.६,६९,१) इत्यादौ नित्त्वादाद्युदात्तस्यापि अपःशब्दस्य अत्र व्यत्ययेन प्रत्ययाद्युदात्तत्वम् ।। ९ ।।

**सिद्धाञ्जनम्–** मैत्रावरुणे तृचे तृतीयामृचमाह– **कवी** मेधाविनौ । अतीन्द्रियार्थदर्शिनौ । **तुविजातौ** बहुषु बहुधा वा प्राप्तजन्मानौ **उरुक्षया** उरुक्षयौ विशालनिवासौ । एवंभूतौ । **मित्रावरुणा** मित्रावरुणौ देवौ **नः** अस्माकं **अपसं** कर्मवत् । कर्मसाधकं, क्रियानिष्पादकमिति यावत्। **दक्षं** विवेचनात्मकं धीकौशलं **दधाते** धारयेते ।

कवी-नेदं मेधाविसामान्यवाचकं वेदे, दृष्टिसम्पत्तिं द्योतयति । क्रान्तदर्शी, अतीन्द्रियार्थदर्शीति वा व्याख्यातम् । तुविजातौ-तुविपदं वेदे बलवाचकम् । बलं सेनार्थे यथा बहुत्वं द्योतयति तथा तुविपदमपि बह्वर्थकम् । बहुनामसु पठितं च । बहूनामुपकारकत्वाद् बहुधा

जात इति सायणव्याख्या । यजमाने देवाः स्वरूपतो व्यापारतश्च बहुशः स्वात्मानमाविष्कुर्वन्ति तेषामाविष्कार एव तेषां जन्म, तस्माद् बहुधा जात इति वयम् । उरु बहुनामसु पठितमिति हेतोः 'उरुक्षया' बहुनिवासौ इति सायणः । उरु विस्तृतं अत एव विशालं विपुलं वा वेदे । तस्माद् वितते बृहति निवासोऽनयोरिति ग्राह्यम् । 'दक्षं' बलं 'अपसं' कर्म च दधाते मित्रा-वरुणाविति चकाराव्याहारेणोभयं च समुच्चितं सायणव्याख्याने । नावसरोऽध्याहारस्य । 'अपसम्' इति दक्षविशेषणम् । न चेदिदं विशेषणमभविष्यत् अपि त्विह सत्त्ववाचि, तदा आद्युदात्तं अपठिष्यत । नेदमाद्युदात्तम् । ननु विशेषणं चेत् विशेष्यनिघ्नं वाच्यलिङ्गं स्यात् , अपश्शब्दस्तु न तथेति चेत्, मत्वर्थलक्षणया व्याख्यातपूर्वं 'रयिं यशसं' इत्यादिकमिव 'अपस्वि दक्षं' इति बोध्यम् । अन्यथा च अपश्शब्दो वेदे वाच्यलिङ्गतया प्रयुज्यत इत्यवधेयम् । अपि च वेदे सत्त्वनामान्यपि यौगिकार्थप्राबल्यं व्यञ्जयितुं गुणवाचकत्वं दधते । 'गोतमः' 'अङ्गिरस्तमः' 'इन्द्रतम' 'अपस्तमा' इत्यादिः प्रयोगः साधारणो वेदे ।

'अयं देवानामपसामपस्तम' (१-१६०-४) अप इति कर्मनाम । तेन तद्वान् लक्ष्यते । कर्मवतां मध्ये प्रकृष्टकर्मा इति सा.व्या.। 'अपसामपस्तमा' (६-६१-१३) वेगवतीनां वेगवत्तमा -सा.व्या.। (१०-७५-७) कर्मवतीनां मध्ये वेगाख्यकर्मवती -सा.व्या.। (१०-५३-९) शोभनकर्मवतां मध्ये अतिशयेन शोभनकर्मा । (१०-११५-२) अपस्वितमः कर्मवत्तमः मत्वर्थो लुप्तः -सा.व्या. ।

दक्षम्-प्राग्व्याख्यातम् । फलवत्कर्मसाधकं दक्षपदवाच्यविवेचनात्मकधीकौशलं दधाते मित्रावरुणौ । प्राक् पूतदक्षपदार्थप्रतिपादनावसरे दक्षपदं सामान्येन बलनामसु पठितमपि तस्य धीवैशिष्ट्यमुपपादितम् । अस्यामृचि मित्रावरुणौ सुसङ्गतौ क्रियाकौशलविशिष्टं विवेचनात्मक-ज्ञानकौशलं धारयमाणावित्युक्तम् । अनेन युक्तयोर्मित्रावरुणयोः आयत्तं किमपि कर्मविशिष्टं ज्ञानमित्युक्तं भवति । 'पूतदक्षं' मित्रं 'रिशादसं' वरुणं इति उक्तेश्च प्रकारान्तरेणेदमुक्तं ग्राह्यम् । किमिदं कर्म ज्ञानं वा ? कौ नाम मित्रावरुणौ ? का वा तयोः प्रसक्तिः ? ब्रूमः–

सूक्तेऽस्मिन् प्रथमस्य तृचस्य सोमाभिषवे प्राणसन्नाहो विषयः, यदर्थं वायुरेक एव पृथक् स्तुतः । ततः परं यजमाने मानव ऋतचिद्विलासाय मनोमयभूपरिष्कारः प्रस्तुतः, यदर्थं धिया युक्तौ इन्द्र-वायू आगमनाय प्रार्थितौ । अस्य सूक्तान्ततृचस्य विषयस्तु, ऋतस्य व्यापारो

मनोमयसत्त्वं साधनीय इति; येन धीः सम्यक् साधिता स्यात् कर्म च विपुलं भवेत् । एतत्कृते मित्रावरुणावाहूतौ । इमौ च, मित्रो वरुणोऽर्यमा भग इति चतुर्णां एकसदनानां (९-१३६-२) व्यूहभूतानां मध्ये प्रसिद्धौ द्वन्द्वभूतौ । तादृशीं प्रदीप्तां धियं साधयितुं प्रभू इमौ 'घृताचीं धियं साधन्ता' इति प्रथममुक्तम् ।

अत्रेदमवधेयम् । सूक्तमन्त्रेष्वियं ऋषीणां शैली लक्ष्यते, यत् कमपि विषयं प्रतिपाद्य अन्यस्य क्रमणे पूर्वोक्तं किमपि मुख्यं पदं पुनः प्रयुज्य उत्तरत्र तदनुरणनेन साधनेन पूर्वोत्तरयोः सम्बन्धं व्यञ्जयन्ति मन्त्रकृतः । एवं कथितपदस्य पुनः कथनं सप्रयोजनं भवति । प्रायः सर्वेषामृषीणां समाना रीतिरियम् । इह धीपदं बन्धकं उभयोः। 'धिया नरा' 'धियं साधन्ता' इति पुनः प्रयुक्तमवधार्यम् ।

अथ धीपदं विचार्यम् । यद्यपि मतिर्बुद्धिवाचको धीपर्यायो वा भवति साधारणव्यवहारे, तथाऽपि वेदे मतेर्धियश्च भेदो बोध्यः । मतिर्मननं सामान्यबुद्धिर्मनसो वृत्तिरवस्था वा भवति, रोषावेगादिभावमपि क्वचित् प्रतिपादयति मन्युशब्दवत् । धीस्तु धारणावती प्रज्ञा, धिया धीवृत्तिश्च आक्षिप्यते। अनया सह आगमनाय इन्द्रवायू पूर्वं प्रार्थितौ । अधुना तु, ऋतचित्सम्पर्क-तद्व्यवहाराय सा धी साधिता समृद्धा प्रदीप्ता च विधातव्या । तत्कृते मित्रावरुणौ स्तुत्या आहूतौ । उक्तलक्षणे धीक्षेत्रे ऋतचितेर्व्यापारस्य विशुद्धप्रतिफलनस्य वा प्रतिबन्धकद्वयं वर्तते । तत्रैकं ऋतानृतसाध्वसाधुविवेचनमालिन्यम् , येन सत्यसम्बन्धिव्याकुलतापत्तिः । अन्यत्तु, बहूनि कारणानि सम्भूय धियः सत्यसम्बद्धमभ्युदयं प्रतिरुध्य धीवृत्तीनां परस्पर- साधुयोगविघातकं वैषम्यमापाद्य धियो दारिद्र्यं तद्गतवृत्तीनां वैतथ्यं च विदधते । अतः सकलविधकलुषध्वंसिनः सर्वमावृत्य तिष्ठतो वरुणस्य प्रसादात्पारिशुद्ध्यसिद्धिर्भवति । स ऋतचितिशक्त्यात्मना मानुषे वर्तमानोऽसेमदभिवृद्धिं विघातयतः सर्वान् विरोधिनः पापान् अन्तयति। अतो 'रिशादसं' वरुणं इत्युक्तम् । वरुण इव मित्रश्च ऋतज्योतिः शक्तयात्मना वरुणासाधितनैर्मल्यविभवेन साधुयोग-सौख्य-सौहार्द-साम्यादिव्यवस्थां धियः सम्पादयन् मानुषे ऋतानन्दविधानाय प्रभवति ।

एवं युक्तौ देवावुभौ ऋतेन साधनेन ऋतं वर्धयन्तौ मानुषे ऋतसम्पर्कं धत्तः । बृहन्तं क्रतुमस्मासु भुञ्जाते। 'बृहन्' महान् विततो विपुलो वा भूमा, 'क्रतुः' अमोघोऽध्यवसायः कर्मभाक् । स ह्यावश्यको भवति प्राप्तव्यद्वये । ज्योतिः शक्तिश्चेति द्वयमिदं अपेक्षणीयं भवति

वेदर्षीणामन्तर्यजने । ऋतस्य ज्योतिर्व्यापारात् धीर्दीप्ता भवति (घृताचीम्) । ऋतस्य शक्ति-व्यापाराद् अध्यवसायोऽविफलो बृहन् भवति । क्रतुं बृहन्तम् । ऋतस्य विभवेषु स्वयमाविष्कुर्वत्सु कर्मवती कर्मणि प्रवृत्ता विवेचनात्मिका धीः स्थिरीकृता धारिता भवति (दक्षं दधात अपसम्)। पूता विवेचिका निर्णणायिका वा धीः ऋतानुरोधेन कर्मणि प्रवर्तते, ऋतस्य

शक्तिविशेषः सञ्जायते, इन्द्रवायुविहितं कर्म सम्यक् साधयति । तस्मात् 'क्रतोः' 'धिय'श्च मालिन्यव्याकुलतादेर्विमोक्षः । इममर्थं अन्यत्र बहूनि मैत्रावरुणसूक्तानि समर्थयन्ति । विस्तरभिया नोदाह्रियन्ते । मित्रं वयं हवामहे वरुणं सोमपीतये। जज्ञाना पूतदक्षसा । ऋतेन यावृतावृधा ऋतस्य ज्योतिषस्पती । ता मित्रावरुणा हुवे' इति निदर्शनमेकं मेधातिथेः (१.२३.४-५)।

इदं च बोध्यम् । ऋतप्राप्तिनिःश्रेयसलाभश्च यज्ञस्य फलम् । तच्च अग्नेर्विशिष्टं साध्यं कर्मेति प्रथमे अग्निसूक्ते सूक्ष्मशः सूचितम् । द्वितीये सूक्ते, सोमाभिषवे वाय्विन्द्राभ्यां साधनीयं पूर्वाङ्गं कर्म, ततः परं मित्रावरुणयोः कार्यम्, येन ऋतवर्धनेन पवमानानन्दबलेन द्वारा च मानुषस्य साधारणमनोमयसत्त्वसन्नाहनं च प्रतिपादितानि ।

ऋग्वेदे सर्वत्र ऋषीणामन्तर्यागे द्विधा प्रयत्नः क्रियमाणो लक्ष्यते। तत्रैकः, मानुषस्य शरीरे मनसि च परिपाकः, येन प्राप्तव्यमुद्दिश्य तयोः सन्नाहनं भवति । अन्यस्तु, ऋतस्य सोमपदवाच्यतदानन्दस्य चाधिगमः, येन मानुषे अमृतस्वरूपस्य परदैवतस्य कार्पपरिपूरणं भवति ।।

।। इति प्रथमाष्टके प्रथमाध्याये चतुर्थो वर्गः ।।

### ।। अथ पञ्चमो वर्गः ।।

### (सूक्तम् ३)

### ऋक्संहिता पदपाठसहिता

१२ मधुच्छन्दा वैश्वामित्रः । १-३ अश्विनौ; ४-६ इन्द्रः;
७-९ विश्वेदेवाः; १०-१२ सरस्वती । गायत्री ।

**अश्विना यज्वरीरिषो द्रवत्पाणी शुभस्पती । पुरुभुजा चनस्यतम् ।। १ ।।**

अश्विना । यज्वरीः । इषः । द्रवत्पाणी इति द्रवत्ऽपाणी । (शुभस्पती इति) । शुभः । पती इति । पुरुऽभुजा । चनस्यतम् ।। १ ।।

ऋग्भाष्यम्

**अन्नानि यज्ञयोग्यानि क्षिप्रहस्तौ शुभाधिपौ ।**
**बहुगोपौ बहुभुजौ नोयो यजतमश्विनौ ।**
**यज्ञे वृतान् स्वभागान् वा संयोजयतमाशु वै ।**
**आशुवानाद्गतेरश्वी क्षिप्रावगतितोऽथवा ।**
**अश्नुतेऽखिलमित्येवाप्यश्वजत्वात्तथाऽश्विनौ ।। १ ।।**

**ऋग्भाष्यटीका–** अश्विनेत्यादि द्वादशर्चं सूक्तम् । तत्राद्यस्तृच आश्विनः । द्वितीय ऐन्द्रः । तृतीयो वैश्वदेवः । चतुर्थः सारस्वतः । अश्विनायज्वरी । अन्नानि । **हे द्रवत्पाणी** क्षिप्रहस्तावौदार्यवन्तौ । **शुभस्पती** शुभाधिपौ पारस्करप्रभृतित्वात्सुट् । **पुरुभुजौ** बहुगोपौ बहोर्विश्वस्य गोप्तारौ बहुभुजौ वा बहोर्भोक्तारौ भुजेरुभयार्थत्वात् । **अश्विनौ** युवां **यज्वरीरिषः** यज्ञयोग्यानि यज्ञसाधनान्यन्नानि यजतेः करणे वरट् प्रत्ययः । नः **चनस्यतं** योजयतं प्रयच्छतम् । यद्वा यज्वरीरिषो यज्ञे वृतान् स्वभागान् संयोजयतम् । स्वार्थे णिच् स्वीकुरुतम् । आशुवा इति द्रवत्पाणी इत्यस्याभिप्रायान्तरम् । अश्विशब्दं निर्वक्ति– **आशुवानादिति ।।** वानादित्यस्यैव व्याख्यानं **गतेरिति ।** आशूपपदाद्वागतिगन्धनयोरित्यस्मादिनिः । उपपदस्य ह्रस्वलोपौ । क्षिप्रावगतितोऽथवा । गत्यर्थानामवगत्यर्थत्वात् । अखिलं जगदश्नुते व्याप्नोति । अशूव्याप्तावित्यतो विन् । एवशब्दो व्याप्तेरनुपचरितत्वार्थः । अश्वजत्वादित्यश्वशब्दादपत्यार्थे तद्धिता इतीन् । एतच्च व्याख्यानं देवतान्तर एवेति सूचनायाश्विनावित्याह । अश्वरूपात्सूर्याज्जातत्वात् ।। १ ।।

**मन्त्रार्थमञ्जरी–** अथ तृतीयं द्वादशर्चं वर्गद्वयात्मकं सूक्तम् । तत्र आद्यस्तृच आश्विनः । द्वितीय ऐन्द्रः । तृतीयो वैश्वदेवः । चतुर्थः सारस्वतः । (हे) द्रवत्पाणी, द्रवन्तौ पाणी ययोस्तौ द्रवत्पाणी क्षिप्रहस्तावौदार्यवन्ताविति यावत्, शीघ्रप्रदाविति वा । (शुभपतीशुभस्पती, शुभाधिपौ, पारस्करादित्वात्सुडागमः, अध्यापकास्तु– 'शुभः । पती इति' इति पदद्वयं वदन्ति । पुरुभुजा, पुरुभुजौ, 'सुपां सुलुक्' इत्याकारादेशः पुरोर्बहोर्विश्वस्य भुजौ गोप्तारौ, बहोर्भोक्ताराविति वा, 'भुज पालनाभ्यवहारयोः' इत्युभयार्थाद्भुजेः क्विप् । (हे) अश्विना, अश्विनौ, आशुगतिमत्त्वाच्छीघ्रावगतिमत्त्वाद्वाश्विपदवाच्यौ भगवद्रूपविशेषौ प्रसिद्धदेवौ वा । (युवाम्) इति योग्यतयान्वेति । यज्वरीः, यज्ञयोग्यानि, यज्ञसाधनानीति यावत्, यजतेः करणे वरट्प्रत्यये 'टिड्ढाणञ्'

इत्यादिना ङीप्प्रत्ययः, 'यस्येति च' इति रेफस्थाकारलोपः । इषः अन्नानि, हवींषीति यावत् । (नः) चनस्यतम्, प्रयच्छतम् । यद्वा यज्वरीः यज्ञे वृतान् । इषः, स्वभागान् । चनस्यतम्, स्वीकुरुतमित्यर्थः । आशुपदोपपदात् 'वागतिगन्धनयोः' इत्यस्मादिनिप्रत्ययः आशुपदआकार-ह्रस्वत्वोवर्णलोपौ ध्येयौ ।। प्रसिद्धाश्विपक्षे– अश्वरूपात्सूर्याज्जातत्वादित्यपि ध्येयम्, अश्व-पदादपत्यार्थे 'तद्धिताः' इति सूत्रेणेन्प्रत्यये 'यस्येति च' इत्यकारलोपे 'अश्विन्' इति सिद्धेः ।।

**स्कन्द–** 'अश्विदेवतोऽपि तृच एव । **हे अश्विना ! यज्वरीः** करणस्येयं कर्तृत्वेन विवक्षा । इज्यते याभिस्ता यज्वरीः । **इषः** हविर्लक्षणान्यन्नानि । **द्रवत्पाणी** क्षिप्रहस्तौ, शीघ्र-कारिणावित्यर्थः । शुभस्पती 'शुभम्' (निघ १,१२) इत्युदकनाम । तस्याधिपती । **पुरुभुजा** बहूना हविषां भोक्तारौ । **चनस्यतं** 'चन इत्यन्ननाम' (या ९,१६) । तदिच्छतं चनस्यतम् । इच्छया चात्र तत्पूर्वकं भक्षणं लक्ष्यते । अस्मदीयानि हवींषि भक्षयतमित्यर्थः ।। १ ।।

**वेङ्कटमाधव–** यजमानस्य यष्टॄणि अन्नादीनि क्षिप्रहस्तौ उदकस्य ईश्वरौ बहुभोजनौ **चनस्यतं** चनोऽन्नं तदिच्छतम् । इह वृत्तस्थस्य कर्मणः पदान्तरेण पृथक् व्यक्तं निर्देशः समानशब्दैरनेकत्र भवति 'गवां गोपतिः' (ऋ.१,१०१,४) 'सोमं सोमपातमा' (ऋ.१,२१,१), 'द्रविणोदा द्रविणसः' (ऋ.१,१५,७) इति । इह तु समानार्थेन, इषश्चनस्यतमिति ।। १ ।।

**मुद्गल–** द्वादशर्चं तृतीयं सूक्तम् । आद्यस्तृच आश्विनः । द्वितीय ऐन्द्रः । तृतीयो वैश्वदेवः । चतुर्थस्सारस्वतः । तेषु तृचेपु प्रतिपाद्या वाय्वादयः सरस्वत्यन्ताः सप्तसङ्ख्याकाः प्रउगशस्त्रस्य देवताः । मधुच्छन्दा ऋषिः । गायत्रम् ।

हे **अश्विनौ** युवां **इषः** हविर्लक्षणान्यन्नानि **चनस्यतं** इच्छतं भुञ्जाथामित्यर्थः । कीदृशीरिषः ? **यज्वरीः** यागनिष्पादिकाः । कीदृशावश्विनौ ? **द्रवत्पाणी** हविर्ग्रहणाय द्रवद्भ्यां धावद्भ्यां पाणिभ्यामुपेतौ । **शुभस्पती** शोभनस्य कर्मणः पालकौ । **पुरभुजा** विस्तीर्णभुजौ ।। १ ।।

**सायण– हे अश्विनौ** युवां **इषः** हविर्लक्षणान्यन्नानि **चनस्यतं** इच्छतं भुञ्जाथामित्यर्थः । यद्यपि चनःशब्दोऽन्नवाची तथापि इषः इत्यनेन सह नास्ति पुनरुक्तिदोषः, इच्छामुपलक्षयितुं प्रयुक्तत्वात् । 'वक्तव्यमुवाच,' 'समूलकाषं कषति' इत्यादौ यथा पुनरुक्त्यभावस्तद्वत् । कीदृशीरिषः । **यज्वरीः** यागनिष्पादिकाः । कीदृशावश्विनौ । **द्रवत्पाणी** हविर्ग्रहणाय द्रवद्भ्यां

धावद्भ्यां पाणिभ्यामुपेतौ । **शुभस्पती** शोभनस्य कर्मणः पालकौ । **पुरुभुजा** विस्तीर्णभुजौ बहुभोजिनौ वा ।

अश्विना । 'आमन्त्रितस्य' (पा.सू.६,१,१९८) इति षाष्ठिकमाद्युदात्तत्वम् । यज्वरीः । यागकरणानामप्यन्नानां 'असिश्छिनत्ति' इतिवत् स्वव्यापारे कर्तृत्वविवक्षया 'सुयजोर्ङ्वनिप्' (पा.सू.३,२,१०३) इति ङ्वनिप्प्रत्ययः । 'वनो र च' (पा.सू.४,१,७) इति ङीप् । तत्संनियोगेन रेफादेशः । प्रत्ययद्वयस्य 'अनुदात्तौ सुप्पितौ' (पा.सू.३,१,४) इत्यनुदात्तत्वात् धातुस्वर एवावशिष्यते । इषःशब्दे शसोऽनुदात्तत्वात् प्रातिपदिकस्वर एव शिष्यते । द्रवन्तौ धावन्तौ पाणी ययोस्तयोः सम्बोधनं द्रवत्पाणी इति । तस्यामन्त्रिताद्युदात्तत्वं न पुनराष्टमिको निघातः 'अपादादौ' इति प्रतिषेधात् । इषः इति पूर्वपदस्य 'सुबामन्त्रिते' (पा.सू.२,१,२) इति पराङ्गवद्भावेन 'मित्रावरुणावृतावृधौ' इतिवत् अपादादित्वमिति चेत्, न । तत्र सामानाधिकरण्येन परस्परान्वयात् । इह तु इषः द्रवत्पाणी इत्यनयोः सरस्वतिशुतुद्रिपदवत् असामर्थ्येन प्रयुक्तत्वात् । शुभः इति 'शुभ शुम्भ दीप्तौ' इत्यस्य सम्पदादित्वात् भावे क्विबन्तस्य षष्ठ्येकवचनम् । 'षष्ठ्याः पतिपुत्र' (पा.सू.८,३,५३) इति विसर्जनीयस्य सत्वम् । तस्य पती इत्यामन्त्रिते परतः पराङ्गवद्भावात् आमन्त्रिताद्युदात्तत्वम् । न पुनराष्टमिको निघातः । तस्मिन् कर्तव्ये द्रवत्पाणी इति पूर्वस्यामन्त्रितस्य 'आमन्त्रितं पूर्वमविद्यमानवत्' (पा.सू. ८,१,७२) इत्यविद्यमानवद्भावेन पादादित्वात् 'अपादादौ' इति प्रतिषेधात् ।

ननु 'मित्रावरुणावृतावृधौ' इतिवत् 'नामन्त्रिते समानाधिकरणे' (पा.सू.८,१,७३) इत्यविद्यमानवद्भावप्रतिषेधेन भवितव्यमिति चेत्, न । मित्रावरुणपदं हि सामान्यवचनमिति युक्तः तस्याविद्यमानवत्त्वप्रतिषेधः । द्रवत्पाणीपदं तु न तथेति वैषम्यात् । पुरुभुजा पुरू विस्तीर्णौ भुजौ ययोस्तौ । आमन्त्रिताद्युदात्तत्वम् । 'सुपां सुलुक्' (पा.सू.७,१,३९) इति डादेशः । पुरु बहु भुञ्जाते इति वा । चनस्यतं इत्यत्र 'चायतेरन्ने ह्रस्वश्च' (उ.सू.४,६३९) इति 'चायृ पूजानिशामनयोः' इत्यस्य असुन्प्रत्यये आकारस्य ह्रस्वे चानुकृष्टे नुडागमे च (उ.सू.४,६३६) । सत् आत्मनः इच्छतीति 'सुप आत्मनः क्यच्' (पा.सू.३,१,८) । 'सनाद्यन्ताः (पा.सू.३,१, ३२) इति धातुत्वात् लोण्मध्यमद्विवचनम् । क्यचः प्रत्ययस्वरेणोदात्तत्वम् । शपा एकादेशे कृते 'एकादेश उदात्तेनोदात्तः' (पा.सू.८,२,५) इत्युदात्तः । उपर्याख्यातस्य लसार्वधातुकानु-

दात्तत्वे स्वरितत्वम् । न च 'तिङ्ङतिङः' (पा.सू.८,१,२८) इति निघातः । पूर्वस्यामन्त्रितस्याविद्यमानवद्भावेन पदादपरत्वात् पादादित्वाद्वा तदप्राप्तेः ।। १ ।।

**सिद्धाञ्जनम्–** प्रथमानुवाकस्य तृतीयं द्वादशर्चं सूक्तम् , तत्र चत्वारस्तृचः। प्रउगशस्त्रस्य देवताः प्रागुक्ताः। अश्विनेत्यादिः प्रथमस्तृच आश्विनः ।।

**अश्विना** हे अश्विनौ **यज्वरीः** यागनिष्पादिकाः **इषः** प्रेरणात्मिकाः शक्तीः **चनस्यतम्** भुञ्जाथाम् । अश्विनोस्त्रीणि विशेषणानि । **द्रवत्पाणी** क्षिप्रगपादौ **शुभस्पती** शुभस्य पालकौ **पुरुभुजा** बहूपभोक्तारौ ।

इषः- अन्नानि प्रायशः कर्मठव्याख्यानम् । तथा चनः अन्नं इति च । तदनुसारि द्रवत्पाण्यादीनां तात्पर्यम् । प्रेरणार्थात् धातोरपि निष्पनत्वात् प्रेरणवेगार्थे परिग्राह्यः ।

चनस्यतम्- अन्नमपि भोग्यं भवति, तस्मादन्तरर्थे चनः भोग्यं, इच्छतं उपभुञ्जाथां इति ग्राह्यम् ।

द्रवत्पाणी- औचित्यात् पाण्युपलक्षितः पादो बोध्यः । अन्यत्र (२.३१.२) 'पाण्युपलक्षितैः पादैः' इति सायणोऽप्याह ।

शुभस्पती- दीप्तौ भोगक्षमे शोभार्थे शुभे च वर्तते शुभधातुः । अत्र द्वितीयोऽर्थ उपपन्नः 'पुरुभुजा' 'चनस्यतम्' इति पदद्वयेऽपि भोगार्थकशब्दश्रवणात् ।

सामान्येनायं मन्त्रार्थो भवति– द्रुतगतिकौ भोगाधीश्वरौ बहुभोगसमर्थौ अश्वाधिरूढौ देवावश्विनी सम्बोधितौ, ताभ्यां यजननिष्पत्तिनिमित्तभूताः प्रेरयित्री यागसम्बन्धिनीः शक्तीराक्रम्य अधिष्ठाय वा सामोदं भाव्यमिति । विशेषः पुरस्ताद् विचार्यते तृचस्यान्ते ।

### ऋक्संहिता पदपाठसहिता

**अश्वि॑ना॒ पुरु॑दंससा॒ नरा॒ शवी॑रया धि॒या । धिष्ण्या॒ वन॑तं॒ गिरः॑ ।। २ ।।**

**अश्वि॑ना । पुरु॑ऽदंससा । नरा॑ । शवी॑रया । धि॒या । धिष्ण्या॑ । वन॑तम् । गिरः॑ ।।२।।**

ऋग्भाष्यम्

**बहुकर्मकृतौ सौख्यवीर्यात्मिक्या धिया गिरः ।**
**अस्मदीयाः सम्भजतं धिष्ण्यौ सर्वाश्रयौ सदा ।।**

**ऋग्भाष्यटीका–** अश्विना पुरुदंससा । बहुकर्मकृतौ । **हे अश्विनौ** पुरु बहु दंसः कर्म ययोस्तौ **पुरुदंससौ** बहुकर्मकृतौ । नरौ पूर्ववत् । धिष्ण्यशब्दः स्थानपर्यायः । सदा सर्वाश्रयौ युवाम् । **शवीरया** शं सुखं वीरं वीर्यं तदात्मिक्या धिया । **गिरः** अस्मदीयाः स्तुतिरूपा वाचः । **वनतं** वन-सम्भक्तौ सम्भजतं स्वीकुरुतम् ।। २ ।।

**मन्त्रार्थमञ्जरी–** पुरुदंससा, पुरु बहु दंसः कर्म ययोस्तौ पुरुदंससौ, द्विवचनस्याकारादेशश्छान्दसः, बहुकर्मकृतावित्यर्थः । नरा, नरौ निर्विकारावविनाशिनाविति वा, 'वायविन्द्रश्च सुन्वत' इत्यस्यामृचि व्याख्यातमेतत्पदम् । धिष्ण्या, धिष्ण्यौ सदा सर्वाश्रयौ, 'धिष्ण्यमोको निवसनम्' इत्यभिधानात् । अश्विना, अश्विनौ । (युवाम्) शवीरया, शं सुखम्, वीरं वीर्यम्, सुखवीर्यात्मिक्या । धिया । गिरः, अस्मदीयाः स्तुतिरूपा वाचः । वनतम्, भजतम्, 'वन सम्भक्तौ' इति धातोः, स्वीकुरुतमिति यावत् ।। २ ।।

**स्कन्द–** 'अश्विना **हे अश्विनौ पुरुदंससा** 'दस' (निघ २,१) इति कर्मनाम । बहुकर्माणावित्यर्थः । **नरा** मनुष्याकृती । **शवीरया** 'शु' (निघ २,१५) इति क्षिप्रनाम । ईर गतौ । क्षिप्रमीरणं गमनं शरीरम् । अथवा 'शव' (निघ २,९) इति बलनाम । परबलस्य प्रेरणमपनोदः शवीरः । तेन यौ यातः गच्छतः तौ, शीघ्रगामिनौ परबलापनोदगामिनौ वेत्यर्थः । अथवा अनवग्रहत्वात् पदस्य याशब्दो विभक्तेरादेशो न याते रूपम् । शवीरशब्दस्तु पूर्ववत् कर्तृसाधनः । शीघ्रगामिनौ परबलस्य प्रेरयितारौ वेत्यर्थः । शवतेर्वा गत्यर्थस्य शवीरशब्दः । यज्ञान् शत्रून् वा प्रति गन्तारावित्यर्थः । धिया प्रज्ञया चित्तेन । महताऽऽदरेणेत्यर्थः । **धिष्ण्या** 'धिषणा' (निघ १,११) इति वाङ्नाम । तस्याः पुत्रौ धिष्ण्यौ । अपत्ये यत्प्रत्ययो द्रष्टव्यः । अथवा 'धा' (निघ ३,९) इति प्रज्ञानाम । ष्णै वेष्टने । धीः वेष्टयित्री सर्वार्थग्रहणसमर्था ययोस्तौ धिष्णौ । धिष्णावेव धिष्ण्यौ । अत्यन्तप्रज्ञावित्यर्थः । **वनतम्** वन षण सम्भक्तौ । सम्भजतम् । **गिरः** अस्मदीया स्तुतिलक्षणा वाचः ।। २ ।।

**वेङ्कटमाधव–** अश्विनौ । आश्चर्यभूतविविधकर्माणौ नेतारौ क्षिप्रमुपद्रुतं प्रति गमनं यस्याः तया । **धिया** कर्मणा **धिष्ण्या** धिषणार्हौ । धिषणा वाक् । तया स्तोतव्यौ भजेथां स्तुतीः ।।

**मुद्गल–** अश्विना! हे अश्विनौ! युवां **गिरः** अस्मदीयाः स्तुतीः **धिया** आदरयुक्तया बुद्ध्या **वनतम्** सम्भजतं स्वीकुरुतम् । कीदृशावश्विनौ ? **पुरुदंससा** बहुकर्माणौ । **नरा** नेतारौ । **धिष्ण्या** धाष्टर्ययुक्तौ । कीदृश्या धिया ? **शवीरया** गतियुक्तया ।। २ ।।

**सायण– अश्विना** हे अश्विनौ युवां **गिरः** अस्मदीयाः स्तुतीः **धिया** आदरयुक्तया बुद्ध्या **वनतं** सम्भजतं स्वीकुरुतम् । कीदृशावश्विनौ ? **पुरुदंससा** बहुकर्माणौ । षड्विंशतिसङ्ख्याकेषु कर्मनामसु 'दंसः' (नि.२,१,३) इति पठितम् । **नरा** नेतरौ । **धिष्ण्या** धाष्टर्ययुक्तौ बुद्धिमन्तौ वा । कीदृश्या धिया ? **शवीरया** गतियुक्तया अप्रतिहतप्रसरयेत्यर्थः ।

अश्विना इत्याद्यामन्त्रितचतुष्टयस्य षाष्ठिकमामन्त्रिताद्युदात्तत्वम् । पादादित्वात् न अष्टमिको निघातः । पुरुदंससा इत्यपि हि पादादिरेव 'आमन्त्रितं पूर्वमविद्यमानवत्' (पा.सू.८,१,७२) इति पूर्वस्याविद्यमानवत्त्वात् । 'नामन्त्रिते समानाधिकरणे' (पा.सू.८,१,७३) इति पूर्वस्य सामान्यवचनत्वेन अस्य विशेषवचनत्वेन नाविद्यमानवत्त्वमिति चेत्, न । अश्विशब्दवत् पुरुदंसः-शब्दस्यापि अश्विनोरेव रूढ्या प्रयुज्यमानतया सामान्यशब्दत्वात् । सामान्यवचनं नाविद्यमानव-दित्युक्तेऽर्थात् परस्य विशेषवचनत्वावगमात् । उभयोः सामान्यवचनत्वे पर्यायत्वेन पौनरुक्त्यात् सहाप्रयोग इति चेत्, न । गुणविशेषसङ्कीर्तनवत् प्रसिद्धानेकनामविशेषसम्बन्धसङ्कीर्तनस्यापि स्तुत्युपयोगेन सप्रयोजनत्वात्; निष्प्रयोजनपुनर्वचनस्यैव पुनरुक्तत्वात् । अश्विपुरुदंसःशब्दयोरे-कार्थवृत्तित्वेऽपि पर्यायत्वादेव प्रवृत्तिनिमित्तभेदाभावेन असामानाधिकरण्यादपि नाविद्यमानवत्त्व-प्रतिषेधः । भिन्नप्रवृत्तिनिमित्तानामेव ह्येकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम् । अश्विशब्दस्याश्व-सम्बन्धो निमित्तं पुरुदंसःशब्दस्य तु बहुकर्मसम्बन्ध इति प्रवृत्तिनिमित्तभेद इति चेत्, न । तद्धि द्वयं व्युत्पत्तिमात्रनिमित्तं न प्रवृत्तिनिमित्तम् । व्युत्पत्तिनिमित्तभेदमात्रेणापि सामानाधि-करण्याभिधाने वृक्षमहीरुहशब्दयोरपि तथात्वप्रसङ्गः । अत एव हि 'इडे रन्तेऽदिते सरस्वति प्रिये प्रेयसि महि विश्रुत्येतानि ते अघ्निये नामानि' (तै.सं.७,१,६,८) इत्यत्र सहस्रतमीप्रशंसोप-योगित्वेन इडादिशब्दानां 'एतानि ते अघ्निये नामानि' इति वचनेन पर्यायाणामपि अनेकविशिष्ट-नामसम्बन्धनिबन्धनस्तुत्यर्थत्वेनैव सहप्रयोगः । स्तुत्युपयोगेनैव व्युत्पत्तिनिमित्तभेदविवक्षायामपि

पर्यायत्वेनासामानाधिकरण्यादेव 'नामन्त्रिते' इति निषेधाभावात् 'आमन्त्रितं पूर्वमविद्यमानवत्' इति पूर्वपूर्वस्याविद्यमानवत्त्वात् सर्वेषां षाष्ठिकमाद्युदात्तत्वम् । तद्वत् प्रकृतेऽपि । 'कृशॄपृकटि-पटिशौटिभ्य ईरन्' (उ.सू.४,४७०) इत्यतः 'ईरन्' इत्यनुवृत्तौ 'बहुलवचनादन्यत्रापि' इत्यनेन 'शु गतौ' इति धातोरीरन्प्रत्यये कृते सति नित्त्वात् शवीरयाशब्द आद्युदात्तः । धियेत्यत्र 'सावेकाचः' (पा.सू.६,१,१६९) इति विभक्तिरुदात्ता । वनतमित्यत्र शपः पित्त्वात् लोण्मध्यमद्विवचनस्य लसार्वधातुकत्वाच्च 'वन षण सम्भक्तौ' इति धातूदात्तत्वमेव शिष्यते । न च 'तिङ्ङतिङ' (पा.सू.८,१,२८) इति निघातः, पूर्वामन्त्रितस्याविद्यमानवत्त्वेन पादादि-त्वात् । गिरः । सुपाऽनुदात्तत्वे प्रातिपदिकस्वरः शिष्यते ।। २ ।।

**सिद्धाञ्जनम्– अश्विना** हे अश्विनौ अश्वारूढौ कीदृशौ ? **पुरुदंससा** बहुकर्माणौ (बहुविधक्रियानिष्पादकौ) **नरा** नरौ नेतारौ पुरुषौ (बलिनौ देवौ) युवां **गिरः** वाचः (अस्मदीयाः स्तोत्रवाचः) **वनतं** सम्भजतम् । (तासु रमध्वम्) **धिष्ण्या** हे धारयितारौ (धियां सन्तौ) तयोः कया निमित्तभूतया गिरां सम्भजनं स्यात् ? **शवीरया धिया** स्फुद्बलभूयस्या धारणात्मिकया-बुद्ध्या ।

पुरुदंससा– आश्चर्यभूतविविधकर्माणौ इत्येके व्याख्यातारः । पुरु बहु, दंसः कर्म, एतावन्निर्विवादम् । आश्चर्गभूतेति विशेषणोपादानं व्याख्यानमात्रम् , न पदार्थः । नात्र दोषः ।

नरा–नृपदं बलवाचकं वेदे। यथा नृम्णम् । नृणां नृतमः । बलवत्वादेव नरो नेतार इति व्याख्यानं साधु स्यात् । नराः पुरुषाः मानुषा देवाश्च वेदे । स्त्रीदेवतास्तु गणाः।

शवीरया–बहुधा निर्वचनमाहुः । शव इति स्फुरद्बलम् , तस्माद् ईरन् प्रत्ययः। धियो विशेषणं अस्मदभिमतम् ।

धिष्ण्या-अत्रापि बहूनि निर्वचनानि। धिषणा धिष्णा तत्र भवौ धिष्ण्यौ इति चेत् 'शवीरया धिया' इत्यनेन स्यादर्थसङ्गतिः ।

अयं साधारणोऽर्थः –हे अश्वारूढौ विविधकार्यसाधकौ बलवन्तौ देवौ धियां ध्रियमाणौ धारयितारौ, युवां स्फुरद्बलसाधनीयाप्रतिहतप्रसरया बुद्ध्या असमदीयस्तोत्रवाक्षु मोदध्वम् इति ।।

ऋक्संहिता पदपाठसहिता

**दस्रा॑ युवा॒कवः॑ सु॒ता नास॑त्या वृ॒क्तब॑र्हिषः । आया॑तं रुद्रवर्तनी ॥ ३ ॥**

दस्रा॑ । यु॒वाक॑वः । सु॒ताः । नास॑त्या । वृ॒क्तऽब॑र्हिषः । आ । या॒त॒म् । रु॒द्र॒व॒र्त॒नी॒ इति॑ रुद्रऽवर्तनी ॥ ३ ॥

ऋग्भाष्यम्

**भेदकौ सर्वशत्रूणां दस्रौ सम्बन्धिनौ हि वाम् ।**
**सुता युवाकवः सोमा यज्वनः स्तृतबर्हिषः ।**
**नासत्यौ नासिकासंस्थौ नैव चासद्गुणौ कचित् ।**
**रुजां द्रावणतो रुद्रो वायुस्तदनुवर्तनात् ।**
**स्नेहतोनुवशत्वाद्वा तन्मार्गगतितोऽथवा ।**
**कस्मिन्न्वहमिति श्रुत्या वासुदेवोऽश्विनावपि ।**
**रुद्रवर्तनिशब्दोक्ताः ..................... ॥ ३ ॥**

**ऋग्भाष्यटीका–** दस्रा । भेदकौ । हे **रुद्रवर्तनी नासत्यौ दस्रौ** दसुविभेदने ततोरः । सर्वशत्रूणां भेदकौ । **वृक्तबर्हिषः** अनेकार्थत्वाद्धातूनाम् । स्तृतबर्हिषः । स्तृतं विस्तृतं बर्हिर्येन तस्य । यज्वनः **सुताः** सोमाः **युवाकवः** वां युवयोः सम्बन्धिनः । युवयोरिदमित्यर्थे आकुप्रत्ययो युष्मदो युवादेशश्च । युवयोरर्थे सम्पादिताहि यस्मात्तस्मादायातम् । नासत्यशब्दं व्याख्याति– **नासत्याविति** ॥ नासाशब्दाद्भवार्थे त्यप् ह्रस्वश्च । नासिकाभिमानित्वात् । एतद्देवतान्तर-विषयम् । विष्णुश्चेत्कचिदसद्गुणो नैवेति । सच्छब्दपर्यायः सत्यशब्दः सद्गुणवाची । सद्भावे साधुभावेचेति वचनात् । न सत्या असत्या असद्गुणाः । न विद्यन्ते असत्या ययोस्तौ नासत्यौ । न भ्राडित्यादिना नस्यालोपः । रुद्रवर्तनिशब्दार्थमाह– **रुजामिति** ॥ रुक्शब्दे कर्मण्युपपदे द्रुगतावित्यस्मादन्तर्णीतण्यर्थाड्डः उपपदस्यच दः । वासुदेवः स्नेहतस्तदनुवर्तनाद्रुद्रवर्तनिशब्दोक्तः । अश्विनावप्यनुवशत्वेन तदनुवर्तनाद्रुद्रवर्तनिशब्दोक्तौ । वृतुवर्तते । भावे अनिः । रुद्रस्य वर्तनिः रुद्रमनुवृत्तिर्ययोस्तौ तथोक्तौ । अथवा तन्मार्गगतितः । रुद्रस्य सम्बन्धिनी वर्तनिर्मार्गो ययोरिति वा वासुदेवोऽश्विनावपि रुद्रवर्तनिशब्दोक्ताः । अस्त्वश्विनोर्वायुमार्गगतिस्तद्भृत्यत्वात् वासुदेवस्य तु कथमित्यत आह– **कस्मिन्निति** ॥ कस्मिन्वहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामीति स प्राणमसृजतेति श्रुत्या वासुदेवस्यापि साऽवगम्यते ॥ ३ ॥

**मन्त्रार्थमञ्जरी–** रुद्रवर्तनी, रुजं रोगादिदुःखं द्रावयतीति व्युत्पत्त्या रुद्रो वायुः, तं स्नेहतो भृत्यत्वाद्वानुवर्तनाद्यथाक्रमं भगवद्रूपविशेषौ प्रसिद्धाश्विनौ च रुद्रवर्तनिशब्दोक्तौ । नासत्या, नासत्यौ, हरी चेत्– नासमीचीनगुणौ सद्गुणवन्तावित्यर्थः, प्रसिद्धदेवौ चेत्– नासिकाभिमानित्वान्नासासंस्थावित्यर्थः । दस्रा, दस्रौ सर्वशत्रुभेदकौ । (हे अश्विनौ) वृक्तबर्हिषः, वृक्तं विस्तृतं बर्हिर्येन तस्य वृक्तबर्हिषो यजमानस्य सम्बन्धिनः । सुताः, सोमाः । युवाकवः, युष्मदीयाः, युष्मदर्थे सम्पादिता इति यावत् । (तस्मात्) आ यातम्, आगच्छतम् । रुजूशब्दे कर्मण्युपपदे 'द्रु गतौ' इत्यस्मादन्तर्णीतण्यर्थाड्डुप्रत्यये टिलोपे पूर्वपदान्तस्य दकारे 'रुद्रः' इति रूपम् । 'वृतु वर्तने' इत्यतो भावेऽनिप्रत्यये 'पुगन्त' इति गुणे 'वर्तनिः' इति सिद्धम् । रुद्रस्य वायोर्वर्तनिरनुवृत्तिर्ययोस्तौ 'रुद्रवर्तनी' इति विग्रहः । 'नासत्या' इत्यस्याद्येऽर्थे– सत्यशब्दसच्छब्दयोः पर्यायत्वात् 'सद्भावे साधुभावे च' (गी.१७।२६) इत्यादेः सत्यशब्दः सद्गुणवाची, सत्या नेत्यसत्याः, न विद्यन्तेऽसत्या ययोस्तौ 'नासत्यौ' इति विग्रहः, 'नभ्राण्नपान्नवेदानासत्यानमुचि' इत्यादिना निपातनान्नलोपाभावः । द्वितीयेऽर्थे तु– नासाशब्दाद्भवार्थे त्यप्प्रत्यये पूर्वस्य ह्रस्वे 'नासत्य' इति रूपम् । 'दसु विभेदने' इत्यतो रक्प्रत्यये 'दस्र' इति ज्ञेयम् । धातूनामनेकार्थत्वादत्र वृक्तशब्दो विस्तृतार्थो ध्येयो न तु छिन्नेति ।। युवयोरिदमित्यर्थ आकुप्रत्यये युष्मदो युवादेशे 'युवाकु' इति रूपम् ।। ३ ।। **इति प्रथम आश्विनस्तृचः ।। १ ।।**

**स्कन्द– हे दस्रा** दस्रनामानौ । यद्यपि चाश्विनोरेको दस्रनामा, नासत्यनामाऽपरः, तथापि द्विवचननिर्देशादन्यतरनिर्देशेनापि सर्वत्र साहचर्यादुभयोः प्रतिपादनम् । क्रियाशब्दविज्ञानं वा । तसु उपक्षये, दसु च इत्येतस्य, दसि दर्शनदशनयोरित्येतस्य वा दस्रौ । उपक्षपयितारौ शत्रूणां, दर्शनीयौ वेत्यर्थः । **युवाकवः** युवां कामयन्त इति युवाकवः। कमेरेडुप्प्रत्यय औणादिकः । युवेत्यपि च प्रत्ययलक्षणेन युष्मदो युवादेशः । युष्मत्पानकामा इत्यर्थः । के । **सुताः** सोमा । अथवा यु मिश्रण इत्यस्य युवाकवः । मिश्रिताः । केन । सामर्थ्याद् वसतीवर्येकधनादिभिरद्भिः श्रयणैर्वा । सुता अभिषुताश्च सोमाः । **हे नासत्या** नासत्यनामानौ । अन्यतरनाम्ना चेदं साहचर्यादुभयप्रतिपादनम् । न वा असत्यौ । द्वौ प्रतिषेधौ प्रकृतार्थे गमयतः । सत्यावेव । **वृक्तबर्हिषः** सोमाः । भवदुपदेशनार्थं बर्हिर्वेद्यां स्तीर्णमित्यर्थः । एतद् ज्ञात्वा **आयातं** आगच्छतम् । **हे रुद्रवर्तनी** रुदे रौतेर्वा रुद्रा शब्दवती वर्तनी गमनमार्गो ययोस्तौ रुद्रवर्तनी । यतो यतः शत्रुशब्दः, ततस्ततो गन्तारौ । स्वयं वा पथि गच्छन्तौ शब्दस्य कर्तारावित्यर्थः ।।

**वेङ्कटमाधव–** दर्शनीयौ युष्मत्पानकामाः सोमाः 'सत्यावेव नासत्यावित्योर्णवाभः । सत्यस्य प्रणेताराावित्याग्रायणः' (या ६,१३) । **वृक्तबर्हिषः** सोमाः स्तरणार्थं छिन्नबर्हिषः आगच्छतं युद्धे घोरगमनमार्गौ ।। ३ ।।

**मुद्गल– हे अश्विनौ आ यातं** अस्मिन् कर्मण्यागच्छतम् । किमर्थमिति तदुच्यते । **सुताः** युष्मदर्थं सोमा अभिषुताः । तान् स्वीकर्तुमिति शेषः । कीदृशावश्विनौ । **दस्रा** दस्रौ शत्रूणामुपक्षपयितारौ । **नासत्या** अनृतभाषणरहितौ । **रुद्रवर्तनी** रुद्राणां शत्रुरोदनकारिणां शूरभटानां वर्तनिर्मार्गो ययोस्तौ रुद्रवर्तनी । कीदृशाः सोमाः ? **युवाकवः** वसतीवरीभि एकधननामभिश्चाद्भिर्मिश्रिताः । **वृक्तबर्हिषः** वृक्तानि मूलैर्वर्जितानि बर्हींष्यास्तरणरूपाणि येषां सोमानां ते वृक्तबर्हिषः ।। ३ ।।

**सायण–** अत्र अश्विना इत्यनुवर्तते । हे अश्विनौ **आ यातं** अस्मिन् कर्मण्यागच्छतम् । किमर्थमिति तदुच्यते । **सुताः** युष्मदर्थं सोमा अभिषुताः तान् स्वीकर्तुमिति शेषः । कीदृशावश्विनौ । **दस्रा** दस्रौ शत्रूणामुपक्षपयितारौ । यद्वा । देववैद्यत्वेन रोगाणामुपक्षपयितारौ । 'अश्विनौ वै देवानां भिषजौ' (ऐ.ब्रा१,१८) इति श्रुतेः । **नासत्या** असत्यमनृतभाषणं तद्रहितौ । अत्र यास्कः– 'सत्यावेव नासत्यावित्यौर्णवाभः । सत्यस्य प्रणेताराावित्याग्रायणः' (निरु:६,१३) इति । **रुद्रवर्तनी** रुद्रशब्दस्य रोदनं प्रवृत्तिनिमित्तं 'यदरोदीत्तद्रुद्रस्य रुद्रत्वम्' (तै.सं.१,५,१,१) इति तैत्तिरीयाः । 'तद्यद्रोदयन्ति तस्माद्रुद्राः' इति वाजसनेयिनः । रुद्राणां शत्रुरोदनकारिणां शूरभटानां वर्तनिर्मार्गो धाटीरूपो ययोस्तौ रुद्रवर्तनी । यथा शूरा धाटीमुखेन शत्रून् रोदयन्ति तद्वदेतावित्यर्थः । **युवाकवः** इत्यभिषुतसोमानां विशेषणम् । वसतीवरीभिरेकधनाभिश्चाद्भिर्मिश्रिता इत्यर्थः । **वृक्तबर्हिषः** वृक्तानि मूलैर्वर्जितानि बर्हींष्यास्तरणरूपाणि येषां सोमानां ते वृक्तबर्हिषः । यद्वा । 'भरताः' इत्यादिष्वष्टसु ऋत्विङ्नामसु 'वृक्तबर्हिषः' (नि.३,१८,४) इति । तदानीं तृतीयार्थे प्रथमा । ऋत्विग्भिरभिषुता इत्यन्वयः ।

दस्रा । 'आमन्त्रितस्य' (पा.सू.६,१,१९८) इत्याद्युदात्तः । युवाकवः । 'यु मिश्रणे' । युवन्ति मिश्रीभवन्ति वसतीवरीप्रभृतिभिः श्रयणद्रव्यैरिति युवाकवः । कटिकुप्यादिषु (उ.सू.३, ३५७) अगणितस्यापि यौतेः बहुलग्रहणात् काकुप्रत्ययः । तस्य कित्त्वेन गुणाभावादुवङादेशः । प्रत्ययस्वरेण आकार उदात्तः । न विद्यतेऽसत्यमनयोरिति नासत्यौ । 'नभ्राण्नपान्नवेदानासत्या' (पा.सू.६,३,७५) इत्यादिना प्रकृतिवद्भावात् नञो नलोपाभावः । पादादित्वेनानिघातादा-

मन्त्रिताद्युदात्तत्वम् । वृक्तबर्हिषः । वृक्तं मूलैर्वर्जितं बर्हिरास्तीर्णं येषां सोमानां ते वृक्तबर्हिषः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरेण क्तप्रत्ययस्वर एव शिष्यते । आ इत्यत्र 'उपसर्गाश्चाभिवर्जम्' (फि.सू.८१) इत्युदात्तः । रुद्रवर्तनी । 'आमन्त्रितस्य च' (पा.सू.८,१,१९) इत्यामन्त्रित-निघातः ।। ३ ।।

**सिद्धाञ्जनम्– दस्रा** कर्मनिष्पादकौ **नासत्या** द्रुतगमनशीलौ हे अश्विनौ **वृक्तबर्हिषः** वृक्तं वर्जितं (अनुपयुक्तैः वर्जनीयैरपावनैर्वा वस्तुभिरिति शेषः) बर्हिः आस्तीर्णं येन तस्य यजमानस्य मम **युवाकवः** बलिनः सोमाः **सुताः**। **हे रुद्रवर्तनी** रुद्रः गतिवेगेन भीषणः वर्तनिः मार्गः ययोस्तौ युवां **आयातं** आगच्छतम् ।

दस्रा– उपक्षयार्थाद्दस्यतेर्धातोः क्वचिद् , दर्शनार्थाद् दंशनार्थाद्वा दंसतेर्दस्यतेर्वा क्वचिद् दस्र-दस्मपदयोर्निष्पत्तिमाह सायणः । तस्माद् दर्शनीयोपक्षपयित्राद्यर्थः नैकः प्रोक्तः । अपरोक्तार्थे गृहीतं दस्रपदं दंसवत् कर्मसम्बन्धित्वं द्योतयेत् । यथा 'पुरुदंससा' इत्यत्र प्रतिपादितम्, न तु उपक्षय-दर्शनीयादिकम् । तथेहापि। तस्माद् दस्रौ कर्मणां निष्पादकौ इति वयम् ।

युवाकवः– युवां कामयन्ते, मिश्रणार्थाद् यौतेर्निष्पन्नत्वात् मिश्रणं कामयन्ते, इति चान्यत्र सायणः । 'युवावते यौवनवता बलिना' इति (३.६२.१) सायणव्याख्या । अत्रापि युवशब्द-लक्षितं वीर्यं, तच्छालिनः सोमाः ग्राह्याः ।

नासत्या– न असत्यौ सत्यौ एवेति पूर्वे। इदं न साधु लक्ष्यते । वेदे देवतानाम्नामेकैकमपि तत्तद्देवताधर्मगुणस्वरूपान्यतमबोधकं भवति । अश्विनौ नासत्याविति नञ्द्वयेन सत्यत्वदृढीकरणे किं प्रयोजनम् ? तथा मित्रावरुणादीनां ऋतसम्बन्धो वैशिष्ट्यं द्योतयति तथा अश्विनोर्न । नासत्यशब्दोऽश्विनोरेव नाम । तस्मात् किमपि वैशिष्ट्यप्रतिपादकं स्यात् । तच्च नसतेर्गत्यर्था-न्निरुक्तं भवति । 'द्रवत्पाणी' 'रुद्रवर्तनी' अश्विनौ अश्वारूढौ द्रुतगतिप्रसिद्धौ । तस्माद्युक्त-मस्मदुक्तं निर्वचनम् ।

वृक्तबर्हिषः– अग्निं परितः (वेद्यां सोमार्थं वा) छिन्नमूलानां दर्भाणां आस्तरणं कृतम्। तस्माद् येषां सोमानां बर्हिः आस्तीर्णं वृक्तं मूलवर्जितं ते सुताः (सोमाः) इति प्रथमाबहुवचनमिति सायणप्रभृतयः । षष्ठ्येकवचनान्तं अध्याहृतस्य यजमानस्य विशेषणमुक्तमस्माभिः । एवं स्थूलार्थस्य कर्मोपयोगिनो न क्षतिः । अन्तरर्थे बर्हिः यजने देवानामागमनस्थानसन्नहनम् ।

रुद्रवर्तनी– 'रुद्रस्येव मार्गो ययोस्तौ' इति प्रायः। रक्तवर्णे द्वे अश्विनी नक्षत्रे इति नव्यानामेकेषां कल्पना। गतिवेगस्य भीषणत्वात् मार्गो रुद्रोऽनयोरिति वयम् ।

कर्मनिवर्तनपटू द्रुतगमनौ वेगभीषणमार्गौ हे अश्विनौ ! वेद्यां आसनं सिद्धं कृतं मया, इमे वीर्यशालिनः सोमा अभिषुताः, तान् उपभोक्तुं आगच्छतमिति ऋषिर्ब्रूते ।

अथास्य तृचस्य तात्पर्यावगाहने अश्विनावधिकृत्येदं वक्तव्यम् । काऽपि भवतु तयोः कथा पुराणेषु प्रथिता, तावुद्दिश्य नव्यैः कृता नक्षत्रात्मकत्वकल्पना मिथ्या सत्या वा भवतु, प्राच्यया पाश्चात्यया वा अश्विनस्वरूपनिर्णायिकया स्थूलदृष्ट्या नास्ति कार्यमस्माकम् । अन्तरर्थ-विधामवलम्ब्य अश्विनोस्तत्त्वं प्रतिपित्सूनां नो बाह्यार्थपक्षीयाभिप्रायपरीक्षाया नावसरः । अथेदमश्विनोर्विवरणं भवति–

अश्विनौ यमौ अश्वारूढौ । अश्वो बलोपलक्षकः, विशेषतः प्राणबलं प्राणानुगृहीतनाडीबलं प्राणमेव वा लक्षयत्यश्वः । तस्मादश्वः क्रियाशक्तिनिष्पादकस्य प्राणस्य प्राणबलस्य वा सङ्केतो भवति । यद्यपि सर्वेषां देवानां ऋतसम्बन्धित्वादिः सामान्यधर्मो लक्ष्यते, तयाऽप्यनयोर्वैशिष्ट्यं सर्वेषां आश्विनसूक्तानां परीक्षणेनावगम्यते। भोगशक्तिभूयिष्ठौ, सौम्यं मधु पिबन्तौ, तदिच्छन्तौ, आरोग्यं रोगिणे यच्छन्तौ भिषजाविति बहुषु मन्त्रेषु वर्णितौ। विशेषतः पक्षिवत् , तथा मनोवच्च वेगवन्तौ। रौद्रोऽनयो रथवेगः । उषा सूर्यदुहिता रथं तयोरारुह्य याति प्रिया तयोर्योषा । यद्यपि मयःपदवाच्यपरमसुखस्य भावयित्रोस्तयोः क्रियाभोगनिष्पादनमेव प्रधानं कर्म, तथाऽपि ऋतशक्तिविशेषाविमौ मतिमत्तमकर्माणौ अखण्डसत्त्वलक्षकसमुद्रसमुत्थौ ऋतसत्त्वं ऋतबलं चाधिजग्मुषा धीबलविशेषेण परमजीवनसम्मदसम्पत्तीनां मनोमयतां सम्पाद्य दधाते, महते कर्मणे यदपेक्षितं प्रेरणबलं तद्विधत्तः, येन ज्योतिष्मता तमसस्पारं तारयतो नरं यजमानम् । इमौ नरं मतिभुवः सर्वा अतिक्रम्य स्वयं नावा तारयत इत्येवमर्थकानि सूक्तानि द्रष्टव्यानि ।

निदर्शनाय मन्त्रभागाः केचन स्वल्पश इह भवन्ति–

'मनोजवसा वृषणा मदच्युता...अवसे पूर्वीभिः पुरुभोजसा' (८-२२-५६) 'आ नो अश्वावदश्विना वर्तिर्यासिष्टं मधुपातमा नरा' (८-२२-१७) युवमत्यस्यावनक्षथो...स्वसा यद् वां विश्वमूर्ती भराति । वाजायेट्टे मधुपाविषे च ।' (१-१८०-२) 'मध्वः पिबन्ता उषसः

सचेथे' (१-९८०-१) 'अधि श्रिये दुहिता सूर्यस्य रथं तस्थौ पुरुभुजा शतोतिम्' (६-६३-५) 'युवोरुषा अनुश्रियं परिज्मनोरुपाचरत् । ऋता वनथो अक्तुभिः ।' (१-४६-१४) 'यदन्तरिक्षे पतथः पुरुभुजा' (८-१०-६) 'उत त्या दैव्या भिषजा शं नः करतो अश्विना' (८-१८-८) 'उभा हि दस्रा भिषजा मयोभुवोभा दक्षस्य वचसो बभूवथुः' (८-८६-१) 'एषो उषा अपूर्व्या व्युच्छति प्रिया दिवः । स्तुषे वामश्विना बृहत् ।।' (१-४६-१) 'या दस्रा सिन्धुमातरा मनोतरा रयीणाम् । धिया देवा वसुविदा ।।' (१-४६-२) 'या नः पीपरदश्विना ज्योतिष्मती तमस्तिरः तामस्मे रासाथामिषम् ।।' (१-४६-६) 'आ नो नावा मतीनां पातं पाराय गन्तवे। युञ्जाथामश्विना रथम् ।। (१-४६-७) एतादृशैः शतशो दृश्यमानैरन्यैश्च मन्त्रैर्विचारितैराश्विनं तत्त्वं अस्माभिरुक्तविधं सुगमं युक्तं च भवेदित्यसंशयम् ।

अत्र अश्विने तृचे, बहुभोगभृतौ आशुगतिकौ अश्विनौ यजननिष्पादिनीः प्रेरणशक्तीरुपभोक्तुं प्रार्थितौ (यज्वरीरिषः)। इमाश्च सोममदवैभवजा इति बोध्यम् ।

तथा च हेतुरुक्तः । चितेः अभिनवरूपाविष्कारसमर्था वाचः (गिरः) उद्गताः, यजनक्षेत्रं च सिद्धं कृतम् (वृक्तबर्हिषः), वीर्यवत्तमाः सोमाश्चाभिषुताः (युवाकवः सुताः), तस्माद् अश्विनोर्गिरां सम्भजनायागमनमवश्यम् । कार्यसाधकधौरेयाभ्यां ताभ्यां धियां गिरः स्थापयित्वा तासां तद्रूपतामापाद्य तत्स्वीकारः साधनीय धिष्ण्या धिया वनतं गिरः । कार्यसाधकोऽतो सोमाभिषवबलप्रेरितेन रौद्रवेगेन निष्कण्टकमार्गो आगच्छेताम् (रुद्रवर्तनी) । अश्वाधिरूढाभ्यामाभ्यां प्रदेयं तु सर्वथा बलं, वीर्यम् । याज्ञिकशक्तिभोगे हि रतिस्तयोः। तदिदं तयोः साधनीयम्– वाक् सत्त्वसमृद्धधीस्वरूपसात्कर्तव्या, कर्मणः कार्यनिष्पादकत्वं सम्पाद्यम्, प्रयाणं क्षिप्रगमनं निर्वर्तनीयम् , क्रियादक्षता आशुता इतीदं द्वयं अश्विनोः शक्त्युल्लासलभ्यम् ।

एवं आध्यात्मिकार्थानुसारेण ऋषीणां भाषासु सर्वत्र अर्थसाङ्गत्यम्, प्रसादनिर्भरः, अभिप्रायाणा-मेकरूपता च स्पष्टं लक्ष्यन्ते। बाह्यार्थव्याख्यास्तु, वेदो गहनतमज्ञानगर्भित इति नाभिमन्यन्ते, चिरन्तनं गूढार्थविवरणपरं सम्प्रदायं ऐतिह्यं वा न लक्षयन्ति, अत एव असङ्गतार्थान् ब्रुवते, विविधाशयव्याकुलव्यामोहपरिभूतमन्त्रार्थविवरणधोरणीमवलम्ब्य परमार्षपथात् पतिताः पण्डितानापि पातयन्ति व्यामोह्य ।

द्वितीयमिव सोमयागे विनियुक्तमिदं तृतीयं सूक्तं आध्यात्मिकभावभूयिष्ठम् । द्वितीयसूक्तायान्तिमतृच इव अत्राप्यन्तिमे सारस्वते तृचे, ऋतस्य प्राप्तिः, ऋतचितेः अधिगम एवं यज्ञस्य फलमिति स्पष्टतरं लक्ष्यते । द्वितीयसूक्त इवेहापि प्राणबलात्मिकाः प्राणशक्तयो देवताः प्रार्थ्यन्ते। तत्राहूतो वायुः, येन प्राणभृतोऽश्वाः प्राणबलविशेषाः सम्भृत्योपकल्प्यन्ते । इह तु, अश्विनावाहूतौ, याभ्यामश्वाः प्राणशक्तयोऽधिरुह्योपयुज्यन्ते । द्वितीये वाय्वनुग्रहात् प्राणव्यापारादृषिः मनोमयभुवं साधयितुं प्रवृत्तः । इहापि आश्विनबलादिन्द्रबलावाप्तये प्रवर्तते। एवं सर्वत्र वेदे देवताव्यवस्था, भाषाव्यवस्था, अर्थसाम्यं, इति सर्वं एकरीतिकं समञ्जसं सूपपादं च भवति ऋजु पश्यतां चिन्तकानाम् ।। ३ ।।

ऋक्संहिता पदपाठसहिता

**इन्द्रा याहि चित्रभानो सुता इमे त्वायवः । अण्वीभिस्तना पूतासः ।। ४ ।।**

इन्द्र । आ । याहि । चित्रभानो इति चित्रऽभानो । सुताः । इमे । त्वाऽयवः ।। अण्वीभिः । तना । पूतासः ।। ४ ।।

ऋग्भाष्यम्

**चित्रं भद्रं रतं चितौ ।**
**चिद्रतेश्चायनीयत्वाददनाद्वा चितोऽभिदा ।**
**तादृशा रश्मयो ज्ञानमस्येति भगवान् परः ।**
**चित्रभानुरिति प्रोक्तस्तेजो वा तादृशं प्रभोः ।**
**त्वदिच्छव इमे सोमाः पटीभिः सूक्ष्मतन्तुभिः ।**
**विस्तृत्य शोधिताः सूक्ष्मप्रमाभिर्वा मनांसि च ।**
**सोमानां मनसां चैव देवताः सोमरश्मिगाः ।**
**सोमभृत्याः समस्तस्य सोम एवाधिपो हरिः ।। ४ ।।**

**ऋग्भाष्यटीका– इन्द्रायाहि चित्रभानो ।।** चित्रभानुशब्दं व्याख्यातुं चित्रशब्दार्थं तावदाह– **चित्रमिति ।।** चित्रं भद्रमित्येकोऽर्थः । चित्रमालेख्यमद्भुतमित्यभिधानात् । चितौ सर्वजीवचैतन्ये नियामकतया रतमित्यपरः । चिच्छब्दोपपदाद्रमतेर्डः । चिद्रतेः अजडसुखात्मकत्वादित्यन्यः । चिच्च सा रतिश्चेति चित्रम् । पदसंज्ञानाश्रयणाज्जश्त्वाभावः । चायनीयत्वाद्दर्शनीयत्वा-

त्पूजनीयत्वाद्वेत्यर्थान्तरं चायृपूजानिशामनयोरित्यस्मात्कर्मणीत्रप्रत्ययो डिच्च । चितश्चैतन्यस्य स्वरूपस्यैवादनादनुभवाद्वा चित्रम् । रातेरदनार्थत्वमनेकार्थत्वाद्धातूनाम् । इदानीं चित्रभानुशब्दं व्याख्याति– **अभिदेति ।** तादृशाश्चित्राः । भानुशब्दार्थं रश्मय इत्यनूद्य ज्ञानमिति व्याख्यातम् । ननु चितौ रतत्वादीनां भगवद्धर्माणां कथं ज्ञानतेजोधर्मत्वमित्यत उक्तम्– **अभिदेति ।।** ज्ञानतेजसोः परमेश्वरेणाभिदाकारणेनोक्तं युक्तमित्यर्थः । भगवांश्चेत्तर्हि परो मुख्यश्चित्रभानुः अन्यस्तु यथासम्भवमिति भावः । हे चित्रभानो इन्द्रायाहि । कुतः । **अण्वीभिः** सूक्ष्माभिः । सूक्ष्मतन्तुभिः सम्यक्शोधनसाधनीभिः पटीभिरिति शेषः । **तना** विस्तृत्य । तनोतेराकारः क्त्वार्थे । **पूतासः** पूताः शोधिताः । **इमे सुताः** सोमाः **त्वायवः** त्वदिच्छवो वर्तन्ते । युष्मदः क्यच् । तदंतादुः । दुर्घटत्वादिदमध्यात्मं योजयति– **सूक्ष्मेति ।।** सूक्ष्मार्थग्राहिणीभिः प्रमाभिः । मनांसि शोधितानीति शेषः ।

ननु बाह्यसोमस्थानेऽध्यात्मं मनसो ग्रहणे किं निमित्तम् । देवतैक्यमित्याह– **सोमानामिति ।।** देवतास्वपि कथं सोमशब्दवृत्तिर्येन रसेषु मनःसुच तद्वृत्तिरित्यत उक्तं– **सोमरश्मिगा इति । सोमभृत्या इति च ।** सोमरश्मिगततया सोमभृत्यतया च तत्र सोमशब्दप्रवृत्तिस्तत्सम्बन्धाद्रसेषु मनःसुचेति भावः । पक्षान्तरमाह– **समस्तस्येति ।।** समस्तस्य सोमानां मनसांच । सोम एव देवता । तथा च न परंपराश्रयणमिति भावः । ननु परमेश्वरः समस्तस्य देवता तत्कथमेतदित्यत आह– **अधिप इति ।।** हरिः सर्वस्याधिप एव नत्वभिमानीत्यर्थः । अनेन त्वायव इत्येतदपि समर्थितं भवति ।। ४ ।।

**मन्त्रार्थमञ्जरी–** चित्रभानो, चित्रा अद्भुताः 'चित्रमालेख्यमद्भुतम्' इत्यभिधानात्, भानवो ज्ञानानि तेजांसि वा यस्य तस्य सम्बुद्धिः । (हे) इन्द्र, निरुक्तोऽयं शब्दः प्राक्, हे वज्रिन्, इत्यर्थः । अण्वीभिः, सूक्ष्माभिः सूक्ष्मतन्तुभिः । (पटीभिः) इति शेषः तना, 'तनु विस्तारे' इत्यतः क्त्वाप्रत्ययार्थ आकारप्रत्ययः, तनित्वा विस्तृत्येति यावत् । पूतासः, पूताः, 'आज्जसेरसुक्' शोधिताः । इमे । सुताः सोमरसास्तदभिमानिन इति यावत्, तेषां पूतत्वमभिमन्य-मानद्वारेति ज्ञेयम् । त्वायवः, त्वदिच्छवः । (सन्ति) कदा रसानिन्द्र आस्वादयिष्यतीति कामयमानाः सन्ति, युष्मदशब्दादिच्छार्थे क्यच्प्रत्यये युष्मदस्त्वादेशे (पृषोदरादित्वादन्त्यस्याकारे तदन्तादुप्रत्यये) 'त्वायवः' इति सिद्धेः । (तस्मात्) आ याहि, आगच्छ । अध्यात्मम्–

अण्वीभिः, सूक्ष्माभिः सूक्ष्मार्थविषयिकाभिः । (प्रमाभिः) इति शेषः । तना, विस्तृत्य । पूतासः, शोधिता निर्मलीकृताः । इमे । सुताः, मनांसि तदभिमानिन इत्यर्थः, सोमाभिमानिन एव मनोभिमानिन इति प्रागेव अवादिष्म । त्वायवः (सन्ति) । (तस्मात्) आ याहि । इति ।।४।।

**स्कन्द–** ''ऐन्द्रोऽयं पश्चमस्तृचः ।'' योऽयं पश्चमस्तृच, स इन्द्रदेवत । **हे इन्द्र आयाहि** आगच्छ । **चित्रभानो** भानुर्दीप्तिः । विचित्रदीप्ते पूतनीयदीप्ते वा । किं कारणम् । **सुता** अभिषुता **इमे सोमाः । त्वायवः** त्वत्कामाः अपि नामेन्द्रोऽस्मान् पिबेत् इत्येवंकामा इत्यर्थः । नचाभिषुता एव केवलं, किन्तर्हि, **अण्वीभिः तना पूतासः** अण्व्य इत्यङ्गुलीनाम । 'वारेण शश्वता तना (ऋ.९, १,६), 'तना पुनान आयुषु (ऋ.९,१५,८) इत्यादिदर्शनात् तनाशब्दो दशापवित्रवचनः । अण्वीभिर्दशापवित्रेण च पूताः । हस्तेन दशापवित्रमादाय पूता अपीत्यर्थः ।।

**वेङ्कटमाधव–** इन्द्र आगच्छ चित्रदीप्ते । सुता 'इमे सोमाः त्वत्कामा भवन्ति । अङ्गुलीभिः दशापवित्रेण च पूताः ।। ४ ।।

**मुद्गल–** हे **चित्रभानो** चित्रदीप्ते इन्द्र । अस्मिन् कर्मणि **आयाहि** आगच्छ । **सुताः** अभिषुताः **इमे** सोमाः **त्वायवः** त्वां कामयमाना वर्तन्ते । **अण्वीभिः** ऋत्विजामङ्गुलीभिः सुता इत्यन्वय । किश्च एते सोमाः **तना** नित्यं **पूतासः** पूताः शुद्धाः ।। ४ ।।

**सायण– चित्रभानो** चित्रदीप्ते **हे इन्द्र** अस्मिन् कर्मणि **आयाहि** आगच्छ । **सुताः** अभिषुताः **इमे** सोमाः **त्वायवः** त्वां कामयमाना वर्तन्ते । **अण्वीभिः** । 'अग्रुवः' इत्यादिषु द्वाविंशतिसङ्ख्याकेष्वङ्गुलिनामसु 'अण्व्यः' (नि.२,५,२) इति पठितम् । ऋत्विजामङ्गुलिभिः सुता इत्यन्वयः । किश्च एते सोमाः **तना** नित्यं **पूतासः** पूताः शुद्धाः दशापवित्रेण बहुधा शोधितत्वात् । इन्द्रशब्दं यास्को बहुधा निर्वक्ति– 'इन्द्र इरां दृणातीति वेरां ददातीति वेरां दधातीति वेरां दारयतीति वेरां धारयतीति वेन्दवे द्रवतीति वेन्दौ रमत इति वेन्धे भूतानीति वा । तद्यदेनं प्राणैः समैन्धंस्तदिन्द्रस्येन्द्रत्वमिति विज्ञायत इदंकरणादित्याग्रायण इदंदर्शनादित्यौपमन्यव इन्दतेर्वैश्वर्यकर्मण इञ्छत्रूणां दारयिता वा द्रावयिता वा दरयिता च यज्वनाम्' (निरु.१०,८) इति । अस्यायमर्थः– 'दृ विदारणे' इति धातुः । इरामन्नमुद्दिश्य तन्निष्पादकजलसिद्ध्यर्थं दृणाति मेघं विदीर्णं करोतीतीन्द्रः । 'डुदाञ् दाने' इति धातुः । इरामन्नं वृष्टि-

निष्पादनेन ददातीतीन्द्रः । 'धाञ् पोषणार्थः' । इरामन्नं तृप्तिकारणं सस्यं दधाति जलप्रदानेन पुष्णातीतीन्द्रः । इरामुत्पादयितुं कर्षकमुखेन भूमिं विदारयतीतीन्द्रः । पूर्वोक्तपोषणमुखेनेरां धारयति विनाशराहित्येन स्थापयतीतीन्द्रः । इन्दुः सामो वल्लीरसः । तदर्थं यागभूमौ द्रवति धावतीतीन्द्रः । इन्दौ यथोक्ते सोमे रमते क्रीडतीतीन्द्रः । 'ञिइन्धी दीप्तौ' इति धातुः । भूतानि प्राणिदेहान् इन्धे जीवचैतन्यरूपेणान्तः प्रविश्य दीपयतीतीन्द्रः । एतदेवाभिप्रेत्य वाजसनेयिन आमनन्ति– 'इन्धो ह वै नामैष योऽयं दक्षिणेऽक्षन्पुरुषः । तं वा एतमिन्धं सन्तमिन्द्र इत्याचक्षते । परोक्षेण परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः' (बृ.उ.४,२,२) इति । 'तद्यत्' इत्यादिकं ब्राह्मणान्तर-वाक्यम् । तत्तत्र इन्द्रविषये निर्वचनमुच्यते इति शेषः । यद्यस्मात् कारणादेनं परमात्मरूपमिन्द्रं देवं प्राणैः वाक्चक्षुरादीन्द्रियैः प्राणापानादिवायुभिश्च सहितं समैन्धन् उपासका ध्यायेन सम्यक् प्रकाशितवन्तः, तत् तस्मात् कारणात् इन्द्रनाम सम्पन्नम् । अस्मिन् पक्षे इध्यते दीप्यते इति कर्मणि व्युत्पत्तिः । आग्रायणनामको मुनिः 'इदंकरणादिन्द्रः' इति निर्वचनं मन्यते । इन्द्रो हि परमात्मरूपेणेदं जगत्करोति । औपमन्यवनामको मुनिरिदंदर्शनादिन्द्र इति निर्वचनमाह । इदम् इत्यापरोक्ष्यमुच्यते । विवेकेन हि परमात्मानमापरोक्ष्येण पश्यति । एतदेवाभिप्रेत्य आरण्यकाण्डे समाम्नायते– 'स एतमेव पुरुषं ब्रह्म ततममपश्यदिदमदर्शमितीइँ । तस्मादिदन्द्रो नामेदन्द्रो ह वै नाम तमिदन्द्रं सन्तमिन्द्र इत्याचक्षते परोक्षेण परोक्षप्रिया इव हि देवाः' (ऐ.आ.२,४,३) इति । 'इदि परमैश्वर्ये' इति धातुः । स्वमायया जगद्रूपत्वं परमैश्वर्यम् । तद्योगादिन्द्रः । अनेनाभिप्रायेण श्रूयते– 'इन्द्रो मायाभिः पुरुरूप ईयते' (ऋ.सं.६,४७,१८) इति । इनशब्दस्येश्वरवाचकस्य अकारलोपे सति नकारान्तं इन् इति पदं भवति । 'दॄ भये' इति धातुः । स च परमेश्वरः शत्रूणां दारयिता भीषयितेतीन्द्रः । 'द्रु गतौ' इति धातुः । शत्रूणां द्रावयिता पलायनं प्रापयितेतीन्द्रः । यज्वनां यागानुष्ठायिनामादरयिता भयस्य परिहर्ता । एवमेतानि निर्वचनानि द्रष्टव्यानीति ।

इन्द्र इत्यत्र आमन्त्रिताद्युदात्तत्वम् । आ इत्यत्र निपातत्वेनाद्युदात्तः । चित्रभानो । पदात् परत्वादामन्त्रितनिघातः । त्वामिच्छन्तीत्यर्थे युष्मच्छब्दात् 'सुप आत्मनः क्यच्' (पा.सू.३,१,८) । 'प्रत्ययोत्तरपदयोश्च' (पा.सू.७,२,९८) इति मपर्यन्तस्य त्वादेशः । 'क्याच्छन्दसि' (पा.सू.३,२,१७०) इति क्यजन्तात् उप्रत्ययः । त्वद्यव इति प्राप्तौ 'युष्म-

दस्मदोरनादेशो' (पा.सू.७,२,८६) इत्यविभक्तावपि हलादौ व्यत्ययेन आत्वम् । उकारः प्रत्ययस्वरेणाद्युदात्तः । अणुशब्दः सौक्ष्म्यवाचकः तद्योगात् प्रकृतेऽङ्गुलीषु वर्तते । 'वोतो गुणवचनात्' (पा.सू.४,१,४४) इति ङीषि प्राप्ते व्यत्ययेन ङीन् । नित्वादाद्युदात्तः । तना इत्ययं निपातो नित्यमित्यर्थे निपातत्वादाद्युदात्तः । पूतासः । 'आज्जसेरसुक्' (पा.सू. ७,१,५०) इत्यसुक् ।। ४ ।।

**सिद्धाञ्जनम्–** ऐन्द्रे तृचे प्रथमामाह– **हे इन्द्र चित्रभानो** बहुविधरश्मे (बहुप्रकारक-प्रभासमृद्धेत्यर्थः) **आयाहि** आगच्छ । **सुताः** अभिषुताः, **इमे** सोमाः **त्वायवः** त्वां कामयमानाः (त्वत्कामा वर्तन्ते) एते सोमाः अण्वीभिः अङ्गुलीभिः इति व्याख्यातारः (सूक्ष्माभिः शक्तिभिः)। **तना** विस्तृत्य **पूतासः** शुद्धाः कृता इत्यर्थः ।

'अण्वीभिः, तना' इति पदद्वयमेवात्र विचारयितव्यम् । इन्द्रपदार्थो यास्कोदाहृतनिर्वचन-बाहुल्यात् अव्यवस्थितविकल्पत्वाच्च न विचार्यते । इन्द्रमधिकृत्य सारतः प्रागुक्तम् । चित्रपदार्थविवरणे व्याख्यानभेदोऽप्यकिञ्चित्करः । 'अण्वी सूक्ष्मा' 'तना विस्तृतेन' इति सायणव्याख्यानं, अन्यत्र 'एष धिया याति अण्व्या' (९-१-७) 'यच्चिद्धि शश्वता तना' (१-२६-६) इत्यादिस्थलेषु द्रष्टव्यम् । 'तना दशापवित्रम्' इति च सायणोऽन्यत्र ब्रूते । इह स्कन्दस्वामी तमेवार्थमाह । अण्व्यः अङ्गुलयः इति निघण्टुबलात् सर्वे व्याख्यातार आहुः । अयं तेषामाशयः ऋत्विजः सोमरसशोधनं कुर्वन्ति । तत्र एकं साधनं हस्तः अङ्गुलीभिः (अण्वीभिः) लक्षितः, अन्यत्तु विशोधनी भवति । तद् दशापवित्रं तनापदेनोक्तम् । हस्तेन दशापवित्रमादाय शोधिताः सोमाः पूता इति भावः ।

अत्र याथार्थ्यं सविमर्शं ग्राह्यम् । आश्विनानुग्रहसम्पत्तेः परं ऐन्द्रं प्रसादमभिकाङ्क्षति सूक्तद्रष्टा । प्राणबलसमृद्धेः शुद्धसत्त्वमनोमयं ऐन्द्रमनुग्रहं याचत इत्युक्तं भवति । अभिषुताः सोमाः इन्द्रं कामयन्ते । प्राणाश्वबलवेगप्रचोदितानां सम्मदभरप्रसराणां यथायथं साधुकर्मणे शुद्धसत्त्वधीराज्य-प्रवेशलाभः आवश्यकः, तदर्थं इन्द्रः शस्यते। अशोधितानां सोमाभिषवानां आमोदरसक्षरणरूपाणां कथं इन्द्रभोग्यता युक्ता स्यात् ? अत सूक्ष्माभिः धीशक्तिभिः (अण्वीभिः) बहिः प्रज्ञाधारे शरीरे वितत्या च (तना) शोधिताः (पूतासः) इत्युक्तम् । ननु, अणु-तन्निष्पन्नाण्व्यादिपदानि सूक्ष्मवाचकानि भवन्तु, कथं सूक्ष्मता धिय एवोच्यत इति चेत् , मन्त्रवर्ण एव प्रत्युत्तरमाह,

सायणोऽप्यवश इव गत्यन्तराभावात् 'अण्वी धीः' इत्पभ्युपगम्य व्याचष्टे । तथा हि 'तममृक्षन्त वाजिनमुपस्थे अदितेरधि । विप्रासो अण्व्या धिया' (९-२६-१)। अत्र सायणीयव्याख्यायां इदं दृश्यते– तं वाजिनं अश्वं अश्ववदाशुव्याप्तं (समृद्धं सोमं इति वक्तव्यम्) अदितेरुपस्थे अमृक्षन्त शोधितवन्तः । के ? विप्रास मेधाविनः । केन साधनेन ? अण्व्या अङ्गुल्या धिया प्रज्ञया स्तुत्या वा, अथवा सूक्ष्मया धिया अङ्गुल्येति विशेष्यविशेषणभाव इति । एष विक्रान्तः सोमः सूक्ष्मया धिया द्वारा सम्यङ् निष्पादितं ऐन्द्रं द्युस्थानं गच्छतीत्येवमर्थकस्य मन्त्रस्य (९-१५-१) अघटनघटनापटीयसी सायणव्याख्या ब्रूते 'एष सोमः अहुल्याऽभिषुतो धिया कर्मणा इन्द्रस्य निष्कृतं स्थानं दिवं प्रतिगच्छति । ...अगुल्याऽभिषूयमाणः सन् होमद्वारा अग्निनिष्पीडन-द्वारा पात्रं वा गच्छति' इति! मन्त्रवर्णस्तु विस्पष्टमाह– 'धियमिच्छन् देवानां अमृतानां निवासस्थानं बृहत् (ऋतं सत्यं) प्रतिगच्छति, न तु पानपात्रं चमसं प्रति सोमः'इति 'एष पुरु धियायते बृहते देवतातये। यत्रामृतास आसते' (९-१५-२) ।।

अन्ये च मन्त्राः सन्ति नवममण्डले, यत्र अङ्गुल्यर्थकः अण्वीशब्दः, कर्मार्थे धीशब्दो वा नोपपद्यते, विस्तरभिया नोदाहरामः । अथ चेदण्वीभिः अङ्गुलीभिरेव भाव्यं, तर्हि ता न मानुष्यः, किं तु दिवो दुहितुः सूर्याया अश्विनोः प्रियाया इति वक्तव्यम् । नेयमस्माकं कल्पना । अत्रोपपत्तिं प्रदर्शयामः । यमर्थं मनसि निधाय ऋषिर्मधुच्छन्दाः 'अण्वीभिस्तना पूतासः' इत्याह सूक्ष्मशः गूढं वा गूढार्थमन्त्रदर्शी, तमेव स्वयं नवममण्डले, प्रथमसूक्ते विस्पष्टमाह (९-१-६-७) । अत्र 'सूर्यस्प दुहिता' 'अण्वीः' 'दश स्वसारः' 'योषणः' द्युलोके तार्ये सोमं गृह्णन्तीति प्रत्यक्ष-वचनानि लक्षणीयानि भवन्ति । सोममधिकृत्यालमेतावताऽत्र । तृचस्य प्रथमर्चोऽर्थोऽस्माभिरुक्तः उपपादितः । अथावशिष्टं ऋग्द्वयं सुगमार्थं भवति ।। ४ ।।

## ऋक्संहिता पदपाठसहिता

**इन्द्रा याहि धियेषितो विप्रजूतः सुतावतः । उपब्रह्माणि वाघतः ।। ५ ।।**

इन्द्रं । आ । याहि । धिया । इषितः । विप्रऽजूतः । सुतऽवतः । उप । ब्रह्माणि । वाघतः ।।

## ऋग्भाष्यम्

**अस्मद्बुद्ध्या प्रार्थितो वा स्वबुद्ध्या प्रेरितोऽपि वा ।**

**ब्राह्मणैः प्रेरितो भक्त्या वदतो होतुरंजसा ।**
**ब्रह्माणि सोमयुक्तानि यजमानस्य वेच्छतः ।**
**उपायाह्यपि यः कोऽपि साधको यज्ञकृन्मतः ।**
**मानसो वाचिको वा स्याद्यज्ञो होता ह्वयन्सच ।। ५ ।।**

**ऋग्भाष्यटीका–** **इन्द्रायाहि धियेषितः ।।** अस्मद्बुध्या ।। **हे इन्द्र धिया** अस्मद्बुध्या **इषितः** अधीष्टः । प्रार्थित इति यावत् । अथवा स्वबुद्ध्या प्रेरितो **विप्रजूतः** ब्राह्मणैः ऋत्विग्भिः भक्त्या प्रेरितस्त्वं **वाघतः** अञ्जसा वदतः स्तुवतो होतुः **सुतवतः** सोमवतो यजमानस्य । सोम-युक्तानि **ब्रह्माणि** स्तुतिवाक्यानि उपायाहि । होतुर्ब्रह्माणि । यजमानस्य सोमान् । अत्र सोम-शब्दाभावेऽपि सुतवत इति पदसामर्थ्यात्सोमानिति लभ्यते । अध्यात्मं सुतवच्छब्दं व्याचष्टे– **इच्छतो वेति** ।। मनोहि सोमः । तद्रूपा चेच्छा । अतः सुतवत इच्छत इत्यनर्थान्तरम् । नन्वध्यात्मं को यजमानः कश्च यज्ञः कोवा होतेत्यत आह– **यः कोऽपीति** ।। साधको मोक्षस्य । स च स एव साधको यदा परमेश्वरमाह्वयन् भवति तदा होता चोच्यत इत्यर्थः ।। ५ ।।

**मन्त्रार्थमञ्जरी–** (हे) इन्द्र । धिया, अस्मद्बुद्ध्या । इषितः, अधीष्टः, प्रार्थित इति यावत् । यद्वा– धिया, स्वबुद्ध्या । इषितः, प्रेरितः । विप्रजूतः, विप्रैर्ब्राह्मणै ऋत्विग्भिर्जूतो भक्त्या प्रेरितः । (त्वम्) वाघतः, 'वाशृ शब्दे' (पृषोदरादित्वाच्छस्य घः) स्तुवतो होतुः । ब्रह्माणि, स्तुतिवाक्यानि । सुतवतः, सोमवतो यजमानस्य, संहितायां दैर्घ्यमाधिक्यार्थे, 'सुतवतः' इत्युक्त्या (सोमान्) इति लभ्यते, होतुः स्तुतिवाक्यानि यजमानसम्बन्धिसोमांश्च प्रति । उप आ याहि, उपागच्छ । इति । अध्यात्मं तु– सुतवतः, मनोवत इच्छारूपमनोवृत्तिमतस्त्वदागमनमिच्छत इति यावत्, मोक्षसाधकस्य यजमानस्य सोमान् मनोवृत्तीः प्रति । तस्यैव वाघतः, मन्त्रैः स्तुवतो होतृत्वात्तदीयस्तुतिवाक्यानि च प्रति । उप आ आहि । इति ।। आह्वानरूपेन्द्रविषया स्तुतिर्वाचिको यज्ञः, तद्विषयमनोवृत्तिर्मानसिको यज्ञ इति ज्ञेयम् ।। ५ ।।

**स्कन्द – हे इन्द्र! आ याहि** आगच्छ । **धिया** अस्मदीयया प्रज्ञया । इषितः शुद्धोऽप्ययमिषिरधिपूर्वार्थो द्रष्टव्यः । **अधीष्टः** अभ्यर्थित इत्यर्थः। **विप्रजूतः** विप्रः (निघ. ३,१५) इति मेधाविनाम । जूतिर्गत्यर्थः । केवलोऽपि च सोपसर्गार्थः । मेधाविभिर्ऋत्विग्भिरभिगतः ।

केन ? सामर्थ्यात् स्तुतिभिः । मयाऽभ्यर्थितोऽन्यैश्चर्त्विग्भिरभिष्टुत इत्यर्थः । क्वागच्छानि ? उच्यते । **सुतावतः** सुताः सोमा यस्य सन्ति स सुतावान् यजमानः, तस्य । **उप ब्रह्माणि** उपशब्दः सामीप्ये । 'ब्रह्म' (निघ २,७) इत्यन्ननाम । यजमानस्य स्वभूतानां हविर्लक्षणानामन्नानां समीप इत्यर्थः । वाघतः ऋत्विङ्नामैतत् (तु निघ. ३,१८) इह तु सुतावतो यजमानस्य विशेषणत्वादन्तणीतमत्वर्थः । ऋत्विग्वतो यजमानस्य इति । अथवा वाघत इत्येतस्यैव सुतावत इत्येतद्विशेषणम् । ब्रह्मशब्दश्च स्तुतिवचनः । सुतावतः कृतसोमाभिषवस्य ऋषिजो याः स्तुतयः तत्समीपे । यत्र सोममभिषुत्यर्त्विजः स्तुवन्तीत्यर्थः ।। ५ ।।

**वेङ्कटमाधव–** 'इन्द्र! आगच्छ कर्मणा प्रेषितः मेधाविभिराकृष्टः यजमानस्य यो होता तस्य स्तोत्राणि ।। ५ ।।

**मुद्गल–** हे इन्द्र! त्वम् **आ याहि** अस्मिन् कर्मण्यागच्छ । किमर्थम् ? **वाघतः** ऋत्विजः **ब्रह्माणि** वेदरूपाणि स्तोत्राणि उपैतुम् । कीदृशस्त्वम् ? **धिया** अस्मदीयया प्रज्ञया **इषितः** प्राप्तः । अस्मद्भक्त्या प्रेरित इत्यर्थः । **विप्रजूतः** यथा यजमानभक्त्या प्रेरितस्तथाऽन्यैरपि ऋत्विग्भिः प्रेरितः । कीदृशस्य? वाघतः । **सुतावतः** अभिषुतसोमयुक्तस्य ।। ५ ।।

**सायण– हे इन्द्र** त्वम् **आ याहि** अस्मिन् कर्मण्यागच्छ । किमर्थम् ? **वाघतः** ऋत्विजः **ब्रह्माणि** वेदरूपाणि स्तोत्राण्युपैतम् । कीदृशस्त्वम् ? **धिया** अस्मदीयया प्रज्ञया **इषितः** प्राप्तः अस्मद्भक्त्या प्रेरित इत्यर्थः । **विप्रजूतः** । यथा यजमानभक्त्या प्रेरितस्तथाऽन्यैरपि विप्रैर्मेधाविभिर्ऋत्विग्भिः प्रेरितः । कीदृशस्य ? वाघतः । **सुतावतः** अभिषुतसोमयुक्तस्य ।

'केतः' इत्यादिष्वेकादशसु प्रज्ञानामसु 'धीः' (नि.३,९,७) इति पठितम् । चतुर्विंशतिसङ्ख्याकेषु मेधाविनामसु 'विप्रः धीरः' (नि.३,१५,१) इति पठितम् । 'भरताः' इत्यादिष्वष्टसु ऋत्विङ्नामसु 'वाघतः' (नि.३,१८,३) इति पठितम् । इषित इत्यत्र 'इष गतौ' इत्यस्मान्निष्ठायामिडागमः । 'आगमा अनुदात्ताः' (पा.म.३,१,३,७) इति इटः अनुदात्तत्वात् क्तस्वरः शिष्यते । विप्रजूतः । 'डुवप् बीजसन्ताने' इति धातोः 'ऋज्रेन्द्राग्रवज्र-विप्र' (उ.सू.२,१८६) इत्यादिना रन्प्रत्ययान्तो विप्रशब्दो निपातितः । निपातनादुपधाया इकारो लघूपधगुणाभावश्च । नित्त्वादाद्युदात्तः । तैर्जूतः प्राप्तः । 'जू' (?) इति सौत्रो

धातुर्गत्यर्थः (पा.सू.३,२,१५०) । 'श्युकः किति' (पा.सू.७,२,११) इति इट्प्रतिषेधः । 'तृतीया कर्मणि' (पा.सू.६,२,४८) इति पूर्वपदप्रकृतिस्वरत्वम् । सुतावतः । छान्दसं दीर्घत्वम् । मतुपोऽनुदात्तत्वात् क्तप्रत्ययस्वर एव शिष्यते । ब्रह्माणि । 'नब्विपयस्यानिसन्तस्य' (फि.सू.२६) इत्याद्युदात्तः । वाघच्छब्दः ऋत्विङ्नामसु पठितः । प्रातिपदिकस्वरः ।।५।।

**सिद्धाञ्जनम्–** ऐन्द्रे तृचे द्वितीयामृचमाह– **हे इन्द्र** धिया प्रज्ञया धारणात्मिकया **इषितः** प्रेरितः, **विप्रजूतः** विप्रेण मेधाविना प्रदीप्तध्यानेन जूतः प्रेरितः (पुरो गन्तुमुद्योजित इत्यर्थः)। एवम्भूतः त्वं **आयाहि** आगच्छ। किमर्थम् ? **सुतवतः** सोमं अभिषुतवतः (मम) **वाघतः** स्तोतुः (आत्मार्थध्यानानि वाचा आविष्कर्तुमिच्छतो मम) **ब्रह्माणि** मन्त्रात्मकानि स्तोत्राणि उप उपैतुम् ।

प्रथमं अभिषुताः सोमाः इन्द्रं कामयन्त इत्युक्तम् । तत इन्द्रः सोम सुतवत आत्मार्थध्यानानि वाग्भिराविष्कृत्य स्तोतुः मन्त्रानङ्गीकर्तुं स्तूयतेऽस्यामृचि । अथ प्रदीप्तया धिया तद्बलेनोपेतः भ्राजमानैरश्वैर्युक्त इन्द्रस्तान् ऋषेर्मन्त्रानुपगच्छति ।। ५ ।।

## ऋक्संहिता पदपाठसहिता

**इन्द्रा याहि तूतुजान उप ब्रह्माणि हरिवः । सुते दधिष्व नश्चनः ।। ६, ९ ।।**

इन्द्रं । आ । याहि । तूतुजानः । उप । ब्रह्माणि । हरिऽवः । सुते । दधिष्व । नः । चनः ।। ६ ।।

## ऋग्भाष्यम्

**वेगवांस्तूतुजानः स्यात्संसारमुपसंहरन् ।**
**वर्तते येन हरिवा हरिभिर्वर्ततेऽथ वा ।**
**हरणाद्विषयाणां च प्राणा हरय ईरिताः ।**
**तेषु वर्तत इत्यस्मात्तान्वाऽथ गमयेदसौ ।**
**हरिवा हरिवान्वाऽपि विष्णुना वर्ततेऽथवा ।**
**चनो मन इह प्रोक्तं सुखं च क्वचिदीर्यते ।। ६ ।।**

ऋग्भाष्यटीका– इन्द्रायाहि तूतुजानः ।। अत्र तूतुजानपदं व्याचष्टे– **वेगवानिति** ।।

तुजतिर्गत्यर्थः तस्माच्छन्दसि भृशार्थे यङ् । तस्य लुक् ततः चानश् । हरिव इत्येतद्व्याचष्टे– **संसारमिति** ।। हरतेः कर्तरीकारः । वृतु वर्तने । अस्मादसुन् डिच्च । संसारमिति योग्यतया सम्बन्धः । भक्तानां संसारं हरति वर्ततेच । उपसंहरन् वर्तत इति यावत् । येन कारणेन तेन **हरिवाः** परमेश्वरः । तस्य सम्बुद्धिर्हरिवः । अथ वा हरिभिर्हरिनामकैरश्वैर्वर्तत इति **हरिवाः** पुरन्दरः । हरणादित्याद्यध्यात्मविषयम् । गमयेदित्यनेनान्तर्णीतण्यर्थो वृतिरित्युक्तं भवति । वातेर्वेदं रूपम् । हरिवान्वाऽपि हरिनामकाश्ववानिति वा । छन्दसीर इति मतोर्वः । मतुवसोरुः सम्बुद्धौ छन्दसीति रुत्वम् । अथवा हरिणा विष्णुना प्रेरितो वर्तत इति **हरिवाः** शक्रः । चनःशब्दार्थमाह– **चन इति** । क्वचित् चनोधाः सहसो यहो इत्यादौ । **हे हरिव** इन्द्र नो **ब्रह्माणि** स्तुतिवाक्यानि प्रति तूतुजानः उपायाहि । आगत्य च नः सुतेऽस्मदीये सोमे च नो मनो दधिष्व धत्स्व । अस्मदीयं सोममिच्छ ।। ६ ।।

**मन्त्रार्थमञ्जरी–** हरिवः, भक्तानां जननमरणादिसंसारक्लेशं परिहरन्, वर्तमान, 'हृञ् हरणे' इत्यतः कर्तरीकारप्रत्यये 'सार्वधातुक' इति गुणे 'हरि' इति सिद्धौ 'वृतु वर्तने' इत्यतोऽसुन्प्रत्ययो डिच्च, डित्त्वसामर्थ्याट्टिलोपे कृदन्तत्वेन प्रातिपदिकसंज्ञायां सुबुत्पत्तौ 'अत्वसन्तस्य चाधातोः' इति दीर्घे सस्य रुत्वे विसर्गे च 'हरिश्चासौ वाश्च' इति विग्रहे 'हरिवाः' इति रूपसिद्धौ तस्य सम्बुद्धिर्हरिवः । (हे) इन्द्र, विष्णो । हरिभिर्हरिनामकैरश्वैर्वर्तत इति हरिणा विष्णुना प्रेरितो वर्तत इति वा हरिवाः तस्य सम्बुद्धिर्हरिवः । (हे) इन्द्र, पुरंदर, इति वा । अध्यात्मं तु विषयाणां हरणाद्धरय इन्द्रियाणि, तेषु वर्तत इति (हे) हरिवः, इति ज्ञेयम् । (नः) अस्माकम् । ब्रह्माणि, स्तुतिवाक्यानि प्रति । तूतुजानः, वेगवान् । उप आ याहि, उपगच्छ । आगत्य च, नः सुते, अस्मदीये सोमे । चनः, मनः । दधिष्व, धत्स्व कुरु । अस्मदीयं सोमरसं पातुमिच्छां कुर्विति भावः ।। 'तुज गतौ' इत्यस्माच्छन्दसि भृशार्थे यङ् । 'सन्यङोः' इति द्विर्वचनम् । यङो लुक् । 'दीर्घोऽकितः' इत्यभ्यासस्य दीर्घः । यङ्लुगन्ताच्चानश्प्रत्ययः । तूतुजानो वेगवानिति ज्ञेयम् ।। ६ ।। **इति द्वितीय ऐन्द्रस्तृचः** ।।

**स्कन्द– हे इन्द्र ! 'आ याहि** । तूतुजानः क्षिप्रनामैतत् (तु निघ २,१५) । क्षिप्रं स्वरमाण इत्यर्थः । उपब्रह्माणि **हे हरिवः**। हरी अश्वौ, तद्वन् । आगत्य च सुते इति द्वितीयार्थे सप्तम्येषा । सुतम् अभिषुतम् । **दधिष्व** धारय स्वोदरे । पिबेत्यर्थः । नः अस्माकं स्वभूतं **चनः** सोमलक्षणमन्नम् ।। ६ ।।

**वेङ्कटमाधव–** इन्द्र! उपागच्छ त्वरमाणः स्तोत्राणि गमनसाधनभूताश्ववन् । आगत्य चास्मिन् सुते सोमे अस्मभ्यमन्नं देहि ।। ६ ।।

**मुद्गल– हे हरिवः !** अश्वयुक्त इन्द्र! त्वं **ब्रह्माणि** स्तोत्राणि **उप** उपैतुम् **आयाहि** आगच्छ । कीदृशस्त्वम् । **तूतुजानः** त्वरमाण । आगत्य चस्मिन् **सुते** सोमाभिषवयुक्ते कर्मणि **नः** अस्मदीयं **चनः** अन्नं हविर्लक्षणं **दधिष्व** धारय स्वीकुर्वित्यर्थः ।। ६ ।।

**सायण–** हरिशब्दः इन्द्रसम्बन्धिनोरश्वयोर्नामधेयं 'हरी इन्द्रस्य रोहितोऽग्नेः' (नि.१,१५,१) इति तदीयाश्वनामत्वेन पठितत्वात् । **हे हरिवः** अश्वयुक्त इन्द्र त्वं **ब्रह्माणि उपैतुम् आ याहि** । कीदृशस्त्वम् ? **तूतुजानः** त्वरमाणः । आगत्य च अस्मिन् **सुते** सोमाभिषवयुक्ते कर्मणि **नः** अस्मदीयं **चनः** अन्नं हविर्लक्षणं **दधिष्व** धारय स्वीकुर्वित्यर्थः ।

तूतुजानः । तुजेर्लिटि 'लिटः कानज्वा' (पा.सू.३,२,१०६) इति कानजादेशः । 'तुजादीनां दीर्घोऽभ्यासस्य' (पा.सू.६,१,७) इत्यभ्यासस्य दीर्घत्वम् । 'अभ्यस्तानामादिः' (पा.सू.६,१,१८९) इत्याद्युदात्तत्वम् । हरिव इत्यत्र हरयोऽस्य सन्तीति मतुपि 'छन्दसीरः' (पा.सू.८,२,१५) इति मकारस्य वत्वम् । सम्बुद्धौ 'उगिदचाम्' (पा.सू.७,१,७०) इति नुम् । संयोगान्तलोपे (पा.सू.८,२,२३) नकारस्य 'मतुवसो रुः सम्बुद्धौ छन्दसि' (पा.सू.८,३,१) इति रुत्वम् । आष्टमिको निघातः । ब्रह्माणीत्यस्य हरिव इत्यनेनासामर्थ्यात् 'समर्थः पदविधिः' (पा.सू.२,१,१) इति नियमात् सुबामन्त्रितपराङ्गवद्भावाभावेन आमन्त्रितनिघाताभावात् आद्युदात्तत्वे सति उप इति अकारस्य सन्नतरः । दधिष्व इत्यत्र दधातेर्लोटि थास् । 'थासः से' (पा.सू.३,४,८०) । 'सवाभ्यां वामौ' (पा.सू.३,४,९१) इत्येकारस्य वादेशः । 'छन्दस्युभयथा' (पा.सू.३,४,११७) इति सार्वधातुकार्धधातुकसंज्ञयोः सत्योः सार्वधातुकत्वेन शपि (पा.सू.३,१,६८) तस्य श्लौ च द्विर्भावः (पा.सू.६,१,१०), आर्धधातुकत्वेन इडागमश्च (पा.सू.७,२,३५) । 'आतो लोप इटि च' (पा.सू.६,४,६४०) इत्याकारलोपः । चनः । 'चायतेरन्ने ह्रस्वश्च' (उ.सू.४,६३९) इत्यसुनन्तः । चकारात् नुडागमे यलोपः ।। ५ ।।

**सिद्धाञ्जनम्–** तमृषिः प्रार्थयते सुते सोमरसे सम्मदभरं धर्तृ धारयितुं चेति तृतीयस्यामृचि प्रोच्यते ।

तुजतिर्गत्यर्थः तस्माच्छन्दसि भृशार्थे यङ् । तस्य लुक् ततः चानश् । हरिव इत्येतद्व्याचष्टे– **संसारमिति** ।। हरतेः कर्तरीकारः । वृतु वर्तने । अस्मादसुन् डिच्च । संसारमिति योग्यतया सम्बन्धः । भक्तानां संसारं हरति वर्ततेच । उपसंहरन् वर्तत इति यावत् । येन कारणेन तेन **हरिवाः** परमेश्वरः । तस्य सम्बुद्धिर्हरिवः । अथ वा हरिभिर्हरिनामकैरश्वैर्वर्तत इति **हरिवाः** पुरन्दरः । हरणादित्याद्यध्यात्मविषयम् । गमयेदित्यनेनान्तर्णीतण्यर्थो वृतिरित्युक्तं भवति । वातेर्वेदं रूपम् । हरिवान्वाऽपि हरिनामकाश्ववानिति वा । छन्दसीर इति मतोर्वः । मतुवसोरुः सम्बुद्धौ छन्दसीति रुत्वम् । अथवा हरिणा विष्णुना प्रेरितो वर्तत इति **हरिवाः** शक्रः । चनःशब्दार्थमाह– **चन इति** । क्वचित् चनोधाः सहसो यहो इत्यादौ । **हे हरिव** इन्द्र नो **ब्रह्माणि** स्तुतिवाक्यानि प्रति तूतुजानः उपायाहि । आगत्य च नः सुतेऽस्मदीये सोमे च नो मनो दधिष्व धत्स्व । अस्मदीयं सोममिच्छ ।। ६ ।।

**मन्त्रार्थमञ्जरी–** हरिवः, भक्तानां जननमरणादिसंसारक्लेशं परिहरन्, वर्तमान, 'हृञ् हरणे' इत्यतः कर्तरीकारप्रत्यये 'सार्वधातुक' इति गुणे 'हरि' इति सिद्धौ 'वृतु वर्तने' इत्यतोऽसुन्प्रत्ययो डिच्च, डित्त्वसामर्थ्याट्टिलोपे कृदन्तत्वेन प्रातिपदिकसंज्ञायां सुबुत्पत्तौ 'अत्वसन्तस्य चाधातोः' इति दीर्घे सस्य रुत्वे विसर्गे च 'हरिश्चासौ वाश्च' इति विग्रहे 'हरिवाः' इति रूपसिद्धौ तस्य सम्बुद्धिर्हरिवः । (हे) इन्द्र, विष्णो । हरिभिर्हरिनामकैरश्वैर्वर्तत इति हरिणा विष्णुना प्रेरितो वर्तत इति वा हरिवाः तस्य सम्बुद्धिर्हरिवः । (हे) इन्द्र, पुरंदर, इति वा । अध्यात्मं तु विषयाणां हरणाद्धरय इन्द्रियाणि, तेषु वर्तत इति (हे) हरिवः, इति ज्ञेयम् । (नः) अस्माकम् । ब्रह्माणि, स्तुतिवाक्यानि प्रति । तूतुजानः, वेगवान् । उप आ याहि, उपगच्छ । आगत्य च, नः सुते, अस्मदीये सोमे । चनः, मनः । दधिष्व, धत्स्व कुरु । अस्मदीयं सोमरसं पातुमिच्छां कुर्विति भावः ।। 'तुज गतौ' इत्यस्माच्छन्दसि भृशार्थे यङ् । 'सन्यङोः' इति द्विर्वचनम् । यङो लुक् । 'दीर्घोऽकितः' इत्यभ्यासस्य दीर्घः । यङ्लुगन्ताच्चानश्प्रत्ययः । तूतुजानो वेगवानिति ज्ञेयम् ।। ६ ।। **इति द्वितीय ऐन्द्रस्तृचः ।।**

**स्कन्द– हे इन्द्र ! 'आ याहि** । तूतुजानः क्षिप्रनामैतत् (तु निघ २,१५) । क्षिप्रं स्वरमाण इत्यर्थः । उपब्रह्माणि **हे हरिवः**। हरी अश्वौ, तद्वन् । आगत्य च सुते इति द्वितीयार्थे सप्तम्येषा । सुतम् अभिषुतम् । **दधिष्व** धारय स्वोदरे । पिबेत्यर्थः । नः अस्माकं स्वभूतं **चनः** सोमलक्षणमन्नम् ।। ६ ।।

**वेङ्कटमाधव–** इन्द्र! उपागच्छ त्वरमाणः स्तोत्राणि गमनसाधनभूताश्ववन् । आगत्य चास्मिन् सुते सोमे अस्मभ्यमन्नं देहि ।। ६ ।।

**मुद्गल– हे हरिवः !** अश्वयुक्त इन्द्र! त्वं **ब्रह्माणि** स्तोत्राणि **उप** उपैतुम् **आयाहि** आगच्छ । कीदृशस्त्वम् । **तूतुजानः** त्वरमाण । आगत्य चस्मिन् **सुते** सोमाभिषवयुक्ते कर्मणि **नः** अस्मदीयं **चनः** अन्नं हविर्लक्षणं **दधिष्व** धारय स्वीकुर्वित्यर्थः ।। ६ ।।

**सायण–** हरिशब्दः इन्द्रसम्बन्धिनोरश्वयोर्नामधेयं 'हरी इन्द्रस्य रोहितोऽग्नेः' (नि.१,१५,१) इति तदीयाश्वनामत्वेन पठितत्वात् । **हे हरिवः** अश्वयुक्त इन्द्र त्वं **ब्रह्माणि उपैतुम् आ याहि ।** कीदृशस्त्वम् ? **तूतुजानः** त्वरमाणः । आगत्य च अस्मिन् **सुते** सोमाभिषवयुक्ते कर्मणि **नः** अस्मदीयं **चनः** अन्नं हविर्लक्षणं **दधिष्व** धारय स्वीकुर्वित्यर्थः ।

तूतुजानः । तुजेर्लिटि 'लिटः कानज्वा' (पा.सू.३,२,१०६) इति कानजादेशः । 'तुजादीनां दीर्घोऽभ्यासस्य' (पा.सू.६,१,७) इत्यभ्यासस्य दीर्घत्वम् । 'अभ्यस्तानामादिः' (पा.सू.६,१,१८९) इत्याद्युदात्तत्वम् । हरिव इत्यत्र हरयोऽस्य सन्तीति मतुपि 'छन्दसीरः' (पा.सू.८,२,१५) इति मकारस्य वत्वम् । सम्बुद्धौ 'उगिदचाम्' (पा.सू.७,१,७०) इति नुम् । संयोगान्तलोपे (पा.सू.८,२,२३) नकारस्य 'मतुवसो रुः सम्बुद्धौ छन्दसि' (पा.सू.८,३,१) इति रुत्वम् । आष्टमिको निघातः । ब्रह्माणीत्यस्य हरिव इत्यनेनासामर्थ्यात् 'समर्थः पदविधिः' (पा.सू.२,१,१) इति नियमात् सुबामन्त्रितपराङ्गवद्भावाभावेन आमन्त्रितनिघाताभावात् आद्युदात्तत्वे सति उप इति अकारस्य सन्नतरः । दधिष्व इत्यत्र दधातेर्लोटि थास् । 'थासः से' (पा.सू.३,४,८०) । 'सवाभ्यां वामौ' (पा.सू.३,४,९१) इत्येकारस्य वादेशः । 'छन्दस्युभयथा' (पा.सू.३,४,११७) इति सार्वधातुकार्धधातुकसंज्ञयोः सत्योः सार्वधातुकत्वेन शपि (पा.सू.३,१,६८) तस्य श्लौ च द्विर्भावः (पा.सू.६,१,१०), आर्धधातुकत्वेन इडागमश्च (पा.सू.७,२,३५) । 'आतो लोप इटि च' (पा.सू.६,४,६४०) इत्याकारलोपः । चनः । 'चायतेरन्ने ह्रस्वश्च' (उ.सू.४,६३९) इत्यसुनन्तः । चकारात् नुडागमे यलोपः ।। ५ ।।

**सिद्धाञ्जनम्–** तमृषिः प्रार्थयते सुते सोमरसे सम्मदभरं धर्तृ धारयितुं चेति तृतीयस्यामृचि प्रोच्यते ।

ऐन्द्रे तृचे तृतीयामृचमाह– **हे इन्द्र हरिवः** अश्वयुक्तः **तूतुजानः** अत्यन्तं त्वरमाणः सन् अश्वयुक्तत्वात् **ब्रह्माणि** मन्त्रात्मकानि स्तोत्राणि **उप** उपैतुं **आयाहि** आगच्छ । **सुते** सोमे **नः** अस्मदर्थं **चनः** सुखं सम्मदं वा **दधिष्व** धारय ।

पूर्वं सोमाभिषवेण साधिते आनन्दक्षरणे, अश्विभ्यां प्राणमयसत्त्वे प्राणावधृते नाडीचक्रे च यो मदो वीर्यवान् कृतः स्थापितश्च, सोऽधुना इन्द्राधीनः कर्तव्यः, येन स शुभधीदीप्ते द्युस्थाने पदं लब्ध्वा चितेर्न च्युतः स्यात् । तस्मादिन्द्रं प्रज्ञायां आनन्दधृत्यै प्रार्थितवानृषिः 'सुते दधिष्व नश्चनः' इति ॥

**॥ इति प्रथमाष्टके प्रथमाध्याये पञ्चमो वर्गः ॥**

## ॥ अथ षष्ठो वर्गः ॥

### ऋक्संहिता पदपाठसहिता

**ओमासश्चर्षणीधृतो विश्वेदेवास आगत । दाश्वांसो दाशुषः सुतम् ॥ ७ ॥**

ओमासः । चर्षणिऽधृतः । विश्वे । देवासः । आ । गत । दाश्वांसः । दाशुषः । सुतम् ॥

### ऋग्भाष्यम्

**आसमंतात्स्वीकृता मा ओमा इति च शब्दिताः ।**
**ओंनामा भगवान्विष्णुस्तेन वा निर्मिताः सुराः ।**
**ओता मानेषु मावैषु प्रोता ओमा इतीरिताः ।**
**प्रजाश्चर्षणयः प्रोक्ता विश्वे तेच प्रवेशनात् ।**
**सर्वे वाथविशां वानाच्छब्दः कस्मै यथा भवेत् ।**
**दातारो यजमानावापि ॥ ७ ॥**

**ऋग्भाष्यटीका– ओमासः आसमन्तात्** । आ इत्यनुवादः समन्तादिति व्याख्यानम् । ऊइति निपात ऊरीकरणे वर्तते । आ समन्तादूरीकृताः स्वीकृताः माः प्रमा यैस्ते ओमा इति कीर्तिताः । चशब्दो व्याख्यानसमुच्चये । सर्वविषयज्ञानवन्त इत्यर्थः । इदं परमेश्वरे मुख्यम् । देवेष्वमुख्यं ओंनामेत्यनेनोंशब्दसमानार्थ ओशब्दः मानिर्माण इत्यस्मात्कर्मणि कप्रत्यय इत्युक्तं

भवति । ओनामकेन विष्णुना मिता निर्मिता इति वा ओमाः । इदं च व्याख्यानं न भगवद्विषयमित्याह– **सुरा इति** । ओशब्द ओतत्ववाची । अवतिरूपत्वात् । ओताः प्रविष्टाः मानेषु प्रमाणेषु प्रतिपाद्यतयेति वा ओमाः । उपसर्जनस्य परनिपातः । माः प्रमाः येषु प्रोताः प्रतिपादकतया प्रविष्टा इति वा ओमा ईरिताः । ओता मा येषु ते तथोक्ता इति प्रोक्ताः नैघुण्टकैः । ते भगवद्रूपविशेषाः देवाश्च प्रेरकतया सर्वत्र प्रवेशनाद्विश्वे च प्रोक्ताः । विशप्रवेशने । ततो वः किच्च । देवतापक्षे सर्वशब्दपर्यायो वा विश्वशब्द इत्याह– **सर्वेवेति** ।। अथवा विशां प्रजानां वानात् गमनात् ज्ञानाद्वा । विशो वान्तीति विश्वे ।

ननु च प्रवेशनाद्विशां वानादिति पक्षद्वये विश्वे इति रूपं न सिध्यति । सर्वशब्दपर्यायस्यैव विश्वशब्दस्य सर्वनामसंज्ञास्मरणात् । सर्वनाम्न एव परस्य जसःशीभावविधानादिति तत्राह– **शब्द इति** ।। यथा खलु 'कस्मै देवाय हविषा विधेम' इत्यत्र प्रजापतिपर्यायस्य कशब्दस्य सर्वनामसंज्ञाभावेऽपि सर्वे विधयः छन्दसि बहुलं भवन्तीति सर्वनाम्नः स्मा इति सर्वनामकार्यं दृश्यते एवमिहापि विश्वशब्दस्य सर्वनामसंज्ञाभावेऽपि सर्वनामकार्यं जसः शीत्वं भविष्यतीति । दाश्वांसः इत्यत्र दातारो यजमाना वेत्यर्थद्वयम् । दाशृदाने । यजमाना वेति देवान्तरविषयम् ।

**हे ओमासः** ओमाः **चर्षणीधृतः** चर्षणीनां धर्तारो **दाश्वांसः** दातारो यजमाना वा विश्वेदेवाः **दाशुषः** दातुर्यजमानस्य वा **सुतं** सोमं प्रति **आगत** आगच्छत ।। ७ ।।

**मन्त्रार्थमञ्जरी–** ओमासः, आ समन्तात् उ ऊरीकृता माः प्रमा यैस्त ओमाः, ओमा एवोमासः 'आज्जसेरसुक्' सर्वविषयकज्ञानवन्त इत्यर्थः, एतच्च भगवत्यन्यत्र च यथायोग्यं ज्ञेयम्, ओंपदपर्यायौकारवाच्येन विष्णुना मा निर्मिता इत्यप्यर्थो देवतान्तरे ध्येयः, ओशब्दोपपदात् 'मा निर्माणे' इत्यतः कप्रत्यये आतो लोपे च रूपसिद्धेः । चर्षणिधृतः, चर्षणीनां प्रजानां धृतो धर्तारः । दाश्वांसः, दातारः । (हे) विश्वे देवासः, सर्वत्र प्रविष्टत्वहेतुना 'विश्वे' इत्युच्यमानाः, देवाः 'अग्निमीळे' इत्यत्रोक्तदिशा देवशब्दिता भगवद्रूपविशेषाः प्रसिद्धविश्वेदेवा वा । दाशुषः, यजमानस्य । सुतम्, सोमं प्रति । आ गत, आगच्छत, गमेः मकारस्य च्छादेशाभावश्छान्दसः ।। 'विश प्रवेशने' इत्यतो वप्रत्ययः किश्च, असर्वनामत्वेऽपि जसः शीभावश्छान्दसः, तेन 'विश्वे' इति रूपं ध्येयम्, देवतान्तरे तु– सर्वशब्दपर्यायतया सर्वनामत्वादेव शीभावः ।।७।।

**स्कन्द–** 'वैश्वदेवस्तृच षष्ठः ।' **हे ओमासः** अवतेरयं पालनार्थस्य तर्पणार्थस्य वा कर्तरि मन् प्रत्ययः । अवितारः रक्षितारः तर्पयितारो वा । **चर्षणीधृतः** चर्षणयो मनुष्याः तेषां तैस्तैरुपकारैर्धारयितारः । **विश्वे** सर्वे **देवासः** देवा **आगत** आगच्छत । **दाश्वांसः** प्रत्यक्षकृतोऽयं मन्त्रः । न चेदमामन्त्रितम् । अतो यच्चच्छब्दतच्छब्दावध्याहृत्यैकवाक्यता नेया । ये दाश्वांसो दत्तवन्तो यजमानाय धनानि ते । **दाशुषः** हवींषि दत्तवतः यजमानस्य स्वभूतं **सुतं** सोमं प्रति ।।

**वेङ्कटमाधव–** अवितारः! मनुष्यधृतः सर्वे देवाः! इहागच्छत दानशीलाः दाशुषः सुतम् ।।

**मुद्गल– हे विश्वे देवासः** । देवाः । दाशुषः हविर्दत्तवतो यजमानस्य **सुतं** अभिषुतं सोमं प्रति **आगत** आगच्छत । ते च देवाः **ओमासः** रक्षकाः **चर्षणीधृतः** मनुष्याणां धारकाः दाश्वांसः फलस्य दातारः ।। ७ ।।

**सायण– हे विश्वे देवासः** एतन्नामका देवविशेषाः **दाशुषः** हविर्दत्तवतो यजमानस्य **सुतं** अभिषुतं सोमं प्रति **आगत** आगच्छत । ते च देवाः **ओमासः** रक्षकाः **चर्षणीधृतः** मनुष्याणां धारकाः **दाश्वांसः** फलस्य दातारः । 'मनुष्याः' इत्यादिषु पञ्चविंशतिसङ्ख्याकेषु मनुष्यनामसु चर्षणिशब्दः (नि.२,३,८) पठितः । 'अश्विनौ' इत्यादिष्वेकत्रिंशत्सङ्ख्याकेषु देवविशेषनामसु 'विश्वेदेवाः साध्याः' (नि.५,६,२७) इति पठितम् । एतामृचं यास्क एवं व्याख्यातवान्– 'अवितारो वावनीया वा मनुष्यधृतः सर्वे च देवा इहागच्छत दत्तवन्तो दत्तवतः सुतमिति तदेतदेकमेव वैश्वदेवं गायत्रं तृचं दशतयीषु विद्यते यत्तु किञ्चिद्बहुदैवतं तद्वैश्वदेवानां स्थाने युज्यते यदेव विश्वलिङ्गमिति शाकपूणिः' (निरु.१२,४०) इति । अत्र विश्वशब्दः सर्वशब्दपर्याय इति यास्कस्य मतम् । देवविशेषस्यैवासाधारणं लिङ्गमिति शाकपूणेर्मतम् । अवन्ति इति ओमासः देवाः । 'मन्' इत्यनुवृत्तौ 'अविसिविसिशुषिभ्यः कित्' (उ.सू.१,१४१) इति मन्प्रत्ययः । 'ज्वरत्वरस्रिव्यविमवामुपधायाश्च' (पा.सू.६,४,२०) इति ऊठ् । मनः कित्वेऽपि बाहुलकत्वाद्गुणः । 'आज्जसेरसुक्' (पा.सू.७,१,५०) इति जसेः असुगागमः । आमन्त्रिताद्युदात्तत्वम् । चर्षणयो मनुष्याः । तान् वृष्टिदानादिना धारयन्तीति चर्षणीधृतः देवाः । पूर्वस्यामन्त्रितस्य सामान्यवचनस्य 'विभाषितं विशेषवचने बहुवचनम्' (पा.सू.८,१,७४) इति अविद्यमानवत्त्वप्रतिषेधात् अपादादित्वेन निघातः ।

ननु अत एव विद्यमानवत्त्वात् 'सुबामन्त्रिते' (पा.सू.२,१,२) इति पराङ्गवत्त्वेनैकपदीभावात् पदादपरत्वेन कथं निघात इति चेत्, न । 'वत्करणं स्वाश्रयमपि यथा स्यात्' (पा.म.८,१,७२) इति वचनात् पदभेदप्रयुक्तस्य निघातस्याप्युपपत्तेः । ऐकपद्येऽप्याद्युदात्तत्वे 'अनुदात्तं पदमेकवर्जम्' (पा.सू.६,१,१५८) इति सुतरामेव विघातो भविष्यति । इत्थमेव तर्हि 'द्रवत्पाणी शुभस्पती' इत्यत्रापि पराङ्गवत्त्वेनैकपद्यादुत्तरस्य शेषनिघातप्रसङ्ग इति चेत्, न । तत्र पराङ्गवद्भावस्य परेण 'आमन्त्रितं पूर्वमविद्यमानवत्' (पा.सू.८,१,७२) इत्यविद्यमानवद्भावेन बाधितत्वात् । इह पुनः 'विभाषितं विशेषवचने बहुवचनम्' इत्यविद्यमानवत्त्वस्य निषेधात् । पूर्वस्याप्यामन्त्रितस्य विद्यमानवत्त्वात् पराङ्गवत्त्वं स्वीकृतमिति वैषम्यम् ।

विश्वे । पादादित्वादाद्युदात्तः । गणदेवतावचनश्चात्र विश्वशब्दो न सर्वशब्दपर्याय इति विशेष्यपरतया सामान्यवचनत्वात् ओमासः इत्यनेन न सामानाधिकरण्यम् । सामानाधिकरण्ये हि पूर्वस्य पादस्य पराङ्गवद्भावे सति 'मित्रावरुणावृतावृधौ' इत्यादाविव अत्राप्यामन्त्रिताद्युदात्तता न स्यात् । विश्वे इत्यस्य विशेषणं देवासः इति । दीव्यन्तीति देवाः प्रकाशवन्तः । ननु 'अवयव-प्रसिद्धेः समुदायप्रसिद्धिर्बलीयसी' (परिभा ९८) इति रूढ एवार्थो देवशब्दस्य ग्राह्यो न यौगिकः । यौगिकत्वे ह्यवयवार्थानुसन्धानव्यवधानेन प्रतिपत्तिर्विक्षिप्ता स्यात् । समुदायप्रसिद्धौ तु न विक्षेप इति चेत्, न । यौगिकत्वे ह्यवययवार्थानुसन्धानव्यवधानेन प्रतिपत्तिर्विक्षिप्ता स्यात् । समुदाय-प्रसिद्धौ तु न विक्षेप इति चेत्, न । समुदायप्रसिद्धौ हि देवशब्दस्य सामान्यपरतया विशेष-वचनत्वाभावात् 'विभाषितं विशेषवचने बहुवचनम्' इत्यनेनानिषिद्धत्वात् विश्वे इत्यस्याविद्यमान-वत्त्वेन शुभस्पती इति पदवत् देवासः इत्यस्यापि आद्युदात्तत्वं स्यात् । स्वरानुसारेण च रूढित्यागेनापि देवशब्दस्य योगस्वीकारो युक्त एव । आगत आगच्छत । 'बहुलं छन्दसि' (पा.सू.२,४,७३) इति शपो लुकि सति 'अनुदात्तोपदेश' (पा.सू.६,४,३७) इत्यादिना मकारलोपः । आङः पदात्परत्वात् निघातः । दाश्वांसः । 'दाशृदाने' इत्यस्य क्वसौ 'दाश्वान् साह्वान् मीढ्वांश्च' (पा.सू.६,१,१२) इति निपातनात् क्रादिनियमप्राप्तः इडागमो (पा.सू. ७,२,१३) द्विर्वचनं च न भवति । प्रत्ययस्वरेण क्वसोरुदात्तत्वम् । दाशुष इत्यत्र 'वसोः सम्प्रसारणम्' (पा.सू.६,४,१३१) इति सम्प्रसारणम् । 'सम्प्रसारणाच्च' (पा.सू.६,१,१०८) इति पूर्वरूपत्वम् । 'आदेशप्रत्यययोः' (पा.सू.८,३,५९) इति षत्वम् ।। ७ ।।

**सिद्धाञ्जनम्**– तृतीये वैश्वदेवतृचे प्रथमामृचमाह– **हे विश्वेदेवासः** एतत्संज्ञकाः सर्वे देवाः, **आगत** आगच्छत। कीदृशास्ते? **ओमासः** अवितारः वर्धयितारः । पुनः कीदृशाः ? **चर्षणीधृतः** चर्षणीनां नराणां धारयितारः । चर्षणयः कृष्टय इव कर्मोद्युक्ताः, न केवलं मनुष्या इति बोध्यम् । पुनः कीदृशाः ? दाशुषः दत्तवतो यजमानस्य **सुतं** अभिषुतं सोमं **दाश्वांसः** यथाभागं विभज्य दातारः ।

ओमासः– अवतेर्धातोर्निष्पन्नः शब्द इति निर्विवादम् । धातूनां बह्वर्थत्वात् वर्धने च अवधातुर्वर्तते । यद्यपीदं पदं सकृदेव प्रयुक्तं ऋक्संहितायां, तथाऽपि 'ओमानं' 'ऊमास' 'ऊमाः' इत्यादयः शब्दाः प्रयुक्ता दृश्यन्ते । सायणस्तु प्रायशः रक्षणार्थोऽवधातुरिति क्वचित् अर्थान्तरमप्याह । तथा च 'ओमानं सुखविशेषं' (१-३४-६) इत्याह । धात्वर्थमब्रुवन्नेव 'ऊमास अवितारः' (१-९६६-३) इत्याह । अन्यत्र 'ऊमाः' ऊमसंज्ञकाः पितरः (३-६-८) इति च । प्राचीन-आर्यभाषाशाखीय-अवादिधात्वर्थपरीक्षणादवतिः वर्धने पोषणे वा वर्तत इति शक्यं निर्णेतुम् । एवमेव अवधातोरूठि परे 'ऊतिः' वर्धनं वृद्धिः इति क्तिन्प्रत्ययान्तं पदम् ।

'चर्षणयः' मनुष्यनामसु पठितमिति हेतोर्मनुष्यसामान्यार्थे न ग्राह्यम् । पञ्चविंशतिनामसु एकमिदम् । कारुः कीरिः कृष्टयः चर्षणयः इत्यादीनि तत्र तत्र पठितान्यपि अविशेषेण न कदाऽपि ग्राह्याणि ।

दाश्वांसः-दादान इत्यस्मान्निष्पन्नम् । अत्रापि विशेषो बोध्यः । तत्तद्युक्तभागानुसारेण विभजनपूर्वकं दानमिति धात्वर्थो बोध्यः ।। ७ ।।

### ऋक्संहिता पदपाठसहिता

**विश्वे॑ दे॒वासो॑ अ॒प्तुरः॑ सु॒तमाग॑न्त॒ तूर्ण॑यः । उ॒स्रा इ॑व॒ स्वस॑राणि ।। ८ ।।**

विश्वे॑ । दे॒वासः॑ । अ॒प्ऽतुरः॑ । सु॒तम् । आ । ग॒न्त॒ । तूर्ण॑यः । उ॒स्राःऽइ॑व । स्वस॑राणि ।।

### ऋग्भाष्यम्

**.......................... अप्तुरः कर्मवेगिनः ।**
**उस्रास्तु रश्मयश्चैव स्वसराणि दिनानि च ।। ८ ।।**

**ऋग्भाष्यटीका– विश्वेदेवासः ।। अप्तुरः** । अप्शब्दः कर्मवाची । तुरत्वरणे । ततः क्विप् । ततोऽप्तुरः कर्मवेगिनः । एवशब्देनाभिधानिकत्वान्निर्वचनानपेक्षत्वं सूचयति । **हे अप्तुरः** विश्वेदेवाः **स्वसराणि** दिनानि प्रति **उस्रा** रश्मय इव **तूर्णयः** त्वरितास्संतोऽस्मदीयं **सुतमागन्त** आगच्छत ।। ८ ।।

**मन्त्रार्थमञ्जरी–** अप्तुरः, कर्मवेगिनः, कर्मवाच्यप्शब्दे उपपदे 'तुर त्वरणे' इति धातोः क्विपि 'अप्तुर्' इति रूपम्, तस्य सम्बोधनबहुवचनम् । (हे) विश्वे देवासः, विश्वे देवाः । स्वसराणि, दिनानि प्रति । उस्राइव, रश्मयइव । तूर्णयः, त्वरिताः सन्तः, 'ञित्वरा सम्भ्रमे' इत्यतः 'वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित्' इति निप्रत्यये 'ज्वरत्वरस्रिव्यविमवामुपधायाश्च' इत्यूठि सम्प्रसारणसवर्णदीर्घयोः सतोः 'तूर्णयः' इति प्रथमाबहुवचने रूपम् । (अस्मदीयम्) सुतम्, सोमं प्रति । आ गन्त, आगच्छत ।। ८ ।।

**स्कन्द– विश्वे देवासः** विश्वदेवाः । **अप्तुरः** अप्छब्दः उदकवचनः । अन्तर्णीतण्यर्थस्य तरतेरप्तुरः । अपां तारयितार आदित्यं प्रति गमयितारः । रश्मयो हि नैरुक्तानां विश्वेदेवाः । ते च रसानामादातारः । अथवा आप्लृ व्याप्तावित्येतस्य तृजन्तस्य षष्ठ्येकवचन एतद्रूपम् । स्तुतिभिश्च हविर्भिश्च देवतानामाप्तुर्यजमानस्य स्वभूतं **सुतं** सोमं **आगन्त** व्यत्ययेनात्र मध्यमपुरुषः । आगच्छन्तु । आ गन्तेति वा मध्यमपुरुषः श्रुतिसामर्थ्यात् । विश्वेदेवासो अप्तुर इत्येतौ व्यत्ययेनामन्त्रितप्रथमौ व्याख्यातव्यौ । हे विश्वेदेवाः! अप्तुरः! यूयमागच्छत इति । **तूर्णयः** क्षिप्रनामैतत् (तु निघ २, १५) क्षिप्राः । कथम् ? **उस्रा इव स्वसराणि** । उस्रा इति गोनाम, (तु निघ २, ११) रश्मिनाम (तु. निघ १, ५) वा । 'स्वसराणि (निघ १,९) इत्यहर्नाम । यथा दोहार्थं गावः समस्ता रश्मयो वा अहानि प्रत्यागच्छन्ति तद्वत् समस्ता आगच्छत इत्यर्थः ।।

**वेङ्कटमाधव– विश्वे देवाः** मेघस्थानामपामुद्गमयितार : क्षिप्राः सुतं आगच्छत सर्वे ये तरन्ति रश्मय इव अहानि । यद्वा गोष्टानीव गावः ।। ८ ।।

**मुद्गल– विश्वे देवासः** देवा **सुतं** सोमं **आ गन्त** आगच्छन्तु । कीदृशाः । अप्तुरः तत्तत्काले वृष्टिप्रदाः । **तूर्णयः** त्वरायुक्ताः । यजमानमनुग्रहीतुमालस्यरहिता इत्यर्थः । दृष्टान्तः- **उस्रा** इव उस्राः सूर्यरश्मयः **स्वसराणि** अहानि प्रति आलस्यरहिता यथा समागच्छन्ति तद्वत् ।।

**सिद्धाञ्जनम्–** तृतीये वैश्वदेवतृचे प्रथमामृचमाह– **हे विश्वेदेवासः** एतत्संज्ञकाः सर्वे देवाः, **आगत** आगच्छत। कीदृशास्ते? **ओमासः** अवितारः वर्धयितारः । पुनः कीदृशाः ? **चर्षणीधृतः** चर्षणीनां नराणां धारयितारः । चर्षणयः कृष्टय इव कर्मोद्युक्ताः, न केवलं मनुष्या इति बोध्यम् । पुनः कीदृशाः ? दाशुषः दत्तवतो यजमानस्य **सुतं** अभिषुतं सोमं **दाश्वांसः** यथाभागं विभज्य दातारः ।

ओमासः– अवतेर्धातोर्निष्पन्नः शब्द इति निर्विवादम् । धातूनां बह्वर्थत्वात् वर्धने च अवधातुर्वर्तते । यद्यपीदं पदं सकृदेव प्रयुक्तं ऋक्संहितायां, तथाऽपि 'ओमानं' 'ऊमास' 'ऊमाः' इत्यादयः शब्दाः प्रयुक्ता दृश्यन्ते । सायणस्तु प्रायशः रक्षणार्थोऽवधातुरिति क्वचित् अर्थान्तर-मप्याह । तथा च 'ओमानं सुखविशेषं' (१-३४-६) इत्याह । धात्वर्थमब्रुवन्नेव 'ऊमास अवितारः' (१-९६६-३) इत्याह । अन्यत्र 'ऊमाः' ऊमसंज्ञकाः पितरः (३-६-८) इति च । प्राचीन-आर्यभाषाशाखीय-अवादिधात्वर्थपरीक्षणादवतिः वर्धने पोषणे वा वर्तत इति शक्यं निर्णेतुम् । एवमेव अवधातोरूठि परे 'ऊतिः' वर्धनं वृद्धिः इति क्तिन्प्रत्ययान्तं पदम् ।

'चर्षणयः' मनुष्यनामसु पठितमिति हेतोर्मनुष्यसामान्यार्थे न ग्राह्यम् । पञ्चविंशतिनामसु एकमिदम् । कारुः कीरिः कृष्टयः चर्षणयः इत्यादीनि तत्र तत्र पठितान्यपि अविशेषेण न कदाऽपि ग्राह्याणि ।

दाश्वांसः-दादान इत्यस्मान्निष्पन्नम् । अत्रापि विशेषो बोध्यः । तत्तद्युक्तभागानुसारेण विभजनपूर्वकं दानमिति धात्वर्थो बोध्यः ।। ७ ।।

ऋक्संहिता पदपाठसहिता

**विश्वे॑ दे॒वासो॑ अ॒प्तुरः॑ सु॒तमाग॑न्त॒ तूर्ण॑यः । उ॒स्रा इ॑व॒ स्वस॑राणि ।। ८ ।।**

विश्वे॑ । दे॒वासः॑ । अ॒प्ऽतुरः॑ । सु॒तम् । आ । ग॒न्त॒ । तूर्ण॑यः । उ॒स्राःऽइ॑व । स्वस॑राणि ।।

ऋग्भाष्यम्

**.......................... अप्तुरः कर्मवेगिनः ।**
**उस्रास्तु रश्मयश्चैव स्वसराणि दिनानि च ।। ८ ।।**

**ऋग्भाष्यटीका– विश्वेदेवासः ।। अप्तुरः ।** अप्शब्दः कर्मवाची । तुरत्वरणे । ततः क्विप् । ततोऽप्तुरः कर्मवेगिनः । एवशब्देनाभिधानिकत्वान्निर्वचनानपेक्षत्वं सूचयति । **हे अप्तुरः** विश्वेदेवाः **स्वसराणि** दिनानि प्रति **उस्रा** रश्मय इव **तूर्णयः** त्वरितास्संतोऽस्मदीयं **सुतमागन्त** आगच्छत ।। ८ ।।

**मन्त्रार्थमञ्जरी–** अप्तुरः, कर्मवेगिनः, कर्मवाच्यप्शब्दे उपपदे 'तुर त्वरणे' इति धातोः क्विपि 'अप्तुर्' इति रूपम्, तस्य सम्बोधनबहुवचनम् । (हे) विश्वे देवासः, विश्वे देवाः । स्वसराणि, दिनानि प्रति । उस्राइव, रश्मयइव । तूर्णयः, त्वरिताः सन्तः, 'ञित्वरा सम्भ्रमे' इत्यतः 'वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित्' इति निप्रत्यये 'ज्वरत्वरस्रिव्यविमवामुपधायाश्च' इत्यूठि सम्प्रसारणसवर्णदीर्घयोः सतोः 'तूर्णयः' इति प्रथमाबहुवचने रूपम् । (अस्मदीयम्) सुतम्, सोमं प्रति । आ गन्त, आगच्छत ।। ८ ।।

**स्कन्द– विश्वे देवासः** विश्वदेवाः । **अप्तुरः** अप्छब्दः उदकवचनः । अन्तर्णीतण्यर्थस्य तरतेरप्तुरः । अपां तारयितार आदित्यं प्रति गमयितारः । रश्मयो हि नैरुक्तानां विश्वेदेवाः । ते च रसानामादातारः । अथवा आप्लृ व्याप्तावित्येतस्य तृजन्तस्य षष्ठ्येकवचन एतद्रूपम् । स्तुतिभिश्च हविर्भिश्च देवतानामाप्तुर्यजमानस्य स्वभूतं **सुतं** सोमं **आगन्त** व्यत्ययेनात्र मध्यमपुरुषः । आगच्छन्तु । आ गन्तेति वा मध्यमपुरुषः श्रुतिसामर्थ्यात् । विश्वेदेवासो अप्तुर इत्येतौ व्यत्ययेनामन्त्रितप्रथमौ व्याख्यातव्यौ । हे विश्वेदेवाः! अप्तुरः! यूयमागच्छत इति । **तूर्णयः** क्षिप्रनामैतत् (तु निघ २, १५) क्षिप्राः । कथम् ? **उस्रा इव स्वसराणि** । उस्रा इति गोनाम, (तु निघ २, ११) रश्मिनाम (तु. निघ १, ५) वा । 'स्वसराणि (निघ १,९) इत्यहर्नाम । यथा दोहार्थं गावः समस्ता रश्मयो वा अहानि प्रत्यागच्छन्ति तद्वत् समस्ता आगच्छत इत्यर्थः ।।

**वेङ्कटमाधव– विश्वे देवाः** मेघस्थानामपामुद्गमयितार : क्षिप्राः सुतं आगच्छत सर्वे ये तरन्ति रश्मय इव अहानि । यद्वा गोष्ठानीव गावः ।। ८ ।।

**मुद्गल– विश्वे देवासः** देवा **सुतं** सोमं **आ गन्त** आगच्छन्तु । कीदृशाः । अप्तुरः तत्तत्काले वृष्टिप्रदाः । **तूर्णयः** त्वरायुक्ताः । यजमानमनुग्रहीतुमालस्यरहिता इत्यर्थः । दृष्टान्तः- **उस्रा** इव उस्राः सूर्यरश्मयः **स्वसराणि** अहानि प्रति आलस्यरहिता यथा समागच्छन्ति तद्वत् ।।

**सायण– विश्वे देवासः** एतन्नामकगणरूपा देवविशेषाः **सुतं** सोमं **आगन्त** आगच्छन्तु । कीदृशाः? **अप्तुरः** तत्तत्काले वृष्टिप्रदा इत्यर्थः । **तूर्णयः** त्वरायुक्ताः यजमानमनुग्रहीतुमालस्य-रहिता इत्यर्थः । विश्वेषां देवानां सोमं प्रति आगमने उस्रा इत्यादिर्दृष्टान्तः । **उस्राः** सूर्यरश्मयः **स्वसराणि** अहानि प्रति आलस्यरहिता यथा समागच्छन्ति तद्वत् । 'खेदयः' इत्यादिषु पञ्चदशसु रश्मिनामसु 'उस्रा वसवः' (नि.१,५,९) इति पठितम् । 'वस्तोः' इत्यादिषु द्वादशस्वहर्नामसु 'स्वसराणि घ्रंसः घर्मः' (नि.१,९,५) इति पठितम् । तच्च पदं यास्केन व्याख्यातं– 'स्वसराण्यहानि भवन्ति स्वयंसारीण्यपि वा स्वरादित्यो भवति स एनानि सारयति । उस्रा इव स्वसराणीत्यपि निगमो भवति' (निरु.५,४) इति ॥

देवासः । पचाद्यजन्तः (पा.सू.३,१,१३४) चित्त्वादन्तोदात्तः । अप्तुरः 'तुर त्वरणे' श्लुविकरणी । तुतुरति त्वरयन्तीत्यर्थे 'क्विप् च' (पा.सू.३,२,७३) इति क्विप् । 'गतिकारको-पपदात्कृत्' (पा.सू.६,२,१३९) इत्युत्तरपदप्रकृतिस्वरत्वम् । आ गन्त । आगच्छन्तु इत्यर्थे व्यत्ययेन मध्यमपुरुषबहुवचनम् । 'बहुलं छन्दसि' (पा.सू.२,४,७३) इति शपो लुक् । तस्य 'तप्तनप्तनथनाश्च' (पा.सू.७,१,४३) इति तबादेशे 'अपित्' (पा.सू.१,२,४) इति प्रतिषेधात् अङित्त्वात् अनुनासिकलोपाभावः । 'तिङ्ङतिङः' इति निघातः । 'ञित्वरा सम्भ्रमे' इति धातोः त्वरन्ते इति तूर्णयः । 'निः' इत्यनुवृत्तौ 'वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित्' (उ.सू.४, ४९१) इति निप्रत्ययः । नित्त्वादाद्युदात्तः । उस्रा इव इत्यत्र 'इवेन विभक्त्यलोपः पूर्वपद-प्रकृतिस्वरत्वं च' (पा.सू.२,१,४,२) इति समासे पूर्वपदप्रकृतिस्वरत्वं नित्यम् । सरतीति सरः सूर्यः । पचाद्यच् । स्वः सरो येषां तानि स्वसराणि अहानि । 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' (पा.सू.६,२,१) इति स्वशब्द आद्युदात्तः ॥ ८ ॥

**सिद्धाञ्जनम्–** वैश्वदेवतृचे द्वितीयामृचमाह– हे **विश्वे देवासः** विश्वेदेवाः **सुतं** अस्मदीयं सोमं प्रति **आगन्त** आगच्छत । कीदृशाः ? **अप्तुरः** अपः तुतुरति, श्लुग्विकरणी त्वरयन्तीति अप्तुरः वृष्टिप्रदाः । वृष्टिर्दिव्यानामभीष्टानामिति बोध्यम् । पुनः कीदृशाः? **तूर्णयः** त्वरमाणाः । अत्रोपमामाह – **स्वसराणि** गोष्ठानि **उस्राः इव** गाव इव। **उस्राः** रश्मयः **स्वसराणि** स्वावास-स्थानानि अहानि यथेति केचन व्याख्यातारः ।

अप्सुरः– वृष्टिप्रदाः। सर्वेऽपि देवाः वर्षितारः एव तेजो-बल-भोगादीनां, उदकस्यैव वर्षितारो देवा इति कथा शैशवी कल्पनोपहास्यतां याति । अपां तारयितारः, 'अन्तर्णीतण्यर्थस्य तरतेरप्सुरः' इति स्कन्दस्वामी। अर्थद्वयेऽपि अपां साङ्केतिकमर्थं गृह्णीयात् । तेन ऋचस्तात्पर्यं सुगमं भवति। तृचस्यान्ते प्रदर्शयिष्यामः । 'उस्राः'-गोनाम रश्मिनाम च। एवं द्व्यर्थशब्दप्रयोगः साधारणो वेदे । तत्रापि उपमायां ईदृशा प्रयोगेण उपमानोपमेययोरभेदाध्यवसायद्वारा उपमेयार्थस्य उपमानपदार्थः सङ्केतरूपबाह्यभाव इति व्यक्तो भवति । तथा स्वसराणिअहानि स्वयं सरति आदित्यः एषु, स्वः सूर्यः इमानि सारयतीत्यादि निर्वचनमाहुः । विश्रान्तिसुखपदानि स्वसराणि गृहाणि (गोष्ठानि) अहानि वा भवन्तु ।

आगन्तेति मध्यमपुरुषश्रुतिसामर्थ्यात् 'विश्वेदेवासः,' इत्यत्र आमन्त्रितप्रथमान्ततया व्याख्यातम् । तथा तद्विशेषणे च। एवं तृतीयतृचेऽपि आमन्त्रिता विश्वेदेवा इति बोध्यम् । एवं ऋग्द्वये श्रुतेन आमन्त्रणेन सङ्गच्छेत ॥ ८ ॥

### ऋक्संहिता पदपाठसहिता

**विश्वे॑ दे॒वासो॑ अ॒स्रिध॒ एहि॑ मायासो अ॒द्रुहः॑ । मेधं॑ जुषन्त॒ वह्न॑यः ॥ ९ ॥**

विश्वे॑ । दे॒वासः॑ । अ॒स्रिधः॑ । एहि॑ऽमायासः । अ॒द्रुहः॑ । मेध॑म् । जु॒षन्त॒ । वह्न॑यः ॥ ९ ॥

### ऋग्भाष्यम्

**असंसारादस्रिधस्ते देवाश्चेन्मोक्षनिश्रयात् ।**
**यथेष्टनिश्चितज्ञाना एहि मायाः समन्ततः ।**
**अदुःखत्वादद्रुहस्ते मेधं यज्ञं जुषन्तु नः ।**
**वह्नयो वहनादस्य .............. ॥ ९ ॥**

**ऋग्भाष्यटीका– विश्वेदेवासो अस्रिधः** । स्रिधुर्हिंसार्थः । ततः क्विप् । न विद्यते स्रिधे-षान्तेऽस्रिधः अहिंस्याः । एतद्भगवत्युपपादयति– **असंसारादिति** ।। देवतान्तरे घटयति– **देवाश्चेदिति–** मोक्षनिश्रयात् उपचारेणास्रिध इत्यर्थः । आ इत्यस्य समन्तत इति व्याख्यानम् । इशब्द इच्छावाची । इषु इच्छायामित्यतो डिः । अत उक्तं **यथेष्टेति** । हिशब्दः प्रसिद्धिवाचि-त्वान्निश्चयार्थः । मायाशब्दो ज्ञानार्थः । प्रज्ञानामसु पाठात् । सर्वविषयस्वतन्त्रनिश्चयज्ञाना

इत्यर्थः । द्रुहः क्लेशार्थः । ततः सम्पदादित्वात्क्विप् । न विद्यते ध्रुक् येषान्तेऽद्रुह इत्यभिप्रेत्योक्तं **अदुःखत्वादिति । जुषंत** जुषत सेवध्वम् । तस्य तात्पर्यं ते जुषंत्विति । अस्य जगतो वहनात् प्रवर्तनात् । वहतेरौणादिको निः ।। ९ ।।

**मन्त्रार्थमञ्जरी–** अस्रिधः, 'स्रिधु हिंसायाम्' इत्यतो भावे क्विप्, न विद्यते स्रिद्धिंसा येषां तेऽस्रिधोऽहिंस्याः, एतच्च विशेषणमीशरूपाणां नित्यमुक्तत्वादन्यदेवतानां तु निश्चितमुक्तिकत्वा-दुपचारेणेति ज्ञेयम् । एहिमायासः, 'आ इ हि मायासः' इति वर्णविवेकः, 'इष इच्छायाम्' इत्यतो डिप्रत्यये 'इ' इति रूपम् हिशब्दः प्रसिद्धवाचित्वान्निश्चितार्थः, आ समन्तादि इच्छाधीना हि निश्चिता माया ज्ञानं येषां त एहिमायाः, एहिमाया एवेहिमायासः, 'आज्जसेरसुक्' सर्वविषयकस्वतन्त्रनिश्चितज्ञाना इत्यर्थः । अद्रुहः, 'द्रुह क्लेशे' इत्यतः सम्पदादित्वात्क्विप्, न विद्यते ध्रुग्येषां तेऽद्रुहोऽदुःखाः । वह्नयः, जगत्प्रवर्तकाः, 'वह प्रापणे' इत्यत औणादिको निप्रत्ययः (हे) विश्वे देवासः, विश्वे देवाः । मेधम्, अस्मदीयं यज्ञम् । जुषन्त, जुषत सेवध्वमित्यर्थः, 'जुषी प्रीतिसेवनयोः' ।। ९ ।। इति तृतीयो वैश्वदेवस्तृचः ।। ३ ।।

**स्कन्द– विश्वे देवासः** विश्वेदेवाः । **अस्रिधः** न स जीयते मरुतो न हन्यते न स्रेधति (ऋ.५,५४,७) इति दर्शनात् स्रिधिः क्षयार्थः शोषणार्थो वा । अक्षया अशोषयितारो वा । **एहिमायासः** सौचीकमग्निमप्सु प्रविष्टं 'ये हि मायासो' इति यदवोचन्, तदनुकरणहेतुकोऽयं विश्वेषां देवानां व्यपदेशः एहिमायास इति । अथवा अहीनमाया एहिमायासः । अन्यूनप्रज्ञाना इत्यर्थः । **अद्रुहः** अद्रोग्धारो यजमानानाम् । **मेधं** यज्ञमस्मदीयं **जुषन्त** सेवन्ताम् । वह्नयः वोढारः धनानां दातार इत्यर्थः ।। ९ ।।

**वेङ्कटमाधव–** विश्वे देवाः क्षयारहिताः स्तोतारं, 'एहि मा यासीः इति वदन्तः' द्रोहरहिता यज्ञमसेवन्त वोढारः ।। ९ ।।

**मुद्गल– विश्वे देवासः** देवाः **मेधं** हविः यज्ञसम्बद्धं **जुषन्त** सेवन्ताम् । कीदृशाः ? **अस्रिधः** क्षयरहिताः **एहिमायासः** सर्वतो व्याप्तप्रज्ञाः **अद्रुहः** द्रोहरहिताः **वह्नयः** वोढरः धनानां प्रापयितारः ।

**सायण– विश्वे देवासः** एतन्नामका देवविशेषाः **मेधं** हविर्यज्ञसम्बद्धं **जुषन्त** सेवन्ताम् । कीदृशाः ? **अस्रिधः** क्षयरहिताः शोषरहिता वा । **एहिमायासः** सर्वतो व्याप्तप्रज्ञाः । यद्वा ।

सौचीकमग्निमप्सु प्रविष्टं 'एहि मा यासीः' इति यदवोचन् तदनुकरणहेतुकोऽयं विश्वेषां देवानां व्यपदेश एहिमायास इति । **अद्रुहः** द्रोहरहिताः **वह्नयः** वोढारो धनानां प्रापयितारः ।

अस्रिधः । स्रिधेः क्षयार्थस्य शोषणार्थस्य वा सम्पदादिभ्यो भावे क्विपि (पा.सू.३,३,१०८, ९) नञा बहुव्रीहिः पूर्वपदप्रकृतिस्वरं बाधित्वा 'नञ्सुभ्याम्' (पा.सू.६,२,१७२) इत्युत्तरपदान्तोदात्तत्वम् । एहिमायासः । 'ईह चेष्टायाम्' । आ समन्तात् ईहते इति एहिः । 'इन्' (उ.सू.४,५५७) इति सर्वधातुसाधारण इन्प्रत्ययो नित्त्वादाद्युदात्तः । एहिः माया प्रज्ञा येषामिति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । अथवा आङ उदात्तादुत्तरस्य इहीति लोण्मध्यमैकवचनस्य 'तिङ्ङतिङः' इति निघातः । 'एकादेश उदात्तेनोदात्तः' (पा.सू.८,२,५) इत्येकार उदात्तः । एहीत्येतत् पदयुक्तं 'मा यासीः' इत्यत्र 'माया' इत्यक्षरद्वयं येषां ते एहिमायासः । पूर्वपदप्रकृतिस्वरः । अद्रुहः । 'द्रुह जिघांसायाम्' । सम्पदादित्वाद्भावे क्विपि बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तादात्तत्वम् । मेधम् । 'मेधृ सङ्गमे च' । मेध्यते देवैः सङ्गम्यते इति मेधं हविः । कर्मणि घञ् । ञित्वादाद्युदात्तः । जुषन्त । सेवन्तामित्यर्थे 'छन्दसि लुङ्लङ्लिटः' (पा.सू. ३,४,६) इति धातुसम्बन्धे लङ् । यत उक्तरूपा विश्वे देवा अतो जुषन्त इति द्रुहादिधात्वर्थैः सम्बन्धात् 'बहुलं छन्दस्यमाङ्योगेऽपि' (पा.सू.६,४,७५) इत्यडागमा भावः । वह्नयः । 'निः' इत्यनुवृत्तौ 'वहिश्रि' इत्यादिना विहितस्य निप्रत्ययस्य नित्त्वादाद्युदात्तत्वम् ।। ९ ।।

**सिद्धाञ्जनम्–** वैश्वदेवतृचे तृतीयामृचमाह– **विश्वेदेवासः** हे विश्वेदेवाः **मेधं** यज्ञं (मदीयं सोमसवं) **जुषन्त** सेवध्वम् (व्यत्ययेन प्रथमपुरुषबहुवचनान्तम्) । कीदृशाः ? **अस्रिधः** क्षतिरहिताः न केनापि क्षपयितुं शक्या इत्यर्थः। पुनः कीदृशाः ? **अद्रुहः** द्रोहरहिताः (यजमानाय न दुह्यन्ति, स्वयं अक्षय्याः आश्रितानां भक्तानां न क्षयमापादयन्ति, प्रतिकूलं नाचरन्ति, तान् न वञ्चयन्तीत्यर्थः।) पुनः कीदृशाः ? **एहिमायासः** आङ् समन्तात् ईहिः ईहमाना माया प्रज्ञा येषां ते (सर्वतोगतिकप्रज्ञाविशेषसम्पन्ना इत्यर्थः। पुनः कीदृशाः? **वह्नयः** वोढारः (भर्तारः, अस्मदीययज्ञस्य धारकाः सन्तः त भजन्तु भवन्त इत्यर्थः ।

अस्रिधः– सिधिः क्षये शोषणे वा इति व्याख्यातारः। न कुतोऽप्यभिघात एषामिति विवक्षा । एहिमायासः– सकृदेव प्रयुक्तं इदं वेदे । अप्सु प्रविष्टं सौचीकमग्निं 'एहि मा यासीः' इति विश्वेदेवा अवोचन्, तदनुकरणहेतुकोऽयं विश्वेषां देवानां व्यपदेश 'एहिमायासः' इति सायणस्य वापक्ष-

व्याख्या । सर्वतो व्याप्तप्रज्ञाः इति साधुरर्थः सायणीयः। अद्रुहः–व्याख्यातम् । मेधं– मेध्यते सङ्गम्यते देवैरिति मेधं हविराह सायणः । यज्ञ इति वक्तव्यम् । 'अस्मदीयं यज्ञं' इति स्कन्दस्वामी, तथा अन्ये च। क इमे विश्वेदेवाः ? एतत्संज्ञकाः देवताविशेषा इत्येके, यथा शाकपूणिः । सर्वपर्यायो विश्वशब्दः, तस्मात् सर्वदेवतसमष्टिरिति यास्कमतम् । अपरोक्तमेव साधीयो दृश्यते, यतो वैश्वदेवसूक्तमन्त्रेषु प्रयुक्तानि विशेषणानि प्रतिपादिता अर्थाश्च सर्वदेव-समुदायार्थसंवादं बिभ्रतीत्यसंशयम् । तदस्मिन् तृचे सर्वदैवतसाधारणगुणाः कीर्तिताः। तर्हि एषां शंसनस्य कोऽवसरः ? उच्यते। यदश्विभ्यां इन्द्रेण च साधितं तदेव दिव्यं कर्म विश्वैर्देवैः उक्तानुक्तेर्ज्ञाताज्ञातैर्वा परदैवतविभूतिभूतैः सम्भूय धारयितव्यम् , ततः पूरयितव्यम् । अत एव सर्वदेवसमष्टेः प्रसादः प्रार्थ्यते ।

अस्य तृचस्य तत्र तत्र कृतैः पदार्थविवरणैरेषां विश्वेषां देवानां विशेषणानि आवश्यकस्थलेषु व्याख्यातानि। 'अप्तुरः' इत्यस्य अपां त्वरयितारः तारयितारो वेति व्याख्याय द्विधाऽपि सम्भवः साधीयान् अभ्युपगतश्च । समुद्रः,नदी,इत्यादिशब्दाः सङ्केतरूपाः, तस्मादापश्च सङ्केतार्थः प्रागुक्तः । भूमिकायां सविचार इदं सर्वमावेदितं स्मार्यम् । तदेवं मानुषे जने यजमाने अन्तर्यागपरायणे, आश्विनव्यापारात् प्राणसत्त्वे साधिते, ऐन्द्रकर्मणा धीसत्त्वे च निष्पादिते, सोमाभिषवपदलक्षिता-नन्दवर्षे च मन-प्राण-शरीरेषु प्रवृत्ते, विश्वेदेवा आमन्त्रितास्तं सवमाविश्य धारयमाणाः यजन-परिपूर्तये प्रभवन्तीति बोध्यम् ।

अथान्तिमे तृचे, अश्विनोरिन्द्रस्य विश्वेषां देवानां च प्राणबुद्धिनिष्पादनस्य पर्यवसानं ऋतचितिप्राप्तौ इति, ऋतचितिसम्पत्तिरेव यज्ञस्योद्देशः प्राप्तव्यं फलितमिति च असन्दिग्धं विस्पष्टं लक्ष्यते ।। ९ ।।

## ऋक्संहिता पदपाठसहिता

**पावका नः सरस्वती वाजेभिर्वाजिनीवती । यज्ञं वष्टु धिया वसुः ।। १० ।।**

पावका । नः । सरस्वती । वाजेभिः । वाजिनीऽवती । यज्ञम् । वष्टु । धियाऽवसुः ।।१०।।

## ऋग्भाष्यम्

................ **शोधकत्वात्तु पावका ।**

**सरणात्सर्वगत्वेन सर्वज्ञो वा सरो हरिः ।**
**सरसः सरतित्वाद्वा तद्वत्येव सरस्वती ।**
**हरौ गुणाः सरश्शब्दा देवीतु हरिवाचिनी ।**
**हरिप्रियत्वतो वायुः सरस्वांस्तत्प्रियाऽथवा ।**
**गुणत्वेन ततत्वाद्वा भगवांस्तु सरस्वती ।**
**स्त्रीरूपश्चैव पुंरूपो भगवान्न नपुंसकः ।**
**स्त्रीपुंदोषविहीनत्वादपि तच्छब्दगोचरः ।**
**अन्नेनो वाजिनामीशो वाजिनी सूर्य उच्यते ।**
**वाजीनच्छन्दसां वापि स्वामी प्रोक्तः सवाजिनी ।**
**छन्दांस्यश्वा यतस्तस्य ते चेना अन्यवाजिना ।**
**अन्नवत्त्वाद्वाजिनी वाग्ज्ञानयुद्धत्वतोऽपि वा ।**
**स पुत्रो वागुमा तस्याः पुत्री तद्वाजिनीवती ।**
**सरस्वती हरिर्वापि यज्ञं वहतु नोऽशनैः ।**
**अन्नदा हि सदा देवी धिया सह वसेद्यतः ।**
**धियावसुर्नित्यबोधा ।। १० ।।**

**ऋग्भाष्यटीका– पावकानः** ।। शोधकत्वात् । सरस्वतीशब्दं व्याख्यातं सरःशब्दार्थं तावदाह– **सरणादिति** ।। सर्वत्र गमनात् । तस्यैव तात्पर्यं **सर्वगत्वेनेति** ।। सृगतौ । अस्मादसुन्प्रत्ययः । गत्यर्थानां ज्ञानार्थत्वात्सर्वज्ञो वा सरः । सरसः ससार इति वा सरः । बलवानित्यर्थः । रसाकारलोपः । सरतित्वात्ससुखत्वात् । रमेरसुन् डिच्च । सह रसा रत्या वर्तत इति सरः । तद्वती सरःशब्दार्थो हरिरस्यां विद्यत इति । इदं च व्याख्यानं देवतान्तर-विषयम् । हरौ तु विवक्षिते उक्तनिरुक्त्या गुणाः ज्ञानादयः सर इति शब्दो येषां ते सरःशब्दाः । **तद्वत्वात्सरस्वती** । देवतान्तरस्य परमेश्वरवत्त्वं नाम किमित्यत आह– **देवी त्विति** ।। वेदाभिमानित्वात् । उक्तनिर्वचनेन हरिः सरः । तद्वत्वात् तत्प्रियत्वतः । तत्प्रिया तद्भार्येति वाऽन्या सरस्वती । उक्तनिरुक्त्या गुणाः सरःशब्दार्थाः । त एव स्वं धनं सरस्वम् । तेन ततत्वाद्व्याप्तत्वात् सरस्वतः । सरस्वत(स्वच्छब्दात्) शब्दात् स्त्रियामीकारः ।

ननु हरौ स्त्रीलिङ्गप्रयोगः कथम् । यदि स्त्रीत्वात् कथं तर्ह्यग्न्यादिपुल्लिङ्गप्रयोगः तत्राह– **स्त्रीरूप इति** ।। एवं चेद् ब्रह्मादिपदप्रयोगान्नपुंसकरूपोऽप्यङ्गीकार्यः । नेत्याह – **नेति** ।। कथं तर्हि नपुंसकलिङ्गप्रवृत्तिस्तत्रेत्यत आह– **स्त्रीति** ।। दोषाः पुरुषाभिलाषादयः । वाजिनीवतीशब्दं व्याख्यातुं वाजिनीशब्दार्थं तावदाह– **अन्नेन इति** ।। वाजमन्नम् । तदेव तृतीयोऽतिशय इति वाजि । तन्नयतीति वाजिनी सूर्यः । (अस्य) तस्य तात्पर्यम् अन्नेन इति । यद्वा वाजमन्नं वाजस्येनो वाजेनः । स एव वाजिनी सूर्यः । अविभक्तिको निर्देशः । अथवा वाजिनामश्वानां अन्नवतां वा ईश इति । स एव वाजिनी । पूर्ववदुभयथा विवरणम् । अथवा वाजिनामश्वानामिनानि सप्तछन्दांसि वाजीनानि तान्येव शकंध्वादित्वाद्वाजिनानि । तान्यस्य सन्ति तेषां स्वामीति वाजिनी । वाजीनच्छन्दसां स्वामित्वं कथं सूर्यस्येत्यत आह– **छन्दांसीति** ।। वाजिनीशब्दस्यान्यदप्यभिधेयमाह– **अन्नवत्त्वादिति** ।। वाजमन्नं युद्धं च । तदस्यामस्तीति वाजिनी । वाचो युद्धवत्त्वोपपादनाय ज्ञानग्रहणम् । ज्ञानार्थं युद्धं वादादि ।

अस्त्वेवं सूर्यस्य वाचश्च वाजिनीत्वम् । ततः किमित्यत आह– **स इति** ।। स सूर्यस्तस्याः विष्णवाख्यायाः प्रसिद्धायाश्च सरस्वत्याः पुत्रः । वाक्च पुत्री । तदेवं तदुभयवत्त्वाद्वाजिनीवती । ननु वागपि सरस्वती तत्कथं तद्वतीत्यत उक्तं– **वागुमेति** । एवंविधा सरस्वती नोऽस्माकं यज्ञम् । वाजेभिर्वाजैरशनैर्बहिरध्यात्मं ज्ञानयुद्धैश्च वष्टु वहतु प्रवर्तयतु विकरणलोपः षत्वं च छन्दस्त्वात् । अन्नादि दत्वेत्यर्थः । तदुपपादयति– **अन्नदेति** ।। अनेन वाजिनीवतीत्युक्तस्योपयोगोऽभिहितो भवति । अत एव वाजेभिरुपेतं नो यज्ञं वष्टु इच्छत्विति व्याख्यानं न कृतम् । अन्नमित्युपलक्षणम् । धिया सह वसेदित्यनेन वसतेरुकार (कारः) प्रत्ययः । तेन सहार्थे तृतीयायाः समासोऽलुक्चेत्युक्तं भवति । नित्यबोधेति तात्पर्यकथनम् ।। १० ।।

**मन्त्रार्थमञ्जरी–** पावका, शोधिका, 'पूञ् पवने' इत्यतः 'ण्वुल्तृचौ' इति ण्वुल्, 'अचो ञ्णिति' इति धातूकारवृध्यावादेशौ, प्रत्ययस्य 'युवोरनाकौ' इत्यकादेशः, स्त्रीत्वात् 'अजाद्यतष्टाप्' 'प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः' इतीत्त्वाभावश्छान्दसः । वाजिनीवती, वाजमन्नम्, तदेव वाजि, 'तृतीयोऽतिशये' (म.व्या.सू.) तन्नयतीति वाजिनीरन्नपतिः सूर्यः पुत्रत्वेनास्या विष्णवाख्याया वाण्याश्चास्तीति वाजिनीवती, यद्वा– वाजमन्नं युद्धं च, अन्नवत्त्वाज्ज्ञानयुद्धवत्त्वाच्च

वाजिनी वागुच्यते, तदभिमानिन्युमा पुत्रीत्वेन विष्णोर्वाण्याश्च वर्तत इति वाजिनीवती । धियावसुः धिया सह वसतीति धियावसुः, वसतेः उकारोऽलुक्समासो नित्यबोधेत्यर्थः । सरस्वती, सरो व्याप्तिर्ज्ञानं सुखं च, 'सृ गतौ' इत्यतो डप्रत्यये गतेर्निरुपचरितत्वेन व्याप्तिरूपत्वाद्गतेर्ज्ञानार्थत्व-प्रसिद्धेश्च सपदेन व्याप्तिज्ञानयोर्लाभः, रमेः औणादिकेऽसुन्प्रत्यये तस्य डित्त्वे च 'रः' इति सुखलाभः, व्याप्त्यादयो गुणा अस्याः सन्तीति स्त्रीरूपो हरिरुच्यते, देवतान्तरे तु– 'सृ गतौ' इत्यतः कर्तर्यसुन्प्रत्यये 'सार्वधातुक' इति गुणे सरा व्याप्तः सर्वज्ञो वा हरिः सरस्शब्दार्थः, तत्प्रियत्वेन तद्वान्वायुः सरस्वतः स्त्री सरस्वती वायुभार्या च । नः, अस्माकम् । यज्ञम्, बाह्ययज्ञम्, अध्यात्मम्– ज्ञानयज्ञं च । वाजेभिः, वाजैरशनैः, अध्यात्मम्– ज्ञानयुद्धैश्च, अशनादि दत्त्वेति यावत् । वष्टु, वहतु, प्रवर्तयत्विति, 'यज्ञं वष्टु' इत्यस्य 'यज्ञं वहतु' इति ब्राह्मणे व्याख्यानात्, 'वहप्रापणे' इत्यस्य विकरणलोपो ह्रस्य षत्वं च छान्दसत्वात् । अत्र भगवतः स्त्रीलिङ्गशब्दवाच्यत्वम्– ॐ प्रकृतिश्च प्रतिज्ञा दृष्टान्तानुपरोधात् (१।४।२४) इत्यधिकरणचरम-सूत्रे 'ॐ योनिश्च हि गीयते ॐ' (१।४।२८) इत्यत्रोक्तदिशा अव्यवहितप्रसवहेतुस्त्रीत्वरूप-निमित्तस्य सत्त्वान्मुख्यमेवेति ज्ञेयम् ।। १० ।।

**स्कन्द–** सारस्वतोऽयं सप्तमस्तृचः । सरस्वतीदेवतोऽयम् । **पावका** शोधयित्री अंहसां पापानामपनेत्री । अथवा पवतिः क्षरणार्थः । सोमः पवते जनिता मतीनां (ऋ.९.९६.५.) इति । ण्यन्तश्चात्र दृष्टव्यः । क्षारयित्र्युदकानाम् । नः अस्माकं स्वभूतम् । सरस्वती मध्यमस्थाना वाक् । कीदृशी । **वाजेभिः वाजिनीवती** । 'वाजः' (निघं२,७) इत्यन्ननाम । वाजिनीशब्दोऽपि तस्यैव पर्यायान्तरं दृष्टव्यम् । यजमानेभ्यो यानि ददाति तैर्हविर्लक्षणैश्चान्नवती । अथवा वाजेभिरिति तृतीयानिर्देशाद्युक्तमिति वाक्यशेषः । हविर्लक्षणैरन्नैर्युक्तम् । वाजिनीवती वाजो बलं (तु निघं २.९) वेगो वा, तद्वती वाजिनी । काऽसौ । सरस्वत्याः स्वभूता सेना । तद्वती वाजिनीवती सरस्वती । अथवा वाजो हविर्लक्षणमन्नं तद् यस्या अस्ति सा वाजिनी यागसन्ततिः । तद्वती वाजिनीवती सरस्वती । **यज्ञं वष्टु** वश् कान्तौ । कामयताम् । कामनेनात्रागमनं संभजनं च लक्ष्यते । यो हि यं कामयते स तमागच्छति, सम्भजति च । आगच्छतु सम्भजतां चेत्यर्थः । **धियावसुः** प्रज्ञाधना । अथवा वसेराच्छादनार्थस्य वसुशब्दः । प्रज्ञयाऽऽच्छादयित्री सर्वार्थानाम् ।।

**वेङ्कटमाधव–** शोधयित्री अस्माकं **सरस्वती** अन्नैः अन्नवती **यज्ञं** वहतु कामयतां वा । प्रज्ञया सर्वेषां वासयित्री ।। १० ।।

**मुद्गल– सरस्वती** देवी **वाजेभिः** हविर्लक्षणैरन्नैर्निमित्तभूतैः **नः** अस्मदीयं **यज्ञं वष्टु** कामयताम् । कामयित्वा च निर्वहत्वित्यर्थः । कीदृशी सरस्वती ? **पावका** शोधयित्री । **वाजिनीवती** अन्नवत्क्रियावती । **धियावसुः** कर्मप्राप्यधननिमित्तभूता ।। १० ।।

**सायण– सरस्वती** देवी **वाजेभिः** हविर्लक्षणैरन्नैर्निमित्तभूतैः । यद्वा यजमानेभ्यो दातव्यैरन्नैर्निमित्तभूतैः । **नः** अस्मदीयं **यज्ञं वष्टु** कामयताम् । कामयित्वा च निर्वहत्वित्यर्थः । तथा चारण्यककाण्डे श्रुत्यैव व्याख्यातं– 'यज्ञं वष्ट्विति यदाह यज्ञं वहत्वित्येव तदाह' (ऐ.आ. १,१,४) इति । कीदृशी सरस्वती । **पावका** शोधयित्री **वाजिनीवती** अन्नवत्क्रियावती **धियावसुः** कर्मप्राप्यधननिमित्तभूता । वाग्देवतायास्तथाविधं धननिमित्तत्वमारण्यककाण्डे श्रुत्या व्याख्यातं– 'यज्ञं वष्टु धियावसुरिति वाग्वै धियावसुः' (ऐ.आ.१,१,४) इति । 'श्येनः सोमः' इत्यादिषु पञ्चत्रिंशत्सङ्ख्याकेषु देवताविशेषवाचिषु पदेषु 'सरमा सरस्वती' (नि.५,५,१८) इति पठितम् । एतामृचं यास्क एवं व्याचष्टे– 'पावका नः सरस्वत्यन्नैरन्नवती यज्ञं वष्टु धियावसुः कर्मवसुः' (निरु.११,२६) इति ।

पवनं पावः शुद्धिः । पावं कायतीति पावका । 'कै गै रै शब्दे' । 'आतोऽनुपसर्गे कः' (पा.सू.३,२,३) इति कप्रत्ययः । कृदुत्तरपदप्रकृतिस्वरत्वेनान्तोदात्तत्वम् । यद्वा । पुनातीत्यर्थे ण्वुलि 'प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः' (पा.सू.७,३,४४) इति इत्वस्याभावोऽन्तोदात्तत्वं च छान्दसं द्रष्टव्यम् । सरःशब्दः सर्तेः असुनन्तत्वादाद्युदात्तः । मतुप्ङीपोः पित्त्वादनुदात्तत्वम् । वाजेभिः । वाजशब्दो वृषादित्वात् (पा.सू.६,१,२०३) आद्युदात्तः । स हि अवृत्कृतत्वात् आकृतिगणः । वाजोऽन्नमास्विति वाजिन्यः क्रियाः । 'अत इनिठनौ' (पा.सू.५,२,११५) इति इनिप्रत्ययः । ताः क्रिया यस्याः सन्ति सा सरस्वती वाजिनीवती । 'छन्दसीरः' (पा.सू. ८,२,१५) इति मतुपो वत्त्वम् । मतुप्ङीपोः पित्त्वेनानुदात्तत्वात् इनेः प्रत्ययाद्युदात्तत्वमेव शिष्यते । यज्ञम् । 'यजयाच' (पा.सू.३,३,९०) इत्यादिना नङ्प्रत्ययः । प्रत्ययस्वरेणान्तोदात्तः । वष्टु । 'वश कान्तौ' । कान्तिरभिलाषः । 'अदिप्रभृतिभ्यः शपः' (पा.सू.२,४,७२) इति शपो लुक् । निघातः । धियावसुः । धिया कर्मणा वसु यस्याः सकाशाद्भवति सा धियावसुः । 'सावेकाचः' (पा.सू.६,१,१६८) इति । विभक्तिरुदात्ता । 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' (पा.सू.६,२,१) इति विभक्तिस्वर एव शिष्यते । छान्दसस्तृतीयाया अलुक् ।। १० ।।

**सिद्धाञ्जनम्–** अन्तिमे सारस्वते तृचे प्रथमामाह– **सरस्वती** वाग्देवी **नः यज्ञं** अस्मदीयं यजनं **वष्टु** कामयताम् । कीदृशी? **पावका** शोधयित्री अपि च **वाजेभिः वाजिनीवती** समृद्धिभिः बहुलविधया समृद्ध्या युक्ता । पुनः कीदृशी? **धियावसुः** धिया द्रव्यवती ।।

पावका– पुनातेः, पापापनोदिनीत्यर्थः। पापं दुरितम्, भद्रपदव्याख्याने तत्स्वरूपं अशुभं अनृतमेवेति वेदर्षीणां मतं प्रतिपादितम् । अनृतप्रध्वंसात्पापापनये शोधनं साधितं भवति । वक्ष्यति च अनृतनाशाय 'सूनृतानां चोदयित्री' इति । वाजेभिः वाजिनीवती-ऐन्द्रवायवतृच-व्याख्याने 'वाजिनीवसू' पदार्थप्रसक्तौ वाजशब्दो विचारितः । धियावसुः–अलुक्समासः छान्दसः । 'वसु' सर्वत्र द्रव्यं, सत्त्वं, इति व्याख्यायत इति प्रागुक्तम् । प्रज्ञावृत्तिभिः सत्त्वसमृद्धेत्यर्थः ।

### ऋक्संहिता पदपाठसहिता

**चोदयित्री सूनृतानां चेतन्ती सुमतीनाम् । यज्ञं दधे सरस्वती ।। ११ ।।**
चोदयित्री । सूनृतानाम् । चेतन्ती । सुऽमतीनाम् । यज्ञम् । दधे । सरस्वती ।। ११ ।।

### ऋग्भाष्यम्

**...................... सुवाचां प्रेरका सदा ।**
**सुबुद्धिज्ञापिका सैव स्वातन्त्र्याल्लुप्तयो भवेत् ।**
**अनेनैव प्रकारेण सैव यज्ञादिधारिणी ।। ११ ।।**

**ऋग्भाष्यटीका– चोदयित्री** ।। सुवाचाम् । **सूनृतानां** सुवाचां **चोदयित्री** सदा प्रेरका **सुमतीनां** सुबुद्धीनां द्वितीयार्थे षष्ठी । **चेतन्ती** चेतयन्ती ज्ञापिका । अत्र णिलोपस्य निमित्तमाह– **स्वातन्त्र्यादिति** । चेतन्तीशब्दः स्वातन्त्र्यविवक्षया लुप्तो यो यस्य स लुप्तयो भवेत् । य इति णेरुपलक्षणम् । स्वातन्त्र्यस्नेहयोरन्तर्णीतणिजिति स्मरणात् । ततश्च स्वातन्त्र्येण सुबुद्धिज्ञापि-केत्यर्थः । तदिदमुक्तं **सैवेति** । एवंभूता **सरस्वती यज्ञं दधे** । अनेनोक्तप्रकारेण वाग्बुद्धिप्रवर्तकत्वेन यज्ञादिधारिणी । वाग्बुद्धिमूलत्वात्सर्वकर्मणाम् ।। ११ ।।

**मन्त्रार्थमञ्जरी–** सूनृतानाम्, सुवाचाम् । चोदयित्री, प्रेरका । सुमतीनाम्, सुबुद्धीनाम्, द्वितीयार्थे षष्ठी । चेतन्ती, चेतयन्ती, 'स्वातन्त्र्यस्नेहयोरन्तर्णीतणिच्' (म.व्या.सू.) इति स्वातन्त्र्येऽन्तर्णीतणिच् सुबुद्धीनां ज्ञापिका । सरस्वती, प्रागुक्तरूपा विष्ण्वाख्या वाणी च ।

यज्ञम् । दधे ।। पूर्वोक्तरीत्या वाग्बुद्धिप्रवर्तकत्वेन यज्ञादिधारिणीति स्तुतिः वाग्बुद्धिमूलकत्वात्सर्वकर्मणाम् ।। ११ ।।

**स्कन्द–** **चोदयित्री सूनृतानां** अपठितमपि वाङ्नामैतत् । मध्यमस्थाना हि सरस्वती । साच गर्जितलक्षणां वाचं चोदयित्री । **चेतन्ती** जानती । **सुमतीनां** द्वितीयार्थे षष्ठीयम् । सुमतीन् भक्तिपरान् यजमानान् । **यज्ञं दधे** धारयति । **सरस्वती** भूयिष्ठस्य यज्ञस्य मन्त्रलक्षणवागायत्तत्वात् तस्याश्च सरस्वत्यायत्तत्वात् ।

**वेङ्कटमाधव–** चोदयित्री सत्यानां प्रज्ञापयन्ती उदाराणां सुमतीनां यज्ञं धारयति सरस्वती मन्त्रभूता ।। ११ ।।

**मुद्गल–** या **सरस्वती** सेयमिमं **यज्ञं दधे** धारितवती । कीदृशी । **सूनृतानां** प्रियाणां सत्यवाक्यानां **चोदयित्री** प्रेरयित्री । **सुमतीनां** शोभनबुद्धियुक्तानामनुष्ठातृणां **चेतन्ती** तदीयमनुष्ठेयं ज्ञापयन्ती ।। ११ ।।

**सायण–** या **सरस्वती** सेयमिमं **यज्ञं दधे** धारितवती । कीदृशी । **सूनृतानां** प्रियाणां सत्यवाक्यानां **चोदयित्री** प्रेरयित्री । **सुमतीनां** शोभनबुद्धियुक्तानामनुष्ठातृणां चेतन्ती तदीयमनुष्ठेयं ज्ञापयन्ती ।

चोदयित्री । 'चुद प्रेरणे' । ण्यन्तात् तृच् । चित्त्वादन्तोदात्तः । 'ऋन्नेभ्यो ङीप्' (पा.सू.४,१,५) इति ङीप् । तस्य 'उदात्तयणो हल्पूर्वात्' (पा.सू.६,१,१७४) इत्युदात्तत्वम् । सूनृतानाम् । 'ऊन परिहाणे' इत्यतः 'क्विप् च' (पा.सू.३,२,७६) इति क्विपि सुतराम् ऊनयति अप्रियमिति सून् इति प्रियमुच्यते । तच्च तदृतं सत्यं चेति सूनृतम् । 'परादिश्छन्दसि बहुलम्' (पा.सू.६,२,१९९) इत्युत्तरपदाद्युदात्तत्वम् । चेतन्ती । 'चिती संज्ञाने' । अत्र शपो ङीपश्च पित्त्वादनुदात्तत्वम् । शतुश्च अदुपदेशात् लसार्वधातुकस्वरेणानुदात्तत्वम् । धात्वन्तस्वर एव शिष्यते । सुमतिशब्दस्य मतुपि ह्रस्वत्वात् 'नामन्यतरस्याम्' (पा.सू.६,१,१७७) इति विभक्तेरुदात्तत्वम् ।। ११ ।।

**सिद्धाञ्जनम्–** सारस्वते तृचे द्वितीयामृचमाह– **सरस्वती** सेयं वाग्देवी यज्ञं (इमं) दधे

धारयते। कीदृशी? **सूनृतानां** शुभानां सत्यानां **चोदयित्री** प्रेरयित्री। **सुमतीनां** शोभनानां मतीनां मनोवृत्तीनां हार्दभावानां वा **चेतन्ती** चेतयन्ती प्रज्ञापयन्ती ।

सूनृतानाम्– प्रियसत्या वाक् सूनृतेति लोके प्रसिद्धिः। तथाऽपि अत्र वेदे सूपपदस्य शोभनार्थ एवोपपन्नः । सुमतीनाम्–अत्रापि कल्याणमतीनामिति बोध्यम् । दधे–लडर्थ एव साधीयान्, छान्दसः । नेह भूतार्थविवक्षा ।। ११ ।।

## ऋक्संहिता पदपाठसहिता

**महो अर्णः सरस्वती प्रचेतयति केतुना । धियो विश्वा विराजति ।। १२ ।।**

महः । अर्णः । सरस्वती । प्र । चेतयति । केतुना । धियः । विश्वाः । वि । राजति ।।

## ऋग्भाष्यम्

**महो अर्णः परं ब्रह्म तेजस्त्वाच्च महत्त्वतः ।**
**अरमानन्दरूपत्वाण्णो हि निर्वृतिवाचकः ।**
**तज्ज्ञापयति सादेवी ज्ञानं दत्वा महत्तरम् ।**
**महो अर्णः स्वयं देवः स्वमात्मानं प्रकाशयेत् ।**
**विराजयति विश्वाश्च धियः सुज्ञानदानतः ।। १२ ।।**

**ऋग्भाष्यटीका– महोअर्णः** ।। (महो अर्णः) तेजस्त्वान्महत्वतश्चेति महःशब्दस्यार्थद्वयम् । अरमानन्दरूपत्वात् **अर्णः** । सा देवी सरस्वती । महो अर्णः परं ब्रह्म । **केतुना** ज्ञानेन । भक्तेभ्यो महत्तरं ज्ञानं दत्वा । **प्रचेतयति** ज्ञापयति । महत्तरमिति वदता प्रशब्दस्य तात्पर्यमुक्तं भवति । इदं तु देवतान्तरविषयम् । भगवद्विषयेतु सरस्वती देवः महोअर्णः स्वमात्मानं केतुना प्रचेतयति प्रकाशयेदिति । तत एव सुज्ञानदानतो भक्तानाम् । **विश्वा धियः** सर्वाः बुद्धीः । **विराजति** विराजयति । ज्ञानवतोहि बुद्धिर्विराजते ।। १२ ।। अत्र सूक्तमनुवाको वर्गश्च परिसमाप्तः ।

**मन्त्रार्थमञ्जरी–** सरस्वती, प्रागुक्तनिरुक्त्या तत्पदवाच्यः स्त्रीरूपो विष्णुः । महः, तेजस्त्वान्महत्त्वाच्च महःपदोक्तम् । अर्णः, अरमलमानन्दरूपत्वहेतुनार्णःपदवाच्यम्, रेफाकारलोपः । (स्वात्मानमेव) केतुना, ज्ञानेन, भक्तानां ज्ञानं दत्त्वेति यावत् । प्रचेतयति, प्रकर्षेण महत्तरज्ञानेन

प्रकाशयेदित्यर्थः ।। वाणीपक्षे महोअर्णः पदार्थं हरिं केतुदानेन प्रचेतयति भक्तानामित्यर्थः । योग्यतया प्रशब्दः केतुगतप्रकर्षवाची ।। (ततः) सुज्ञानदानादेव हेतोः । (भक्तानाम्) विश्वाः, सर्वाः । धियः, बुद्धीः । वि राजति, विराजयति ।। ज्ञानवतां बुद्धिर्विराजते हि ।। १२ ।।
**इति चतुर्थः सारस्वतस्तृचः ।। ४ ।।**

**स्कन्द– महः** महत् बहुः **अर्णः** मेघस्थमुदकं **सरस्वती प्रचेतयति** प्रज्ञापयति । **केतुना** कर्मणा गर्जनाख्येन । गम्भीरं हि गर्जितं श्रुत्वा महदत्र मेघ उदकमित्यवगम्यते । केतुशब्दोऽपठितोऽपि कर्मनाम । न प्रज्ञानामैव । कुत एतत् । ''वैश्वानरस्य विमितानि चक्षसा' (ऋ. ६,७,६) इत्यत्र प्रयोगदर्शनात् । अत्र हि चक्षसेत्यनेन प्रज्ञाया उपात्तत्वादसन्दिग्धं केतुशब्दस्य कर्मवचनत्वम् । किञ्च **धियः** कर्माणि प्रजा वा (तु.निघ.२,१,३,९) । **विश्वाः** सर्वा **विराजति** राजतिर्दीप्त्यर्थः । सामर्थ्याच्चात्रान्तर्णीतण्यर्थः । विविधं दीपयति । वाग्घि सरस्वती । सा च यागकर्माणि प्रज्ञा वा दीपयति वृष्टिद्वारेण । अथवा धिया विश्वा इति षष्ठ्यर्थे द्वितीया । राजतिरप्यैश्वर्यकर्मा कर्मणां प्रज्ञानां वा सर्वासां विविधमीष्ट इत्यर्थः ।। १२ ।।

**वेङ्कटमाधव–** महत् उदकम् सरस्वती मध्यमस्थाना प्रज्ञापयति कर्मणा सर्वाणि च कर्माणि राजयति ।। १२ ।।

**मुद्गल–** द्विविधा हि सरस्वती । विग्रहवद्देवता नदीरूपा च । तत्र पूर्वाभ्यामृग्भ्यां विग्रहवती प्रतिपादिता । अनया तु नदीरूपा प्रतिपाद्यते । तादृशी सरस्वती **केतुना** कर्मणा प्रवाहरूपेण महः अर्णः प्रभूतमुदकं **प्रचेतयति** प्रकर्षेण ज्ञापयति । किञ्च स्वकीयेन देवतारूपेण **विश्वा धियः** सर्वाण्यनुष्ठातृप्रज्ञानानि **वि राजति** विशेषेण दीपयति ।। १२ ।।

**सायण–** द्विविधा हि सरस्वती विग्रहवद्देवता नदीरूपा च । तत्र पूर्वाभ्यामृग्भ्यां विग्रहवती प्रतिपादिता । अनया तु नदीरूपा प्रतिपाद्यते । तादृशी **सरस्वती केतुना** कर्मणा प्रवाहरूपेण **महो अर्णः** प्रभूतमुदकं **प्रचेतयति** प्रकर्षेण ज्ञापयति । किं च स्वकीयेन देवतारूपेण **विश्वाः धियः** सर्वाण्यनुष्ठातृप्रज्ञानानि **वि राजति** विशेषेण दीपयति । अनुष्ठानविषया बुद्धीः सर्वदोत्पादयतीत्यर्थः । सरस्वत्या द्विरूपत्वं यास्को दर्शयति– 'तत्र सरस्वतीत्येतस्य नदीवद्देवतावच्च निगमा भवन्ति' (निरु.२,२३) इति । एकशतसङ्ख्याकेषूदकनामसु 'अर्णः क्षोदः'

(नि.१,१२,१) इति पठितम् । एतामृचं यास्को व्याचष्ट– 'महदर्णः सरस्वती प्रचेतयति प्रज्ञापयति केतुना कर्मणा प्रज्ञया वेमानि च सर्वाणि प्रज्ञानान्यभिविराजति' (निरु.११,२७) इति ।

महो अर्णः । महदिति तकारस्य व्यत्ययेन सकारः । तस्य रुत्वोत्वगुणाः । प्रातिपदिकस्वरेणान्तोदात्तः । 'एङः पदान्तादति' (पा.सू.६,१,१०९) इति पूर्वरूपे प्राप्ते 'प्रकृत्यान्तःपादमव्यपरे' (पा.सू.६,१,११५) इति प्रकृतिभावः । अर्ति इत्यर्णः । 'उदके नुट् च' (उ.सू.४,६३६) इत्यसुन्पययो नुडागमश्च । केतुना । प्रातिपदिकस्वरेणान्तोदात्तः । विश्वाः । विश्वशब्दः कन्प्रत्ययान्त आद्युदात्तः ।। १२ ।।

**सिद्धाञ्जनम्– सरस्वती** वाग्देवी (पूर्वऋग्द्वयप्रतिपादिता) **केतुना** प्रज्ञापकेन (दर्शनकर्मणा) **महो अर्णः** महान्तं प्रवाहं समुद्रं वा (ऋतस्य बृहतीं प्रवृत्तिं इति बोध्यम् ) **प्रचेतयति** प्रकर्षेण ज्ञापयति । (प्रज्ञायां सुप्तमिव स्थितं ऋतप्रवृत्तिरूपं अर्णःपदवाच्यं प्रवाहं उत्थाप्य प्रबोधयति ।) अपि च **विश्वाः धियः विराजति** समस्ता धीवृत्तीश्च प्रदीपयति ।

अस्यामृचि 'केतुना' कर्मणेति सायणः, कर्मणा प्रज्ञया वेति यास्कः । वेदरहस्योद्घाटनसाधनभूतानां ऋत-क्रतु-श्रवः-प्रभृतीनां एकमिदं केतुपदम् । दर्शनात्मकः सहजावबोधः केतुरिति सर्वत्र ग्राह्यम् । स्थूलार्थपक्षीयानां नये ऋतु-वाजऋतादीनामिव केतोरपि बहवोऽर्थाः। नास्ति नियमः । अस्मदुक्तेऽर्थे नियतः केतुशब्दः सर्वत्र मन्त्रवर्णेषु घटत इत्यवधेयम् । स्थूलार्थानुसारेण अस्यामृचि नदी सरस्वती स्तुता। पूर्वं ऋचोर्द्वयोः वाग्देवी विग्रहवतीति च प्राहुः कर्मठसम्प्रदायिनः। नावश्यकी परीक्षा तेषां विवक्षायाः। यत् किं वा भवतु तात्पर्यं तन्मते, तन्मन्त्रदृष्टरि महर्षौ मधुच्छन्दसि भावदारिद्र्यं आरोपयतीत्यसंशयम् । प्रथमं विग्रहवती भूत्वा, ततः नदीरूपा संवृत्ता किल! कुतोऽयं ऋषिदृष्टौ हठाद् वेषान्तरपरिग्रहस्तस्याः सरस्वत्याः ? कारणं नोक्तम् । फलं तु देवो जानाति ।

अथ चेदवगच्छामः स्वरूपं सरस्वत्याः, आद्यं ऋग्द्वयमस्मिन् तृचे विस्पष्टार्थं प्रसन्नं भवेदित्यसंशयम् । महीति स्तूयमानया भारत्या इळया च सह सरस्वती गीयते वेदे । 'इळा सरस्वती मही' इति तिस्रो देवीरधिकृत्य व्याख्यानावसरे तासां विवेकः पुरस्तात् प्रपञ्चयिष्यते ।

ऋतचितेः शक्तिविशेषा सत्यश्रुतिप्रचोदिनी दिव्यावेशवाणी सरस्वतीति कीर्त्यते । सत्यावेशादनृत-प्रध्वंसो भवति । अनृतं हि सर्वतो मुखपापरूपतां धत्ते, अनृतात्पापं नातिरिच्यत इति पुरातन-मार्षं मतम् । अनृतप्रेरणयेव असाधुः, दुष्टः सुखाद्यनुभवः, असाधुः सङ्कल्पः, असाधु च कर्म, मानुषं जन्म आविश्य वशयन्ति । तस्माद् अनृतमायुः सर्वथा जन्मनः प्रभृति नः प्रबाधते, येन सर्वाणि नः कर्माणि कायिकानि मानसिकानि वा अनृतसात्कृतान्यन्धितानि भवन्ति । तदत्र चिकित्साया नास्ति शरणं ऋतादृते। तच्च ऋतं, ज्योतिषा वाचा वा रूपेण उभयथा च अवतरत्याविशत्याविर्भवतीति दर्शनं महर्षीणामाद्यानाम् । येन धियः परिवर्तनं साध्यते, जगता सह अस्मान् प्रति नूतनो विवेकश्च सञ्जायते । ऋतमयी धीः दृष्टिं ऋतमयीं विधत्ते, ऋतदृष्ट्या नः सत्यरूपता निष्पादिता स्यात् । यतः प्रयासवर्जं स्वभावतः सत्याः हार्दभावाः सत्याः सङ्कल्पाः सत्यानि च कर्माणि निरर्गलं प्रवहेयुः ।

अधुना तृचतात्पर्यं सुगमं स्यात् । प्रथमं 'धियावसुः' 'पावका' सरस्वती पापापनोदाय पारिशुद्ध्यं विदधाना यज्ञकामा धीसमृद्धा प्रसीदति । ततः मानुषस्य सर्वकर्मसमर्पणरूपं यज्ञं परिपाल्य धारयते, येन ऋतानुरोधेन मर्त्यस्य कर्माणि ज्ञानानि वाचो भावाश्च प्रवर्तेरन् (सूनृतानां चोदयन्ती, सुमतीनां चेतन्ती) । अन्ते च सा भगवती वर्षति प्रवाहयति स्वीयेन दर्शनकर्मणा ऋतचिद्दीप्तीः 'अपः' प्रेरयन्ती मानुषे यजमाने, सर्वाश्च धीप्रवृत्ती सत्यज्योतिषा प्रज्वलयति (धियो विश्वा विराजति) चेति सारांशः ।

तदिदं व्याख्यातं तृतीयं सूक्तम् । तत्र विशेषतश्चतुर्थतृचप्रतिपादितो विषयः प्रागुक्त-मर्थं समस्तं दृढीकृत्योज्वलयन् बाह्यस्य कर्मणः, यजमानस्य अन्तःकरणपरिपाकदशाविशेषस्य च सम्बन्धं प्रद्योतयतीति स्पष्टम् । 'महो अर्णः' इति प्रायशोऽगूढया सङ्केतभाषया महान्तं ऋतचितिप्रवाहं प्रबोधयन्त्याः सरस्वत्या दर्शनकर्मवैभवप्रस्तावेन वेदरहस्यं नात्यन्तं अविभेद्यतया गोपितम्, अपि तु मधुच्छन्दसैव महर्षिणा किञ्चिद्वा रहस्यप्रकाशकैः पदैः प्रयुक्तैरुपदर्शितमिति गम्यते ।

।। इति प्रथमाष्टकप्रथमाध्याये षष्ठो वर्गः ।।

।। इति प्रथममण्डले प्रथमोऽनुवाकः ।।

॥ अथ सप्तमो वर्गः ॥

(सूक्तम्-४)

ऋक्संहिता पदपाठसहिता

१० मधुच्छन्दा वैश्वामित्रः । इन्द्रः । गायत्री ।

सुरूपकृत्नुमूतये सुदुघामिव गोदुहे । जुहूमसि द्यविंद्यवि ॥ १ ॥

सुरूपऽकृत्नुम् । ऊतये । सुदुघाम्ऽइव । गोऽदुहे । जुहूमसि । द्यविंऽद्यवि ॥ १ ॥

ऋग्भाष्यम्

सूक्तं त्वनारतं प्रोक्तमनुवागेककालिका ।
अन्यथात्वं च तत्र स्यादावापोद्वापतस्त्वृचाम् ।
वेदानन्तत्वविज्ञप्त्यै तौ चक्रे बादरायणः ।
ऋचः स ऋच उद्धृत्य ऋग्वेदं कृतवान्प्रभुः ।
यजूंषि निगदाच्चैव तथा सामानि सामतः ।
एवं पुराणवचनादुद्धृता हि ततस्ततः ।
ऋचः शाखात्वमापन्नाः शिष्यतच्छिष्यकैरिमाः ।
मानस्तेनेति पूर्वासु ह्यूनता दृश्यतेऽर्थतः ।
शुनःशेपोदिताभ्यश्च पठ्यन्तेऽन्यत्र काश्चन ।
अत्राप्यक्रमतो दृष्टिरिति नैकक्रमो भवेत् ।
अनन्तत्वात्तु वेदानां प्रायः कर्मानुसारतः ।
संक्षेपं कृतवान् देवः शिष्याश्च तदनुज्ञया ।
अष्टकाध्यायवर्गादिभेदं च कृतवान् प्रभुः ।
स्वाध्यायविश्रमार्थाय तस्मात्क्रमविपर्ययः ।
तत्र तत्रैवान्तरिता दृश्यन्ते च खिला अपि ।
यत्रार्थे न विशेषोऽस्ति पदान्तरितताऽत्र च ।
यत्राल्पोऽपि विशेषोऽस्ति पदं नान्तरितं भवेत् ।
विष्णुं सुरूपकर्तारमभिप्रेतार्थसिद्धये ।

**त्राणाय वा कामधेनुमिव दोहाय तत्स्थितेः ।**
**दिने दिने स्वाह्वयामः ............. ॥ १ ॥**

**ऋग्भाष्यटीका–** तत्र सूक्तादिस्वरूपजिज्ञासायामाह– **सूक्तमिति** ॥ अनारतं प्रोक्तं निरन्तरं पठितम् । मूलवेदे ऋचां यः क्रमः तत्र ऋचोऽनन्तरिताः कृत्वा यावत्पठितं तावदुपवेदे सूक्तमुच्यते । ऋषिभिर्दर्शनसमये यावन्निरन्तरकाले दृश्यते साऽनुवागुच्यते । यद्वैककालिकेत्यस्य विराममकृत्वैकस्मिन् काले पठनीयेत्यर्थः । उक्तस्यापवादमाह– **अन्यथात्वं चेति** ॥ मूलवेदादुद्धृतेष्वृङ्निगदाद्युपवेदेषु यदनारतप्रोक्ततया सूक्तमुक्तं तत्र तस्य ततोऽप्युद्धृतेष्वृग्वेदादिष्ववान्तरवेदेष्वन्यथात्वं च स्यात् । कथम् । ऋचामावापोद्वापरूपेण तत्क्रमपठितानां कासाञ्चिदृचामुद्वापः स्थानान्तरस्थानां तत्रावाप इति । उपवेदगतसूक्तान्तर्गतऋक् प्रबन्धत्वेनावान्तरवेदे सूक्तसंज्ञेति ज्ञातव्यम् । आवापोद्वापकरणे को हेतुरित्यत आह– **वेदेति** ॥ इदं तु वक्ष्यमाणविवरणानुसारेण प्रतिपत्तव्यम् । भवेदेतद्यदि मूलवेदादुपवेदानां ततोऽवान्तरवेदानां चोद्धारेण प्रबन्धनिर्माणं प्रामाणिकं स्यात् तदेव कुत इत्यत आह– **ऋच इति** ॥ ऋङ्निगदसामानीति मूलवेदादुद्धृता उपवेदा उच्यन्ते । ततो मूलवेदादुपवेदास्ततश्चावान्तरवेदा उद्धृता इत्येतदेवं पुराणवचनादवगम्यत इत्यर्थः ।

यथोपवेदादिप्रबन्धः कृत्रिम एवं शाखाप्रभेदोऽपीत्येतत्प्रसङ्गादाह– **ऋच इति** ॥ ऋच इति प्रस्तुतत्वादुक्तम् । यजुरादिकं चैवं ज्ञातव्यम् । एवमावापोद्वारावुपपाद्य तत्र लिङ्गं च दर्शयति– **मान इति** ॥ मा नः॑ स्ते॒नेभ्यो॒ ये अ॒भि॒द्रुह॒स्प॒दे नि॑रा॒मिणो॑ रि॒पवोऽन्ने॑षु जागृ॒धुः । आ दे॒वाना॒मोह॑ते वि॒व्रयो॑ हृ॒दि बृह॒॑स्पते॒ न प॒रः साम्नो॑ विदु॒रित्येतस्यामृचि पूर्वोत्तरार्धयोरसम्बद्धार्थत्वेनार्थतो न्यूनता दृश्यते । ततो ज्ञायतेऽत्रान्तरितं वाक्यमस्तीति । एवमन्यत्रापि । किं च शुनःशेपस्तावदृचां शतं क्रमेण ददर्शेति ब्राह्मणम् । तासामवान्तरवेदे त्र्यूनं शतमेव द्वितीयाध्याये दृश्यते । ताभ्योऽन्यास्त्वन्यत्र पठ्यन्ते । तेन ज्ञायते ऋचामित उद्वापोऽन्यत्रावाप इति । किञ्च अत्र मधुछन्दसा दृष्टास्वपि ऋक्षु नायमेव क्रम इत्याह– **अत्रापीति** ॥ अक्रमतो दृष्टिरित्यवान्तरवेदे यः क्रमस्तमुल्लंघ्यैव मधुछन्दसो दृष्टिरित्यर्थः । यद्वा मूलवेदोपवेदयोर्यः क्रमस्तमुल्लंघ्यैवावान्तरवेदेऽत्र माधुछन्दसे प्रकरणे ऋचो दृश्यन्त इति । इति नैकक्रमो भवेत् मूलवेदोपवेदावान्तरवेदेष्विति शेषः ।

वेदानन्तत्वविज्ञप्त्या आवापोद्वापाभ्यां संक्षेपः कृत इत्युक्तं तदसत् । अनन्ता वै वेदा इत्यादिनैव तज्ज्ञप्तिसम्भवादित्यत उक्तं विवृणोति– **अनन्तत्वादिति** ।। अनन्तत्वा-त्तदुक्तप्रकारेण कर्मकरणाशक्तेरिति शेषः । इतश्च न मूलवेदादिष्वेकप्रकारतेत्याह– **अष्टकेति** ।। मूलवेदादाव-विद्यमानमेवेति शेषः । उद्धारे लिङ्गान्तरं च दर्शयति– **तत्रेति** ।। खिलाः परिशिष्टाः । नन्वयमुद्धारः कथं ज्ञायत इत्यतस्तस्य ज्ञापकं लेशेन दर्शयति– **यत्रेति** ।। यत्र वाक्यद्वयस्यार्थे विशेषो नास्ति तत्र येन पदेन सा पुनरुक्तिः परिहृता स्यात्तत्पदमन्तरितं ज्ञातव्यम् । यत्र तु विनाऽपि पदान्तरमल्पेनापि विशेषेण श्रुतेनैव पुनरुक्तिपरिहारः स्यात्तत्र पदान्तरितता न कल्पनीया । एवमन्यान्यपि लिङ्गानि गवेषणीयानीति । अनेन वर्गस्तु सामयिक एवेत्युक्तम् ।

**सुरूपकृत्नुम्** । दशर्चमिदमैन्द्रं सूक्तम् । विष्णुम् । वयं **द्यवि द्यवि** दिनेदिने । **गोदुहे** गोदोहाय । सम्पदादित्वात्क्विप् । गां दोग्धीति गोधुक् तस्मै गोदुहे । तदर्थं दोहायेति शेषः । सुष्ठु दोग्धीति **सुदुघा** । दुहःकप्घश्च । तां कामधेनुमिव । तस्मिंस्थितिर्यस्यासौ तत्स्थितिः तस्य भगवदाश्रयस्य यजमानस्य **ऊतये** अभिप्रेतार्थसिद्धये त्राणाय वा । अवतेरुभयार्थत्वात् । **सुरूपकृत्नुं** साधुरूपाणां कर्तारं विष्णुमिन्द्रं च **जुहूमसि** स्वाह्वयामः । ह्वयतेः श्लुः । दार्ष्टान्तिके ऊतय इति प्रयोजनस्य श्रुतत्वात् दृष्टान्तेऽपि दोहायेत्युक्तम् । दृष्टान्ते गोदुह इत्युक्तत्वात् दार्ष्टान्तिकेऽपि तत्स्थितेरिति शेषोऽभिहितः । स्मसीत्यादिप्रोक्ताधिक्यविवक्षयेत्युक्तत्वात् स्वाह्वयाम इत्युक्तम् ।।

**मन्त्रार्थमञ्जरी–** अथ दशर्चं वर्गद्वयात्मकमैन्द्रं चतुर्थं सूक्तम् ।। द्यविद्यवि, दिवेदिवे प्रतिदिवसम् । गोदुहे, गोदोहाय, 'दुह प्रपूरणे' इत्यतः सम्पदादित्वात्क्विप् । सुदुघामिव, सुष्ठु दोग्धीति सुदुघा, 'दुहः कब्घश्च' इति कप्प्रत्यये हस्य घत्वे रूपसिद्धेः, तां कामधेनुमिव । ऊतये, यजमानस्याभिप्रेतार्थसिद्धये, रक्षणाय वा, अवतेः क्तिनि 'ज्वरत्वर' इत्यूठि सवर्णदीर्घे च 'ऊतये' इति रूपम् । सुरूपकृत्नुम्, साधुरूपाणां कर्तारम् । (इन्द्रम्), विष्णुमिन्द्रं च । जुहूमसि, स्वाह्वयामः, 'ह्वेञ् शब्दे' इत्यतः कर्तरि शपि तस्य श्लुः 'श्लौ' इति द्विर्वचनम्, सम्प्रसारणपूर्वरूपत्वे, धातोर्दीर्घः, 'इदन्तो मसि', 'जुहूमसि' इति रूपं ज्ञेयम् ।। १ ।।

**स्कन्द–** 'सुरूपकृत्नुमित्यैन्द्रमार्षान्मेधातिथेः स्मृतम्' । सुरूपकृत्नुमित्यत आरभ्य इन्द्रदैवतम् । आ मेधातिथेरार्षात् । सुरूपाणि शोभनानि कर्माणि, तेषां कर्तारमिन्द्रम् । **ऊतये** सोमेन तर्पणाय

पालनाय वा आत्मनः । **सुदुघामिव गोदुहे** यथा कश्चित् सुदोहां गां तस्या एव गोर्दोहायाह्वयेत तद्वत् **जुहूमसि** आह्वयामः । **द्यविद्यवि** अहन्यहनि । सततमित्यर्थः ।। १ ।।

**वेङ्कटमाधव–** सुरूपाणां, कर्मणां कर्तारं रक्षणाय सुदोहामिव धेनुं तस्या एव दोहार्थमाह्वयामः अन्वहम् ।। १ ।।

**मुद्गल–** द्वितीयेऽनुवाके चत्वारि सूक्तानि । तत्र 'सुरूप' इत्यादिकं दशर्चं प्रथमं सूक्तम् । मधुच्छन्दा ऋषिः । गायत्रम् । 'इन्द्रं पृच्छ' इति चतुर्थ्यामृचि लिङ्गदर्शनादिन्द्रो देवता ।

**सुरूपकृत्नुं** शोभनरूपोपेतस्य कर्मणः कर्तारमिन्द्रं **ऊतये** अस्मद्रक्षार्थं **द्यविद्यवि** प्रतिदिनं **जुहूमसि** आह्वयामः । दृष्टान्तः– **गोदुहे** गोधुगर्थं **सुदुघामिव** सुष्ठु दोग्ध्रीं गामिव । यथा लोके गोर्दोग्धा तदर्थं तस्याभिमुख्येन दोहनीयां गामाह्वयति तद्वत् ।। १ ।।

**सायण–** प्रथमे मण्डले द्वितीयानुवाके चत्वारि सूक्तानि । तत्र 'सुरूप' इत्यादिकं दशर्चं प्रथमं सूक्तं, 'सुरूपकृत्नुं दश' इत्यनुक्रान्तत्वात् । पूर्ववन्मधुच्छन्दसो गायत्रस्य चानुवृत्तेः ते एव ऋषिच्छन्दसी । 'इन्द्रं पृच्छा' इति चतुर्थ्यामृचि लिङ्गदर्शनादिन्द्रो देवता । अभिप्लवषडहे ब्राह्मणाच्छंसिनः प्रातःसवने स्तोमवृद्धौ आवापार्थानि 'सुरूपकृत्नुमूतये' इत्यादीनि षट् सूक्तानि । सूत्रितं च 'अभिप्लवपृष्ठ्याहानि' इति खण्डे– 'ब्राह्मणाच्छंसिनः सुरूपकृत्नुमूतय इति षट् सूक्तानि' (आश्व.श्रौ.७,५) इति । आद्यानि त्रीणि सूक्तानि महाव्रते निष्केवल्ये औष्णिहतृचाशीतौ शस्तव्यानि । उक्तं च शौनकेन– 'सुरूपकृत्नुमूतय इति त्रीण्येन्द्र सानसिं रयिमिति सूक्ते' (ऐ.आ. ५,२,५) इति । चतुर्विंशेऽहनि माध्यन्दिने सवने ब्राह्मणाच्छंसिनः 'सुरूपकृत्नुमूतये' इति वैकल्पिकः स्तोत्रियस्तृचः । 'होत्रकाणाम्' इति खण्डे 'मदे मदे हि नो ददिः सुरूपकृत्नुमूतये' (आश्व.श्रौ.७,४) इति सूत्रितत्वात् । अग्निष्टोमे वैश्वदेवशस्त्रे 'सुरूपकृत्नुमूतये' इति धाय्या, 'सुरूपकृत्नुमूतये तक्षन्नथम्' (आश्व.श्रौ.५,१८) इति सूत्रितत्वात् ।

**सुरूपकृत्नुं** शोभनरूपोपेतस्य कर्मणः कर्तारमिन्द्रं **ऊतये** अस्मद्रक्षार्थं **द्यविद्यवि** प्रतिदिनं **जुहूमसि** आह्वयामः । आह्वाने दृष्टान्तः– **गोदुहे** गोधुगर्थं सुदुघामिव सुष्ठु दोग्ध्रीं गामिव । यथा लोके गोः यो दोग्धा तदर्थं तस्याभिमुख्येन दोहनीयां गामाह्वयति तद्वत् । 'वस्तोः' इत्यादिषु द्वादशसु अहर्नामसु 'द्यविद्यवि' (नि.१,९,१२) इति पठितम् ।

सुरूपकृत्नुम् । करोतीति कृत्नुः । 'कृहनिभ्यां क्नुः' (उ.सू.३,३१०) । कित्त्वाद्गुणाभावः । तकारोपजनश्छान्दसः । समासान्तोदात्तः । ऊतये । अवतेर्धातोः 'उदात्तः' इत्यनुवृत्तौ 'ऊतियूतिजूतिसातिहेतिकीर्तयश्च' (पा.सू.३,३,९७) इति क्तिन् उदात्तो निपातितः । सुदुघाम् । सुष्ठु दुग्धे इति सुदुघा । 'दुहः कब्घश्च' (पा.सू.३,२,७०) इति कप्प्रत्ययो हकारस्य च घकारः । कित्त्वाद्गुणाभावः । कपः पित्त्वादनुदात्तत्वे धातुस्वरेण उकार उदात्तः । सुशब्देन गतिसमासे कृदुत्तरपदप्रकृतिस्वरत्वेन स एव स्वरः । 'इवेन विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च' इति इवसमासे स एव स्वरः । गां दोग्धीति गोधुक् । 'सत्सूद्विष' (पा.सू.३,२,६१) इत्यादिना क्विप् । कृदुत्तरपदप्रकृतिस्वरत्वम् । जुहूमसि । ह्वयतेर्लड्डुत्तमपुरुषबहुवचने 'बहुलं छन्दसि' (पा.सू.२,४,७६) इति शपः श्लुः । 'अभ्यस्तस्य च' (पा.सू.६,१,३३) इत्यभ्यस्तकारणस्य ह्वयतेः प्रागेव द्विर्वचनात् सम्प्रसारणम् । 'सम्प्रसारणाच्च' (पा.सू.६,१,१०८) इति परपूर्वत्वम् । 'हलः' (पा.सू.६,४,२) इति दीर्घः । ततः 'श्लौ' (पा.सू.६,१,१०) इति द्विर्वचनम् । अभ्यासस्य ह्रस्वः (पा.सू.७,४,५९), चुत्वजश्त्वे (पा.सू.७,४,६२; ८,४,५३) । 'इदन्तो मसिः' (पा.सू.७,१,४६) इति इकारागमः । प्रत्ययस्वरेण मकारस्योदात्तत्वम् । द्यविद्यवि । द्योशब्दः प्रातिपदिकस्वरेणान्तोदात्तः । 'नित्यवीप्सयोः' (पा.सू.८,१,४) इति द्विर्भावः । 'तस्य परमाम्रेडितम्' (पा.सू.८,१,२) 'अनुदात्तं च' (पा.सू.८,१,३) इति द्वितीयस्यानुदात्तत्वम् ।

**सिद्धाञ्जनम्–** अथ द्वितीयेऽनुवाके चतुस्सूक्तात्मके 'सुरूपकृत्नुं' इति प्रथमं सूक्तम् । प्राग्वदृषिश्छन्दश्च, इन्द्रो देवता ।

**सुरूपकृत्नुं** सुरूपाणां साधूनां सिद्धानां वा रूपाणां कृत्नुं कर्तारं **ऊतये** वृद्धये **द्यविद्यवि** अहरहः **जुहूमसि** जुहुमः, आह्वयामः । आह्वानकर्मणि दृष्टान्तमाह– **गोदुहे** गां दोग्धि गोधुक् तस्मै **सुदुघामिव** सुष्ठ दोग्ध्री पयस्विनीमिव ।

सुरूपकृत्नुं– कृत्नुः कर्ता, शिल्पीति भट्टोजीदीक्षितानां उणादिसूत्रवृत्तिमुचितां पश्यामः । अत्रेन्द्रः कर्ता, शिल्पी साधूनां सिद्धानां वा धीवृत्तिरूपाणां कर्मरूपाणां वा । हत्नुः, दर्त्नुः, जिगत्नुरित्येते औणादीकक्नुप्रत्ययान्ताः । ऋक्संहितायां सकृदेवात्र प्रयुक्तमिदं पदम् । ऊतये– अवतेर्धातोरूतिरिति निर्विवादम् । यद्यपि क्वचिद्रक्षणार्थोऽप्युपपद्येत, तथाऽपि वर्धनार्थः प्रायः सर्वत्र सङ्गतः स्यादिति 'ओमासः' इति शब्दस्यार्थविचारे प्रतिपादितम् ।

सुदुघामिव– सुष्ठु दोग्धि सुदुघा तामिव । गोदुहे– 'गोः दोग्धा तस्मै' इति वयमपि पूर्वे व्याख्यातार इव ब्रूमः । अत्र नव्याः केचन विप्रतिपद्यन्ते । अत्र दृष्टान्तदार्ष्टान्तिकपर्यालोचना कार्या । जुहूमसि– ह्वयतेः लडुत्तमपुरुषबहुवचने छन्दसि शपः श्लुः। द्यविद्यवि– निघण्टुपठितमेव पदम्, प्रतिदिनमित्यर्थः ।

अत्रेन्द्रः सुरूपकृत्नुः सुदुघया पयस्विन्योपमीयते । 'ऊतये' इन्द्र आहूयते, गोदोहनाय सुदुघा आहूयत इत्यर्थो वक्तव्य इत्याहुः। एवं भावकिबन्ताद्गोधुक्पदात् चतुर्थी 'गोदुहे' इति ग्रहणे उपमायां लोपो न भवेदित्याशयः । इयं च युक्तिरापाततः साध्वी लक्ष्यते, किं तु न लक्षयति विवक्षां मन्त्रद्रष्टुः, दृष्टान्तप्रतिपादितं भावं वा । भवतु लुप्तोपमा, सर्वसाधारणी सा वेदे। 'गोदुहे' गोदोहनक्रियार्थमिति चेत्, गोर्दोग्धा कः ? दोहनमात्रेण कथं 'ऊतिः' भवति? भवतु 'ऊतिः' रक्षैव, मास्तु 'वृद्धिः' इति अस्मदुक्तार्था । कस्य भोग्यं भवति दुग्धम् , येन 'ऊतिः' सम्पाद्या ? इदं सर्वमनालोच्य उपमां पूर्णा निरूपयितुं कृतः प्रयासो निस्सारो भवति । आह्वाता यजमानः स्तोतैव दोग्धा, दुग्धं फलं तस्यैव भोग्यं 'ऊतये' भवति । अन्यत्रापि मन्त्रवर्णेषु स्तोता गोधुक् सुदुघा त्विन्द्र इति च गीयते । यथा वा 'आ त्वद्य सबर्दुघां हुवे...... इन्द्रं धेनुं सुदुघां' (८.१.१०)। 'आ त्वा गीर्भिर्महामुरुं हुवे गामिव भोजसे । इन्द्रं सोमस्य पीतये' (८.५४.३)। अत्र प्रथमर्चि इन्द्रधेन्वोरभेदाध्यवसायः कृतः । द्वितीयर्चि इन्द्र उपमीयते गवा । अन्यामृचमुदाहरामः, यत्र स्तोता आह्वातैव दोग्धा स्पष्टमुक्तः– 'दोहेन गामुपशिक्ष सखायं प्रबोधय जरितर्जारमिन्द्रम्' (१०.४२.२)। अत्र 'जरितः' स्तोतः इति सम्बोधनम् । तस्यैव दोहनकर्मणा साधनेन गूढकामं (जारं) इन्द्रं वशं नेतुं (उपशिक्ष) प्रयासः कार्य इत्युक्तः । आह्वातृभिः स्तोतृभिरेव दोग्धृभिर्भाव्यमिति संशयच्छेदकोऽन्यो मन्त्रो वालखिल्यसूक्ते भवति । इदं उत्तरार्धम्– तं त्वा वयं सुदुघामिव गोदुहो जुहूमसि श्रवस्यवः' इति (वाल-सू.४.क्र.४.) । अत्र 'वयं' इत्यस्य विशेषणं 'गोदुहः' इति प्रथमाबहुवचनान्तम् । एवं 'गोदुहे' भावकिप्प्रत्ययान्ताद्वा इति संशयः छिन्नः ।। १ ।।

## ऋक्संहिता पदपाठसहिता

**उप नः सवना गहि सोमस्य सोमपाः पिब । गोदा इद्रेवतो मदः ।। २ ।।**

उप । नः । सवना । आ । गहि । सोमस्य । सोमऽपाः । पिब । गोऽदाः । इत् । रेवतः । मदः ।। २ ।।

## ऋग्भाष्यम्

**............... ज्ञानदोऽस्यैव चाधिकम् ।**
**ज्ञानाख्यरयियुक्तस्य हिरण्यादिमतोऽपि वा ।**
**सुखकारी भवान् ................. ॥ २ ॥**

**ऋग्भाष्यटीका–** **उपनः** । ज्ञानदः । **हे सोमपाः** इन्द्र । यो भवान् **रेवतः** अध्यात्मं ज्ञानाख्यरयियुक्तस्य बहिरपि त्वत्पूजार्थं हिरण्यादिमतोऽस्य यजमानस्य । इत् एव । **गोदाः** ज्ञानदः । **मदः** सुखकारी च । सत्वं नोऽस्माकं **सोमस्य सवना** सवनानि **उपागहि** उपागच्छ । पिबच सोमम् । यदि यजमानो ज्ञानाख्यरयियुक्तः किं तस्य ज्ञानदानेनेत्यत उक्तमधिकमिति । क्रियाविशेषणं चैतत् ॥ २ ॥

**मन्त्रार्थमञ्जरी–** (हे) सोमपाः, इन्द्र । (यः) रेवतः, 'रयेर्मतौ' इति रयिशब्दयकारस्य मतुपि सम्प्रसारणे पूर्वरूपे 'आद्गुणः' अध्यात्मम्– ज्ञानाख्यरयियुक्तस्य बहिरपि त्वत्पूजार्थं हिरण्यादिमतो यजमानस्य । इत्, एव । गोदाः, ज्ञानदः । मदः, सुखकारी । (च) (स त्वम्) नः, अस्माकम् । सोमस्य । सवना, सवनानि । उप आ गहि, उपागच्छ, गमेः छंत्वाभावश्छान्दसः ॥ आगत्य च (सोमम्) पिब । इत्यर्थः ॥ २ ॥

**स्कन्द–** 'उपेत्युपसर्गः आगहीत्याख्यातेन सम्बध्यते । **उप आ गहि** उपागच्छ । **नः** अस्माकं स्वभूतानि सवनानि प्रातस्सवनमाध्यन्दिनतृतीयसवनानि । यज्ञनाम वा (तु निघ ३,१७) सवनशब्दः । यज्ञान् । उपागत्य च, **सोमस्य** द्वितीयार्थे षष्ठी । षष्ठीश्रुतेर्वैकदेशमिति दोषः । सोमं सोमस्य वैकदेशं, स्वांशलक्षणं वा । **हे सोमपाः** । सोमानां पातः । **पिब** । किं कारणम् । उच्यते । **गोदा इत्** इच्छब्दः पदपूरणः, यस्मादर्थे वा । गवां दाता यस्मात् । **रेवतः** धनवत तव **मदः** । यस्मात् त्वं सोमेन मत्तो गा ददासीत्यर्थः ॥ २ ॥

**वेङ्कटमाधव–** उपागच्छ अस्माकं सवनानि सोमं च सोमपातः ! पिब अथ परोक्षः । गोदाः एव भवत्याश्रितस्य आढ्य । मदः तृप्त आढ्यः प्रयच्छति पशूनिति ॥ २ ॥

**मुद्गल–** हे **सोमपाः**! सोमं पातुं नः अस्मदीयानि **सवना** त्रीणि सवनानि प्रति **उप** समीपे

**आ गाहि** आगच्छ । आगत्य च **सोमस्य** सोमं पिब । **रेवतः** धनवतस्तव **मदः** हर्षः **गोदा इत्** गोप्रद एव । त्वयि हृष्टे सत्यस्माभिर्गावो लभ्यन्त इत्यर्थः ।। २ ।।

**सायण– हे सोमपाः** सोमस्य पातरिन्द्र सोमं पातुं **नः** अस्मदीयानि **सवना** त्रीणि सवनानि प्रति **उप** समीपे **आ गहि** आगच्छ । आगत्य च **सोमस्य** सोमं पिब । **रेवतः** धनवतस्तव **मदः** हर्षः **गोदा इत्** गोप्रद एव । त्वयि हृष्टे सति अस्माभिर्गावो लभ्यन्ते इत्यर्थः ।

**उप** । निपातत्वादाद्युदात्तः । **सवना** । सूयते सोम एष्विति सवनानि । अधिकरणे ल्युट् (पा.सू.३,३,११७) । सुपो डादेशः टिलोपश्च । 'लिति' (पा.सू.६,१,१९३) इति प्रत्ययात् पूर्वस्य अकारस्योदात्तत्वम् । **गहि** । गमेः 'बहुलं छन्दसि' (पा.सू.२,४,७३) इति शपो लुक् । हेर्ङित्वात् 'अनुदात्तोपदेश' (पा.सू.६,४,३७) इत्यादिना मकारलोपः । 'अतो हेः' (पा.सू.६,४,१०५) इति आभाच्छास्त्रीये लुकि कर्तव्ये 'असिद्धवदत्रा भात्' (पा.सू.६,४,२२) इति आभाच्छास्त्रीयो मकारलोपोऽसिद्धवद्भवति । **सोमपाः** । 'आमन्त्रितस्य च' (पा.सू. ८,१,१९) इति निघातः । तस्याविद्यमानवत्त्वेऽपि पूर्वापेक्षया 'तिङ्ङतिङः' इति पिबेत्यस्य निघातः । न च पूर्वस्यापि पराङ्गवद्भावेनाविद्यमानवत्त्वम्, असामर्थ्येन तदभावात् । गां ददातीति गोदाः । 'क्विप् च' (पा.सू.३,२,७६) इति क्विपं परमपि सरूपं बाधित्वा प्रतिपदविधित्वात् 'आतो मनिन्क्वनिब्वनिपश्च' (पा.सू.३,२,७४) इति विच् । क्विपि हि 'घुमास्था' (पा.सू. ६,४,६६) इत्यादिना धातोः आकारस्य ईत्वं स्यात् । रेवान् । रयिर्धनमस्यास्तीति मतुप् । 'ह्रस्वनुड्भ्यां मतुप्' (पा.सू.६,१,१७६) इति मतुप् उदात्तः । 'छन्दसीरः' (पा.सू.८,२,१५) इति वत्वम् । 'रयेर्मतौ बहुलं छन्दसि' (पा.सू.६,१,३७,६) इति सम्प्रसारणपरपूर्वत्वे गुणश्च । **मदः** । 'मदोऽनुपसर्गे' (पा.सू.३,३,६७) इति अप् । पित्वादनुदात्तः ।। २ ।।

**सिद्धाञ्जनम्–** द्वितीयामृचमाह– **हे सोमपाः** सोमपायिन् (इन्द्र) **नः** अस्माकं **सवना** सवनानि, यज्ञान् **उपागहि** उपागच्छ (अस्मदीयसोमाभिषवं प्रति समीपमेहि)। **सोमस्य पिब** सोमं पिब । तथा सोमपानेन **रेवतः** ऋद्धिमतः (तव) **मदः** हर्षः **गोदाः इत्** गोप्रद एव, ज्ञानरश्मिप्रद एवेत्यर्थः ।

यजमानेन सुते सोमं धीसाम्राज्यधुरन्धरेण इन्द्रेण परिगृह्य पीते सति, सोमरसजन्यहर्षातिशयेन पोषितो धीराज्यस्वामी प्रज्ञारश्मीन् वर्षति सोमसुते यजमानायेति अन्तर्यागपरा अर्थपुष्टिर्भवति ।

मदमत्तः श्रीमान् यथा गोदानं गोकामेभ्यः करोति, तथा इन्द्रः अग्निष्टोमाख्ये बाह्ये कर्मणि सोमवल्लीं यथाविधि निष्पीड्य रसमादाय संस्कृत्य स्वस्मै (इन्द्राय) ददते यजमानाय पुष्कलाश्वतुष्पदो गा अनुगृह्णातीति परिहासवर्जं गम्भीरं व्याचक्षते कर्मठाः ।। २ ।।

### ऋक्संहिता पदपाठसहिता

**अथा ते अन्तमानां विद्याम सुमतीनाम् । मानो अतिख्य आगहि ।। ३ ।।**
**अथ । ते । अन्तमानाम् । विद्याम । सुऽमतीनाम् । मा । नः । अति । ख्यः । आ । गहि ।। ३ ।।**

### ऋग्भाष्यम्

**................... तस्माल्लभेम सुमतीस्तव ।**
**अन्ते मितास्त्वद्विषया मतयो ह्युत्तमोत्तमाः ।**
**अस्मानतीत्य मा पश्य करुणार्द्रदृशा सदा ।। ३ ।।**

**ऋग्भाष्यटीका– अथाते ।। तस्मात् ।** यस्मात्त्वं ज्ञानादिमतोऽभिप्रेतार्थदायी **अथ** तस्मात् । वयमुत्तमोत्तमगणनस्यान्ते मिताः प्रमिताः । उत्तमोत्तमा इति यावत् । यास्ते तव त्वद्विषयाः **सुमतयः** तासामन्तमानां सुमतीनामन्तमाः सुमतीः । **विद्याम** लभेम लभेमहि व्यत्ययात् । त्वं च **नः** अस्मान् **अति** अतीत्यान्यान् सदा **माख्यः** मा पश्य । माऽयं न माङ् । अस्मानेव पश्य । **आगहि** आगच्छच । क्रूरदृष्ट्याऽन्यदर्शनमेवाभिमतमिति करुणार्द्रदृशेत्युक्तम् ।। ३ ।।

**मन्त्रार्थमञ्जरी–** (यस्मात्त्वं ज्ञानादिमतोऽभिप्रेतार्थदायी) अथ, तस्मात् । (वयम्) अन्तमानाम्, अन्त उत्तमोत्तमगणनस्यान्ते मितानाम्, अत्युत्तमानामिति यावत्, द्वितीयार्थे षष्ठी । ते, तव, त्वद्विषयाः । सुमतीनाम्, सुमतीः विद्याम, लभेमहि ।। (त्वम्) नः, अस्मान् । अति, अतिक्रम्य । (अन्यान्) मा ख्यः, नैव पश्य, दयार्द्रदृष्ट्याऽस्मानेव पश्येत्यर्थः ।। आ गहि, आगच्छ । चक्षिङः लुङि 'चक्षिङः ख्याञ्' इति ख्याञादेशे 'च्लि लुङि' इति च्लिप्रत्यये च्लेः 'अस्यतिवक्तिख्यातिभ्योऽङ्' इत्यङादेश आतो लोपे माङ्योगेनाडभावे 'इतश्च' इति सिप इकारस्य लोपे सिपः सस्य रुत्वविसर्गयोः 'ख्यः' इति रूपम् ।। ३ ।।

**स्कन्द–** अथेत्यानन्तर्ये । **अथ** सोमपानानन्तरम् । **ते** तव **अन्तमानां** द्वितीयार्थे षष्ठीयम् । अन्तमान् सन्निकृष्टान् । **विद्याम** विद ज्ञाने । जानीयाम् । कीदृशान् । सुमतीन् त्वद्भक्तिप्रज्ञोपेतान् । तत्र स्वयमपि सन्निकृष्टः इन्द्र! सन्निकृष्टान् ज्ञातुमलमिति स्वसन्निकर्षोऽनेन प्रकारेणाशास्यते । अथवा अन्तमानां सुमतीनामिति निर्धारणे षष्ठी । तव सन्निकृष्टानां **सुमतीनां** मध्ये विद्याम । विद सत्तायाम् । वयमपि भवेमेत्याशास्महे । अथवा विदिर्लाभ इत्येतस्यैतद्रूपम् । तव यानि सन्निकृष्टानि सुमतीनि । मतिः स्तुतिः मन्यतेरर्चतिकर्मत्वात् (तु.निघ. ३,१४) । सुस्तुतीनि सुपूजितानि अत्यन्तोत्कृष्टानि धनानि, तानि, तेषां वैकदेशं लभेमहि । किञ्च **मा नः अतिख्यः** अतिपूर्वोऽत्र ख्यातिः सामर्थ्यात् परित्यागेऽतिक्रमे वा । न प्रथने । माऽस्मान् कदाचिदपि परित्याक्षीः, अतिक्रमीर्वा । किन्तर्हि । सर्वदैवागच्छ । अथवा ख्यातिः प्रथनार्थ एव । न इति कर्मश्रुतेः, अतीति चोपसर्गाद् योग्यक्रियाध्याहारः । माऽस्मानतिख्यः । मा अन्येभ्यः प्रकाशीभूः । अन्यसकाशं मा गम । अस्मत्समीपमेवागच्छेत्यर्थः ।। ३ ।।

**वेङ्कटमाधव–** संप्रति तव सन्निकृष्टास्त्वयि विद्यमानाः सुमतीः वयं लभेमहि । सर्वेणाऽभ्युदयेनायं युक्तोऽस्त्विति मतिः सुमतिः । मा अस्मान् अपहाय अन्यान् द्राक्षीः । इहाऽऽगच्छ ।।

**मुद्गल– अथ** सोमपानानंतरं हे इन्द्र! **ते** तव **अन्तमानाम्** अन्तिकतमानामतिशयेन समीपवर्तिनां **सुमतीनाम्** शोभनमतियुक्तानां पुरुषाणां मध्ये स्थित्वा **विद्याम** वयं त्वां जानीयाम् । त्वमपि **नः अति माख्यः** अस्मानतिक्रम्य अन्येषां त्वत्स्वरूपं मा प्रकथय । किन्तु आ गहि अस्मानेवागच्छ ।। ३ ।।

**सायण– अथ** सोमपानानन्तरं हे इन्द्र ते तव **अन्तमानां** अन्तिकतमानामतिशयेन समीपवर्तिनां **सुमतीनां** शोभनमतियुक्तानां शोभनप्रज्ञानां पुरुषाणां मध्ये स्थित्वा **विद्याम** वयं त्वां जानीयाम । यद्वा । सुमतीनां शोभनबुद्धीनां कर्मानुष्ठानविषयाणां लाभार्थमित्यध्याहारः । बुद्धिलाभाय त्वां स्मरेमेत्यर्थः । त्वमपि **नः अति मा ख्यः** अस्मानतिक्रम्य अन्येषां त्वत्स्वरूपं मा प्रकथय । किन्तु **आ गहि** अस्मानेवागच्छ ।

अथ इति निपात आद्युदात्तः । 'निपातस्य च' (पा.सू.६,३,१३६) इति दीर्घत्वम् । अन्तमानाम् । अतिशयेनान्तिका इति अतिशायने तमप् (पा.सू.५,३,५५) । 'तमे तादेश्च'

(पा.सू.६,४,१४९,९) इति तादिलोपः । अन्तोऽस्यास्तीति अन्तिकः समीपः । 'अत इनिठनौ' (पा.सू.५,२,११५) इति ठन् । नित्त्वादाद्युदात्तः । दूरोत्कर्षस्य ह्यवसानं नास्ति । सामीप्योत्कर्षस्य पुनर्यो यस्य समीपः स एव तस्यान्त इत्यन्तवत्त्वात् समीपमन्तिकमुच्यते । विद्याम । वेत्तेर्लिङि 'यासुट् परस्मैपदेषूदात्तो ङिच्च' (पा.सू.३,४,१०३) इति यासुट् उदात्तः । पादादित्वात् 'तिङ्ङतिङः' इति न निघातः । सुमतीनाम् । मतिशब्दे क्तिन्नन्तेऽपि 'मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः' (पा.सू.३,३,९६) इति इकार उदात्तः शोभना मतिर्येषां ते सुमतय इति बहुव्रीहौ पूर्वपदप्रकृतिस्वरापवादेन 'नञ्सुभ्याम्' (पा.सू.६,२,१७२) इत्युत्तरपदान्तोदात्तः । शोभना मतयः सुमतय इति कर्मधारयेऽप्यव्ययपूर्वपदप्रकृतिस्वरापवादः कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्ततैव । अतो मतुपि ह्रस्वादन्तोदात्ताच्च सुमतिशब्दात् परस्य नामो 'नामन्यतरस्याम्' (पा.सू.६,१,१७७) इत्युदात्तत्वम् । ख्यः । 'ख्या प्रकथने' इत्यस्य लुङि सिपि 'अत्यतिवक्तिख्यातिभ्योऽङ्' (पा.सू.३,१,५२) इति च्लेरङादेशः । 'आतो लोप इटि च' (पा.सू.६,४,६४) इत्याकारलोपः । 'इतश्च' (पा.सू.३,४,१००) इति इकारलोपो रुत्वविसर्गौ । 'न माङ्योगे' (पा.सू.६,४,७४) इत्यडभावः । गहि । गमेः 'बहुलं छन्दसि' (पा.सू.२,४,७३) इति शपो लुकि हेर्ङित्वात् 'अनुदात्तोपदेश' (पा.सू.६,४,३७) इति मकारलोपस्य 'असिद्धवदत्रा भात्' (पा.सू.६,४,२२) इति असिद्धत्वात् 'अतो हेः' (पा.सू.६,४, १०५) इति लुक् न भवति ।।

**सिद्धाञ्जनम्–** तृतीयामृचमाह– **अथ** अनन्तरं (सोमपानाल्लब्धेन हर्षातिशयेन गोपदलक्षित-ज्ञानरश्मीनामस्मभ्यं वितरणात् परमित्यर्थः) इन्द्र **! ते** तव **अन्तमानां** अन्तिकतमानां आत्यन्तिकीनां **सुमतीनां** शोभनबुद्धीनां, साधुचिन्तनानां किञ्चिद्वा **विद्याम** जानीयाम (देवस्येन्द्रस्य सर्वाणि चिन्तनानि ज्ञातुं कथं प्रभवेज्जीवो यजमानः ? तस्मादेकदेशं वेति व्याख्यातम् । अन्यथाऽपि द्वितीयार्थे षष्ठी, 'सोमस्य पिब' इतिवदुपपद्यते । **नः** अस्मान् **अति मा ख्यः** अतिक्रम्य मा दर्शय (स्वात्मानमिति शेषः) आ गहि आगच्छ ।

'अति मा ख्यः' इत्यत्र अन्तर्भावितण्यर्थो बोध्यः। अस्मान् अतीत्य मा ख्यापयात्मानमिति पदार्थः । अस्मान् मातिक्रमीरिति भावः । 'यावदस्माकं दर्शनसामर्थ्यं तावदेव प्रकाशयात्मानम् । परिच्छिन्नामस्मच्छक्तिमतीत्य स्वात्मानं प्रकाशयसि चेत्, द्रष्टुं न शक्नुमः। अथ च मा भूरगोचरः, आगच्छ' इति तात्पर्यम् ।

अत्र सायणीयव्याख्यानसारंश एवं भवति– इन्द्र! तव सोमपानानन्तरं अन्तिकतमानां शोभनप्रज्ञानां पुरुषाणां मध्ये वयं स्थित्वा त्वां जानीयाम । त्वमपि अस्मानतिक्रम्य अन्येषां त्वत्स्वरूपं मा प्रकथय, अस्मानेवागच्छ' इति । 'पुरुषाणां मध्ये वयं स्थित्वा' इति व्याहारो निर्मूलाधारः। 'अन्येषां त्वत्स्वरूपं मा प्रकथय, अस्मानेव आगच्छ' इत्यस्य न केवलं अयुक्तता, मन्त्रद्रष्टृषु मात्सर्यमप्यारोपितम् । एवंविधं व्याख्यानमेव मूलं सायणे नव्यानामविश्वासस्य ।।

## ऋक्संहिता पदपाठसहिता

**परेहि विग्रमस्तृतमिन्द्रं पृच्छा विपश्चितम् । यस्ते सखिभ्य आवरम् ।। ४ ।।**

परा । इहि । विग्रम् । अस्तृतम् । इन्द्रम् । पृच्छ । विपःऽचितम् । यः । ते । सखिऽभ्यः । आवरम् ।। ४ ।।

## ऋग्भाष्यम्

**मन्मनो वाऽथ शक्रो वा दूरेऽपि परमेश्वरम् ।**
**गच्छाग्राह्यमनष्टं च व्याप्तचित्तं य एव च ।**
**सखिभ्य उत्तमो नित्यम् .............. ।। ४ ।।**

**ऋग्भाष्यटीका– परेहि** ।। मन्मनः । हे मन्मनो मदीयमनः । यद्यपि त्वमिन्द्रात् **परा** दूरे वर्तसे । तद्ग्रहणासमर्थम् । अथवा शक्रः परमेश्वरस्त्वत्तः परा दूरे वर्तते त्वद्विषयो न भवति । अपि तथापि त्वं **विग्रं** वीत्युपसर्गो नञर्थे । ग्रह उपादाने । कर्मणि डः । अग्राह्यम् । **अस्तृतं** अच्छिन्नमनष्टं **विपश्चितं** विपूर्वादाप्नोतेरसुन् । धात्वाकारलोपश्च । विपा व्याप्ता चित् यस्यासौ विपश्चित् । तं व्याप्तचित्तम् । अवग्रहदर्शनात् । **इन्द्रं** परमेश्वरं **इहि** गच्छ शरणं याहि अवगच्छवा । तदर्थं गुरून् पृच्छ । **यः** इन्द्रः **ते सखिभ्य आवरः** नित्यमुत्तमस्तम् । अत्र परेत्युपसर्गस्येहीति क्रियायोगे मरणार्थत्वप्रतीतेरन्यथा व्याख्यातम् ।। ४ ।।

**मन्त्रार्थमञ्जरी–** ऋषिः स्वान्तःकरणं प्रति वक्ति (हे मनः) । (यद्यपि त्वमिन्द्रात्) परा, दूरे वर्तसे, तद्ग्रहणासमर्थम्, यद्वा (इन्द्रो हरिः स्वतः) परा, दूरे वर्तते, त्वद्विषयो न भवति । (तथापि त्वम्) विग्रम्, 'वि' इत्युपसर्गो नञर्थे, 'ग्रह उपादाने' कर्मणि डः, अग्राह्यम् । अस्तृतम्, अनाच्छन्नम्, 'स्तृञ् आच्छादने' इति धातोः विपश्चितम्, विपूर्वात् 'आप्लृ व्याप्तौ'

इति धातोरसुन्प्रत्यये धात्वाकारलोपे च विपा व्याप्ता चिच्चित्तं यस्यासौ विपश्चित्तम् । इन्द्रम्, परमेश्वरम् । इहि, गच्छ, शरणं याह्यवगच्छेति वा । पृच्छ, तदर्थं गुरून्पृच्छ ।। यः, इन्द्रः । ते । सखिभ्यः, विषयेभ्यः । आ वरम्, आ समन्ताद्वरो नित्यमुत्तमः । (तम्) । 'इन्द्रम्' इति पूर्वेणान्वयः ।। ४ ।।

**स्कन्द–** आत्मन एवान्तरात्मनः प्रैषः । हे अन्तरात्मन् । परागच्छ । कीदृशम् । **विग्रं** मेधाविनामैतत् (तु.निघं.३,१५) । मेधाविनम् । **अस्तृतं** स्तृञ् आच्छादने हिंसायां वा । अनाच्छादितं सर्वप्रकाशमहिंसितं वा । कम् । **इन्द्रं** इन्द्रसकाशे गच्छेत्यर्थः । गत्वा च पृच्छ । कम् । **विपश्चितं** एतदपि मेधाविनामैव (तु.निघं.३.१५) । विग्रमिति पौनरुक्त्यप्रसङ्गान्नेद-मिन्द्रविशेषणम् । किं तर्हि । स्तोतृप्रतिनिर्देशः । मेधाविनं स्तोतारम् । कतमोऽसौ पुमानत्यन्त-मेधावी स्तोता, यस्य त्वं सम्यक् स्तुतिं शृणोषि इत्येतद्वत्वेन्द्रं पृच्छेत्यर्थः । स किं करोति, इन्द्रं पृच्छेत्युच्यते, **यः ते** तव **सखिभ्यः** सखिस्थानीयेभ्यः पुत्रपौत्रादिभ्यो वा **आ वरं** आ इत्युपसर्गाद् वरं सखिभ्य इति च कर्मसम्प्रदानश्रुतेर्योग्यक्रियाध्याहारः । आदत्ते वरं ददाति । अभिलषितं ददातीत्यर्थः ।। ४ ।।

**वेङ्कटमाधव–** स्तोतः । इतस्त्वमुपगच्छः । गत्वा च मेधाविनं **अस्तृतं** अहिंसितं शत्रुभिः, इन्द्रं पृच्छ 'कीदृशः क स वर्तते' इति कश्चन विपश्चितं पृच्छ । **यः** इन्द्रः तव पुत्रादिभ्यः वरणीयं धनं आ प्रयच्छति ।। ४ ।।

**मुद्गल–** अत्र यजमानं प्रति होता ब्रूते । हे यजमान त्वम् **इन्द्रं परेहि** इन्द्रस्य समीपे गच्छ । गत्वा च **विपश्चितं** मेधाविनं होतारं मां **पृच्छ** । असौ होता सम्यक् स्तुतवान् न वेत्येवं प्रश्नं कुरु । **यः** इन्द्रः **ते** तव यजमानस्य **सखिभ्यः** ऋत्विग्भ्यः **वरं** श्रेष्ठं धनपुत्रादिकं **आ** समन्तात् प्रयच्छतीति शेषः । तादृशमिन्द्रमिति पूर्वत्रान्वयः । पुनरपि कीदृशम् । **विग्रं** मेधाविनं **अस्तृतं** अहिंसितम् ।। ४ ।।

**सायण–** अत्र यजमानं प्रति होता ब्रूते । हे यजमान त्वम् । **इन्द्रं परेहि** इन्द्रस्य समीपे गच्छ । गत्वा च **विपश्चितं** मेधाविनं होतारं मां पृच्छ । असौ होता सम्यक् स्तुतवान् न वा इत्येवं प्रश्नं कुरु । **यः** इन्द्रः **ते** तव यजमानस्य **सखिभ्यः** ऋत्विग्भ्यः **वरं** श्रेष्ठं धनपुत्रादिकं

**आ** समन्तात् प्रयच्छतीति शेषः । तादृशमिन्द्रमिति पूर्वत्रान्वयः । पुनरपि कीदृशम् । **विग्रं** मेधाविनं **अस्तृतं** अहिंसितम् । 'विग्रः' इत्यादिषु चतुर्विंशतिसङ्ख्याकेषु मेधाविनामसु विग्रविपश्चिच्छब्दौ पठितौ (नि.३,१५,२,१६) ।

**विग्रं** वृषादित्वादाद्युदात्तः । **अस्तृतम्** । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । इन्द्रशब्दे 'ऋज्रेन्द्राग्र' (उ.सू.२,१८३) इत्यादिना रन् । नित्त्वादाद्युदात्तः । **सखिभ्यः** । 'समाने ख्यश्चोदात्तः' (उ.सू. ४,५७६) इति समाने उपपदे ख्यातेरिण् । 'डित्' इत्यनुवृत्तेस्तस्य डित्त्वात् टिलोपश्च (पा.सू. ६,४,१४३) । तत्संनियोगेन यलोपः । उपपदस्योदात्तत्वम् । 'समानस्य छन्दस्यमूर्धप्रभृत्युदर्केषु' (पा.सू.६,३,८४) इति सभावः । अतः सखिशब्द आद्युदात्तः । व्रियते इति वरः । 'ग्रहवृदृनिश्चिगमश्च' (पा.सू.३,३,५८) इति अप् । तस्य पित्त्वात् धातुस्वर एव ।। ४ ।।

**सिद्धाञ्जनम्**– चतुर्थीमृचमाह– ऋषिरन्तर्यागे प्रवर्तमानमन्यं सखायं ब्रूते । अथवा स्कन्दस्वामिनोक्तप्रकारेण आत्मन एवान्तरात्मन प्रैषः । **परेहि** परागच्छ । **इन्द्रं पृच्छ** । कीदृशम् ? विग्रं अस्तृतं विपश्चितं इति त्रीणि विशेषणानि इन्द्रस्य, क्रमेण 'वेगिनं अहिंसितं सम्यग्दर्शनप्राज्ञं' इत्यर्थकानि । **यः** इन्द्रः **ते** तव **सखिभ्यः** समानोद्योगेभ्यः सुहृद्भ्यः **वरं** श्रेष्ठं कल्याणं आ आहार्षीदित्यर्थः ।

परेहि-परा अतीत्य, अतिदूरं, इहि गच्छ। अतिदूरं गतोऽपि स इन्द्र एव प्रष्टव्यः प्राप्तव्यलब्धिं तदुपायं वा। कुतो दूरगमनमवश्यम् ? स 'विग्रः' वेगवान् पुष्टिबाहुल्यात् स वेगगमनशीलः । अयमर्थः सङ्गच्छते 'मा नो अति ख्यः' इति पूर्वोक्तेन वाक्येन । विग्रपदं मेधाविनामसु पठितमिति 'विपश्चितम्' इति विशेषणान्तरे वर्तमानेऽपि अनर्थकां पुनरुक्तिमलक्षयन् विग्रं 'मेधाविनं' इति व्याचष्टे सायणः । केचन विग्रमिन्द्रविशेषणं विपश्चितं स्तोतृविशेषणं चाहुः । विग्रशब्दः वेगशब्द इव विजतेश्चलनार्थाद् धातोर्निष्पन्नो वेगार्थद्योतक इति ग्राह्यम् ।

अस्तृतम्– अहिंसितं, अपराजितं प्रतिकूलैरसुरैः वृत्रादिभिरित्यर्थः । विपश्चितम्-अन्तर्यागे काः प्रतिकूलाः शक्तयः काश्चानुकूला इति विशिष्य पश्यन्ती प्रज्ञा इन्द्रस्य वर्तते, तस्मात् स जानाति बलीयान् शात्रवशक्तीर्विजेतुम् । तथाकर्तुं प्रभुः अन्येभ्यः समानेभ्यो युक्तेभ्यः (सखिभ्यः) श्रेष्ठं (वरं) व्यधत्त, विदधाति च, तस्मात् स एव उपगन्तव्यः, उपगम्य प्रष्टव्यश्च ।। ४ ।।

## ऋक्संहिता पदपाठसहिता

**उत ब्रुवन्तु नो निदो निरन्यतश्चिदारत । दधाना इन्द्र इद्दुवः ॥ ५ ॥**

उत । ब्रुवन्तु । नः । निदः । निः । अन्यतः । चित् । आरत । दधानाः । इन्द्रे । इत् । दुवः ॥ ५ ॥

## ऋग्भाष्यम्

**...................... निदस्तस्य समीपगाः ।**
**तेऽपि ब्रुवन्तु नो देवं प्रापुर्ये चान्यतोऽपि तम् ।**
**निर्गत्याज्ञानतस्त्वस्माद्दधाना ईश एव च ।**
**दुवः प्राणान्ब्रुवं त्वेव तेऽपि नः परमेश्वरम् ॥ ५ ॥**

**ऋग्भाष्यटीका– उतब्रुवन्तु** । निदः । ये **निदः** तस्य परमेश्वरस्य समीपगाः सृष्ट्यादावेव तत्समीपे वर्तमाना ब्रह्मादयः त **उत** तेऽपि **नः** अस्मान्प्रति देवं ब्रुवन्तु । परमेश्वरस्वरूपं यथावद्व्याकुर्वन्तु । उतेति वक्ष्यमाणापेक्षया निद इत्यव्ययस्य सामीप्यार्थत्वेऽभिधानं वक्ष्यते । ये च **अन्यतः** स्थानान्तरतः निरित्युपसर्गश्रवणादारतेत्यनेन च योगायोगादधिकार्थलाभाच्च धात्वध्याहारः । अस्मात्संसारहेतोरज्ञानतो निर्गत्यैव तं परमेश्वरं **आरत** प्रापुस्तेऽपि ब्रुवन्तु । येच **इन्द्र इत्** ईश एव **दुवः** प्राणान् आत्मनो विषयान् । दुहन्तीति । दुहेर्डुः । **दधाना** वर्तन्ते तत्प्राप्त्यर्थं तमुपासते । तेऽपि नः परमेश्वरं ब्रुवन्त्वेव ॥ ५ ॥

**मन्त्रार्थमञ्जरी–** (ये) निदः, समीपवर्तिनः, सृष्ट्यादावेवेन्द्रशब्दितविष्णुसमीपे वर्तमाना ब्रह्मादयः । (ते) उत, तेऽपि । नः, अस्मान्प्रति । (देवम्) ब्रुवन्तु, परमेश्वरस्वरूपं यथावद्व्याकुर्वन्तु ।। (ये) चित्, येऽपि । अन्यतः, स्थानान्तरात्, अस्मात्संसारहेतोरज्ञानतः । निः, निर्गत्यैव । (तम्) परमेश्वरम् । आरत, प्रापुः । (ते) (उत) तेऽपि । (नः) (परमेश्वरम्) (ब्रुवन्तु) (ये च) इन्द्रे इत्, ईश एव । दुवः, प्राणान्, आत्मनो विषयान्दुहन्तीति दुहेः डुप्रत्ययः। दधानाः । (वर्तन्ते) तत्प्राप्त्यर्थं तमुपासते । (ते) (उत) तेऽपि । (नः) (परमेश्वरम्) (ब्रुवन्तु) (एव) इति यत्तच्छब्दाध्याहारेण योजना ॥ ५ ॥

**स्कन्द–** उतशब्दः पदपूरणः । अप्यर्थे समुच्चये वा । उत्तरस्यां च ऋचि यद् वक्ष्यते,

तदपेक्षस्समुच्चयः । अपि **ब्रुवन्तु** उच्चारयन्तु । किम् । सामर्थ्यादिन्द्रस्य स्तुतीः । इन्द्रं नित्यं स्तुवतामित्यर्थः । **नः** अस्माकं स्वभूता ऋत्विजः पुत्रपौत्रादयो वा । **निदः** ये त्वस्माकं निन्दितारः ते **निः अन्यतः चित् आरत** चिच्छब्द एवार्थे । अन्यत एव निरारत निर्गच्छन्तु । अन्येनैव पथा प्रयान्तु । मा इन्द्रं कदाचिदपि तत्त्वतो ज्ञासिषुः, मा च स्ताविषुरित्यर्थः । **दधाना इन्द्रे इद् दुवः** इच्छब्दः पदपूरणः । इन्द्रे परिचर्यां दधानाः इन्द्रं परिचरितुमिच्छन्त इत्यर्थः ।।५।।

**वेङ्कटमाधव–** अपि च काममग्रतः स्थित्वा अस्मान् निन्दितारः ब्रुवन्तु निर्गच्छन्तु वा अन्यतः । वयं त्विन्द्रे परिचर्यां दधाना न बिभिमः । **इत्** इति पूरणमिति । अस्योत्तरा भूयसे निर्वचनाय ।। ५ ।।

**मुद्गल–** नः अस्माक सबन्धिनः ऋत्विज इति शेषः । ते **ब्रुवन्तु** इन्द्रं स्तुवन्तु । **उत** अपि च हे **निदः** निन्दितारः पुरुषाः **नि आरत** इतो देशान्निर्गच्छत । **अन्यतश्चित्** अन्यस्मादपि देशान्निर्गच्छत । कीदृशा ऋत्विजः । इन्द्रे **दुवः** परिचर्यां **दधानाः** कुर्वाणाः । इत् अवधारणे । सर्वदा परिचर्यां कुर्वन्त एव तिष्ठन्तीत्यर्थः ।। ५ ।।

**सायण–** नः अस्माकं सम्बन्धिन ऋत्विज इति शेषः । ते ब्रुवन्तु इन्द्रं स्तुवन्तु । **उत** अपि च **हे निदः** निन्दितारः पुरुषाः **निः आरत** इतो देशान्निर्गच्छत । **अन्यतश्चित्** अन्यस्मादपि देशान्निर्गच्छत । कीदृशा ऋत्विजः । **इन्द्रे दुवः** परिचर्यां **दधानाः** कुर्वाणाः । इच्छब्दोऽवधारणे । सर्वदा परिचर्यां कुर्वन्त एव तिष्ठन्त्वित्यर्थः ।

निन्दन्तीति निदः । 'णिदि कुत्सायाम्' । क्विपि नुमभावश्छान्दसः । सुपोऽनुदात्तत्वात् धातुस्वरः । आमन्त्रितत्वेऽपि वाक्यान्तरत्वेन स्ववाक्यगतपदादपरत्वात् न निघात इत्याद्युदात्तत्वमेव । अन्यतः । 'लिति' इति प्रत्ययात्पूर्वस्योदात्तत्वम् । चित् इति अपिशब्दार्थे । तेन न केवलमितः, इतो निर्गत्यान्यतोऽपि निर्गच्छतेति गम्यते । स एष धात्वर्थयोः सम्बन्धः आरत इति लुङा द्योत्यते । स हि धातुसम्बन्धाधिकारे विधीयते । आरत । अर्तेः 'छन्दसि लुङ्लङ्लिटः' (पा.सू.३,४,६) इति लोडर्थे लुङ् । मध्यमबहुवचनस्य तादेशः । 'सर्तिशास्त्यर्तिभ्यश्च' (पा.सू.३,१,५६) इति च्लेरङादेशः । 'ऋदृशोऽङि गुणः' (पा.सू.७,४, १६) इति गुणः । आडागमः । दधानाः । शानचश्चित्वात् प्राप्तमन्तोदात्तं बाधित्वा परत्वात्

'अभ्यस्तानामादिः' (पा.सू.६,१,१८९) इत्याद्युदात्तत्वम् । दुवः । 'नब्विषयस्यानिसन्तस्य' (फि.सू.२६) इत्याद्युदात्तः ॥ ५ ॥

**सिद्धाञ्जनम्–** पञ्चमीमृचमाह– **उत** अपि च **नः** अस्माकं **निदः** निरोधकाः **ब्रुवन्तु** भणन्तु (एवं वक्ष्यमाणप्रकारेण) । **अन्यतः चित्** अन्येषु क्षेत्रेष्वपि **निरारत** (इतो निर्गत्य) अरणं कुरुत प्रयासं कुरुत । कीदृशाः सन्तः ? **इन्द्र इत्** इन्द्र एव **दुवः** (युष्मदीयां) परिचर्यां **दधानाः** धारयमाणाः ।

निदः– निन्दका इति पूर्वे व्याख्यातारः । बन्धनं निरोधनं वा धात्वर्थः । निन्दायामपि कचिद्वर्तते, उपपन्नश्च । यथा वृत्रादयः प्रकाशावरकास्तद्विभूतयश्च देवद्विषो यज्ञविघातका भवन्ति, तथा अन्येऽपि अन्तर्यागप्रवृत्तस्य पुरुषस्य देवराजमिन्द्रं प्रेप्सोः निरोद्धारो भवन्ति । त एव 'निदः' इत्युच्यन्ते । णिदिधातुः बन्धनार्थे अन्यत्र अपि प्रयुक्तो भवति । 'निदितम्' 'निदानम्' 'निदातारम्' इत्येतानि बन्धनार्थानि मन्त्रेषु दृश्यन्ते । 'उदुस्रियाणामसृजन्निदानम्' (६. ३२.२.)। निदानं बन्धनं बोध्यम् । 'वलस्य भृत्यैः पणिभिरपहृतानां गवां निदानं बन्धनं उदसृजत् अमोचयत्' इति सायणः । 'चरन् वत्सो रुशन्निह निदातारं न विन्दते' (८. ६१. ५)। निदातारं निरोधकं इति सायण एव । 'शुनश्चिच्छेपं निदितं सहस्राद्यूपादमुचः' । निदितं नितरां बद्धमित्येव व्याख्याता ।

अस्य सूक्तस्य तात्पर्यपर्यालोचनायां 'निदो' निरोद्धारः, न त्विह निन्दका इति विस्पष्टं भवेत् । अस्यामृचि अस्माकं प्रतिकूला निरोद्धार एव उत्तरोत्तरप्रयाणाय नः सम्मतिं ब्रुवन्त्वित्युक्तम् । अस्मदनुकूला अपि अस्मान् भाग्यशालिनः कर्मवीराः कार्यसाधका इति ब्रुवन्तु, 'उत नः सुभगान्' इति उत्तरत्र ऋचि प्राह, तस्मादुभयोः ऋचोः तात्पर्ये सम्बन्धोऽवधेयः ।

आरत-अरतिः अरणं अरिः अर्य आर्यः इत्यादयः शब्दाः, प्रयास-परिश्रमनिरन्तरोद्योग-कर्षणाद्यर्थे वेदे प्रयुक्ता ज्ञेयाः । अत एव 'आर्यः' अनलसः, नित्योद्यमी, देवाराधनकर्मणि देवशत्रुभिः सह योद्धा, मानुषभुवं दिव्यसम्पत्फलिनीं विधातुं कृषिं न जहाति नित्यं कर्षकः इत्याद्यर्थे प्रयुक्तो ग्राह्यः । दुवः- सामान्यं कर्म, परिचर्या वा ॥ ५ ॥

॥ इति प्रथमाष्टके प्रथमाध्याये सप्तमो वर्गः ॥

## ।। अथ अष्टमो वर्गः ।।

### ऋक्संहिता पदपाठसहिता

**उतनः सुभगाँ अरिर्वोचेयुर्दस्म कृष्टयः । स्यामेदिन्द्रस्य शर्मणि ।। ६ ।।**

**उत । नः । सुऽभगान् । अरिः । वोचेयुः । दस्म । कृष्टयः । स्याम । इत् । इन्द्रस्य । शर्मणि ।। ६ ।।**

### ऋग्भाष्यम्

**अरयोऽपि प्रजा अस्मान्वोचेयुः सुभगान्सदा ।**
**शत्रुभेदिंस्तवेन्द्रस्य स्यामैवानुग्रहे सुखे ।। ६ ।।**

**ऋग्भाष्यटीका–** **उत नः** । अरयोऽपि ।। **हे दस्म** दस्यतिर्भेदनार्थः । ततो म(क्)प्रत्ययः । शत्रुभेदिन् शत्रूणां हन्तः । **अरिरुत** अरयोऽपि । **कृष्टयः** प्रजाः **नः** अस्मान्सुभगान् सदा **वोचेयुः** वदेयुः । किञ्च वयं **इन्द्रस्य** तवानुग्रहे सतीति शेषः । **शर्मणि** सुखे **स्यामेत्** स्यामैव । त्वदनुग्रहेण सुखिनो भवामैव ।। ६ ।।

**मन्त्रार्थमञ्जरी–** (हे) दस्म, शत्रुभेदिन्, 'दसु विभेदने' इत्यतो मप्रत्ययः । अरिः उत, अरयोऽपि । कृष्टयः, प्रजाः । नः अस्मान् । सुभगान् । (सदा) वोचेयुः, वदेयुः 'वच परिभाषणे' छान्दसं शब्विकरणमुमागमश्च ।। किं च (वयम्) इन्द्रस्य । (तव) (अनुग्रहे सति) इति शेषः । शर्मणि सुखे । स्याम इत्, स्यामैव, त्वदनुग्रहे सति सुखिनो भवामैव ।। ६ ।।

**स्कन्द–** अपि **नः** अस्मान् **सुभगान्** सुधनान् । **अरिः** शत्रुपर्यायोऽयमीश्वरनाम वा (तु. निघ ३,२२) । व्यत्ययेन चैकवचनम् । शत्रवोऽपि ईश्वरा अपि वोचेयुः **हे दस्म!** उपक्षपयितः शत्रूणां, दर्शनीय वा । **कृष्टयः** मनुष्याः । तादृशं धनमस्मभ्यं देहि, येन शत्रवोऽपि ईश्वरा अपि वा अस्मान् सुधनान् ब्रुवन्ति, किमुतान्ये मनुष्या इत्यर्थः । किञ्च **स्याम इत्** इच्छब्दः पदपूरणः । वयं भवेम तव इन्द्रस्य सम्बन्धिनि **शर्मणि** सुखे । त्वया दत्तेन धनेन सुखिनश्च भवेमत्यर्थः । अथवा 'शर्म' (निघ ३,४) इति गृहनाम् । मरणोत्तरकालं तवेन्द्रस्य गृहे भवेम । इन्द्रलोकं गच्छेमेत्यर्थः ।। ६ ।।

**वेङ्कटमाधव–** अरिः कृष्टयः इत्येकवचनबहुवचनयोर्भिन्नपादस्थयोर्भिन्नमन्त्रस्थयोरिव विरम्याभिधानात् सामानाधिकरण्यं सिध्यति । अपि च अस्मान् इन्द्रसमाश्रयणात् सुभगान् अहिंसितधनान् अरिः विब्रवीतु, विब्रुवन्तु वाऽरयो मनुष्याः । दर्शनीय ! अथाऽपि वयं इन्द्रस्य स्वभूते सुखे स्याम एव ॥ ६ ॥

**मुद्गल– हे दस्म!** शत्रूणामुपक्षपयितः इन्द्र त्वदनुग्रहात् **अरिः उत** शत्रवोऽपि **नः** अस्मान् **सुभगान्** शोभनधनोपेतान् **वोचेयुः** उच्यासुः । **कृष्टयः** मनुष्याः अस्मन्मित्रभूता वदन्तीति किमु वक्तव्यमिति शेषः । ततो धनसम्पन्ना वयं **इन्द्रस्य शर्मणि** इन्द्रप्रसादलब्धे सुखे **स्याम** इत् भवेमैव ॥ ६ ॥

**सायण– हे दस्म** शत्रूणामुपक्षपयितरिन्द्र त्वदनुग्रहात् **अरिः** उत शत्रवोऽपि **नः** अस्मान् **सुभगान्** शोभनधनोपेतान् **वोचेयुः** उच्यासुः । **कृष्टयः** मनुष्या अस्मन्मित्रभूता वदन्तीति किमु वक्तव्यमिति शेषः । ततो धनसम्पन्ना वयं **इन्द्रस्य शर्मणि** इन्द्रप्रसादलब्धे सुखे **स्यामेत्** भवेमैव । 'मघम्' इत्यादित्वष्टाविंशतिसङ्ख्याकेषु धननामसु 'रयिः क्षत्रं भगः' (नि.२,१०,१०) इति पठितम् । 'मनुष्याः' इत्यादिषु पञ्चविंशतिसङ्ख्याकेषु मनुष्यनामसु 'कृष्टयः' (नि.२,३,७) इति पठितम् ।

उत । 'एवमादीनामन्तः' (फि.सू.८२) इत्यन्तोदात्तः । सुभगान् । भगशब्दस्य क्रत्वादिषु पाठात् 'नञ्सुभ्याम्' (पा.सू.६,२,१७२) इत्युत्तरपदान्तोदात्तत्वं बाधित्वा 'क्रत्वादयश्च' (पा.सू.६,२,११८) इत्युत्तरपदाद्युदात्तत्वम् । संहितायां 'दीर्घादटि समानपादे' (पा.सू.८,३,९) इति नकरस्य रुत्वम् । 'भोभगो' (पा.सू.८,३,१७) इति यत्वम् । 'लोपः शाकल्यस्य' (पा.सू. ८,३,१९) इति यलोपः । तस्यासिद्धवत्वात् न पुनः सन्धिकार्यम् । 'आतोऽटि नित्यम्' (पा.सू.८,३,३) इत्याकारस्य सानुनासिकता । अरिः । वचनव्यत्ययः । 'अच इः' (उ.सू. ४,५७८) इति इप्रत्ययान्तः । प्रत्ययस्वरेणान्तोदात्तः । वोचेयुः उच्यासुः । 'वच परिभाषणे' इत्यस्मात् आशीर्लिङि झेर्जुसादेशे (पा.सू.३,४,१०८) 'लिङ्याशिष्यङ्' (पा.सू.३,१,८६) इति अङ्प्रत्यये 'वच उम्' (पा.सू.७,४,२०) इत्युमागमः । गुणः । 'किदाशिषि' (पा.सू.३,४,१०४) इति यासुट् । 'छन्दस्युभयथा' (पा.सू.३,४,११७) इति लिङादेशस्य सार्वधातुकत्वात् 'लिङः सलोपोऽनन्त्यस्य' (पा.सू.७,२,७९) इति सकारलोपः । 'अतो येयः'

(पा.सू.७,२,८०) । 'आद्गुणः' (पा.सू.६,१,८७) । अङ्गोऽदुपदेशाल्लसार्वधातुकस्वरेण लिङोऽनुदात्तत्वम् । अङ्प्रत्ययस्वर एव शिष्यते । तेन सह इकारस्य गुणः 'एकादेश उदात्तेनोदात्तः' (पा.८,२,५) इत्युदात्तः । दस्म । 'दसु उपक्षये' इत्यस्मात् अन्तर्भावितण्यर्थात् 'इषियुधीन्धिदसिश्याधूसूभ्यो मक्' (उ.सू.१,१४२) । पदात्परत्वादामन्त्रितनिघातः । कृष्टयः । 'क्तिच्क्तौ च संज्ञायाम्' (पा.सू.३,३,१७४) इति क्तिचि मनुष्यनामत्वात् 'चितः' (पा.सू. ६,१,१६३) इत्यन्तोदात्तः । स्याम । 'अस भुवि' । 'श्नसोरल्लोपः' (पा.सू.६,४,१११) । यासुट उदात्तत्वम् । पादादित्वादनिघातः । शर्मणि । 'शॄ हिंसायाम्' । हिनस्ति दुःखमिति शर्म । अन्येभ्योऽपि दृश्यन्ते' (पा.सू.३,२,७५) इति मनिन् । 'नेड्वशि कृति' (पा.सू.७,२,८) इति इट्प्रतिषेधः । नित्त्वादाद्युदात्तत्वम् ।

**सिद्धाञ्जनम्–** षष्ठीमृचमाह– **उत** अपि च (न केवलमस्मत्प्रतिकूला 'निदः', अनुकूला अपि वक्ष्यमाणरीत्या अवन्त्वित्याह 'उत' इति निपातः) **अरिः कृष्टयः** (अस्मदर्थे) योद्धारः, कर्म कुर्वन्तः (अरिरिति वचनव्यत्ययः सं-अरणशीला आर्या देवार्थं योद्धारः, कृष्टयः कर्षणशीलाः फलावाप्तये) **नः** अस्मान् **सुभगान्** धन्यान् कृतार्थान् **वोचेयुः** उच्यासुः । (किञ्च) हे **दस्म** कर्मनिष्पादक, **इन्द्रस्य शर्मणि** सुखे स्याम भवेम **इत्** पादपूरणे । (अथवा इन्द्रस्यैव प्रसादाल्लभ्ये तदानन्दे ध्रियेमहि इति अवधारणार्थे वा 'इत्' इति वोचेयुरिति सम्बन्धः)।

पदार्थकथन एव तात्पर्यमाविष्कृतम् । ऋचोऽस्याः पूर्वस्याश्च सम्बन्धः प्रागुक्तः । दंस-दस्रादिवत् दस्मपदमपि कर्मनिष्पादनं प्रतिपादयतीति बोध्यम् । 'अरिः कृष्टयः' स्युर्नाम आर्यमानुषवर्गीयाः अन्तर्यागप्रवर्तनसाधनानुकूलाः । वस्तुतस्तु, अतीन्द्रियभूस्था देवताशक्तिभेदाः दिव्यविभूतिविशेषाः मानुषं यज्ञेन साधनेन दिवमारुरुक्षुं आरोहन्तं च उपकुर्वन्तः, तस्य भ्रातर इव तद्युक्ताः (जामयः सखायः युजः) तं तारयन्ति तेन स्वयं च तृप्यन्ति सम्प्राप्ता ऐन्द्रं शर्म । यज्ञाध्वनि पुरुषं निरुद्धवतां परिच्छिन्नवतां वा वैरिणां निदः । अतिक्रमणे सहायभूता 'अरिः कृष्टयः' अधुना तेन साधितकर्मणा (दस्म) पुरुषेण कृतार्थेन सह इन्द्रानन्दपरायणा भवेयुरिति युक्तमवेदम् ।

अनयोर्द्वयो ऋचोः परस्परसम्बन्धज्ञापकं वाक्यद्वयं च निरीक्षणीयम् । ऐन्द्रं कर्म कुरुत, सर्वकर्मभारमिन्द्रे निवेश्य विभृत (दधाना इन्द्र इद्दुवः) इति पूर्वर्चि प्रोक्तम् । अत्र इन्द्रस्यैव शर्मणि ध्रियेम (स्यामेदिन्द्रस्य शर्मणि) इति तथाविधस्य कर्मणः फलं च द्योतितम् ।

'आरत' इत्युक्त्वा तदेवानुरणितं अरणार्थकधातुनिष्पन्नारिपदप्रयोगेन । पूर्वोत्तरसम्बन्धध्वननायेदृशी रीतिरवलम्बिता मन्त्रदर्शिभिरिति पुनः स्मारयामः ।। ६ ।।

**नीतिमञ्जरी–** एवमग्नेर्माहात्म्यमुक्त्वा बहुप्रजस्यापत्यस्य दारिद्र्यं सूचयति–

**बहुप्रजस्य पुत्रस्य सुवाचोऽपि सदा विपत् ।**
**सीदन्निन्द्रं मधुच्छन्दा वस्वयाचदृचोत नः ।। ५ ।।**

बह्व्यः प्रजा यस्यासौ बहुप्रजः । गोस्त्रियोरुपसर्जनस्येत्युपसर्जनह्रस्वत्वम् (पा०१.२.४८) । तस्य पुत्रस्य सुवाचोऽपि शोभनवेदशास्त्राध्ययनयुक्तस्यापि सदा सर्वदा विपद् दारिद्र्यं भवति । पितुर्दायादानां बहुत्त्वात् । यथा विश्वामित्रस्य 'यद्बहुप्रजस्य हैकशतं पुत्रा आसुः' इत्युक्तस्य तत्पुत्रस्य मधुच्छन्दसः दारिद्र्यमभूत् । मधुरं वेदो छन्दो यस्यासौ मधुच्छन्दा इति सुवाक् । सोऽपि सीदन् अतीव धनेच्छया इन्द्रं परमैश्वर्ययुक्तम् । 'इदि परमैश्वर्ये' इति धातुः ।

'उत नः सुभगाँ अरिर्वोचेयुर्दस्म कृष्टयः । स्यामेदिन्द्रस्य शर्मणि । (ऋ.१.४.६)

उत । नः । सुऽभगान् । अरिः । वोचेयुः । दस्म । कृष्टयः । स्याम । इत् । इन्द्रस्य । शर्मणि ।। ४ ।।

इत्यनयर्चा वसु धनमयाचत । मधुच्छन्दा गायत्र्या इन्द्रं स्तौति । षष्ठेऽहनि ब्राह्मणाच्छंसिनोऽनुरूपस्य तृतीया सूत्रिता । सुरूपकृत्नुमिति (ऋ०१,४,१) स्तोत्रियानुरूपाविति । अयमर्थः । हे दस्म शत्रूणामुपक्षपयितः इन्द्र- दसु उपक्षये । त्वत्प्रसादात् अरिरुत-अरयोऽपि-वचनव्यत्ययः । उतशब्दोऽप्यर्थे । अप्येक इति चेत् । नः अस्मान् सुभगान् शोभनधनोपेतान् वोचेयुः उच्यासुः । भग इति धननाम ( निघण्टु २.१०.)। यद्यप्यरयोऽप्येवं वदन्ति तर्हि कृष्टयः अस्मिन् मित्रभूता मनुष्याः । कृष्टयः इति मनुष्यनाम ( निघण्टु २. ३) । अस्मान् ऋद्धान् इति वदन्ति तत्र किं वक्तव्यम् । ततो धनसम्पन्ना वयं इन्द्रस्य शर्मणि इन्द्रप्रसादलब्धे सुखे स्याम भवेम ।

धनं सर्वोऽपि याचते परं तु अयमत्यन्तं विलपति । तस्मात्सीदन्निन्द्र इति सिद्धम् । नः इति युष्मदस्मदोः षष्ठीति निघातः (पा०८१.२०) । वोचेयुः स्यामेति पादादित्वान्निघाताभावः

(तिङ्ङतिङः, पा० ८,१,२८ इति सूत्रस्य प्राप्तिर्न) । दस्मेत्यामन्त्रितत्वान्निघातः । (पा० ८.१.१९)। सुभगाँ अरिः-नकार आकारोपधः० (ऋ०प्रा० ४.६४) इति नलोपे कृते, 'नकारस्य लोपरेफोष्मभावे० (ऋ०प्रा०४.७९) इत्युपधानुनासिकत्वम् ।। ४ ।।

## ऋक्संहिता पदपाठसहिता

**एमाशुमाशवे भर यज्ञश्रियं नृमादनम् । पतयन्मन्दयत्सखम् ।। ७ ।।**

**आ । ईम् । आशुम् । आशवे । भर । यज्ञऽश्रियम् । नृऽमादनम् । पतयत् । मन्दयत्ऽसखम् ।।**

## ऋग्भाष्यम्

**आशुवीर्य तवैवाशुं सोमं क्षिप्रं मनोपि वा ।**
**आभर स्वोदरे तुष्ट्या हृदि वा यज्ञभूषणम् ।**
**ईमेव पुंमदकरं मदादुत्पतनादिके ।**
**हेतुं मन्दत्वहेतुं च तत्सखीनां पुरोगतेः ।। ७ ।।**

**ऋग्भाष्यटीका– एमाशुम्** । आशुवीर्य । विशब्दो वीर्यवाची । आशु विः वीर्यं यस्यासावाशविः पूर्वपदोकारस्याकारः । **हे आशवे** आशुवीर्य क्षिप्रकारिसामर्थ्य । **आशुं** क्षिप्रं वेगवन्तम् । द्रवत्वात् । **यज्ञश्रियं** यज्ञभूषणम् । **नृमादनं** पुंमदकरं कृतपानानां पुंसां हर्षकरम् । **पतयत्** उत्पतयन्तम् । मदात् मदमुत्पाद्योत्पतनादिके व्यापारे हेतुम् । **मन्दयत्सखं** मन्दयति सखायमिति मन्दयत्सखस्तम् । मयूरव्यंसकादिदर्शनात् । यः सोमं पिबति तत्सखीनां मन्दत्वहेतुम् । कथं पुरोगतेर्धावनादौ कृतपानानां बलवत्तयाऽकृतपानेभ्यः पुरोगमनात् । एवं भूतं सोमं **आभर** स्वोदर इति शेषः । अध्यात्मं त्वेवंविधं मनस्तुष्ट्या हृदि साध्विदमित्याभरेति व्यवस्थितो विकल्पः । ईमित्यनूद्यैवेति व्याख्यातम् । तस्य केनाप्यन्वयायोगात्तवेत्यध्याहृत्य तवैवेत्युक्तम् । त्वदधीनमेव सोमं त्वं स्वीकुर्विति । मनसश्चश्चलत्वादाशुत्वम् । तदुद्रेकेण च पुंसां मदादिकं भवति । आशवे आशुत्वार्थमिति व्याख्यानं प्रमाणविरुद्धमित्यतः सम्बुद्धितया व्याख्यातम् ।। ७ ।।

**मन्त्रार्थमञ्जरी–** विशब्दो वीर्यवाची, आशु विः वीर्यं यस्सावाशविः आशुपदोकारस्याकारः, तस्य सम्बुद्धिः (हे) आशवे, आशुवीर्य क्षिप्रकारिसामर्थ्य । आशुम्, क्षिप्रम्, वेगवन्तमिति यावत्, द्रवत्वात् । यज्ञश्रियम्, यज्ञभूषणम् । नृमादनम्, पुंमदकरम्, कृतपानानां पुंसां हर्षकरमिति

यावत् । पतयत्, पतयन्तम्, पातॄणां मदमुत्पाद्योत्पतनादिव्यापारहेतुम् । मन्दयत्सखम्, मन्दयति सखायमिति मन्दयत्सखम्, मयूरव्यंसकादित्वात्साधुत्वम्, यः सोमं पिबति तत्सखीनां मन्दत्वहेतुम्, धावनादौ कृतपानस्य बलवत्त्वेनाकृतपानेभ्यः सखिभ्यः कृतपानस्य पुरोगमनान्मन्दत्वं तेषां करोतीति भावः । 'एम्' इत्यत्र 'आईम्' इति विभागः, 'ईम्' इत्यस्य 'तव' इत्यध्याहृतेनान्वयः, आङः 'भर' इति क्रियान्वयः । उक्तगुणविशिष्टम् । (तव) ईम्, तवैव, त्वदधीनमेव (सोमम्) (स्वोदरे) इति शेषः । आ भर, बिभृहि, भृञःशब्विकरणं छान्दसम् ।। अध्यात्मं तु– एवं विधं मनस्तुष्ट्या हृदि साध्विदमित्याभरेत्यर्थः, मनसश्चञ्चलत्वादाशुत्वम्, तदुद्रेकेण च पुंसां मदादिकं भवतीति ज्ञेयम् ।। ७ ।।

**स्कन्द–** ईम् शब्द एनमित्यस्यार्थे । एनं सोम **आशुं** क्षिप्रनामैतत् (तु.निघ.२,१५) । स्वकार्यकरणेषु क्षिप्रम् । **आशवे** तादर्थ्ये चैषा चतुर्थी । सर्वार्थेषु क्षिप्रस्येन्द्रस्यार्थाय **आभर** आहर अध्वर्यो! **यज्ञश्रियं** यज्ञं यः श्रयति स यज्ञश्रीः, तं यज्ञश्रियम् । हविष्ट्वमापन्नमित्यर्थः । **नृमादनं** नरो मनुष्या ऋत्विजः तदाकारा वा देवाः, तेषां मदकरं **पतयत्** पतयतिर्गतिकर्मा । द्वितीयैकवचनस्य च छान्दसत्वाल्लुक् । पतयन्तं गच्छन्तं, इन्द्रं प्रति गन्तारमित्यर्थः । **मन्दयत्सखं** मन्दयतिरर्चतिकर्मा (तु.निघ.३,१४) । तानि तान्यभिप्रेतानि स्तोतुः सम्पादयन् य आत्मनः स्तुतिं कारयति तस्य इन्द्रस्य सखीभूतम् ।। ७ ।।

**वेङ्कटमाधव– आ भर** एनं क्षिप्रव्यापिनं सोमं क्षिप्रव्यापिन इन्द्राय । यः सोमो यज्ञं श्रयति मदयति च मनुष्यान् तम् । पतयन्तं पातयति हि सोमः पातारम् । मदयति च सखायम् । पातैव सखेति ।। ७ ।।

**मुद्गल–** ईमिति निपात इदंशब्दार्थे । हे यजमान! **आशवे** कृत्स्नसोमयागव्याप्तायेन्द्राय **ईम् आ भर** इमं सोममाहर । कीदृशं सोमम् । **आशुं** सवनत्रयव्याप्तं **यज्ञश्रियं** यज्ञस्य सम्पद्रूपं **नृमादनं** नृणां ऋत्विग्यजमानानां हर्षहेतुं **पतयत्** पतयन्तं कर्माणि प्राप्नुवन्तं मन्दयत्सखं य इन्द्रो मन्दयति यजमानान् हर्षयति, तस्मिन्निन्द्रे सखीभूतोऽयं सोमः तत्प्रीतिहेतुत्वात् ।। ७ ।।

**सायण–** ईम् इति निपात इदंशब्दार्थे वर्तते । हे यजमान **आशवे** कृत्स्नसोमयागव्याप्तायेन्द्राय **ईम् आ भर** इमं सोममाहर । कीदृशं सोमम् । **आशुं** सवनत्रयव्याप्तं **यज्ञश्रियं** यज्ञस्य सम्पद्रूपं

**नृमादनं** नृणामृत्विग्यजमानानां हर्षहेतुं **पतयत्** पतयन्तं कर्माणि प्राप्नुवन्तं कर्माणि प्राप्नुवन्तं । **मन्दयत्सखं** य इन्द्रो मन्दयति यजमानान् हर्षयति तस्मिन्निन्द्रे सखिभूतोऽयं सोमः । तत्प्रीति-हेतुत्वात् तृप्तिहेतुत्वाद्वा ।

आशुम् । 'कृवापाजिमिस्वदिसाध्यशूभ्य उण्' (उ.सू.१,१) इति उण् । प्रत्ययस्वरः । आशवे । पूर्ववत् । यज्ञश्रियम् । 'समासस्य' (पा.सू.६,१,२२३) इत्यन्तोदात्तः । माद्यन्तेऽ-नेनेति मादनः । 'करणाधिकरणयोश्च' (पा.सू.३,३,११७) इति ल्युट् । तस्य लित्त्वात् पूर्व आकार उदात्तः । 'गतिकारकोपपदात्कृत्' (पा.सू.६,२,१३९) इति स एव शिष्यते । पतयत् । पतेरदन्तस्य चौरादिको णिच् (पा.सू.३,१,२५) । अतो लोपः (पा.सू.६,४,४८) । तस्य स्थानिवत्त्वात् (पा.सू.१,१,५६) उपधाया वृद्ध्यभावः (पा.सू.७,२,११६) । लटः शत्रादेशः । तस्य 'छन्दस्युभयथा' (पा.सू.३,४,११७) इत्यार्धधातुकत्वेन शबभावात् 'अदुपदेशात्' (पा.सू. ६,१,१८६) इति निघाताभावेन प्रत्ययाद्युदात्तत्वमेव भवति । आर्धधातुकत्वेऽपि 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' (परिभा.३५) इति 'णेरनिटि' (पा.सू.६,४,५१) इति णिलोपा-भावः । 'सुपां सुलुक्' (पा.सू.७,१,३९) इत्यमो लुक् । 'न लुमता' (पा.सू.१,१,६३) इति प्रत्ययलक्षणनिषेधात् 'उगिदचाम्' (पा.सू.७,१,७०) इति न नुम् । एवं मन्दयच्छब्दोऽन्तो-दात्तः । मन्दयतीन्द्रे सखा । 'सप्तमी' (पा.सू.२,१,४०) इति योगविभागात् समासः । 'तत्पुरुषे तुल्यार्थ' (पा.सू.६,२,२) इति सप्तमीपूर्वपदप्रकृतिस्वरत्वम् ।। ७ ।।

**सिद्धाञ्जनम्–** सममीमृचमाह– **आशवे** (वेगोपलक्षिताय तीव्रायेति वक्तव्यम्) इन्द्राय **ईम्** (एनम् इदमर्थोऽयं निपातः) **आशुं** सोमं **आभर** आहर । कीदृशं सोमम् ? यज्ञश्रियं यज्ञवैभवभूतम् (यज्ञं श्रयति, यज्ञश्रीः तं इत्येके)। पुनः कीदृशम् ? **नृमादनं** नृणां मादनं मदकरम् । (मनुष्यो देवश्च नर उच्यते वेदे) पुनश्च **मन्दयत्सखं पतयत्** मन्दयत्सखं इन्द्रं पतयत् पतयन्तं गमयन्तं पुरतो वहन्तम् ।

पतयत्– द्वितीयाविभक्तिलोपः छान्दसः, सर्वेऽपि व्याख्यातारः सोमविशेषणत्वेन गृह्णन्ति, कथञ्चित् रूपं निष्पादयन्ति। मन्दयत्सखम्– 'पतयत्' इति सकर्मकधातोः शतृप्रत्ययान्तस्य क्रियार्थकस्य कर्मपदं भवति । यजमानान् मन्दयति हर्षयति इन्द्रः, तस्मिन् सखिभूतः सोमः इति सायणो मन्यते, अन्ये व्याख्यातारः अन्यथा व्याकुर्वते, नव्याश्च किमपि विभावयन्ति,

यः को वा भवत्वर्थः 'पतयन्मन्दयत्सखम्' इत्यत्र व्याकरणोपपादनं छान्दसत्वाश्रयणेनैव साध्यम् । तदिह मन्दयन् हर्षयन् सखा (इन्द्रः) तम् 'पतयत्' सोममिति वयम् । यः को वा भवतु इन्द्रस्य सखा, सोमः इति सायणः । अत्रानुपपत्तिर्भवति, तन्निरीक्षा नावश्यकी। यजमान ऋषिरन्तस्सोमयाजी इन्द्रसख एवेति वयम् । अयमर्थः सूक्तेऽस्मिन्नन्याभिर्ऋग्भिः सङ्गच्छते । व्याख्यानान्तरपरीक्षया नास्ति प्रयोजनमित्यलमेतावता ।। ७ ।।

### ऋक्संहिता पदपाठसहिता

**अस्य पीत्वा शतक्रतो घनो वृत्राणामभवः । प्रावो वाजेषु वाजिनम् ।। ८ ।।**

अस्य । पीत्वा । शतक्रतो इति शतऽक्रतो । घनः । वृत्राणाम् । अभवः । प्र । आवः । वाजेषु । वाजिनम् ।। ८ ।।

### ऋग्भाष्यम्

**एनं पीत्वा बहुज्ञानाभूस्तमोभिरनावृतः ।**
**प्रसादादेव मुक्तेषु तमोसह्यतया घनः ।**
**आवृतेरेव वृत्राणि ह्यज्ञानान्यन्नदं नरम् ।**
**प्रावो युद्धेषु योद्धारं भक्तं ज्ञानिनमेव च ।। ८ ।।**

**ऋग्भाष्यटीका– अस्य पीत्वा** । एनं पीत्वा । हे **शतक्रतो** शतमित्यपरिमितनाम । क्रतुर्ज्ञानं बहुज्ञान । त्वं **अस्य** एनं सोमं पीत्वा । **वृत्राणां** तमसां **घनः** अभेद्योऽभवः । तमोभिरनावृतोऽभूरिति यावत् । ननु परमेश्वरस्य सोमपानोत्पन्नया शक्त्या ज्ञानाप्रतिहतिरित्येतत्प्रमाणविरुद्धमतोऽभिप्रायमाह– **प्रसादादिति** ।। येषां सोमः परमेश्वरेण पीतः तेषु तेन यज्ञेनोदिताद्भगवत्प्रसादादेव मुक्तेषु सत्सु प्रसादादेव परमेश्वरस्तमो न सहतेऽतः सोमं पीत्वा वृत्राणां घनोऽभव इत्युच्यते । नतु सोमपानसामर्थ्येन तस्याज्ञानानावृत्तिः । असह्यं तमो यस्यासौ तमोसह्यः । तमसोऽसह्य इति वा । अज्ञानेषु वृत्रशब्दं निर्वक्ति– **आवृतेरिति** । सर्वजीवावरणात् । अस्य निर्वचनस्य यदावृणोत्तद्वृत्रस्य वृत्रत्वमित्यादिश्रुतिप्रसिद्धतया प्राबल्यं सूचयितुं ह्येवशब्दौ । किञ्च त्वं **वाजिनं** अन्नवन्तम् । अन्नदं नरमिति यावत् । **वाजेषु** अन्नेषु सर्वभोगविषये **प्रावः** रक्षः । अथवा **वाजिनं** योद्धारं **वाजेषु** युद्धेषु प्रावः । नान्नदानादिमात्रेणेश्वरो रक्षतीत्यतः शेषमाह– भक्तं ज्ञानिनमेवचेति ।। ८ ।।

**मन्त्रार्थमञ्जरी–** (हे) शतक्रतो, शतशब्दोऽत्रामितवाची, क्रतुर्ज्ञानम्, हे अपरिमितज्ञान विष्णो, शताश्वमेधयज्ञ पुरंदर, इति वा । अस्य पीत्वा, द्वितीयार्थे षष्ठी, व्यत्ययश्च स्वातन्त्र्ये, त्वदधीनमेवैनं सोमं पीत्वा । वृत्राणाम्, 'यदिमाँल्लोकानावृणोत्तद्वृत्रस्य वृत्रत्वम्' इति श्रुतेः सर्वजीवावरणहेतुना वृत्रपदवाच्यानामज्ञानानाम् । घनः, अभेद्यः । अभवः, अज्ञानैरनावृतोऽभूरिति यावत्, विष्णुपक्षे– यस्मिन्यज्ञे भगवता सोमः पीतस्तद्यज्ञेनोदितविष्णुप्रसादात्तेषु मुक्तेष्वज्ञानस्पर्शं न सहत इति भावो ध्येयः ।। किं च, (त्वम्) वाजिनम्, अन्नवन्तम्, अन्नदं नरमिति यावत् । वाजेषु, अन्नेषु, सर्वभोगविषये । प्र आवः, अरक्षः ।। वाजिनम्, ज्ञानादिविषये योद्धारम् । वाजेषु, ज्ञानादियुद्धेषु । प्र आवः, अरक्षः ।। इति वा ।। ८ ।।

**स्कन्द–** अस्य इति द्वितीयार्थे । षष्ठीश्रुतेर्वैकदेशमिति शेषः । इमं सोमम्, अस्य सोमस्यैकदेशं स्वांशलक्षणं पीत्वा **हे शतक्रतो!** शतशब्दो बहुनाम (तु.निघ.३.१) । क्रतुः कर्म प्रज्ञा वा । बहुकर्मन्! बहुप्रज्ञ! वा । **घनः** हन्ता **वृत्राणां** असुराणामन्येषां वा अभवः त्वम् । **प्रावः** प्रकर्षेणारक्षः त्वम् । **वाजेषु** 'वाजे' (निघ.२,१७) इत्येकवचनान्तं सङ्ग्रामपठितम्, सङ्ग्रामेषु । कम् । **वाजिनं** सङ्ग्रामवन्तं हविर्लक्षणेनान्नेनान्नवन्तं वा । अथवा अभवः प्राप्त इति लोडर्थे लङ् । हन्ताऽस्मदीयानां शत्रूणां भव । प्रकर्षेण चाव सङ्ग्रामेषु मां वाजिनमिति । आत्मत्राणे संसर्गे वा ब्राह्मणवैश्ययोरपि शस्त्रादानस्मरणात् सम्भवति ऋषीणामपि सङ्ग्रामः । विशेषेण तु मधुच्छन्दसः क्षत्रियप्रसूतत्वात् । तत्रेदं शत्रुहननमात्मरक्षा चाशास्यते ।। ८ ।।

**वेङ्कटमाधव–** अमुं सोमं पीत्वा शतप्रज्ञ! हन्ता शत्रूणाम् । अभवः । पालय च युद्धेषु युद्धवन्तं स्तोतारम् ।। ८ ।।

**मुद्गल– हे शतक्रतो!** इन्द्र! त्वम् **अस्य** सोमस्य सम्बन्धिनमंशं पीत्वा **वृत्राणां** शत्रूणां **घनः अभवः** हन्ताऽभूः । ततो **वाजेषु** सङ्ग्रामेषु **वाजिनं** सङ्ग्रामवन्तं स्वभक्तं **प्रावः** प्रकर्षेण रक्षितवानसि ।। ८ ।।

**सायण–** हे शतक्रतो बहुकर्मयुक्तेन्द्र त्वम् **अस्य** सोमस्य सम्बन्धिनमंशं पीत्वा **वृत्राणां** वृत्रनामकासुरप्रमुखाणां शत्रूणां **घनः अभवः** हन्ताऽभूः । ततो **वाजेषु** सङ्ग्रामेषु **वाजिनं** सङ्ग्रामवन्तं स्वभक्तं **प्रावः** प्रकर्षेण रक्षितवानसि ।

अस्य इति इदंशब्देन प्रयोगसमये पुरोदेशस्थः सोमो निर्दिश्यते न तु पूर्वप्रकृतः सोमः परामृश्यते । अतोऽनन्वादेशत्वात् नात्र 'इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ' (पा.सू.२,४,३२) इत्यशादेशः । अतो न सर्वानुदात्तत्वं, किन्तु त्यदाद्यत्वे (पा.सू.७,२,१०२) हलि लोपे (पा.सू. ७,२,११३) अकारः प्रातिपदिकस्वरेणोदात्त इति 'अन्तोदात्तात्' इत्यनुवृत्तौ 'ऊडिदम्पदाद्यप्पुम्रैद्युभ्यः' (पा.सू.६,१,१७१) इति विभक्तिरुदात्ता । पीत्वा । पिबतेः क्त्वाप्रत्यये घुमास्थादिना (पा.सू.६,४,६६) ईत्वम् । प्रत्ययस्वरेणान्तोदात्तः । असामर्थ्यान्न परामन्त्रिताङ्गवद्भावः । घनः 'मूर्तौ घनः' (पा.सू.३,३,७७) इति हन्तेर्धातोः काठिन्ये अप्प्रत्ययः । तदस्यास्तीति अर्शआदित्वात् (पा.सू.५,२,१२७) अजन्तः । चित्त्वादन्तोदात्तः । वाजेषु । वृषादित्वादाद्युदात्तः । वाजिनम् । इनिप्रत्ययस्वरः ।। ८ ।।

**सिद्धाञ्जनम्–** अष्टमीमृचमाह– **हे शतक्रतो!** शतकर्मन् (शतं बहुनाम, क्रतुः कर्म प्रज्ञा वा, औचित्यादत्र कर्मार्थो ग्राह्यः) **अस्य** सोमं (द्वितीयार्थे षष्ठी, सोमसम्बन्धिनं अंशं इति शेषषष्ठी वा युक्ता) पीत्वा, **वृत्राणां** आवरकाणां (वृत्रनामकासुरतद्विभूतिभूतानां शत्रूणाम् ) **घनः अभवः** हन्ता भवसि लङो लडर्थः छन्दसि, इह युक्ताश्च । **वाजेषु** समृद्धिषु वाजिनं समृद्धिमन्तं **प्रावः** प्रकर्षेण रक्षसि ।

अत्र वृत्राद्यसुराणां तत्त्वं समासत सूक्तान्ते निवेदयामः । वाजपदार्थः प्राग्विचारितः, सर्वत्र समृद्धिः पूर्णता वेति 'वाजिनीवसू', 'वाजेभिर्वाजिनीवती' इत्यादौ व्याख्याने प्रदर्शितम् । प्र-आव-अत्र रक्षणार्थोऽवधातुः, वृत्रं हत्वा वाजिनं इन्द्रो रक्षतीत्यौचित्यात् । 'प्राव' 'अभवः' इति लङा भूतार्थो न विवक्षितः । यदा सोमं पिबति शतक्रतुः, तदा वृत्रं हन्तुं प्रभुः, वाजिनं रक्षितुं चेति विवक्षा । तस्मात् सार्वकालिकं तत्वमुक्तम् । तत्र लडर्थो युक्तः ।। ८ ।।

## ऋक्संहिता पदपाठसहिता

**तं त्वा वाजेषु वाजिनं वाजयामः शतक्रतो । धनानामिन्द्र सातये ।। ९ ।।**

तम् । त्वा । वाजेषु । वाजिनम् । वाजयामः । शतक्रतो इति शतक्रतो । धनानाम् । इन्द्र । सातये ।। ९ ।।

**ऋग्भाष्यम्**

**योधयामो वयं तं त्वां ज्ञानादिधनलब्धये ।**
**अज्ञानाद्यस्मदरिभिः .................. ।। ९ ।।**

**ऋग्भाष्यटीका– तंत्वा** । योधयामः । हे **शतक्रतो** इन्द्र । तमेवमुक्तगुणं **वाजिनं** योद्धारं त्वाम् । अध्यात्मं **धनानां सातये** ज्ञानादिधनलब्धये **वाजेषु** युद्धेष्वज्ञानाद्यस्मदरिभिः सह **वाजयामः** योधयामः । बाह्ये स्पष्टम् ।। ९ ।।

**मन्त्रार्थमञ्जरी–** शतक्रतो । (हे) इन्द्र, । तम्, एवमुक्तगुणकम् । वाजिनम्, योद्धारम् । त्वा, त्वाम् । धनानाम्, ज्ञानादिवित्तानाम् । सातये, लब्धये । वाजेषु, युद्धेषु । (अज्ञानाद्यस्मदरिभिर्बाह्यशत्रुभिश्च सह) वाजयामः, योधयामः ।। ९ ।।

**स्कन्द–** तच्छब्दः प्रकृतापेक्षः तं त्वा वाजेषु **वाजिनं** वाजो बलं तद्वन्तम् । **वाजयामः** वाजयतिरर्चतिकर्मा (तु.निघ. ३,१४) । स्तुमः । हे **शतक्रतो!** बहुकर्मन् । बहुप्रज्ञ! वा । किमर्थम् । उच्यते । सङ्ग्रामे जिगीषितानां धनानां हे इन्द्र! **सातये** षणु दाने । दानाय । अथवा वनषण सम्भक्तौ । सम्भजनाय लाभायेत्यर्थः ।। ९ ।।

**वेङ्कटमाधव–** तं त्वा युद्धेषु बलिनं स्तुतिभिर्बलिनं कुर्मः । शतप्रज्ञ! धनानां इन्द्र! लाभाय ।

**मुद्गल–** हे **शतक्रतो!** इन्द्र! **धनानां सातये** सम्भजनार्थं **वाजेषु** युद्धेषु वाजिनं बलवन्तं तं पूर्वोक्तं **त्वा** त्वां **वाजयामः** अन्नवन्तं कुर्मः ।। ९ ।।

**सायण–** हे **शतक्रतो!** बहुकर्मयुक्त यद्वा बहुप्रज्ञानयुक्त **इन्द्र धनानां सातये** सम्भजनार्थं **वाजेषु** युद्धेषु **वाजिनं** बलवन्तं **त्वा** पूर्वमन्त्रोक्तगुणयुक्तं त्वां **वाजयामः** अन्नवन्तं कुर्मः । 'रणः' इत्यादिषु षट्चत्वारिंशत्सु सङ्ग्रामनामसु 'पौंस्ये महाधने वाजे अग्मन्' (नि.२,१७,४२) इति पठितम् । अष्टाविंशतिसङ्ख्याकेष्वन्ननामसु 'अन्धः वाजः पाजः' (नि.२,७,२) इति पठितम् । 'उरु तुवि' इत्यादिषु द्वादशसु बहुनामसु शतं सहस्रं (नि.३.१.९.) इति पठितम् । 'अपः अप्रः' इत्यादिषु षड्विंशतिसङ्ख्याकेषु कर्मनामसु 'शक्म क्रतुः' (नि.२,१,११) इति पठितम् । 'केतः केतुः' इत्यादिष्वेकादशसु प्रज्ञानामसु 'क्रतुः असुः' (नि.३,९,५) इति पठितम् ।।

त्वा । 'अनुदात्तं सर्वम्' (पा.सू.८,१,१८) इत्यनुवृत्तौ 'त्वामौ द्वितीयायाः' (पा.सू.८,१,२३) इति त्वादेशः । वाजेषु । 'वज व्रज गतौ' । वाजयति गमयति शरीरनिर्वाहमनेनेति वाजो बलमन्नं वा । ण्यन्तात् करणे घञ् । तत्र शित्स्वरस्यापवादे 'कर्षात्वतः' (पा.सू.६,१,१५९) इत्यन्तोदात्तत्वे प्राप्ते तस्याप्यपवादत्वेन 'वृषादीनां च' (पा.सू.६,१,२०३) इत्याद्युदात्तत्वम् । वाजयामः । वाजोऽस्यास्तीति वाजवान् । तं कुर्म इत्यर्थे 'तत्करोति तदाचष्टे' (पा.सू.३,१,२६,५-६) इति णिच् । 'इष्ठवण्णौ प्रातिपदिकस्य' (पा.सू.६,४,१५५,१) इति तस्मिन् परत इष्ठवद्भावात् 'विन्मतोर्लुक्' (पा.सू.५,३,६५) इति मतुपो लुक् । 'टेः' (पा.सू.६,४,१५५) इत्यकारलोपः । णिचश्चित्वादन्तोदात्तत्वम् । शपः पित्त्वेनानुदात्तत्वम् । लसार्वधातुकस्वरेणाख्यातस्याप्यनुदात्तत्वम् । पादादित्वात् 'तिङ्ङतिङः' इति न निघातः । शतक्रतो । आमन्त्रितनिघातः । धनानाम् । 'नब्विषयस्यानिसन्तस्य' (फि.सू.२६) इत्याद्युदात्तः । सातये । 'उदात्तः' इत्यनुवृत्तौ 'ऊतियूतिजूतिसातिहेतिकीर्तयश्च' (पा.सू.३,३,९७) इति क्तिन् उदात्तः ।। ९ ।।

**सिद्धाञ्जनम्–** नवमीमृचमाह– **वाजेषु** समृद्धिषु **वाजिनं** समृद्धम् (सन्तं) **तं त्वा** तथाविधं त्वां, हे **इन्द्र शतक्रतो** बहुकर्मन् **वाजयामः** पुनः समर्थयामः । किमर्थम् ? **धनानां सातये** लब्धानां दिव्यधनानां अन्तस्सम्पदां उपभोगाय । सातिः न केवलं प्राप्तिः, प्राप्तस्य रक्षणमपि, तस्मद्भोगायेत्युक्तम् ।

वाजशब्दार्थं बहुधा ब्रूते सायण इत्यवोचाम । एकत्रैव स्थले विविधमर्थमेकस्य पदस्योक्त्वा भ्रमयति चिन्तकान् इति तु नोक्तम् । अतीतायामृचि 'वाजेषु वाजिनम्' इत्यत्र 'सङ्ग्रामेषु सङ्ग्रामवन्तम्' इत्याह । अस्यामृचि 'वाजेषु वाजिनं वाजयामः' इत्यस्य अर्थः 'युद्धेषु बलवन्तम् (त्वां) अन्नवन्तं कुर्मः' इत्याह । 'वाजिनं सङ्ग्रामवन्तम्' 'वाजिनं बलवन्तम्' इत्येकत्रैव पदमेकं द्विधा व्याख्यातम् । अपरं च वाजं अन्नम्, वाजं बलम् , वाजं युद्धम् , इत्येकस्यैव पदस्य एकत्रैवर्चि त्रयोऽर्थाः दत्ताः । मृग्य एव व्यवस्थागन्धः ।। ९ ।।

## ऋक्संहिता पदपाठसहिता

**यो रायो३ऽवनिर्महान्त्सुपारः सुन्वतः सखा । तस्मा इन्द्राय गायत ।। १० ।।**

यः । रायः । अवनिः । महान् । सुऽपारः । सुन्वतः । सखा । तस्मै । इन्द्राय । गायत ॥

ऋग्भाष्यम्

................. योऽशेषद्रविणावनिः ।
सुखदः संसृतेः पारस्तस्मा इन्द्राय गायत ।
कम्पोऽशेषग्रहे क्वापि लज्जायां वा पुरातने ।
पृथक्त्वे धृष्यतायां वा हरिणर्क्संहितोदितः ॥ १० ॥

**ऋग्भाष्यटीका– यो रायः** । योऽशेष । **यः** इन्द्रो **रायः** अवनिशेषद्रविणस्यावनिः । अवनिरिति पृथिवीनाम । अवनिरिवावनिराश्रयः । अवतेरैश्वर्यकर्मणः प्राप्तिकर्मणो वा कर्तर्य-निप्रत्ययः । महानुत्तमः सुखदः संसृतेः पारश्चेति **सुपारः** । **सुन्वतः** यजमानस्य सखा । तस्मा इन्द्राय साम गायत । हे उद्गातारः । यद्वा गायतिः शब्दमात्रार्थः । तस्मै तदर्थं स्तुतिशब्दान्कुरु-तेति । अशेषेति कम्पार्थ उक्तः । तत्र कम्पस्याशेषार्थतायां प्रमाणमाह– **कम्प इति** ॥१०॥

**मन्त्रार्थमञ्जरी–** यः इन्द्रः । रायः, अशेषद्रविणस्य । अवनिः, अवनिरिवावनिः, भूमि-रिवाश्रयः । महान्, उत्तमः । सुपारः, सु सुखदः संसृतेः पारश्चेति सुपारः । सुन्वतः, यजमानस्य । सखा । तस्मै । इन्द्राय । गायत, सामगानं कुरुत । (हे उद्गातारः) इत्यर्थः । यद्वा– 'गै शब्दे' स्तुतिशब्दान्कुरुतेत्यर्थः ॥ 'कम्पोऽशेषग्रहे क्वापि' (ऋ.भा.) इत्यादेरत्र 'रायो ३ऽ' इति कम्पोऽशेषार्थः ॥ १० ॥

**स्कन्द– यः इन्द्र! रायः** धनस्य । 'अवनिः' (निघ १,१) पृथिवीनामैतत् । आश्रयत्व-सामान्यात्तु इन्द्रे प्रयुज्यते । यथा पृथिवी सर्वार्थानामाश्रय तद्वदाश्रय इत्यर्थः । अथवा अवतेः स्वाम्यर्थस्य वा अवाप्त्यर्थस्य वा कर्तरि अयमनिप्रत्ययः (तु.पाउ.२,१००) । धनस्येशिता अवाप्ता वेत्यर्थः । क्रीदृशः । **महान् सुपारः** पृ पालनपूरणयोः । सुष्ठु च पालयिता । सुन्वतः अभिषवं कुर्वतः सोमयाजिन इत्यर्थः । **सखा** सखिस्थानीयश्च सुन्वत एव । **तस्मा इन्द्राय** तादर्थ्य एषा चतुर्थी । तस्येन्द्रस्यार्थाय । तमिन्द्रं स्तोतुमित्यर्थः । गायत सामगा उद्गातारः! उच्चारणवचनमात्रो वा गायतिः । कै गै शब्दे । स्तुतिमुच्चारयतः यूयमृत्विजो मत्पुत्रपौत्रा वा ॥

**वेङ्कटमाधव–** यः स्तोतुर्धनस्य रक्षकः महान् शोभनपूरणः । सुन्वतः सखा तस्मै इन्द्राय गायत इति ॥ १० ॥

**मुद्गल– यः** इन्द्रः **रायः** धनस्य **अवनिः** रक्षकः **तस्मै इन्द्राय गायत** हे ऋत्विजः तत्प्रीत्यर्थं स्तुतिं कुरुत । कीदृश इन्द्रः । **महान्** गुणैरधिकः **सुपारः** सुष्ठु कर्मण पूरयिता सुन्वतः यजमानस्य **सखा** सखिवत् प्रियः ।। १० ।।

**सायण– यः** इन्द्रः **रायः** धनस्य **अवनिः** रक्षकः स्वामी वा **तस्मा इन्द्राय गायत** हे ऋत्विजस्तत्प्रीत्यर्थं स्तुतिं कुरुत । कीदृश इन्द्रः । **महान्** गुणैरधिकः **सुपारः** सुष्ठु कर्मणः पूरयिता **सुन्वतः** यजमानस्य **सखा** सखिवत् प्रियः ।

रायः। 'ऊडिदम्पदाद्यप्पुम्रैद्युभ्यः' (पा.सू.६,१,१७१) इति विभक्तेरुदात्तत्वम् । **अवनिः** । 'अव रक्षणगतिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभाववृद्धिषु च' इत्यस्मात् 'अर्तिसृधृधम्यम्यश्यवितृभ्योऽनिः' (उ.सू.२,२५९) इत्यनिः । प्रत्ययाद्युदात्तत्वम् । सुपारः । 'पॄ पालनपूरणयोः' इत्यस्मात् णिजन्तात् 'कर्तरि' इत्यनुवृत्तौ पचाद्यच् (पा.सू.३,१,१३४) । 'चितः' (पा.सू.६,१,१६३) इत्यन्तोदात्तः । सुन्वतः । 'शतुरनुमो नद्यजादी' (पा.सू.६,१,१७३) इति विभक्तिरुदात्ता । सखा । 'समाने ख्यश्चोदात्तः' (उ.सू.४,५७६) इति इण्प्रत्ययान्तः । तत्संनियोगेन यलोपः; सशब्दस्य चोदात्तः । डित्वात् टिलोपः । तस्मै । 'अदिः' इत्यनुवृत्तौ 'त्यजितनियजिभ्यो डित्' (उ.सू.१,१२९) इति तनोतेः अदिप्रत्ययः । डित्वात् टिलोपे प्रत्ययस्वरेण तच्छब्द उदात्तः । त्यदाद्यत्वम् । 'एकादेश उदात्तेनोदात्तः' (पा.सू.८,२,५) इत्युदात्तः । 'सावेकाचस्तृतीयादिर्विभक्तिः' (पा.सू.६,१,१६८) इति विभक्तेरुदात्तत्वे प्राप्ते प्रथमैकवचनेऽवर्णान्तत्वात् । 'न गोश्वन्साववर्ण' (पा.सू.६,१,१८२) इति निषेधः । इन्द्राय । इन्द्रशब्दो रन्प्रत्ययान्तो निपातितः । नित्त्वादाद्युदात्तः । 'कर्मणा यमभिप्रैति स सम्प्रदानम्' (पा.सू.१,४,३२) इत्यत्र 'क्रियाग्रहणं कर्तव्यम्' (पा.म.१,४,३२) इति वचनात् गानक्रियया प्राप्यत्वात् सम्प्रदानत्वेन चतुर्थी ।। १० ।।

**सिद्धाञ्जनम्–** दशमीमृचमाह– **यः** इन्द्रः **रायः** धनस्य (दिव्यस्यान्तरस्य) **अवनिः** आश्रयः आधार इत्यर्थः (पृथ्वीनाम, सर्वेषां भूतजातानां आश्रयो हि पृथिवी)। **महान्** बृहन् (अत एवाश्रयत्वं उपपद्यते) बलेनापि महान् , अत एव **सुपारः** सुष्टु पारयति (सुरक्षितं प्रापयति देवभक्तं पुरुषं प्राप्तव्यं स्थानम् ।) **सुन्वतः सखा** सोमयाजिनः सखा (च) भवति, **तस्मै**

**इन्द्राय** तस्येन्द्रस्यार्थाय (तादर्थ्ये चतुर्थी) **गायत** स्तुतिं कुरुत (मन्त्रैरिति शेषः)। अस्यामृचि स्पष्टमुक्तं 'सुन्वतः सखा' इन्द्र इति । 'मन्दयत्सखं' इन्द्र एवेत्युपपद्यतेऽस्मदुक्तिः ।

व्याख्यातं 'सुरूपकृत्नुं' इति सूक्तम् । अस्य कर्मसु विनियोगो याज्ञिकैराम्नातः। तेन विचारितेनास्माकमल्पं प्रयोजनम् । तस्मात् सूक्ततात्पर्यमन्तरर्थानुसार्येव सुतरामुपपद्यत इति सङ्क्षेपेण तन्निरीक्ष्यते । अन्तर्बहिर्वा सर्वथा सोमयागे विनियोगोऽस्येति तु बोध्यम् । इहान्तर्यागे चलति, कमपि दशाविशेषं प्राप्तस्य ऋषेर्मधुच्छन्दस ऐन्द्री स्तुतिः भवति । का सा दशा यत्र किमपीन्द्राल्लभ्यं ऋषेरवश्यं भवति ? किं वा तत् प्राप्तव्यम् , यदर्थमभ्यर्थना क्रियते सोमयाजिना महर्षिणा? पश्यामस्तावत् ।

सुतः संस्कृतः सोमो देवानामन्नं भवति । देवास्तं यथाभागं भुञ्जानास्तन्मदेन बलिनो मानुषे स्वयं वर्धन्ते, तेन तमपि वर्धयन्ति, सर्वोत्कृष्टानुभूतीनां तमधिकारिणं च विदधते । ये चास्वार्थपरा भूत्वा स्वीयमानन्दं सर्वानुभूतीनां सारं सोमपदलक्षितं रसं 'देवेभ्य इदं न मम' इति न प्रयच्छन्ति प्रत्युत विषयभोगरताः स्वार्थपरा नीचैर्जीविनश्च भवन्ति । न खलु ते देवानामाराधकाः किं तु पणिनामकानामसुराणामुपासकाः भवन्ति । पणयो हि स्वामिन इन्द्रियार्थ-चैतन्यस्य, यस्य सर्वशः परिच्छिन्नवृत्तेर्व्यापारेषु वणिज इव ते व्यवहरन्ति । न हि ते सुन्वते सोमं, नार्पयन्ति संस्कृतं सोमाभिषवं, नापि मन्त्रानुच्चारयन्ति । एतैरेव पणिभिरपहृत्य समुज्ज्वलचैतन्यरश्मयः (रोचमानाः सूर्यस्य गावः) गुहायां गूहिता भवन्ति । सा च गुहा, गूढ-मस्मासु वर्तमानं जागरितप्रज्ञाया प्रागवस्थितं अप्रबुद्धचैतन्यं वासनानामधिकरणं बोध्यम् । न केवलमेवं लक्षितायां गुहायां गाः प्रच्छादयन्ति पणयः, अद्रिशब्दलक्षिते घनीभूते अन्धतमसेऽन्नमये जडे वस्तुन्यपि । अपि च ते स्वीयमध्वानमनुगम्य चोरिता गाश्च गवेषयन्तीं उज्ज्वलसहजावबोध-रूपिणीं सरमाख्यां देवशुनीमपि वशयन्ति, भ्रंशयितुं प्रयतन्ते ।

त इमे पणयोऽधुना सोमसवनिर्वर्तनादतिक्रान्ताः । ऋषेर्यज्ञाभ्युदये प्रवर्तमाने ते वृत्राश्च (वृत्रस्तद्विभूतयश्च) समतीताः, यैरस्माकं पूर्णाः शक्तयः क्रियावैभवानि च आवृत्य प्रतिबध्यन्ते। तथा वलश्च पृष्ठतः कृतः येन ज्योतिर्वलयितं अस्मत्तोऽवरुध्यते । एवं प्रमुखेष्वसुरेषु यज्ञवैरिषु अतिक्रान्तेष्वपि, मार्गे पुनरन्येऽवतिष्ठन्ते ये परिच्छेदनियामकाः बन्धका (निदः) निन्दका वा भवन्ति । यद्यप्येते न पणिवृत्रवलादय इव ज्ञानक्रियाशक्तिप्रसारप्रतिकूला भवन्ति, तथाऽपि

अभिवृद्धावृषेरुत्तरोत्तरपदक्रमणे तं निरुन्धन्ति । तस्य ज्ञानशक्तिक्रियालोपन्यूनातिरिक्ततादीन् दोषान् प्रकाश्य 'इतो न गन्तव्यम् , गन्तुमधिकारसम्पादनात् प्राङ्नानुजानीमोऽनन्तरगमनम्' इति प्रत्यवतिष्ठन्ते ।

तदस्मिन् सूक्ते सेयं दशा प्रस्तुता । यस्यामृषिर्दिव्यप्रकाशाभिवर्धनायेन्द्रमाह्वयति । येन निरोधक तद्धेतुभूतन्यूनतादिदोषाणां निवारणं भवेत् । इन्द्रो हि प्रभुस्त्रैलोक्याधिकारिकाणां देवानाम् । विश्वमनस्तत्त्वाभिमानी, दिव्यो मनोमयः सम्राट् । तत्प्रसादात् तद्वैभवस्य उज्ज्वलप्रज्ञात्मकस्य मनसो विलासनमस्मासु सम्पादयितव्यम् । येनेन्द्रियार्थेषणादिभिर्विकृतिं प्रापितस्य अनृतप्रज्ञाविमोहितस्य मनस सङ्कोचाद्विस्तृतिः बन्धनाद्विमोचनं प्रकाशलेशात् प्रकाशभूमा च निष्पद्येरन् ।

ऐन्द्री शुभोज्वलप्रज्ञा हि सुरूपाः साध्वीर्धीवृत्तीः साधुरूपाणि कर्माणि वा साधयितुं प्रभवेत्, येनानुदिनवर्धनं स्यादिति 'सुरूपकृत्नुमूतये' महर्षिराह्वयति प्रथमस्यामृचि। दिव्यप्रकाशा प्रज्ञा अभिषुतेन सोमेन भुक्तेन पोषिता हर्षभरिता स्वीयान् रश्मीनभिवर्षतीत्युक्तं (गोदा इद्रेवतो मदः) द्वितीयस्याम् । तथा चित्तेजोविशेषलाभे दैव्याः प्रज्ञाया आत्यन्तिकीर्वृत्तीर्वेदितुं यद्यपि प्रभवामः, तथाऽपि प्रभातिशयोदयादुर्निरीक्ष्योऽतिगोचरो वा मा भूद्भगवानिन्द्र इति तृतीयस्याम् । अथान्तरात्मानं अन्यं वा सखायमुपासकं प्राह-'इन्द्र एवं प्रष्टव्यः, स वेगेन बलवानपि प्रतिकूलाननुकूलांश्च पश्यति प्राज्ञचक्षुः, ददाति च श्रेष्ठं पदं, दत्तवांश्च नः सखिभ्यः' इति चतुर्थ्याम् । अस्माकं अनन्तरप्रतिपत्तिं निरोद्धार एव अनुजानन्तु, भणन्तु च– 'यूयमधिकारिणोऽधुना, अन्यतोऽपि गत्वा इन्द्रकर्माणः सन्तः परिश्रमं कुरुत' इति पञ्चम्याम् । अस्मदनुकूलाः कार्यसहकारिणो देवकार्यनिरताश्च 'ऋषे, साधु साधितं कर्म त्वया, अस्य फलं ऐन्द्रं महत् सुखम् , तत्रैव स्यामेति ब्रुवन्तु' इति षष्ठ्याम् । शिष्टाश्च ऋचो यावत्सूक्तसमाप्तिं इन्द्रमहिमानुवर्णनपरा इन्द्रप्रार्थनात्मिकाच प्रागविवृतरीत्या मन्त्रार्थपरिज्ञानाद् विस्पष्टं बोध्या ।। १० ।।

।। इति प्रथमाष्टके प्रथमाध्याये अष्टमो वर्गः ।।

## ।। अथ नवमो वर्गः ।।

### (सूक्तम् ५)

### ऋक्संहिता पदपाठसहिता

१० मधुच्छन्दा वैश्वामित्रः । इन्द्रः । गायत्री ।

**आ त्वेता निषीदतेन्द्रमभि प्रगायत । सखायः स्तोमवाहसः ।। १ ।।**
**आ । तु । आ । इत । नि । सीदत । इन्द्रम् । अभि । प्र । गायत । सखायः । स्तोमऽवाहसः ।। १ ।।**

**ऋग्भाष्यटीका– आत्वेता** । दशर्चमैन्द्रं सूक्तम् । **हे सखायः स्तोमवाहसः** स्तोमाः सामविशेषाः । तान्वहन्तीति स्तोमवाहसः । छान्दसो ह्रस्वः । उद्गातार इति यावत् । **एत** आगच्छत । **आनिषीदत** आगत्योपविशत । इन्द्रमभिप्रगायतच । आगमननिषदनयोरित्थंभावस्य सूचकस्तुशब्दः । स्पष्टत्वादृचो न व्याख्यानं कृतम् । एवमन्यत्रापि ।। १ ।।

**मन्त्रार्थमञ्जरी–** अथ पञ्चममपि दशर्चं वर्गद्वयात्मकमैन्द्रं सूक्तम् ।। (हे) सखायः, सखिभूताः । स्तोमवाहसः, स्तोमान्सामविशेषान्वहन्तीति स्तोमवाहाः, 'कर्मण्यण्' इत्यण्प्रत्ययः, 'अत उपधायाः' इति वृद्धिः, स्तोमवाहा एव स्तोमवाहसः, आज्जसेरसुकि 'स्तोमवाहासः' इति वाच्ये छान्दसो ह्रस्वः, उद्गातार इति यावत् । आ इत, आगच्छत, आङ्पूर्वादिणः मध्यमपुरुष-बहुवचनम्, संहितायां दैर्ध्यमाधिक्ये । आ नि षी (सी)दत आगत्योपविशत, 'व्यवहिताश्च' इत्याङोऽन्वयः ।। इन्द्रम् अभि प्र गायत (तु) (च), आगमननिषदनयोर्गानरूपक्रियाया-मित्थम्भावसूचकस्तुशब्दः ।। स्पष्टत्वादियमृक् भाष्यकृता न व्याख्याता, टीकायां तु व्याख्याता ।।

**स्कन्द–** तुशब्दः पदपूरणः क्षिप्रपर्यायो वा । आ आ इत्युपसर्गस्याभ्यासात् तत्सम्बन्धिन इत इत्याख्यातस्याप्यभ्यासः, क्षिप्रमेत । आख्याताभ्यासे च लोके गम्यतामित्यादौ अवश्यं कर्तव्यता प्रतीयते । क्षिप्रमवश्यमागच्छतेत्यर्थः । आगत्य च **निषीदत** उपविशत यथास्थानम् । निषद्य च **इन्द्रं अभि प्रगायत** गायतिरर्चतिकर्मा (तु निघं ३,१४) । प्रकर्षेणाभिष्टुत । **हे सखायः !** ऋत्विजः! **स्तोमवाहसः** स्तोमानामिन्द्रं प्रति प्रापयितारः, स्तोतार इत्यर्थः ।।

**वेङ्कटमाधव–** पूर्वेण सूक्तेनाहूतमिन्द्रं स्तोतुमुपक्रमते । आगच्छत क्षिप्रमुद्गातारः!। उपसर्गाः प्रयुक्ता अपि प्रागाख्यातात् पुनः प्रयुज्यन्ते । वक्ष्यते तत्र कारणम् । आगत्य च निषीदत गानार्थम् । अथ इन्द्रम् अभिप्रगायत सखायः । प्रस्तावात् प्रतिहारादुपगानाच्च स्तोमस्य नेतारः ।।

**मुद्गल– हे सखायः !** ऋत्विजः **! तु** क्षिप्रमस्मिन् कर्मणि **आ इत** आगच्छत । आगत्य च **निषीदत** उपविशत । उपविश्य च **इन्द्रं अभि प्रगायत** सर्वतः प्रकर्षेण स्तुत । कीदृशाः सखाय । **स्तोमवाहसः** त्रिवृत्पञ्चदशादिस्तोमानस्मिन् कर्मणि वहन्ति प्रापयन्तीति ।। १ ।।

**सायण–** 'आ तु' इति द्वितीयं सूक्तं दशर्चम् । 'सुरूपकृत्नुं दश' इत्यनुवृत्तौ 'आ तु युञ्जन्ति' इत्येवमनुक्रान्तत्वात् । ऋषिच्छन्दोदेवताविनियोगाः पूर्ववत् । विशेषविनियोगस्तु– अतिरात्रे तृतीयपर्याये मैत्रावरुणशस्त्रे स्तोत्रियोऽयं तृचः । 'अतिरात्रे पर्यायाणाम्' इति खण्डे 'आ त्वेता निषीदत' (आश्व.श्रौ.६,४) इत्युक्तत्वात् ।

तुशब्दः क्षिप्रार्थो निपातः । द्वाभ्यामाङ्भ्यामन्वेतुमितशब्दोऽभ्यसनीयः । **हे सखायः** ऋत्विजः क्षिप्रमस्मिन् कर्मणि आगच्छतागच्छत । आदरार्थोऽभ्यासः । आगत्य च **नि षीदत** उपविशत । उपविश्य च **इन्द्रमभि प्र गायत** सर्वतः प्रकर्षेण स्तुत । कीदृशाः सखायः । **स्तोमवाहसः** त्रिवृत्पञ्चदशादिस्तोमानस्मिन् कर्मणि वहन्ति प्रापयन्तीति ।

आ तु आ । निपातत्त्वादाद्युदात्ताः । इत । 'इण् गतौ' । 'द्व्यचोऽतस्तिङः' (पा.सू. ६,३,१३५) इति संहितायां दीर्घत्वम् । नि । निपातत्वादाद्युदात्तः । सीदत । 'पाघ्राध्मास्थाम्नादाण्दृशि' (पा.सू.७,३,७८) इत्यादिना सदेः सीदादेशः । 'सदिरप्रतेः' (पा.सू.८,३,६६) इति संहितायां षत्वम् । अभि । 'उपसर्गाश्चाभिवर्जम्' (फि.सू.८१) इति वचनात् प्रातिपदिकान्तोदात्तत्वम् । स्तोमवाहसः । 'अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन्' (उ.सू.१,१३७) इति स्तौतेर्मन्प्रत्ययान्तः स्तोमशब्दो नित्त्वादाद्युदात्तः । स्तोमं वहन्तीति स्तोमवाहसः । 'वहिहाधाञ्भ्यश्छन्दसि' (उ.सू.४,६६०) इत्यसुन् प्रत्ययः । तत्र 'णित्' इत्यनुवृत्तेः 'अत उपधायाः' (पा.सू.७,२,११६) इत्युपधाया वृद्धिः । कृदुत्तरपदप्रकृतिस्वरत्वे प्राप्ते 'गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं च' (उ.सू.४,६६६) इत्यौणादिकसूत्रात् समास आद्युदात्तः ।। १ ।।

**सिद्धाञ्जनम्–** द्वितीयानुवाके आ त्विति दशर्चं द्वितीयं सूक्तम् । ऋषिच्छन्दोदेवताः पूर्ववत् ।

**आ आ इत** आगच्छत (उपसर्गाभ्यासात् तद्युक्तस्याख्यातस्याभ्यासः, अवश्यमागन्तव्य-मित्यर्थकः) **तु** (पादपूरणः, क्षिप्रार्थको निपातो वा) **निषीदत** उपविशत **इन्द्रं अभिप्रगायत** इन्द्रमभिमुखीभूय प्रकर्षेण गायत। हे **सखायः** सुहृदः (समानकर्मणि प्रवृत्ताः) कीदृशास्ते? **स्तोमवाहसः** स्तोमान् प्रापयितारः इन्द्रं प्रति ।

अत्र ऋत्विज आमन्त्रिता इन्द्रस्तवनायेति कर्मपरं व्याख्यानमुपपद्यते । द्विधाऽपि तात्पर्यं प्रायशः सम्भवति मन्त्राणामित्युक्तमेवास्माभिः । परंतु अन्तरर्थस्य प्राधान्यं सर्वत्र, बाह्यार्थस्य विसंवादो नैकत्रेति च स्मरणीयम् । अत्र 'स्तोमवाहसः' इति सखीनां आमन्त्रितानां विशेषणं साकूतं बोध्यम् । अन्तर्यागे, 'सखाय इमे युजः जामयः' अतिमानुषभूचराः देवकार्यधुरंधराः अस्माकं स्तोमान् इन्द्रं प्रति प्रापयितुं प्रभवन्ति । न तु केवलं स्तोतार इमे, अपि तु स्तोत्रवाचोऽस्मन्निर्गता हार्दवाणीर्वा नयन्ति स्तुतिविषयीभूतमिन्द्रम् । 'अरिः कृष्टयः' प्रागुक्ता अप्येवंभूताः सुहृदो ज्ञेयाः ।। १ ।।

## ऋक्संहिता पदपाठसहिता

**पुरूतमं पुरूणामीशानं वार्याणाम् । इन्द्रं सोमे सचा सुते ।। २ ।।**
पुरुऽतमम् । पुरूणाम् । ईशानम् । वार्याणाम् । इन्द्रम् । सोमे । सचा । सुते ।। २ ।।

## ऋग्भाष्यम्

**सुपूर्णानां पूर्णतमं वरेण्यानामधीश्वरम् ।**
**सुते सोमे सुखेनैव सचागायत तं प्रभुम् ।। २ ।।**

**ऋग्भाष्यटीका– पुरूतमम्** । सुपूर्णानाम् । **पुरूणां** सुपूर्णानां मध्ये **पुरूतमं** पूर्णतमम् । **वार्याणां** वरेण्यानां उपादेयानां वस्तूनाम् । **ईशानं** अधीश्वरमिन्द्रं तं प्रभुं सोमे सुते सति । **सचा** सुखेनैव मनःप्रसादपूर्वकं गायतेत्यनुवृत्त्या सम्बन्धः । अत्र पुरूतममिति तमपृछान्दसः । व्यत्ययेनोदात्तत्वम् । यद्वा तमु अभिकाङ्क्षायामित्यस्य कर्मणि रूपमेतत् । पुरुभिः पूर्णैस्तम्यत इति पुरुतमस्तम् । पूरूणां वार्याणामिति सामानाधिकरण्यम् ।। २ ।।

**मन्त्रार्थमञ्जरी**– पुरूणाम्, सुपूर्णानां मध्ये । पुरुतमम्, पूर्णतमम्, 'पुरूणाम्' इत्युक्त्यैवातिशयार्थलाभात्तमप् छान्दसः, यद्वा– 'तमु (अभि) काङ्क्षायाम्' इति धातोः कर्मण्यकारप्रत्यये 'तमम्' इति रूपम्, पुरुभिस्तम्यते काङ्क्ष्यत इति पुरुतमस्तम्, 'पुरूणाम्' इत्येतत् 'वार्याणाम्' इत्यस्य विशेषणम् । वार्याणाम्, वरणीयानामुपादेयानां वस्तूनाम् । ईशानम्, अधीश्वरम् । इन्द्रम् । सोमे । सुते, अभिषुते सति । सचा, सुखेनैव, मनः प्रसादपूर्वकम् । (गायत) इत्यनुवृत्त्या योज्यम् ।। २ ।।

**स्कन्द**– कीदृशमिन्द्रम् । उच्यते । **पुरूतमं** पुरुशब्दो बहुनाम (तु.निघ. ३.१) । तमशब्दोऽपि नातिशयप्रत्ययः । अर्थासम्भवादुदात्तत्वाच्च । किन्तर्हि, तमु अभिकाङ्क्षायाम् इत्यस्य रूपम् । बहुभिर्योऽभिकाङ्क्ष्यते प्रार्थ्यते याच्यते, स पुरूतमः, तं पुरूतमम् । **पुरूणां** बहूनां **ईशानं** स्वामिनम् । **वार्याणां** वरणीयानां उत्कृष्टानां धनानाम् । **इन्द्रं** क्रियाशब्देनेदमिन्द्रस्य गुणाभिधानं, न नाम्ना प्रतिनिर्देशः । कुत एतत् । अस्यामृचि आख्याताभावात् पूर्वयर्चैकवाक्यभावाद्वा । तस्यां चेन्द्रशब्दस्य नाम्नो विद्यमानत्वात् । इदि परमैश्वर्ये । अत्यन्तेश्वरमित्यर्थः । कदा पुनः स्तवाम । उच्यते । **सोमे सचा सुते** सचा सहेत्यर्थः । सर्वैर्ऋत्विग्भिः सहाभिषुते । कालोपलक्षणं चेदम् । अभिषवोत्तरकालमित्यर्थः ।। २ ।।

**वेङ्कटमाधव**– बहूनां उपक्षपयितारम् । 'गवामसि गोपतिः' (ऋ.७,९८,६) इत्यनेन समानो निर्देशः । धनानां ईश्वरं इन्द्रं सहाभिप्रगायत अभिषुते सोमे ।। २ ।।

**मुद्गल**– **हे सखायः!** ऋत्विजः! **सचा** यूयं सर्वैः सह **सुते** अभिषुते **सोमे** प्रवृत्ते सति **इन्द्रं** अभिप्रागायत । कीदृशमिन्द्रम् । **पुरूतमं** पुरून् बहून् शत्रून् तमयति ग्लापयतीति पुरूतमः तम् । **पुरूणां** बहूनां **वार्याणां** वरणीयानां धनानां **ईशानं** स्वामिनम् ।। २ ।।

**सायण**– 'सखायोऽभिप्रगायत' इति पदद्वयमत्रानुवर्तते । **हे सखायः** ऋत्विजः **सचा** यूयं सर्वैः सह । यद्वा । **सचा** परस्परसमवायेन **सुते** अभिषुते **सोमे** प्रवृत्ते सति **इन्द्रं** अभिप्रगायत । कीदृशमिन्द्रम् । **पुरूतमं** पुरून् बहून् शत्रून् तमयति ग्लापयतीति पुरूतमः । **पुरूणां** बहूनां **वार्याणां** वरणीयानां धनानां **ईशानं** स्वामिनम् ।।

पुरूतमम् । 'तमु ग्लाने' इति धातोरन्तर्भावितण्यर्थात् पचाद्यचि चित्त्वादन्तोदात्तेऽपि कृदुत्तरपदप्रकृतिस्वरत्वं बाधित्वा 'परादिश्छन्दसि बहुलम्' (पा.सू.६,२,१९९) इत्युत्तरपदाद्युदात्तत्वम् । पुरूणाम् । 'पृ पालनपूरणयोः' इत्यस्मात् 'कुः' इत्यनुवृत्तौ 'पृभिदिव्यधिगृधिधृषिभ्यः' (उ.सू.१,२३) इति कुप्रत्ययः । कित्त्वाद्गुणनिषेधे (पा.सू.१,१,५) 'उदोष्ठयपूर्वस्य' (पा.सू. १,२३) इति कुप्रत्ययः । कित्त्वाद्गुणनिषेधे (पा.सू.१,१,५) 'उदोष्ठ्यपूर्वस्य' (पा.सू.७,१, १०२) इत्युकारः उरण् रपरः' (पां.सू.१,१,५१) । प्रत्ययस्वरेणान्तोदात्तः पुरुशब्दः । अतो मतुपि ह्रस्वादन्तोदात्तात् पुरुशब्दात् परस्य नामो 'नामन्यतरस्याम्' (पा.सू.६,१,१७७) इत्यन्तोदात्तत्वम् । ईशानम् । 'ईश ऐश्वर्ये' इति धातोरनुदात्तेत्त्वात् परस्य शानचो लसार्वधातुकानुदात्तत्वम् । वार्याणाम् । 'वृङ् सम्भक्तौ' इत्यस्मात् 'ऋहलोर्ण्यत्' (पा.सू.३,१,१२४) । क्यब्विधौ हि वृञः एव ग्रहणं न वृङः (पा.सू.३,१,१०९,१) । 'तित्स्वरितम्' (पा.सू. ६,१,१८५) इति प्रत्ययस्वरितं बाधित्वा 'ईडवन्दवृशंसदुहां ण्यतः' (पा.सू.६,१,२१५) इति ण्यदन्तस्याद्युदात्तत्वम् । 'यतोऽनावः' (पा.सू.६,१,२१३) इत्यत्र ण्यतो ग्रहणं न भवति तस्य द्व्यनुबन्धकत्वात् । एकानुबन्धग्रहणे न द्व्यनुबन्धकस्येति नियमात् । सचा । 'षच समवाये' । 'धात्वादेः षः सः' (पा.सू.६,१,६४) । सम्पदादित्वाद्भावे क्विप् (पा.सू.३,३,१०८,९) इति क्विप् । तृतीयैकवचनम् । धातुस्वरेणाद्युदात्तः । 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' (परिभा.३५) इति न्यायेन 'सावेकाचः' इति सूत्रं न प्रवर्तते । सचा इत्यस्य निपातत्वपक्षे स्पष्टमाद्युदातत्वम् ।

**सिद्धाञ्जनम्**– द्वितीयामृचमाह– ऋचोऽस्याः पूर्वयर्चा एकवाक्यत्वात् 'प्रगायत' इति अन्वयः । **सचा** सह (सखिभिः यजमानेन सह ऋत्विग्भिर्वा सम्भूय) **सोमे सुते** अभिषुते **इन्द्रं** अभिप्रगायतेति सम्बन्धः । कीदृशमिन्द्रम् ? **पुरूतमं** अतिशयेन बहुलः (बहुधा भवन् प्रभूत इत्यर्थः) तम् । पुनः कीदृशम् ? **पुरूणां वार्याणां ईशानां** बहूनां वरणीयानां (वराणाम्) स्वामिनम् ।

पुरुतमम्– अत्र व्याख्यातारो विविधं व्याचक्षते । 'पुरुन् बहून् (शत्रून्) तमयति ग्लापयति' इति सायणः । शत्रुनाशन इति विशेषणमिहेन्द्रस्यायुक्तम् । वरदानशौण्ड इति स्तुतिप्रसक्तेः। 'अतिशयेन प्रभूतम्' इति पदमिदं व्याख्यातमन्यत्र सायणेन, इहापि तद्युक्तम् । 'यः पावकः पुरुतमः पुरूणि पृथून्यग्निरनुयाति भर्वन्' (६-६-२) ॥ २ ॥

### ऋक्संहिता पदपाठसहिता

**सघा नो योग आभुवत्सराये सपुरंध्याम् । गमद्वाजेभिरास नः ।। ३ ।।**

सः । घ । नः । योगे । आ । भुवत् । सः । राये । सः । पुरम्ऽध्याम् ।। गमत् । वाजेभिः । आ । सः । नः ।। ३ ।।

### ऋग्भाष्यम्

**मुक्तौ योगायासमन्ताद्भवेन्नो घोऽवधारणे ।**
**स एव भगवान्ज्ञानवित्ताय सच बुद्धिगः ।**
**बुद्धिः पुराश्रयत्वेन पुरंधिः पत्न्यथापि वा ।**
**पत्न्यर्थत्वे तु तादर्थ्ये सोऽन्नैः सह न आव्रजेत् ।। ३ ।।**

**ऋग्भाष्यटीका–** **सघ** । मुक्तौ । अत्र घशब्दोऽवधारणे वर्तते । ततश्च **सघ** स एव भगवान्नोऽस्माकमासमन्तात् **योगे** मुक्तौ सायुज्यलक्षणाय योगाय **भुवत्** अभवत् विकरणव्यत्ययात् । भवेत् कालव्यत्ययात् । स एव **राये** अध्यात्मं ज्ञानवित्ताय भुवत् बहिर्व्यक्तम् । स एव च **पुरंध्यां** बुद्धौ सर्वेषां बुद्धिगो वर्तते । कथं बुद्धिः पुरन्धिरित्यत आह– **बुद्धिरिति** ।। पुरं शरीरं धीयतेऽस्यामिति पुरन्धिः । कर्मण्यधिकरणे चेति किः उपपदस्य नुमागमश्छान्दसः । बाह्ये व्याचष्टे– **पत्नीति** ।। अथवा पत्न्यपि पुरन्धिरित्यन्वयः । तन्नामसु पाठात् । तत्र कथं सप्तम्यन्वय इत्यत आह– **पत्न्यर्थत्व इति** ।। पुरन्धिशब्दस्य पत्न्यर्थत्वे तु योग इतिवत्सप्तम्यास्तादर्थ्यमर्थः । पुरन्ध्यां पत्न्यर्थं भुवदिति । किञ्च **सः** इन्द्रो **वाजेभिः** वाजैरन्नैः सह । अन्नानि दातुमिति यावत् । नः अस्मान्प्रति **आगमत्** आव्रजेत् ।। ३ ।।

**मन्त्रार्थमञ्जरी–** घोऽवधारणे ।। सः घ, स एव परमेश्वरः, दीर्घः प्राग्वत् नः, अस्माकम् । आ, समन्तात् । योगे, योगाय, सायुज्यलक्षणमुक्तये । भुवत्, अभवत्, व्यत्ययेन शविकरणम्, अडभावश्छान्दसत्वात्, विकरणस्य 'सार्वधातुकमपित्' इति ङित्त्वेन 'क्ङिति च' इति गुणाभावे 'अचिश्नुधातु' इत्युवङादेशे 'भुवत्' इति रूपम् । सः (एव) । राये, ज्ञानद्रविणरूपधनाय । (भुवत्) सः (एव) पुरंध्याम्, पुरं शरीरं धीयतेऽस्यामिति पुरंधिर्बुद्धिः, 'कर्मण्यधिकरणे च' इति घोः किः, 'अतो लोप इटि च' इत्याकारलोपः, पूर्वस्य मुमागमश्छान्दसः, सर्वबुद्धौ वर्तत इत्यध्यात्ममर्थः, बाह्ये तु– पुरंधिः पत्नी, तन्नामसु पाठात् 'योगे' इत्यत्रेव सप्तमी तादर्थ्ये,

स एव च पत्यर्थम् । (भुवत्) अभवदित्यर्थः । किं च, सः, इन्द्रः । वाजेभिः वाजैरन्नैः सह, अन्नानि दातुमिति यावत् । नः, अस्मान्प्रति । आगमत्, आगच्छेत्, लिङर्थे लुङ्, 'च्लि लुङि' इति च्लिप्रत्ययः 'पुषादिद्युताद्यॢदितः परस्मैपदेषु' इति च्लेरङ्, अडभावश्छान्दसः, 'इतश्च' इतीकारलोपस्तिपः, 'व्यवहिताश्च' इत्याङोऽन्वयः ।। ३ ।।

**स्कन्द–** घ इति पदपूरणः । **सः** प्रकृत इन्द्रः **नः** अस्माकं **योगे** योग उद्योगः, उत्साहः, अलब्धलाभो वा तस्मिन् । **आ भुवत्** आभिमुख्येन भवतु । योगमस्माकं करोत्वित्यर्थः । सः एव **राये** धने । सः एव **पुरन्ध्यां** बह्व्यां प्रज्ञायाम् । **गमद् वाजेभिः** आगमदागच्छतु । वाजेभिः सहयोगलक्षणैषा तृतीया । अस्मभ्यं यानि दातव्यानि तैरन्नैः सह, तानि गृहीत्वेत्यर्थः । अथवा हेतावियं तृतीया । प्रयोजनस्य च हेतुत्वेन विवक्षा । हविर्लक्षणैरन्नैर्हेतुभूतैः । हविरूपभोगार्थमित्यर्थः । कः, स एवेन्द्रः । कस्य वाजेभिः, न अस्मत्सम्बन्धिभिः ।। ३ ।।

**वेङ्कटमाधव–** सः एव अस्माकं अप्राप्तप्राप्त्यर्थमाभवतु । सः धनाय । सः पुरन्धिर्बहुधीर्योषा तस्यै च । अन्नैश्च अस्मान् आगच्छतु सः ।। ३ ।।

**मुद्गल–** घ अवधारणे । **सः** एवेन्द्रः पूर्वोक्तगुणविशिष्टः **नः** अस्माकं **योगे** पूर्वमप्राप्तस्य पुरुषार्थस्य सम्बन्धे **आ भुवत्** आभवतु । पुरुषार्थं साधयत्वित्यर्थः । **स** एव **राये** धनार्थमाभुवत् । **स** एव **पुरन्ध्यां** योषिति आभुवत् । **सः** एव **वाजेभिः** देयैरन्नैः सह **नः** अस्मान् **आ गमत्** आगच्छतु ।। ३ ।।

**सायण–** घशब्दोऽवधारणार्थो निपातः । सर्वैस्तच्छब्दैः सम्बध्यते । **स घ** स एवेन्द्रः पूर्वमन्त्रोक्तगुणविशिष्टः **नः** अस्माकं **योगे** पूर्वमप्राप्तस्य पुरुषार्थस्य सम्बन्धे **आ भुवत्** आभवतु । पुरुषार्थं साधयत्वित्यर्थः । **सः** एव **राये** धानर्थं आ भुवत् आभवतु । **सः** एव **पुरन्ध्यां** योषिति आ भुवत् । यद्वा । बहुविधायां बुद्धौ आ भुवत् । 'पुरंधिर्बहुधीः' (निरु.६,१३) इति यास्कः । **सः** एव **वाजेभिः** देयैरन्नैः सह **नः** अस्मान् आ गमत् आगच्छतु ।

घ । 'चादयोऽनुदात्ताः' (फि.सू.८४) इत्यनुदात्तः । संहितायां 'ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम्' (पा.सू.६,३,१३३) इति दीर्घः । योगे । घञो ञित्त्वादाद्युदात्तत्वम् । भुवत् भूयात् । भवतेः आशीर्लिङि परतः 'लिङ्याशिष्यङ्' (पा.सू.३,१,८६) इति अङ्प्रत्ययः । तस्य ङित्त्वेन

गुणाभावादुवङादेशः । 'क्लिदाशिषि' (पा.सू.३,४,१०४) इति यासुट् न भवति 'अनित्यमागमशासनम्' (परिभा.९३,२) इति वचनात् । 'तिङ्ङतिङः' इति निघातः । 'ऊडिदम्पदाद्यप्पुम्रैद्युभ्यः' (पा.सू.६,१,१७१) इति राये इत्येतस्य विभक्तेरुदात्तत्वम् । पुरंध्याम् । पुरन्धिः पुरुधीः । पृषोदरादित्वात् (पा.सू.६,३,१०९) उकारस्य अमादेशः ईकारस्य ह्रस्वश्च । 'आद्युदात्तप्रकरणे दिवोदासादीनां छन्दस्युपसङ्ख्यानम्' (पा.सू.६,२,९१,१) इत्याद्युदात्तत्वम् । अथवा पुरं शरीरं धीयतेऽस्यामिति 'कर्मण्यधिकरणे च' (पा.सू.३,३,९३) इति किप्रत्ययः । अलुक् छान्दसः । 'नब्विषयस्यानिसन्तस्य' (फि.सू.२६) इति पुरशब्द आद्युदात्तः । दासीभारादित्वात् (पा.सू.६,२,४२) पूर्वपदप्रकृतिस्वरत्वम् । गमत् । गमेर्लेटः तिप् । 'इतश्च लोपः परस्मैपदेषु' (पा.सू.३,४,९७) इति इकारलोपः । 'बहुलं छन्दसि' (पा.सू.२,४,७३) इति शपो लुक् । 'लेटोऽडाटौ' (पा.सू.३,४,९४) इत्यडागमः । 'आगमा अनुदात्ताः' (पा.म.३,१,३,७) इति तस्यानुदात्तत्वे धातुस्वर एव शिष्यते । वाजेभिः । वृषादित्वादाद्युदात्तः ।।३।।

**सिद्धाञ्जनम्**– तृतीयामृचमाह– **घ** पादपूरणः । अवधारणार्थो निपातोऽयमित्येके । तर्हि चतुर्थीप्रयुक्तेन तच्छब्देनास्य सम्बन्धः। **सः** इन्द्रः प्रागुक्तगुणविशिष्टः **नः** अस्माकं **योगे** अप्राप्तस्य लाभे विषये **आ भुवत्** अभिमुखं यथा तथा भवतु । सन्निहितो भूत्वा अलब्धं पुरुषार्थं लम्भयत्वित्यर्थः । **सः राये** धनाय दिव्यसम्पदर्थं 'स आ भुवत्' इति सम्बन्धः । **सः पुरन्ध्यां** बह्वचां प्रज्ञायां । बहुविधायां बुद्धौ, आ भुवत् । **सः वाजेभिः** समृद्धिभिः सर्वविधाभिः **नः** अस्मान् **आ गमत्** आगच्छतु । वाजेभिरित्यत्र सहयोगलक्षणा तृतीया ।

बहुविधपूर्णताविशिष्टः इन्द्रः सान्निध्येन अलब्धलाभ-लब्धसम्पद्रक्षणबहुलप्रज्ञाः साधयत्विति प्रार्थना ।। ३ ।।

### ऋक्संहिता पदपाठसहिता

**यस्य॑ सं॒स्थे न वृ॒ण्वते॒ हरी॑ स॒मत्सु॒ शत्र॑वः । तस्मा॒ इन्द्रा॑य गायत ।। ४ ।।**

यस्य॑ । स॒म्ऽस्थे । न । वृ॒ण्वते॑ । हरी॒ इति॑ । स॒मत्ऽसु॑ । शत्र॑वः । तस्मै॑ । इन्द्रा॑य । गा॒य॒त ।।

### ऋग्भाष्यम्

**यस्य स्थितौ न वृणते हर्यग्रमपि शत्रवः ।**

**मनः पुरोवा विषयहरणान्मन एव च ।**
**बुद्धिश्च हरिशब्दोक्ते तमआदीनि शत्रवः ।। ४ ।।**

**ऋग्भाष्यटीका– यस्य संस्थे** । यस्य स्थितौ । **यस्य** इन्द्रस्य **संस्थे** घञर्थे कविधानम् । स्थितौ सत्याम् । यस्मिन्निन्द्रे रथस्थिते सतीति यावत् । **समत्सु** युद्धेषु । शत्रवो **हरी** अश्वौ हर्यग्रमपि न वृण्वते न वृणते । अश्वाग्रमपि न प्राप्नुवन्ति । तस्मा इन्द्राय गायत । अध्यात्मं हरी इत्येतस्यार्थमाह– **मनः पुरोवेति ।।** अत्र मनश्शब्देन बुद्धेरप्युपलक्षणम् । हरिशब्दो मनोबुद्ध्योः कथं वर्तत इत्यत आह– **विषयेति ।।** एवशब्दो निर्वचनस्फुटतायाम् । शत्रूनाह– **तमआदीनीति ।।** ततश्चैवं योजना । **यस्य** इन्द्रस्य **संस्थे** यस्मिन्परमेश्वरे विशेषतो भक्तशरीरे सन्निहिते सति । **समत्सु** ज्ञानयुद्धेषु शत्रवः तमःप्रभृतयो **हरी** मनोबुद्ध्योः पुरो न वृण्वते । मनोबुद्धी नाज्ञानाद्यावृते भवत इति ।। ४ ।।

**मन्त्रार्थमञ्जरी–** यस्य, इन्द्रस्य । संस्थे, सम्पूर्वस्य तिष्ठतेः 'घञर्थे कविधानम्' इति भावे कप्रत्ययः, आल्लोपः, स्थितौ सत्यामित्यर्थः । यस्मिन्निन्द्रे रथे स्थिते सतीति यावत् । समत्सु, युद्धेषु । शत्रवः । हरी, अश्वौ, अश्वाग्रमपि । न वृण्वते, न प्राप्नुवन्ति । तस्मै इन्द्राय गायत' इति प्राग्वत् । इन्द्राश्वानां सहस्रत्वेऽप्यग्रगामित्वेन प्राधान्याद्द्वयोरेवोक्तिः । अध्यात्मं तु– यस्य, इन्द्रस्य । संस्थे, यस्मिन्परमेश्वरे विशेषतो भक्तशरीरे संनिहिते सति । समत्सु, ज्ञानयुद्धेषु । शत्रवः अज्ञानादीनि । हरी, विषयहरणाद्धरिशब्दोक्ते मनोबुद्धी । न वृण्वते, मनोबुद्धी नाज्ञानाद्यावृते भवतः इति ।। ४ ।।

**स्कन्द– यस्य** इन्द्रस्य स्वभूते **संस्थे** अपठितमपि सङ्ग्रामनामैतत् सङ्ग्रामे । **न वृण्वते** वृणोतिरत्र सामर्थ्यात् प्राप्त्यर्थः । प्राप्नुवन्ति । **हरी** अश्वौ । **समत्सु संस्थे** इत्यनेन गतत्वात् क्रियाशब्दोऽयं, न सङ्ग्रामनाम । अद भक्षणे सम्भक्षयत्सु परस्परं योद्धृषु । महति युद्धे प्रवृत्त इत्यर्थः । **शत्रवः** वैरिणः । यः सङ्ग्रामे महति युद्धे दूरस्थानेव रथप्राप्तान् निहन्तीत्यर्थः । **तस्मा इन्द्राय** सामान्युच्चारयत स्तुतीर्वा ।। ४ ।।

**वेङ्कटमाधव–** यस्मिन् अवस्थिते न वारयन्ति तस्य स्वभूतावश्वौ सङ्ग्रामेषु शत्रवः । तस्मै इन्द्राय गायत ।। ४ ।।

**मुद्गल– समत्सु** युद्धेषु । **यस्य** इन्द्रस्य **संस्थे** रथे युक्तौ **हरी** द्वावश्वौ शत्रवः **न वृण्वते** न सम्भजन्ते । रथमश्वौ च दृष्ट्वा पलायन्त इत्यर्थः । तस्मै इन्द्राय तत्सन्तोषार्थमृत्विजः । **गायत** स्तुतिं कुरुत ।। ४ ।।

**सायण– समत्सु** युद्धेषु **यस्य** इन्द्रस्य **संस्थे** रथे युक्तौ **हरी** द्वावश्वौ **शत्रवः न वृण्वते** न सम्भजन्ते रथमश्वौ च दृष्ट्वा पलायन्ते इत्यर्थः । **तस्मा इन्द्राय** तत्सन्तोषार्थं हे ऋत्विजः **गायत** स्तुतिं कुरुत । 'रणः' इत्यादिषु षट्चत्वारिंशत्सु सङ्ग्रामनामसु 'समत्सु समरणे' (नि.२,१७,२२) इति पठितम् ।।

संस्थे । सम्यक् तिष्ठतीति संस्थो रथः । 'आतश्चोपसर्गे' (पा.सू.३,१,१३६) इति कप्रत्ययः । कृदुत्तरपदप्रकृतिस्वरत्वम् । वृण्वते । प्रत्ययस्वरेण अकार उदात्तः । सति शिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्यः (पा.सू.६,१,१५८,९-११) । 'तिङ्ङतिङः' इति निघातो न भवति, 'यद्वृत्तान्नित्यम्' (पा.सू.८,१,६६) इति प्रतिषेधात् । पञ्चमीनिर्देशेऽपि (पा.सू.१, १,६७) अत्र व्यवहितेऽपि कार्यमिष्यते । हरतो रथमिति हरी अश्वौ । 'इन्' इत्यनुवृत्तौ (उ.सू. ४,५५७) 'हृपिषिरुहिवृतिविदिच्छिदिकीर्तिभ्यश्च' (उ.सू.४,५५८) इति इन् प्रत्ययः । नित्त्वादाद्युदात्तत्वम् । समत्सु । सम्पूर्वात् अत्तेः क्विप् । शत्रवः । शतिः सौत्रो धातुर्हिंसार्थः । 'रुशातिभ्यां क्रुन्' (उ.सू.४,५४३) । नित्त्वादाद्युदात्तत्वम् । तस्मै । 'सावेकाचः' (पा.सू.६,१,१६८) इति विभक्त्युदात्तस्य 'न गोश्वन्साववर्ण' (पा.सू.६,१,१८२) इति प्रतिषेधात् प्रातिपदिकस्वर एव ।। ४ ।।

**सिद्धाञ्जनम्–** चतुर्थीमृचमाह– **यस्य** इन्द्रस्य **संस्थे** संस्थाने **हरी** अश्वौ द्वौ (द्वितीया) **समत्सु** सङ्ग्रामेषु **शत्रवः** शातयितारो वैरिणः **न वृण्वते** न वारयन्ति **तस्मै इन्द्राय** तस्येन्द्रस्य सन्तर्पणार्थम् **गायत** स्तुतीः कुरुत ।

संस्थे-धात्वर्थानुसारेण 'संस्थाने' इत्युक्तम् । इन्द्रस्य आवासस्थाने, समागमस्थाने वा शत्रवः हरिनामकौ इन्द्राश्वौ वारयितुं न प्रभवन्ति, तयोरप्रतिहतवीर्यत्वात् । 'हरी इन्द्रस्य' इति निघण्टु-पठितं इन्द्राश्वयोर्नाम प्रसिद्धम् । हरिः हरितवर्ण इत्याचक्षते प्रायशो व्याख्यातारः। हर्य गति-कान्त्योरिति धातोः हरिपदनिष्पत्तौ कान्त्यर्थसिद्धिः सुगमा भवति। हर्यश्वः, हरिकेशः, हरिवर्पसम्,

हरिधायसम् इत्यादिप्रयोगे कमनीयत्वं भास्वरत्वं वा द्योतितं भवति । इन्द्रस्य प्रकाशमयस्य वाहौ 'हरी' हरितवर्णावपि कान्तिमन्तौ । इन्द्रसंस्थाने तयोः प्रभां देवशत्रवः न 'वृण्वते', नाच्छादयन्ति न आवृण्वन्ति, तयोः प्रसारं न प्रतिरुन्धन्ति । 'संस्थे रथे संयुक्तौ हरी' इति सायणव्याख्या । अन्यत्र विविधमेवं सायणीयं संस्थपदव्याख्यानं भवति-'संस्थाने आसादने' (५-१-८) 'स्थाने युद्धे (८-२१-११) 'संस्थानभूते यज्ञे' (८-२७-१५) 'सङ्ग्रामे' (८-३२-११) । अत्रेदं द्रष्टव्यम् । सर्वत्र संस्थानं स्थानं वा संस्थपदार्थमुक्त्वा ततः स्वसम्भावित-प्रकरणवशात् सङ्ग्रामो यज्ञो वा विवरणार्थः कथितः। गूढार्थे अन्तर्दर्शनशक्तिविशेषसङ्केतभूतौ हरी इन्द्रस्य ।। ४ ।।

## ऋक्संहिता पदपाठसहिता

**सुतपाव्ने सुता इमे शुचयो यन्ति वीतये । सोमासो दध्याशिरः ।। ५ ।।**

**सुतऽपाव्ने । सुताः । इमे । शुचयः । यन्ति । वीतये । सोमासः । दधिऽआशिरः ।।५।।**

## ऋग्भाष्यम्

**सोमपे शुचयः सोमाः प्राप्त्यै दधिविमिश्रिताः ।**
**मनांसि ध्यानयुक्तानि वा यांति हरये सदा ।। ५ ।।**

**ऋग्भाष्यटीका– सुतपाव्ने** ।। सोमपे । **शुचयः** शुद्धाः **सुताः** अभिषुता **दध्याशिरः** दध्याशिराः दधिविमिश्रिताः आशिरशब्दो मिश्रितार्थ इत्येके । अन्ये त्वहोरात्रान्तरितं दधि आशिरं ततश्चाशिरं दधि येषु ते दध्याशिराः तस्य तात्पर्यं दधिविमिश्रिता इति । **इमे सोमासः** सोमाः **वीतये** वीतिर्गत्यादौ पठ्यते । यजमानस्येन्द्रप्राप्तौ **सुतपाव्ने** सोमपे आतो मनिन् क्वनिब्वनिपश्चेति वनिप् । इन्द्राय **यन्ति** यान्ति । गत्यर्थकर्मणीति चतुर्थी । अध्यात्मन्तु **सुताः** वेद-वाक्यसङ्घर्ष-वन्तः । **शुचयः** रागादिविधुराः दध्याशिरः आदृगमहनजनःकिकिनौ लिट् चेति किप्रत्ययः । **दधि** परमेश्वरे धारणम् । ध्यानमिति यावत् । तेन युक्ताः **सोमाः** मनांसि **सुतपाव्ने** मनसा सेव्याय हरये सदा यान्ति वीतये तत्प्राप्त्यर्थमिति ।। ५ ।।

**मन्त्रार्थमञ्जरी–** शुचयः, शुद्धाः । सुताः, अभिषुताः । दध्याशिरः, दध्याशिराः, 'आशिरशब्दो मिश्रितार्थः' इत्येके, 'अहोरात्रान्तरितं दधि आशिरम्' इत्यन्ये, ततश्चाशिरं दधि येषु ते

दध्याशिराः, दधिमिश्रिता इति यावत् । इमे सोमासः, सोमाः । वीतये, प्राप्तये, 'वी गतौ' इति धातुपाठात्, यजमानस्येन्द्रप्राप्त्यर्थम् । सुतपात्रे, सोमपे, 'पा पाने' इत्यतः 'आतो मनिन्कनिब्वनिपश्च' इति वनिप्प्रत्ययः, इन्द्राय । यन्ति, यान्ति, 'इण् गतौ' 'गत्यर्थकर्मणि' इति चतुर्थी ।। अध्यात्मं तु सुताः, वेदवाक्यसङ्घर्षवन्तः । शुचयः, रागादिविधुराः । दध्याशिरः, दध्याशिराः, दधि हरौ धारणम्, ध्यानमिति यावत्, तेन मिश्रिताः, 'डुधाञ् धारणे' इत्यतः 'आदृगमहनजनः किकिनौ लिट् च' इति किप्रत्यये तस्य लिड्वद्भावे 'लिटिधातोरनभ्यासस्य' इति द्वित्वे 'पूर्वोऽभ्यासः' इति पूर्वस्याभ्यासत्वे 'ह्रस्वः' इति सूत्रेणाभ्यासस्य ह्रस्वत्वे धातोराकारस्य 'अतो लोप इटि च' इति लोपे 'दधि' इति रूपसिद्धेः । इमे सोमासः, सोमाः मनांसि, सोमपदेन मनोग्रहणे एकदैवत्यत्वयुक्तिः प्रागेवोक्ता । सुतपात्रे, मनसा सेव्याय हरये । वीतये, तत्प्राप्त्यर्थम् । (सदा) यन्ति, 'इण् गतौ' 'इणो यण्' ।। ५ ।।

**स्कन्द– सुतानां** सोमानां पात्रे सुता इमे **यन्ति** गच्छन्ति । न चाप्रदीयमानानां गमनं सम्भवतीति प्रदानमनेन लक्ष्यते । सम्प्रदानचतुर्थीश्रुतेः दानार्थ एव वा एतिः, प्रदीयन्त इत्यर्थः । किमर्थं, **वीतये** पानाय । के । **सोमासः** सोमाः **दध्याशिरः** दधिमिश्राः । सोममिश्रं हि दध्याशीरुच्यते ।। ५ ।।

**वेङ्कटमाधव–** सुतं सोमं यः पिबति तस्मै सुता इमे सोमाः पूताः पानाय गच्छन्ति दधिमिश्रणाः ।। ५ ।।

**मुद्गल– इमे सोमासः** अस्मिन् कर्मणि सम्पादिताः सोमाः **सुतपात्रे** अभिषुतस्य सोमस्य पानकर्त्रे, तस्य पातुः, **वीतये** भक्षणार्थं **यन्ति** तमेव प्राप्नुवन्ति । कीदृशाः सोमाः । **सुताः** अभिषुताः **शुचयः** दशापवित्रेण शोधितत्वाच्छुद्धा दध्याशिरः अवनीयमानं दधि आशीः दोषघातकं येषां सोमानां ते दध्याशिरः ।। ५ ।।

**सायण– इमे सोमासः** अस्मिन् सम्पादिताः सोमाः **सुतपात्रे** अभिषुतस्य सोमस्य पानकर्त्रे । षष्ठ्यर्थे चतुर्थी । तस्य पातुः **वीतये** भक्षणार्थं **यन्ति** तमेव प्राप्नुवन्ति । कीदृशाः सोमाः । **सुताः** अभिषुताः । शुचयः दशापवित्रेण शोधितत्वात् शुद्धाः । **दध्याशिरः** अवनीयमानं दधि आशीर्दोषघातकं येषां सोमानां ते दध्याशिरः ।

सुतपाव्ने । सुतं पिबतीति सुतपावा । वनिपः पित्त्वात् धातुस्वर एव शिष्यते । समासे द्वितीयापूर्वपदप्रकृतिस्वरं बाधित्वा कृदुत्तरपदप्रकृतिस्वरत्वम् । शुचयः । 'शुच दीप्तौ' । 'इन्' इत्यनुवृत्तौ 'इगुपधात्कित्' (उ.सू.४,५५९) इति इन् । कित्त्वाल्लघूपधगुणाभावः । नित्त्वादाद्युदात्तत्वम् । वीतये । 'वि गतिप्रजनकान्त्यशनखादनेषु' इत्यस्मात् 'मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः' (पा.सू.३,३,९६) इति क्तिन् उदात्तः । सोमासः । 'षुञ् अभिषवे' । 'अर्तिस्तुसुहुसृधृक्षि' (उ.सू.१,१३७) इत्यादिना मन् । नित्त्वादाद्युदात्तः । 'आज्जसेरसुक्' (पा.सू.७,१,५०) इत्यसुगागमः । दध्याशिरः । दधाति पुष्णातीति दधि । 'डुधाञ् धारणपोषणयोः' । 'आदृगमहनजनः किकिनौ लिट् च' (पा.सू.३,२,१७१) इति किन् । लिड्वद्भावात् द्विर्भावः । कित्त्वादाकारलोपः । नित्त्वादाद्युदात्तत्वम् । 'शॄ हिंसायाम्' । शृणाति हिनस्ति सोमेऽवनीयमानं सत् सोमस्य स्वाभाविकं रसं ऋजीषत्वप्रयुक्तं नीरसं दोषं वा इत्याशीः । क्विपि 'ऋत इद्धातोः' (पा.सू.७,१,१००) इति इत्वं रपरत्वं च । दध्येव आशीर्येषां सोमानां ते दध्याशिरः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ।। ५ ।।

**सिद्धाञ्जनम्–** पञ्चमीमृचमाह– **इमे सुताः** सम्पादिताः **सोमासः** सोमाः **सुतपाव्ने** सुतस्य अभिषुतस्य सोमस्य पाव्ने पात्रे इन्द्राय यन्ति गच्छन्ति । किमर्थम् ? वीतये तदीयव्याप्तये (यजमाने इन्द्रस्य जन्मने, व्याप्तये, आगतये वा इत्यर्थः वेतेर्धातोर्गतिव्याप्त्याद्यर्थत्वात् । अन्तर्यागे देवानां वीतिर्नाम यजमानमुद्दिश्य आगतिः, तत्र व्याप्तिः, जन्म वा भवति) कीदृशाः सोमाः ? **शुचयः** दीप्ताः (संस्कृताः शोधिता अत एव दीप्ताः, शुच दीप्तौ इति धात्वर्थानुगमो बोध्यः)। पुनः कीदृशाः ? **दध्याशिरः** दधिमिश्राः (आपूर्वकात् हिंसार्थात् शृणातेर्निष्पन्नं, आशृणाति आशीः इति रेफान्तं पदम् । दोषविघातकं इत्यर्थः । दधि आशीः येषां ते दध्याशिरः इति सायणीयव्याख्यानुसारतः शब्दार्थः) ।

त्र्याशिरः सोमाः प्रसिद्धाः श्रौतकर्मसु, गवाशिरः दध्याशिरः यवाशिर इति क्रमशः पयोदधियवमिश्राः सोमा उच्यन्ते । अधिश्रयणसाधनभूतानि त्रीणि द्रव्याणइ । श्रयणं च मिश्रणम् । अत्र सङ्केतार्थो लक्षणीयः । पयसा तत्प्रकृतिभूता गावो रश्मयः प्रज्ञाप्रकाशा लक्ष्यन्ते । तत्परिणामेन दध्ना धारणात्मिका सूक्ष्मा बुद्धिः, यवैः घनीभूतबाह्यप्रज्ञा स्थूला बुद्धिश्च । एवं गवादिद्रव्यत्रयसङ्केतितेषु प्रज्ञाप्रकाशसूक्ष्मबुद्धिस्थूलप्रज्ञासत्त्वेषु सोमैः सह मिश्रणाय सिद्धेषु सत्स्वेव

गवादिभिरधिश्रिताः सम्मदरसवाहिनः सोमाः पूताः तत्तद्देवताभ्योऽर्प्यन्ते, ताभिश्चादीयन्ते, भुज्यन्ते। तथा रसग्रहणेन देवानां मानुषे यजमाने वृद्धिरित्यादि स्पष्टं पूर्वोक्तं सर्वं स्मार्यम् ।। ५ ।।

।। इति प्रथमाष्टके प्रथमाध्याये नवमो वर्गः ।।

।। अथ दशमो वर्गः ।।

ऋक्संहिता पदपाठसहिता

**त्वं सुतस्य॑ पीतये॑ स॒द्यो वृ॒द्धो अ॑जायथाः । इन्द्र॒ ज्यैष्ठ्या॑य सुक्रतो ।। ६ ।।**

त्वम् । सुतस्य॑ । पीतये॑ । स॒द्यः । वृ॒द्धः । अ॒जा॒य॒थाः॒ ।। इन्द्र॑ । ज्यैष्ठ्या॑य । सु॒क्र॒तो॒ इति॑ सुऽक्रतो ।। ६ ।।

ऋग्भाष्यम्

**सदा पूर्णः शुभज्ञानज्यैष्ठ्यव्यक्त्यै सुताप्तये ।**
**न क्षुदादेरभिव्यक्तोऽभवो ........... ।। ६ ।।**

**ऋग्भाष्यटीका–** **त्वं सुतस्य** । सदा पूर्णः । हे **इन्द्र सुक्रतो** शुभज्ञान **सद्योवृद्धः** समानेऽहनि यस्मिन्नहनि स्वयं वर्तते तस्मिन् सदा च वर्तते । अतः सदावृद्धः सदा पूर्णस्त्वं **सुतस्य पीतये** सोमस्य पानाय सुताप्तय इति तात्पर्यम् । यद्वा अपिपूर्वस्येणः क्तिनि रूपमेतत् । वष्टिभागुरिरल्लोपमवाप्योरुपसर्गयोरित्यपेरल्लोपः । सोमस्य पीतये सुताप्तये यज्ञे यत् **अजायथाः** अभिव्यक्तोऽभवस्तत् **ज्यैष्ठ्याय** ज्यैष्ठ्यव्यक्त्यै सर्वदेवताभ्योऽतिशयेन सोमपानादिना स्वकीयं ज्यैष्ठ्यं प्रकटयितुमेव । न तु क्षुदादेर्हेतोः ।। ६ ।।

**मन्त्रार्थमञ्जरी–** सुक्रतो, शोभनज्ञान । (हे) इन्द्र । सद्यः वृद्धः, समानेऽहनि 'सद्यः' इति निपातनात्, यस्मिन्नहनि स्वयं वर्तते तस्मिन्नहनीत्यर्थः, सदा च वर्तते, अतः सद्योवृद्धः सदा वृद्धो नित्यपूर्ण इत्यर्थः । त्वम् । सुतस्य पीतये, सोमस्य पानाय । (यज्ञे यत्) अजायथाः, अभिव्यक्तोऽभवः । (तत्) ज्यैष्ठ्याय, ज्यैष्ठ्यव्यक्त्यै, सर्वदेवताभ्योऽतिशयेन सोमपानादिना ज्यैष्ठ्यं प्रकटयितुमेव, न तु क्षुदादिहेतोरित्यर्थः ।। ६ ।।

**स्कन्द– त्वं सुतस्य** सोमस्य **पीतये** पानार्थं **सद्यः** तस्यामेव वेलायां शरीरेण च वीर्येण च परिवृद्धः प्रतिबन्धकापनयनसमर्थः **अजायथाः** ज्ञायसे भवसि । न च केवलायै सोमपीतये । किन्तर्हि, **हे इन्द्र ज्यैष्ठ्याय** च ज्येष्ठाः प्रशस्यतमाः प्रवृद्धतमा वा । तेषां कर्म ज्यैष्ठ्यं, तस्मै च वृत्रवधादिकाय च हे **सुक्रतो !** सुकर्मन् सुप्रज्ञ वा । अथवा पीतय इति तृतीयार्थे चतुर्थी । त्वं सुतस्य सामेस्य पानेन सद्य एव समान एवाहनि पानानन्तरमेव शरीरेण च वीर्येण च परिवृद्धो भवसि । किमर्थं, ज्यैष्ठ्याय सुकर्मणे वृत्रवधादिकाय ।। ६ ।।

**वेङ्कटमाधव–** त्वम् सुतस्य पानार्थं सद्यः वृद्धः भवसि प्रवृद्धशरीरः । इन्द्र श्रेष्ठं कर्म कर्तुं शत्रुषु सुप्रज्ञ ।। ६ ।।

**मुद्गल–** हे **सुक्रतो!** शोभनकर्मन् **इन्द्र त्वं सुतस्य** अभिषुतस्य सोमस्य **पीतये** पानार्थं **ज्यैष्ठ्याय** देवेषु ज्येष्टत्वार्थं च **सद्यः** तस्मिन्नेव क्षणे **वृद्धः अजायथाः** अभिवृद्धयोत्साहेन युक्तोऽभूः ।। ६ ।।

**सायण– सुक्रतो** शेभनकर्मन् शोभनप्रज्ञ वा हे **इन्द्र त्वं सुतस्य** अभिषुतस्य सोमस्य **पीतये** पानार्थं **ज्यैष्ठ्याय** देवेषु ज्येष्ठत्वार्थं च **सद्यः** तस्मिन्नेव क्षणे **वृद्धो अजायथाः** अभिवृद्धयोत्साहेन युक्तोऽभूः ।

पीतये । 'पा पाने' इत्यस्मात् 'रथागापापचो भावे' (पा.सू.३,३,९५) इति क्तिन् । 'घुमास्था' (पा.सू.६,४,६६) इत्यादिना ईत्वम् । तस्य नित्त्वेऽपि व्यत्ययेन प्रत्ययोदात्तत्वम् । उत्तरसूत्रगतमुदात्तपदमत्रापि वा योजनीयम् । सद्यः । 'सद्यः परुत्परारि' (पा.सू.५,३,२२) इति सूत्रेण समानेऽहनीत्यर्थे समानस्य सभावो द्यश्च प्रत्ययो निपात्यते । प्रत्ययस्वरेणोदात्तः । वृद्धः । 'वृधु वृद्धौ' । 'उदितो वा' (पा.सू.७,२,५६) इति क्त्वाप्रत्यये इटो विकल्पितत्वात् 'यस्य विभाषा' (पा.सू.७,२,१५) इति निष्ठायामिट्प्रतिषेधः । प्रत्ययस्वरेणोदात्तः । ज्यैष्ठयाय । ज्येष्ठस्य भावो ज्यैष्ठ्यम् । 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' (पा.सू.५,१,१२४) इति ष्यञ् । ञित्त्वादाद्युदात्तः ।। ६ ।।

**सिद्धाञ्जनम्–** अथ षष्ठीमृचमाह– **हे इन्द्र त्वम् सुतस्य** अभिषुतस्य सोमस्य **पीतये** पानाय **सद्यः** तस्मिन्नेव समये **वृद्धः** शरीरेण वीर्येण च वृद्धिं प्राप्तः **अजायथाः** जायसे, भवसि । किमर्थम् ? **ज्यैष्ठ्याय** ज्येष्ठानां प्रवृद्धानां श्रेष्ठानां वा कर्मणे, हे **सुक्रतो** शोभनकर्मन् !

इन्द्रः सोमं पीत्वा तत्प्रभावेण सद्यो वृद्धो भवति । अत एव प्रवृद्धवीर्यस्य तस्य श्रेष्ठकर्म युक्तम् । उपपन्नं च सुक्रतो इति सम्बोधनम् । 'पीतये' इत्यत्र तृतीयार्थे चतुर्थी इति स्कन्दस्वामिनो व्याख्या समीचीनं तात्पर्यमुपपादयति । न चेदेवम् , 'सद्यः' इत्यस्य स्वरसता विहता शोषिता स्यात् । कर्मपरव्याख्याने तु 'तस्मिन्नेवाहनि' इत्याहुः । 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' इति सूत्रानुसारेण ज्यैष्ठ्यं कर्म अत्र उपपन्नं ग्राह्यम् , 'वृद्धो अजायथाः' इत्युक्ते पुनर्ज्येष्ठभावो न विवक्षितः ।। ६ ।।

## ऋक्संहिता पदपाठसहिता

**आ त्वा॑ विशन्त्वाशवः सोमा॑स इन्द्र गिर्वणः । शन्ते॑ सन्तु प्रचे॑तसे ।। ७ ।।**
**आ । त्वा । विशन्तु । । आशवः । सोमा॑सः । इन्द्र । गिर्वणः ।। शम् । ते । सन्तु । प्रऽचे॑तसे ।। ७ ।।**

## ऋग्भाष्यम्

**............................ गीर्भिर्वृत प्रभो ।**
**प्रकृष्टचेतास्त्वद्भृत्यो योऽस्मै स्युः शङ्कराः सुताः ।। ७ ।।**

**ऋग्भाष्यटीका–** **आत्वा** । गीर्भिः । हे **गिर्वणः** गीर्भिर्वेदवाक्यैर्वननीय भजनीय । वनतेरसुन् वृतेति तात्पर्यम् । यद्वा वृणोतेः कर्मण्यनस्प्रत्ययो डित् । **इन्द्र** प्रभो **आशवः** क्षिप्राः **सोमासः** सोमाः **त्वा** त्वां **आविशन्तु** । त्वामाविष्टाश्च **ते** सुताः **प्रचेतसे** यः प्रकृष्टचेताः **ते** त्वदीयस्त्वद्भृत्यो यजमानोऽस्मै अस्य शं शङ्कराः **सन्तु** स्युः ।। ७ ।।

**मन्त्रार्थमञ्जरी–** गिर्वणः, गीर्वणः, गीर्भिर्वननीय भजनीय, 'वनं सम्भक्तौ' इत्यतोऽसुन्, वनतेर्णत्वम् । (हे) इन्द्र, प्रभो । आशवः, क्षिप्राः द्रवत्त्वात् । सोमासः, सोमाः । त्वा, त्वाम् । आ विशन्तु ।। (आविष्टाश्च ते) प्रचेतसे, प्रकृष्टचित्ताय । ते, त्वदीयाय, त्वद्भृत्याय यजमानाय । शम्, सुखम् । सन्तु, सुखकरा भवन्तु ।। ७ ।।

**स्कन्द– आ त्वा विशन्तु** प्रविशन्तु त्वां । त्वया पीयन्तामित्यर्थः । कीदृशाः, **आशवः** स्वकार्यकरणे क्षिप्राः । के । **सोमासः** सोमाः । **हे इन्द्र** । **गिर्वणः** गिरः स्तुतयः । वनतिः सम्भक्त्यर्थः । स्तुतिभिः सम्भजनीय! स्तुतीनां वा सम्भक्तः । आविश्य च **शं** सुखनामैतत् (तु निघं. ३.६) । सुखं तुभ्यं सन्तु भवतु । **प्रचेतसे** प्रकृष्टप्रज्ञानाय ।। ७ ।।

**वेङ्कटमाधव–** आ विशन्तु त्वां क्षिप्राः सोमाः इन्द्र गीर्भिर्वननीय शं च तुभ्यं भवतु सुमतये ।।

**मुद्गल–** **हे इन्द्र त्वा** त्वां **सोमासः** सोमाः **आविशन्तु** आभिमुख्येन प्रविशन्तु । कीदृशाः सोमाः । आशवः सवनत्रये प्रकृतिविकृतिमत्योर्व्याप्तिमन्तः । कीदृशेन्द्र! **गिर्वणः** गीर्भिः स्तुतिभिस्सम्भजनीय देवविशेष! तथाविध **हे इन्द्र ते** तव प्रचेतसे प्रकृष्टज्ञानाय शं सुखरूपाः सोमाः सन्तु ।। ७ ।।

**सायण–** **हे इन्द्र** त्वां **सोमासः** सोमाः **आ विशन्तु** आभिमुख्येन प्रविशन्तु । कीदृशाः सोमाः । **आशवः** सवनत्रये प्रकृतिविकृत्योर्वाव्याप्तिमन्तः । कीदृशेन्द्र । **गिर्वणः** गीर्भिः स्तुतिभिः सम्भजनीय देवविशेष । 'गिर्वणा देवो भवति गीर्भिरेनं वनयन्ति' (निरु.६,१४) इति यास्कः । तथाविध हे इन्द्र **ते** तव **प्रचेतसे** प्रकृष्टज्ञानाय **शं** सुखरूपाः सोमाः **सन्तु** ।

गिर्वणः । गृणन्तीति गिरः स्तुतयः । 'गॄ शब्दे' । क्विपि 'ऋत इद्धातोः' (पा.सू. ७,१,१००) इति इत्वं रपरत्वं च । गीर्भिर्वन्यते सेव्यते इति गिर्वणाः । 'वन षण सम्भक्तौ' । सम्भक्तिः सेवा । 'सर्वधातुभ्योऽसुन्' (उ.सू.४,६२८) इत्यसुन्प्रत्ययः । प्रचेतसे । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ।। ७ ।।

**सिद्धाञ्जनम्–** सप्तमीमृचमाह– हे **इन्द्र** **गिर्वणः** गीर्भिः स्तुतिभिः वननीय सम्भजनीय! **त्वा** त्वां **आशवः** व्यापनशीलाः **सोमासः** सोमाः **आविशन्तु** प्रविशन्तु । **ते** तव **प्रचेतसे** प्रकृष्टज्ञानाय (ते सोमाः) **शं** शान्तिसुखरूपाः **सन्तु** भवन्तु ।

पूर्वस्यामृचि पीताः सोमाः इन्द्रस्य श्रेष्ठकर्मणे प्रभवन्ति, अत्र तु इन्द्रं समन्तात् प्रविष्टास्ते तस्य श्रेष्ठज्ञानायेत्युक्तम् ।। ७ ।।

## ऋक्संहिता पदपाठसहिता

**त्वां स्तोमा॑ अवीवृधन्त्वामु॒क्था श॑तक्रतो । त्वां व॑र्धन्तु नो॒ गिर॑ः ।। ८ ।।**

त्वाम् । स्तोमा॑ः । अ॒वी॒वृ॒ध॒न् । त्वाम् । उ॒क्था । श॒त॒क्र॒तो॒ इति॑ शतऽक्रतो । त्वाम् । व॒र्ध॒न्तु॒ । न॒ः । गिर॑ः ।। ८ ।।

ऋग्भाष्यम्

**व्यञ्जयन्त्यधिकं स्तोमाः साम्न्युक्थान्यृक्षु चैवहि ।**
**महागुणैर्व्यंजयन्तु गिरोऽस्माकमपि प्रभो ।**
**आकाशवृद्धिवद्वृद्धिर्विष्णोः स्यान्नैव चान्यथा ।**
**न वर्धते नो कनीयानिति ह्येनं श्रुतिर्जगौ ।**
**महातात्पर्यरोधाच्च श्रुत्यर्थो नापरो भवेत् ।**
**यद्यन्यापेक्षया वृद्धिरीशत्वं स्यात्कुतोऽस्य च ।**
**अक्षितोतिरिति ह्यस्मात् पूर्णाभिप्रायतोदिता ।। ८ ।।**

**ऋग्भाष्यटीका–** **त्वां स्तोमाः** । व्यञ्जयन्ति । हे **शतक्रतो** प्रभो त्वां साम्नि सामविशेषाः **स्तोमाः अवीवृधन्** व्यञ्जयन्तिस्म । एवमृक्षु **उक्था** उक्थानि च त्वामेवावीवृधन् । हि यस्मादेवं तस्मात् **नः** अस्माकमपि **गिरः त्वां वर्धन्तु** वर्धयन्तु । महागुणैर्युक्तं त्वां व्यञ्जयन्तु । त्वामित्यस्य पुनरुक्तेरधिकमित्युक्तम् । णिज्लोपस्य तात्पर्यं स्वातन्त्र्यादिमहागुणैर्युक्तमिति । नन्वत्र वृद्धिशब्दस्य प्रसिद्ध एवार्थो युक्तः व्यक्तौ प्रयोगादर्शनादित्यत आह– **आकाशेति** ।। कुड्याद्यपसरणादिनाऽऽकाशेऽभिव्यक्ते वृद्ध आकाश इति प्रयोगवद्विष्णावपि वृद्धिशब्दप्रयोगो न तूपचयार्थतया । आकाशे बाधकवशादुपचरितोंऽगीक्रियत इति चेत् समं प्रकृतेपीत्याह– **न वर्धत इति** ।। जगौ वृद्धिक्षयरहितमिति शेषः । बाधकान्तरमाह– **महातात्पर्येति** ।। विष्णोरीश्वरत्वे यत्सर्ववेदानां महातात्पर्यं तद्विरोधाच्च न वृद्धिः श्रुत्यर्थो भवेत् । कथं विरोध इत्यत आह– **यदीति** ।। यदि विष्णोः स्तोमाद्यधीना वृद्धिः स्यात्तर्हीश्वरत्वं न स्यात् पराधीनश्चेश्वरश्चेति विप्रतिषेधात् । ततश्च यत्तत्र वेदानां महातात्पर्यं तद्विरुध्येतेति । विष्णोर्वृध्यङ्गीकृतावुत्तरवाक्यविरोधोऽपि स्यादित्याह– **अक्षितोतिरिति** ।। अस्माद्वृद्ध्याद्यभावेन स्वातन्त्र्यादेव हि विष्णोरक्षितोतिरित्युदिता पूर्णाभिप्रायता युज्यते नान्यथेत्यर्थः ।। ८ ।।

**मन्त्रार्थमञ्जरी–** (हे) शतक्रतो, सम्पूर्णज्ञान, शताश्वमेध । त्वाम् । स्तोमाः, सामविशेषाः । अवीवृधन्, व्यञ्जयन्ति स्म, 'वृधु वर्धने' लुङ् । त्वाम् । उक्था, उक्थानि, ऋक्षु गता मन्त्रविशेषाः । (अवीवृधन्) यस्मादेवं तस्मात्, नः, अस्माकम् । गिरः त्वाम् वर्धन्तु, महागुणैर्युक्तं त्वां व्यञ्जयन्तु ।। ८ ।।

**वेङ्कटमाधव–** आ विशन्तु त्वां क्षिप्राः सोमाः इन्द्र गीर्भिर्वननीय शं च तुभ्यं भवतु सुमतये ॥

**मुद्गल– हे इन्द्र त्वा** त्वां **सोमासः** सोमाः **आविशन्तु** आभिमुख्येन प्रविशन्तु । कीदृशाः सोमाः । आशवः सवनत्रये प्रकृतिविकृतिमत्योर्व्याप्तिमन्तः । कीदृशेन्द्र! **गिर्वणः** गीर्भिः स्तुतिभिस्सम्भजनीय देवविशेष! तथाविध **हे इन्द्र ते** तव प्रचेतसे प्रकृष्टज्ञानाय शं सुखरूपाः सोमाः सन्तु ॥ ७ ॥

**सायण– हे इन्द्र** त्वां **सोमासः** सोमाः **आ विशन्तु** आभिमुख्येन प्रविशन्तु । कीदृशाः सोमाः । **आशवः** सवनत्रये प्रकृतिविकृत्योर्वाव्याप्तिमन्तः । कीदृशेन्द्र । **गिर्वणः** गीर्भिः स्तुतिभिः सम्भजनीय देवविशेष । 'गिर्वणा देवो भवति गीर्भिरेनं वनयन्ति' (निरु.६,१४) इति यास्कः । तथाविध हे इन्द्र **ते** तव **प्रचेतसे** प्रकृष्टज्ञानाय **शं** सुखरूपाः सोमाः **सन्तु** ।

गिर्वणः । गृणन्तीति गिरः स्तुतयः । 'गॄ शब्दे' । क्विपि 'ऋत इद्धातोः' (पा.सू. ७,१,१००) इति इत्वं रपरत्वं च । गीर्भिर्वन्यते सेव्यते इति गिर्वणाः । 'वन षण सम्भक्तौ' । सम्भक्तिः सेवा । 'सर्वधातुभ्योऽसुन्' (उ.सू.४,६२८) इत्यसुन्प्रत्ययः । प्रचेतसे । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ॥ ७ ॥

**सिद्धाञ्जनम्–** सप्तमीमृचमाह– हे **इन्द्र गिर्वणः** गीर्भिः स्तुतिभिः वननीय सम्भजनीय! **त्वा** त्वां **आशवः** व्यापनशीलाः **सोमासः** सोमाः **आविशन्तु** प्रविशन्तु । **ते** तव **प्रचेतसे** प्रकृष्टज्ञानाय (ते सोमाः) **शं** शान्तिसुखरूपाः **सन्तु** भवन्तु ।

पूर्वस्यामृचि पीताः सोमाः इन्द्रस्य श्रेष्ठकर्मणे प्रभवन्ति, अत्र तु इन्द्रं समन्तात् प्रविष्टास्ते तस्य श्रेष्ठज्ञानायेत्युक्तम् ॥ ७ ॥

### ऋक्संहिता पदपाठसहिता

**त्वां स्तोमा॑ अवीवृधन्त्वामु॒क्था श॑तक्रतो । त्वां व॑र्धन्तु नो॒ गिर॑ः ॥ ८ ॥**

त्वाम् । स्तोमा॑ः । अ॒वी॒वृ॒ध॒न् । त्वाम् । उ॒क्था । श॒त॒क्र॒तो इति॑ शतऽक्रतो । त्वाम् । व॒र्ध॒न्तु॒ । न॒ः । गिर॑ः ॥ ८ ॥

ऋग्भाष्यम्

**व्यञ्जयन्त्यधिकं स्तोमाः साम्र्युक्थान्यृक्षु चैवहि ।**
**महागुणैर्व्यंजयन्तु गिरोऽस्माकमपि प्रभो ।**
**आकाशवृद्धिवद्वृद्धिर्विष्णोः स्यान्नैव चान्यथा ।**
**न वर्धते नो कनीयानिति ह्येनं श्रुतिर्जगौ ।**
**महातात्पर्यरोधाच्च श्रुत्यर्थो नापरो भवेत् ।**
**यद्यन्यापेक्षया वृद्धिरीशत्वं स्यात्कुतोऽस्य च ।**
**अक्षितोतिरिति ह्यस्मात् पूर्णाभिप्रायतोदिता ।। ८ ।।**

**ऋग्भाष्यटीका–** त्वां **स्तोमाः** । व्यञ्जयन्ति । हे **शतक्रतो** प्रभो त्वां साम्नि सामविशेषाः **स्तोमाः अवीवृधन्** व्यञ्जयन्तिस्म । एवमृक्षु **उक्था** उक्थानि च त्वामेवावीवृधन् । हि यस्मादेवं तस्मात् **नः** अस्माकमपि **गिरः त्वां वर्धन्तु** वर्धयन्तु । महागुणैर्युक्तं त्वां व्यञ्जयन्तु । त्वामित्यस्य पुनरुक्तेरधिकमित्युक्तम् । णिज्लोपस्य तात्पर्यं स्वातन्त्र्यादिमहागुणैर्युक्तमिति । नन्वत्र वृद्धिशब्दस्य प्रसिद्ध एवार्थो युक्तः व्यक्तौ प्रयोगादर्शनादित्यत आह– **आकाशेति** ।। कुड्याद्यपसरणादिनाऽऽ-काशेऽभिव्यक्ते वृद्ध आकाश इति प्रयोगवद्विष्णावपि वृद्धिशब्दप्रयोगो न तूपचयार्थतया । आकाशे बाधकवशादुपचरितोंऽगीक्रियत इति चेत् समं प्रकृतेपीत्याह– **न वर्धत इति** ।। जगौ वृद्धिक्षय-रहितमिति शेषः । बाधकान्तरमाह– **महातात्पर्येति** ।। विष्णोरीश्वरत्वे यत्सर्ववेदानां महातात्पर्यं तद्विरोधाच्च न वृद्धिः श्रुत्यर्थो भवेत् । कथं विरोध इत्यत आह– **यदीति** ।। यदि विष्णोः स्तोमाद्यधीना वृद्धिः स्यात्तर्हीश्वरत्वं न स्यात् पराधीनश्चेश्वरश्चेति विप्रतिषेधात् । ततश्च यत्तत्र वेदानां महातात्पर्यं तद्विरुध्येतेति । विष्णोर्वृध्यङ्गीकृतावुत्तरवाक्यविरोधोऽपि स्यादित्याह– **अक्षितोतिरिति** ।। अस्माद्वृद्ध्याद्यभावेन स्वातन्त्र्यादेव हि विष्णोरक्षितोतिरित्युदिता पूर्णाभिप्रायता युज्यते नान्यथेत्यर्थः ।। ८ ।।

**मन्त्रार्थमञ्जरी–** (हे) शतक्रतो, सम्पूर्णज्ञान, शताश्वमेध । त्वाम् । स्तोमाः, सामविशेषाः । अवीवृधन्, व्यञ्जयन्ति स्म, 'वृधु वर्धने' लुङ् । त्वाम् । उक्था, उक्थानि, ऋक्षु गता मन्त्र-विशेषाः । (अवीवृधन्) यस्मादेवं तस्मात्, नः, अस्माकम् । गिरः त्वाम् वर्धन्तु, महागुणैर्युक्तं त्वां व्यञ्जयन्तु ।। ८ ।।

**स्कन्द–** **त्वां स्तोमाः** स्तोत्राणि अस्मदीयोद्गातृप्रयुक्तानि **अवीवृधन्** वर्धितवन्तः । स्तूयमाना हि देवता वीर्येण वर्धन्ते । न च केवला स्तोमाः त्वदीयान्युक्थान्यपि त्वा वर्धितवन्ति । हे **शतक्रतो!** उक्थशब्दस्तार्तीयसवनकहोतृकशस्त्रविशेषवचनः । शस्त्रमात्रवचनो वा । **त्वां वर्धन्तु नः** अस्माकमपि स्वभूता **गिरः** स्तुतयः ॥ ८ ॥

**वेङ्कटमाधव–** त्वां त्रिवृदादयः स्तोमा अवीवृधन् त्वाम् शस्त्राणि च शतकर्मन् । त्वामेव वर्धयन्तु अस्माकमपि गिरः ॥ ८ ॥

**मुद्गल–** हे **शतक्रतो! इन्द्र! त्वां स्तोमाः** सामगानां स्तोत्राणि **अवीवृधन्** वर्धितवन्ति । तथा **उक्था** शस्त्राणि त्वामवीवृधन् । **नः** अस्माकं **गिरः** स्तुतयः **त्वां वर्धन्तु** वर्धयन्तु ॥

**सायण–** हे **शतक्रतो** बहुकर्मन् बहुप्रज्ञ वा **इन्द्र त्वां स्तोमाः** सामगानां स्तोत्राणि **अवीवृधन्** वर्धितवन्ति । तथा बह्वृचानां **उक्था** शस्त्राणि **त्वां** अवीवृधन् । यस्मात् पूर्वमेवमासीत् तस्मादिदानीमपि **नः** अस्माकं **गिरः** स्तुतयः **त्वां वर्धन्तु** वर्धयन्तु अतिवृद्धं कुर्वन्तु ॥

**स्तोमाः ।** मनो मित्त्वादाद्युदात्तः । अवीवृधन् । 'वृधु वृद्धौ' । ण्यन्तात् लुङि चङि (पा.सू.३,१,४८) 'उर्ऋत्' (पा.सू.७,४,७) इति वृधेरुपधाया ऋकारस्य ऋकारविधानादन्त-रङ्गोऽपि गुणो बाध्यते । द्विर्भाव– (पा.सू.६,१,११) लादिशेष– (पा.सू.७,४,६०) सन्वद्भाव'– (पासू.७,४,९३) इत्व– (पा.सू.७,४,७९) दीर्घत्व– (पा.सू.७,४,९४) अडागमाः (पा.सू.६,४,७१) । उक्था उक्थानि । 'पातृतुदिवचिरिचिसिचिभ्यस्थक्' (उ.सू. २,१६४) इति वचेः थक्प्रत्ययः । तस्य कित्त्वात् सम्प्रसारणम् । 'शेश्छन्दसि बहुलम्' (पा.सू.६,१,७०) इति शिलोपो नलोपश्च । प्रत्ययस्वरेणान्तोदात्तः । असामर्थ्यादामन्त्रित-परस्यापि न पराङ्गवद्भाव इति नानुदात्तत्वम् । वर्धन्तु । अन्तर्भावितण्यर्थात् वृधेः व्यत्ययेन परस्मैपदम् ॥ ८ ॥

**सिद्धाञ्जनम्–** अष्टमीमृचमाह– **शतक्रतो** शतकर्मन् इन्द्र (शतं बह्वर्थकम्) **त्वां स्तोमाः** सामरूपाणि स्तोत्राणि इत्यर्थः । **अवीवृधन्** वर्धितवन्तः। तया **त्वां उक्था** उक्थानि शस्त्राणि ऋग्भिः शंसनानीत्यर्थः । अवीवृधन् । **त्वां नः** अस्माकं **गिरः** स्तोत्रवाचः **वर्धन्तु** वर्धयन्तु णिलोपः छान्दसः, तथा परस्मैपदं च ।

स्तोत्रेण मन्त्रात्मकेन देवानां यजमाने (उपासके) अभिवृद्धिरिति शतश उद्घोषयन्ति वेदाः । कर्मपरव्याख्याने मेघमण्डलादुपर्येव मध्यमस्थानस्येन्द्रस्य वृद्धिर्वक्तव्या । फलं तु अपां वृष्टिः ! ।।

## ऋक्संहिता पदपाठसहिता

**अक्षितोतिः सनेदिमं वाजमिन्द्रः सहस्रिणम् । यस्मिन्विश्वानि पौंस्या ।। ९ ।।**

अक्षितऽऊतिः । सनेत् । इमम् । वाजम् । इन्द्रः । सहस्रिणम् । यस्मिन् । विश्वानि । पौंस्या ।। ९ ।।

## ऋग्भाष्यम्

**अनन्तफलदं वाजमस्मत्तो लभतां स च ।**
**ददातु वा पौरुषाणि शक्तयो यत्र चाखिलाः ।**
**अतश्चानंतशक्तित्वान्न वृद्ध्याद्याः कथञ्चन ।**
**सर्वोपेतेत्येतमर्थमभिप्रेत्याह वेदराट् ।। ९ ।।**

**ऋग्भाष्यटीका– अक्षितोतिः** । अनन्त । **यस्मिन्** यत्र इन्द्रे **विश्वानि पौंस्या** पौरुषाण्यखिलाश्च शक्तयः सन्ति सः **अक्षितोतिः** पूर्णाभिप्रायो वाञ्छितस्याखिलस्य पूर्तिमानिन्द्रः **सहस्रिणं** सहस्रशब्दोऽनन्तवाची तद्वन्तम् अनन्तफलदमिति यावत् । **इमं वाजं** अन्नं हविः **सनेत्** अस्मत्तो लभताम् । अथवाऽऽत्मपूजार्थं वाजमस्माभिः सनेत् सनयेत् लम्भयेत् अस्मभ्यं ददात्वित्यर्थः । यस्मिन्विश्वानि पौंस्येत्यनेनापि वाक्येन पूर्वत्र वृद्ध्यङ्गीकारे विरोध इति सिंहावलोकितेनाह– **अतश्चेति** ।। ब्रह्मसूत्रविरोधं च तत्राह– **सर्वेति** ।। एतमर्थं सर्वशक्तित्वादीश्वरस्य वृद्ध्याद्यभावम् ।। ९ ।।

**मन्त्रार्थमञ्जरी–** यस्मिन् इन्द्रे । विश्वानि । पौंस्या, पौंस्यानि, पौरुषाणि सामर्थ्यानि । (सन्ति), 'ॐ आत्मनि चैवं विचित्राश्च हि ॐ' (२।१।२९) इत्यादेः । अक्षितोतिः, अक्षीणाभिप्रायः, वाञ्छितस्याखिलस्य पूर्तिमान् । इन्द्रः । सहस्रिणम्, सहस्रशब्दोऽत्रानन्तवाची, अनन्तवन्तम्, अनन्तफलदमिति यावत् । इमम् । वाजम्, अन्नं हविः । सनेत्, अस्मत्तो लभताम्, 'वन षण सम्भक्तौ' यद्वा– आत्मपूजार्थमन्यान्प्रति वाजमस्माभिः सनेत्, सनयेत्, अस्मभ्यं यथेष्टं ददात्वित्यर्थः ।। ९ ।।

**स्कन्द–** अक्षिता अन्येनाहिंसिता अक्षीणा वा ऊतिः पालनं यस्य स **अक्षितोतिः** । **सनेत्** सम्भजतु **इमं वाजं** सङ्ग्रामं **इन्द्रः** सहस्रिणं योद्धृसहस्रयुक्तम् । अस्मिन् सङ्ग्रामेऽस्मद्रक्षणाय सन्निहितो भवत्वित्यर्थः । **यस्मिन्** सङ्ग्रामे । किम् । उच्यते । **विश्वानि** सर्वाणि **पौंस्या** बलनामैतत् (तु.निघं.२,९) हस्त्यश्वरथपदातिलक्षणानि बलानि । अथवा 'वाजः' (निघं २,७) इत्यन्ननाम । इदमस्मदीयं सोमलक्षणमन्नं सम्भजेत् पिबेदिन्द्रः स्तुतिसहस्रयुक्तम् । यस्मिन् बलानि सर्वाणि सामर्थ्यलक्षणानि । वाजः पीतः सर्वसामर्थ्यानि वनयतीत्यर्थः । अथवा यस्मिन् विश्वानि पौस्येति इन्द्रविशेषणम् । यस्मिन्निन्द्रे सर्वाणि बलानि यः सर्वैर्बलैर्बलवान्, यो महाबल इत्यर्थः ।।

**वेङ्कटमाधव–** अक्षीणरक्षणो भजेत अनेकपुरुषयुक्तं इमं सङ्ग्रामे, यस्मिन् सर्वाणि बलानि प्रादुर्भवन्ति ।। ९ ।।

**मुद्गल–** **इन्द्रः इमं वाजं** सोमरूपमन्नं **सनेत्** सम्भजेत् । कीदृश इन्द्रः । **अक्षितोतिः** अहिंसितरक्षणः । कदाचिदपि रक्षां न विमुञ्चतीत्यर्थः । कीदृशं वाजम् । **सहस्रिणं** सहस्रसङ्ख्यायुक्तम् । **यस्मिन्** वाजे **विश्वानि** सर्वाणि **पौंस्या** पुंस्त्वानि बलानि वर्तन्ते तादृशं वाजमिति पूर्वत्रान्वयः ।। ९ ।।

**सायण–** **इन्द्रः इमं वाजं** सोमरूपमन्नं **सनेत्** सम्भजेत् । कीदृश इन्द्रः । **अक्षितोतिः** अहिंसितरक्षणः । कदाचिदपि रक्षां न विमुञ्चतीत्यर्थः । कीदृशं वाजम् । **सहस्रिणं** प्रकृतौ विकृतिषु च प्रवर्तमानत्वेन सहस्रसङ्ख्यायुक्तम् । **यस्मिन्** वाजे **विश्वानि** सर्वाणि **पौंस्या** पौंस्यानि पुंस्त्वानि बलानि वर्तन्ते तादृशं वाजमिति पूर्वत्रान्वयः ।

अक्षितोतिः । ननु 'क्षि क्षये' इत्ययं धातुरकर्मकः । तस्य च कर्माभावात् अधिकरणे भावे कर्तरि वा क्तप्रत्ययेन भवितव्यम् । तदिह यदि कर्तर्यधिकरणे वा स्यात् तदा तयोरर्थयोः ण्यत्प्रत्ययस्याविधानात् 'क्षियः' इत्यनुवृत्तौ (पा.सू.६,४,५९) 'निष्ठायामण्यदर्थे' (पा.सू. ६,४,६०) इति दीर्घेण भवितव्यम् । तथा च 'क्षियो दीर्घात्' (पा.सू.८,२,४६) इति निष्ठानत्वे अक्षीण इति स्यात् न तु अक्षित इति । अथ 'नपुंसके भावे क्तः' (पा.सू.३,३,११४) इति भावपरः क्षितशब्दो गृह्यते । तदा तस्य ण्यदर्थत्वेन 'अण्यदर्थे' इति निषेधात् दीर्घनत्वयोरभावात् क्षितमिति सिध्यति । तदा तु नञ्तत्पुरुषः प्रकृतेन नान्वेतीति न विद्यते क्षितमत्रेति बहुव्रीहिणैव

भवितव्यम् । तथा च 'नञ्सुभ्याम्' (पा.सू.६,२,१७२) इत्युत्तरपदान्तोदात्तत्वं स्यात् । पुनः ऊतिशब्देन बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वेन स एव स्वरस्तिष्ठेदिति अभिमतमाद्युदात्तत्वं न सिध्येदिति । सत्यम् । अत एवात्र क्षिधातुरन्तर्भावितण्यर्थो गृह्यते । तेन सकर्मकत्वात् कर्मण्येषा निष्ठा । ततश्च 'अण्यदर्थे' इति निषेधात् दीर्घो निष्ठानत्वं च न भविष्यति । तथा च नञ्तत्पुरुषे न क्षिता अक्षिता अक्षयिता इत्यर्थः । तत्र चाव्ययपूर्वपदप्रकृतिस्वरत्वेन नञ उदात्तत्वम् । पुनः ऊतिपदेन बहुव्रीहौ स एव स्वरः स्थास्यतीति न कोऽपि दोषः। 'रि क्षि चिरि जिरि दाश दृ जिघांसायाम्' इति क्षिणोतेर्हिंसार्थस्य वा कर्मणि निष्ठा । तथा चाहिंसितोतिरित्यर्थे उक्तक्रमेण स्वरः सिध्यतीति न दोषः ।

सनेत् । 'वन षण सम्भक्तौ' । भौवादिकः । वाजम् । वृषादित्वादाद्युदात्तः । इन्द्रः । रनो नित्वादाद्युदात्तः । सहस्रिणम् । सहस्रमस्यास्ति । 'अत इनिठनौ' (पा.सू.५,२,११५) । प्रत्ययस्वरः । विश्वानि । विशेः क्वनि (उ.सू.१,१४९) नित्त्वादाद्युदात्तः । पुंसः कर्माणि पौंस्यानि । ब्राह्मणादेराकृतिगणत्वात् 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' (पा.सू.५,१,३९) इत्यादिना डादेशः । ननु 'स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्' (पा.सू.४,१,८७) इत्यनेन 'धान्यानां भवने क्षेत्रे खञ्' (पा.सू.५,२,१) इत्येतत्पर्यन्तेष्वपत्याद्यर्थेषु नञ्स्नञोर्विधानात्, यथा पुंसोऽपत्यं पौंस्नः पुंस आगतः पौंस्नः इत्यादि, तद्वत् पुंसो भावः कर्म वेत्यस्मिन्नप्यर्थे ष्यञं बाधित्वा पौंस्नानि इत्येव भवितव्यम् । कथमुच्यते पौंस्यानीति । उच्यते– 'आ च त्वात्' (पा.सू.५,११२०) इति सूत्रे त्वात् इत्यवधिनिर्देशात् 'ब्रह्मणस्त्वः' (पा.सू.५,१,१३६) इत्येतत्पर्यन्तैः इमनिजादिभिः प्रत्ययैः सह त्वतलोः समावेशः । एवं तत्रैव चशब्दात् नञ्स्नञोरपि ष्यञादिभिः समावेश एव, न बाध्यबाधकभावः ।। ८ ।।

**सिद्धाञ्जनम्–** नवमीमृचमाह– **अक्षितोतिः** अक्षिता अक्षीणा ऊतिः वृद्धिः यस्य स **इन्द्रः इमं** अस्माभिः अर्प्यमाणं **सहस्रिणं** सहस्रयुक्तं **वाजं** (सोमात्मकं) समृद्धिविशेषं **सनेत्** सम्भजेत् । **यस्मिन्** वाजे **विश्वानि** समस्तानि **पौंस्या** पुंस्त्वानि पुंसः कर्माणि कर्मोपलक्षितानि बलानि वर्तन्त इत्यर्थः ।।

अक्षितोतिः– अहिंसितरक्षण इति सायणव्याख्या । क्षि क्षये इत्यकर्मको धातुः, तस्मान्नपुंसके भावे क्तः । एवं क्षितं इति रूपम् । न विद्यते क्षितं क्षय अत्रेति अक्षिता ऊतिः वृद्धिः यस्येति

विग्रहः । इन्द्रस्य वृद्धिः प्रस्तुता स्मार्या । तस्मादूतिः वृद्धिरेवात्र न तु रक्षा । तस्येन्द्रस्य वृद्धेर्न क्षयो भवति । सहस्रिणम्- वाजविशेषणम् । बहुविधबलगुणसम्पन्नः समृद्धिवाचको वाजः इह सोमात्मको भवति । सोऽर्प्यमाण इन्द्रस्वीकारक्षमो भवति । तेन शतक्रतोरिन्द्रस्य विश्वेषां कर्मणां निर्वाहः स्यात् । 'यस्मिन्' इन्द्रे 'विश्वानि पौंस्या' इति एवं प्राहुः । उभयथाऽपि सम्भवं पश्यामः । यस्मिन् 'वाजे' समृद्धौ सोमरसात्मिकायां विश्वानि 'पौंस्या' बलानि प्रादुर्भवन्ति । यस्मिन् इन्द्रे विश्वानि कर्माणि आयत्तानि इति च समञ्जसम् ।। ९ ।।

## ऋक्संहिता पदपाठसहिता

**मानो मर्ता अभिद्रुहन्तनूनामिन्द्र गिर्वणः । ईशानो यवयावधम् ।। १० ।।**

मा । नः । मर्ताः । अभि । द्रुहन् । तनूनाम् । इन्द्र । गिर्वणः । ईशानः । यवय । वधम् ।।

## ऋग्भाष्यम्

**मामर्ता नस्तनूनां तु द्रोग्धारः स्युः कथञ्चन ।**
**ईशोऽस्यपाकुरुवधं तेन नो मुक्तिदानतः ।**
**मानुषेभ्यस्तनूनां च नैव नः स्युर्विपत्तयः ।**
**कालेन दैवतः प्राप्तः स्याददेहत्वतो वधः ।। १० ।।**

**ऋग्भाष्यटीका– मानः** ।। मामर्ताः । हे **गिर्वणः इन्द्र मर्ताः** मर्त्याः **नः** अस्माकं **तनूनां** शरीरेभ्यो **माभिद्रुहन्** द्रोग्धारः कथंचन मा स्युः । कथम् । येन कारणेन त्वं **ईशानः** ईशोऽसि तेन **नः** अस्माकं **वधं यवय** अपगमय अपाकुरु । संसारे वधाभावोऽसम्भवीत्यतो मुक्तिदानत इति शेषमाह । ऋचं प्रकारान्तरेण व्याख्याति– **मानुषेभ्य इति** ।। मर्ता नस्तनूनां माभिद्रुहन् अस्मत्तनूनां मानुषेभ्यो विपत्तयो नैव स्युः । वरमीशानस्त्वं वधं यवय प्रापय । कालेन दैवतस्त्वत्तः प्राप्तोऽदेहत्वतो देहाभावरूपेण वधः स्यात् । दुर्जनैः क्रियमाणादुपद्रवाद्देवाधीनं मरणमेव वरम् । अतस्तत्परिहारं कुर्वित्याशयः ।। १० ।।

**मन्त्रार्थमञ्जरी–** (हे) गिर्वणः, प्राग्वत् इन्द्र । मर्ताः, मर्त्याः । नः, अस्माकम् । तनूनाम्, तनूभ्यः, व्यत्ययेन षष्ठी (चतुर्थ्यर्थे बहुलं छन्दसि' इति वा षष्ठी), शरीरेभ्यः । मा अभि द्रुहन्, द्रोग्धारो मा भूवन् ।। (येन) कारणेन । (त्वम्) ईशानः, समर्थः । (तेन) कारणेन । (नः)

अस्माकम् । वधम् । यवय, अपगमय, 'यु मिश्रणामिश्रणयोः' इति धातोः । यद्वा– नः तनूनाम्, अस्मच्छरीराणाम् । मर्ताः । मा अभि द्रुहन्, मनुष्येभ्यो विपत्तयो नैव स्युः । (वरम्) ईशानः । (त्वम्) वधम् । यवय, प्रापय ।। दुर्जनैः क्रियमाणादुपद्रवाद्दैवाधीनं मरणमेव वरम्, अतस्तत्परिहारं कुर्वित्याशयः ।। १० ।।

**स्कन्द– मा नः** अस्माकम् मनुष्या **अभिदुहन्** द्रोहं कार्षुः । **तनूनां** शरीराणां **हे इन्द्र!** गिर्वणः! स्तुतिभिः सम्भजनीय स्तुतीनां वा सम्भक्तः! **ईशानः** प्रभुस्त्वम् । यवय यौति पृथग्भावे । पृथक् कुरु अपनयास्मत्तः **वधं** हिंसां हन्तारं वा ।। १० ।।

**वेङ्कटमाधव–** मा अभिद्रुह्यन्तु इन्द्र! अस्माकमङ्गेभ्यः शत्रवः । गीर्भिर्वननीयः ईश्वरस्त्वं पृथक् कुरु शत्रूणामायुधम् इति ।। १० ।।

**मुद्गल–** हे गिर्वणः! इन्द्र! **मर्ताः** विरोधिनो मनुष्याः **नः** अस्मदीयानां **तनूनां** शरीराणां **मा अभिद्रुहन्** अभितो द्रोहं मा कुर्युः । **ईशानः** समर्थस्त्वं **वधं** वैरिभिः सम्पाद्यमानं यवय अस्मत्तः पृथक्कुरु ।। १० ।।

**सायण– हे गिर्वणः! इन्द्र मर्ताः** विरोधिनो मनुष्याः **नः** अस्मदीयानां **तनूनां** शरीराणां **मा अभिद्रुहन्** अभितो द्रोहं मा कुर्युः । **ईशानः** समर्थस्त्वं **वधं** वैरिभिः सम्पाद्यमानं **यवय** अस्मत्तः पृथक्कुरु ।

'मनुष्याः' इत्यादिषु पञ्चविंशतिसङ्ख्याकेषु मनुष्यनामसु 'मर्ताः व्राताः' (नि.२,३,१३) इति पठितम् । मर्ताः । 'असिहसिमृग्रिण्वामिदमिलूपूधूर्विभ्यस्तन्' (उसू.३,३६६) इति तन् । नित्त्वादाद्युदात्तः । अभि । 'एवमादीनामन्तः' (फि.सू.८२) । द्रुहन् । 'द्रुह जिघांसायाम्' । 'लिङर्थे लेट्' (पा.सू.३,४,७) इति प्रार्थनायां लेट् । तस्य झि । 'झोऽन्तः' (पा.सू.७,१,३) । 'इतश्च लोपः परस्मैपदेषु' (पा.सू.३,४,९७) इति इकारलोपः । शपो लुक् । 'सार्वधातुकमपित्' (पा.सू.१,२,४) इति तिङो ङित्त्वाल्लघूपधगुणाभावः (पा.सू.१,१,५) । तनूनाम् । असामर्थ्यान्न पराङ्गवद्भावः । इन्द्र गिर्वणः । गतम् । ईशानः । धातोरनुदात्तेत्वात् शपो लुकि लसार्वधातुकानुदात्तत्वे धातुस्वर एव शिष्यते । यवय । यौतेर्णिचि 'संज्ञापूर्वको विधिरनित्यः' (परिभा.९३,१)

इति वृद्धिर्न क्रियते । अथवा यौतीति यवः । पचाद्यच् (पा.सू.३,१,१३४) । यवं करोतीत्यर्थे 'तत्करोति तदाचष्टे' (पा.सू.३,१,२६,५-६) इति णिच् । इष्ठवद्भावात् टिलोपः (पा.सू.६,४, १५५,१) । तस्य स्थानिवद्भावात् (पा.सू.१,१,५६) वृद्ध्यभावः । वधम् । 'हनश्च वध;' (पा.सू.३,३,७६) इति भावे अप् । तत्संनियोगशिष्टः स्थानिवद्भावेनान्तोदात्तो वधादेशः । उदात्तनिवृत्तिस्वरेण अपः उदात्तत्वम् ।। १० ।।

**सिद्धाञ्जनम्**– दशमीमृचमाह– **गिर्वणः** स्तुतिभिर्वननीय देव **हे इन्द्र मर्ताः** मनुष्याः **नः** अस्माकं **तनूनां** शरीराणां **मा अभिद्रुहन्** द्रोहं मा कार्षुः । **ईशानः** ईश्वरः त्वं **वधं** नाशं **यवय** पृथक्कुरु ।

मरणवर्मभ्यो विरोधिभ्यः विपत्तिर्मा भूदस्मदीयानां देहानाम् । शरीरगतं 'वधं' अपि पृथक्कर्तुं समर्थ ईश्वरस्त्वम् । अयमृगर्थः । अत्रेदं रहस्यमवधेयम् । तच्च तृतीयपादे निक्षिप्तम् । यौतिः पृथग्भावे तस्माण्णिचि 'यवय' (पृथक्कुरु) इति रूपम् । शरीरस्य नश्वरता इह वधापरपर्याय-हिंसया लक्षिता ।

शरीराद्वधं पृथक्कर्तुमिन्द्र एव प्रभुरित्युक्तम्। सदसतोः अमरणमरणधर्मयोः मिश्रितयोराश्रय-भूताद्देहात् मृत्युलक्षणभूतं सर्वं वधं, वधस्य आपादयितारं वा, मानुषममानुषं वा पृथक्कृत्य अपसारयितुमीश्वर इन्द्रोऽत्र प्रार्थितः ।

।। इति प्रथमाष्टके प्रथमाध्याये दशमो वर्गः ।।

### ।। अथ एकादशो वर्गः ।।

### (सूक्तम् ६)

### ऋक्संहिता पदपाठसहिता

१० मधुच्छन्दा वैश्वामित्रः । १-३ इन्द्रः; ४-६-८-९ मरुतः;
५-७ मरुतः इन्द्रश्च;१० इन्द्रः । गायत्री ।

**युञ्जन्ति ब्रध्नमरुषं चरन्तं परितस्थुषः । रोचन्ते रोचना दिवि ।। १ ।।**
युञ्जन्ति । ब्रध्नम् । अरुषम् । चरन्तम् । परि । तस्थुषः । रोचन्ते । रोचना । दिवि ।।

ऋग्भाष्यम्

**पौंस्यानि वासुदेवस्य ब्रध्नं वृद्धं दिवाकरम् ।**
**अरुणं चरन्तं परितो गिरीन्युञ्जन्ति सर्वदा ।**
**तैरेवान्यानि चन्द्रादिरोचनानि त्रिविष्टपे ।**
**रोचयन्ति ........................... ।। १ ।।**

**ऋग्भाष्यटीका– युञ्जन्ति** । दशर्चमेतत्सूक्तम् । तत्र प्रथमा द्वितीया चतुर्थीच मारुत्यः । तृतीया पञ्चमी चैन्द्रमारुत्यौ । शेषाश्चैंद्य इति विभागः । तत्रेश्वरविषये तावद्व्याख्याति– **पौंस्यानीति** ।। यस्मिन्विश्वानि पौंस्येति प्रकृतानि वासुदेवस्य पौंस्यानि **अरुषं** अरुणं वर्णतः । **तस्थुषः** स्थावरान् गिरीन् परितश्चरन्तं **ब्रध्नं** दिवाकरम् । कथम् । वृद्धं वृद्धत्वेन ब्रध्नशब्दवाच्यम् । वृधुवृद्धावित्यस्यैतद्रूपम् । अत एव महन्नामसु पाठः । सर्वदा **युञ्जन्ति** नियुञ्जते प्रवर्तयन्ति । किं चैतैरेव पौंस्यैर्निमित्तैरन्यानि दिवाकराचन्द्रादीनि **रोचनानि** ज्योतींषि **दिवि** त्रिविष्टपे **रोचन्ते** दीप्यन्ते रोचयन्ति चान्यान् ।। १ ।।

**मन्त्रार्थमञ्जरी–** अथ षष्ठमपि दशर्चं वर्गद्वयात्मकं सूक्तम् । तत्र (आद्यास्तिस्र ऐन्द्यः । चतुर्थी षष्ठ्यष्टमी नवमी च मारुत्यः । पञ्चमी सप्तमी चैन्द्रमारुत्यौ दशमी त्वैन्द्री । इत्यनुक्रमणिकोक्तदेवतानां भाष्यकारैर्दूषितत्वात्तदुक्तदिशा) आद्या द्वितीया चतुर्थी च मारुत्यः, मरुच्छब्दितास्त्वत्र सर्वे ब्रह्मादिदेवा ध्येयाः । तृतीया पञ्चमी चैन्द्रमारुत्यौ । शेषाश्चैन्द्यः (६।७।८।९।१०) इति विभागः । (ब्रह्मादिसर्वदेवाः) इति ग्राह्यम् । अरुषम्, अरुणवर्णम् । तस्थुषः, स्थावरान्गिरीन् । परि, परितः । चरन्तम् । ब्रध्नम्, वृद्धत्वेन ब्रध्नशब्दवाच्यं दिवाकरम्, 'वृधु वृद्धौ' इत्यतो नक्प्रत्यये धातोरमागमे यणादेशे वकारस्य बकारे 'ब्रध्न' इति सिद्धत्वात् । युञ्जन्ति, नियुञ्जते, प्रवर्तयन्तीति यावत् । किं च, (तैरेव देवैर्दिवाकरादन्यानि निशाकरादीनि) रोचना, रोचनानि, ज्योतींषि । दिवि, त्रिविष्टपे । रोचन्ते, दीप्यन्ते, अन्यान्रोचयन्ति चेत्यर्थः ।। विष्णुपक्षे पूर्वस्मात् मन्त्रात्पौंस्यपदं मण्डूकप्लुत्यानुवृत्य (यस्य), हरेः । (पौंस्यानि), सामर्थ्यानि । अरुषम् । ब्रध्नम्, सूर्यम् । तस्थुषः परिचरन्तम् । युञ्जन्ति, नियुञ्जते । (तैरेव) (पौंस्यैः) निमित्तैः । रोचना, रोचनानि । दिवि । रोचन्ते, दीप्यन्ते, रोचयन्ति चान्यानिति, 'रुचदीपने' ।। १ ।।
इति प्रथमा मारुती ।। १ ।।

**स्कन्द–** योगः सम्बन्धः । **युञ्जन्ति** सम्बन्धयन्ति । केन । सामर्थ्यात् स्तुतिभिर्हविर्भिश्च । के । सामर्थ्यात् स्तोतारः यष्टारश्च । **ब्रध्नं** महन्नामैतत् (तु.निघ.३,३) । महान्तमिन्द्रम् । **अरुषं** रुषातिर्दीप्त्यर्थः । 'रुशद्वत्सा रुशती' (ऋ.१,११३,२) इति प्रदर्शनात् । तस्य वा रोचतेर्वा दीप्तिकर्मण आङ्पूर्वस्येदं रूपम् । आङश्च ह्रस्वत्वम् । आरुशं आरोचमानं वा । दीप्तमित्यर्थः । 'अरुषति । आर्यति' (निघ.२,१४) इति गतिकर्मसु पाठादरुषतेर्गत्यर्थस्यारुष-शब्दो गन्तृवचनो वा । शत्रून् यज्ञान् वा प्रति गन्तारम् । **चरन्तं परि** सर्वतो गच्छन्तम् । यत्र यत्रेन्द्रो गच्छति तत्र तमैनं स्तोतारो यष्टारश्च स्तुवन्ति यजन्ति चेत्यर्थः । अथवा युञ्जन्तीति युजिः शुद्धोऽपि सामर्थ्यात् सोपसर्गार्थे द्रष्टव्यः । स्वार्थसिद्धौ स्तोतारो यष्टारश्चैनं नियुञ्जते महान्तं दीप्तं चेन्द्रं सर्वतो गच्छन्तम् । यत्र यत्र गच्छति तत्र तत्रैनं मनुष्या इदमिदं च नः कुर्वित्यर्थः याचन्तः इत्यर्थः ।

अथवा रथोऽत्र सामर्थ्याद् युज्यमानः । नेन्द्रं युञ्जन्ति । इन्द्रस्य रथं ब्रध्नमरुषं च सर्वतो गन्तारं गच्छन्तम् । के । सामर्थ्यात् सारथयो मातलिप्रभृतयः अन्येऽस्य रथं युञ्जन्ति । स न स्वयं युनक्ति ब्रध्नादिगुणम् । युञ्जन्ति नः किञ्चिदिति । एवं गुणकीर्तनादिन्द्रस्येयं स्तुतिः । किञ्च **तस्थुषः रोचन्ते रोचना दिवि** तस्थुषः इति षष्ठीनिर्देशात् प्रभावेनेति वाक्यशेषः । स्थितस्य व्याप्रियमाणस्येन्द्रस्य प्रभावेन **रोचन्ते** दीप्यन्ते **रोचना** दीप्तिस्वभावकानि नक्षत्राणि **दिवि** द्युलोके । कथं पुनरिन्द्रप्रभावेन नक्षत्राणि दीप्यन्ते । उच्यते । वक्ष्यते– 'इन्द्रो दीर्घाय चक्षस आ सूर्यं रोहयद्दिवि' (ऋ १,७,३) इति । सूर्यस्य प्रभावश्च सुषुम्नो नाम रश्मिः । तत्सम्बन्धा-च्चन्द्रमा नक्षत्राणि च दीप्यन्ते । अथवा युजिरुत्पूर्वार्थे अन्तर्णीतण्यर्थश्च द्रष्टव्यः । उद्योजयन्त्युत्साहयन्ति वृष्टिकर्मणि ब्रध्नमरुषं चेन्द्रम् । किं कुर्वन्तम् । उच्यते । चरन्तम् । परि तस्थुषः । परिशब्दो लक्षणे कर्मप्रवचनीयः । तस्थुष इत्यनेन च सम्बध्यते । तस्थिवस्शब्दः स्थावरवचनः । गच्छन्तं स्थावराणि प्रति । स्थावरग्रहणं चात्र जङ्गमस्यापि प्रदर्शनार्थम् । सोमपानायासुरयुद्धलोलुपतया जङ्गस्थावरात्मकं कृत्स्नं जगत् परिभ्रमन्तमित्यर्थः । के उद्योजयन्ति । उच्यते । रोचन्ते रोचना दिवि । एकवाक्यताप्रसिद्ध्यर्थं यत्तच्छब्दावध्याहार्यौ । ये आदित्यरश्मयो रोचन्ते रोचना दिवि ते आदित्यरश्मयो हि प्रावृडारम्भे रसदातारः । ते रसपानर्पयन्तः उद्योजयन्तीन्द्रं वृष्टिकर्मणि । एतस्मिंस्त्वर्थे रश्मिविषयत्वाद् रोचनेत्येतत् पदमूष्मान्तं न्याय्यं

दृश्यते । न स्वरान्तम् । अतो नैष पदकाराभिप्रायः । ज्योतिष्ट्वापेक्षं वा रश्मीनां नपुंसकत्वम् । अध्वर्यवस्त्वादित्यदेवतामृचं मन्यन्ते । कथम् । एतेषां हि विनियोजने 'असौ' इत्युक्तोऽश्वोऽनयाऽऽदित्यरूपेणोच्यते । कथमवगम्यते । श्रुतेः । एवं हि श्रुतिर्भवति 'युञ्जन्ति ब्रध्नमरुषमिति । असौ वा आदित्यो ब्रध्नो अरुषः । अमुमेवास्मा आदित्यं युनक्ति स्वर्गस्य लोकस्य समष्ट्यै' (माश.१३,२,६,१) इति । तस्मादादित्यदेवतेयमिति । तन्न । तत्रापि विनियोगवशान्नियुज्यमानोऽश्वो ब्रध्नोऽरुषश्चोच्यते । भक्तिमात्रं तु श्रुतिः । अपि च यदि श्रुतिबलात् तत्रादित्यो देवता, तथा भवतु नाम । इह त्वैन्द्रप्रकरणे समाम्नानात् ब्रध्नारुषयोश्चेन्द्रेऽपि सम्भवात् परस्यां चर्चि 'अस्य' शब्देनानुवादात् । तेनेहादिष्टस्य ब्रध्नस्यान्वादेशात् तस्याश्चर्चो हरिसम्बन्धादैन्द्रताया असन्दिग्धत्वादैन्द्रत्वमेवास्या ऋच इति ।। १ ।।

**वेङ्कटमाधव–** युञ्जन्ति महान्तम् आरोचमानं दिवि चरन्तं परि तस्थिवांसो देवा वा लोका वा । रोचन्ते च रोचनानि नक्षत्राणीन्द्रतेजसा सन्धुक्षितानि । अभत्वेऽपि प्रसारणमन्यत्रापि दृष्टम् ।। १ ।।

**मुद्गल–** ऐन्द्रः । 'आदह' इत्येतां चतुर्थीमारभ्य षड्चो मारुत्यः । तासु मध्ये 'वीळु चित्,' 'इन्द्रेण' इत्येते द्वे ऋचौ मारुत्यौ सत्यावैन्द्र्यावपि भवतः ।

इन्द्रो हि परमैश्वर्ययुतः । परमैश्वर्यं चाग्निवाय्वादित्यनक्षत्ररूपेणावस्थानादुपपद्यते । **ब्रध्नं** आदित्यरूपेणावस्थितं **अरुषं** हिंसकरहिताग्निरूपेणावस्थितं **चरन्तं** वायुरूपेण सर्वतः प्रसरन्तमिन्द्रं **परि तस्थुषः** परितोऽवस्थिता लोकप्रयवर्तिनः प्राणिनः **युञ्जन्ति** स्वकीयकर्मणि देवतात्वेन सम्बद्धं कुर्वन्ति । तस्यैवेन्द्रस्य मूर्तिविशेषभूतानि **रोचना** नक्षत्राणि **दिवि** द्युलोके **रोचन्ते** प्रकाशन्ते ।।

**सायण–** 'सुरूप' इत्यादिषु षट्सूक्तेषु तृतीयस्य 'युञ्जन्ति' इति सूक्तस्य मन्त्रसङ्ख्या ऋषिच्छन्दोदैवतानि विनियोगश्चेत्येते पूर्ववदवगन्तव्याः । दशर्चे तस्मिन् सूक्ते आद्यास्तिस्रोऽन्तिमा चेत्येताश्चतस्र ऐन्द्र्यः । 'आदह' इत्येतां चतुर्थीमारभ्य षड्चो मारुत्यः । तासु मध्ये 'वीळु चित्,' 'इन्द्रेण' इत्येते द्वे ऋचौ मारुत्यौ सत्यावैन्द्र्यावपि भवतः । तदेतत् सर्वमनुक्रमणिकायामुक्तं– 'सुरूपकृत्नुं दशैन्द्रमा तु युञ्जन्त्यादहेत्येताः षण्मारुत्यो वीळु चिदिन्द्रेणेत्यैन्द्र्यौ च' इति । एतस्मिन् सूक्ते 'युञ्जन्ति' इत्यसौ तृचस्तृतीये रात्रिपर्याये ब्राह्मणाच्छंसिनोऽनुरूपः । तथा च

'अतिरात्रे पर्यायाणाम्' इति खण्डे 'योगे योगे तवस्तरं युञ्जन्ति ब्रध्नमरुषम्' (आश्व.श्रौ.६,४) इति सूत्रितम् ।

इन्द्रो हि परमैश्वर्ययुक्तः । परमैश्वर्यं च अग्निवाय्वादित्यनक्षत्ररूपेणावस्थानादुपपद्यते । **ब्रध्नं** आदित्यरूपेणावस्थितम् **अरुषं** हिंसकरहिताग्निरूपेणावस्थितं **चरन्तं** वायुरूपेण सर्वतः प्रसरन्तमिन्द्रं **परि तस्थुषः** परितोऽवस्थिता लोकत्रयवर्तिनः प्राणिनः **युञ्जन्ति** स्वकीये कर्मणि देवतात्वेन सम्बद्धं कुर्वन्ति । तस्यैवेन्द्रस्य मूर्तिविशेषभूतानि **रोचना** रोचनानि नक्षत्राणि **दिवि** द्युलोके **रोचन्ते** प्रकाशन्ते । अस्य मन्त्रस्योक्तार्थपरत्वं ब्राह्मणान्तरे व्याख्यातं– 'युञ्जन्ति ब्रध्नमित्याह । असौ वा आदित्यो ब्रध्नः । आदित्यमेवास्मै युनक्ति । अरुषमित्याह । अग्निर्वा अरुषः । अग्निमेवास्मै युनक्ति । चरन्तमित्याह । वायुर्वै चरन् । वायुमेवास्मै युनक्ति । परि तस्थुष इत्याह । इमे वै लोकाः परि तस्थुषः । इमानेवास्मै लोकान्युनक्ति । रोचन्ते रोचना दिवीत्याह । नक्षत्राणि वै रोचना दिवि । नक्षत्राण्येवास्मै रोचयति' (तै.ब्रा.३,९,४,१-२) इति । पञ्चविंशतिसङ्ख्याकेषु महन्नामसु 'महः ब्रध्नः' (नि.३,३,२) इति पठितम् । आदित्यस्यापि महात्त्वादेव ब्रध्नत्वम् ।

युञ्जन्ति । अन्तेः प्रत्ययस्वरेणाद्युदात्तत्वम् । ब्रध्नम् । प्रातिपदिकान्तोदात्तः । अरुषम् । 'उष रुष रिष हिंसार्थाः' रोषन्तीति रुषा हिंसकाः । 'इगुपधज्ञाप्रीकिरः कः' (पा.सू.३,१,१३५) इति कः । प्रत्ययस्वरेणोदात्तः । न सन्ति रुषा यस्य असौ अरुषः । 'नञ्सुभ्याम्' (पा.सू. ६,२,१७२) इत्युत्तरपदान्तोदात्तत्वम् । 'अमि पूर्वः' (पा.सू.६,१,१०७) इति पूर्वरूपे 'एकादेश उदात्तेनोदात्तः' (पा.सू.८,२,५) इत्युदात्तत्वम् । चरन्तम् । शपः पित्वादनुदात्तत्वम् । शतुश्च लसार्वधातुकस्वरेण धातुस्वर एव शिष्यते । तस्थुषः । तिष्ठतेर्लिटः क्वसुरादेशः (पा.सू. ३,२,१०७) । 'वस्वेकाजाद्घसाम्' (पा.सू.७,२,६७) इति इटमन्तरङ्गमपि बाधित्वा 'सम्प्रसारणं सम्प्रसारणाश्रयं च बलीयः' (पा.म.६,१,१७,२) इति शसि परतो भत्वात् (पा.सू.१,४,१८) 'वसोः सम्प्रसारणम्' (पा.सू.६,४,१३१) । परपूर्वत्वम् । 'आदेशप्रत्यययोः' (पा.सू.८,३,५९) इति षत्वम् । वसोः प्रत्ययस्वरेणोदात्तत्वम् । रोचन्ते । तिङो लसार्वधातुकानुदात्तत्वम् । शपः पित्त्वादनुदात्तत्वम् । धातुस्वर एव । रोचना । 'अनुदात्तेतश्च हलादेः' (पा.सू.३,२,१४९) इति युच् । 'युवोरनाकौ' (पा.सू.७,१,१) इत्यनादेशः । 'चितः' (पा.सू.६,१,१६३) इत्यन्तोदात्तत्वम् । दिवि । 'ऊडिदम्' (पा.सू.६,१,१७१) इत्यादिना विभक्तेरुदात्तत्वम् ॥ १ ॥

**सिद्धाञ्जनम्–** द्वितीयानुवाकस्य तृतीयं 'युञ्जन्ति' इति दशर्चं सूक्तम् । ऋषिच्छन्दोदैवतानि पूर्ववदवगन्तव्यानि। अस्मिन् सूक्ते 'आ दह' इत्येतां चतुर्थीमारभ्य षड्टचो मारुत्यः । तासु मध्ये 'वीळुचित्' 'इन्द्रेण' इत्येते वे ऋचौ मारुत्यौ सत्यौ ऐन्द्र्यावपि भवतः । इदं सर्वमनुक्रमणिकोक्तमुदाहृतं सायणभाष्ये । परमार्थपरेऽस्मिन् व्याख्याने कर्मसु विनियोगः सविस्तरं नोदाह्रियते । आवश्यकस्थलेषु ईषन्मात्रं सूच्यते ।।

तत्र प्रथमामृचमाह– **ब्रध्नं** महान्तं **अरुषं** आरोचमानं **चरन्तं** गच्छन्तं (न तु तिष्ठन्तम्) **परि तस्थुषः** परितः तस्थिवांसः स्थिताः युञ्जन्ति सम्बन्धयन्ति । दिवि द्युलोके **रोचना** रोचनानि ज्योतींषि **रोचन्ते** दीप्तानि भवन्तीत्यर्थः ।

प्रथमं केवलपदार्थो दत्तः। तात्पर्यानुसारेण पदार्थो दास्यते । ततः प्राक्, ईषन्मात्रं पूर्वेषां व्याख्या पर्यालोचनीया, येन वक्ष्यमाणस्य तात्पर्यस्योपपत्तिः सुगमा स्यात् । ब्रध्नः-इदं पदं महन्नामसु पठितम् । ब्रध्नं महान्तमिति पदार्थमनुक्त्वा आदित्य इति सायणव्याख्या । सर्वत्र सामान्यतः पदार्थं उक्त्वैव सन्दर्भमनुसृत्य तात्पर्यमाविष्करोति, अर्थान्तरं वा ब्रवीति सायणः । यथावा 'ब्रध्नस्य महतोऽग्नेः' (३-७-४) 'ब्रध्नं महान्तं बभ्रुं अश्वं (७-४-३) 'अधि ब्रध्नस्य विस्तृतस्य (अश्मनः) उपरि (८-४-६३) 'उद्यद् ब्रध्नस्य विष्टपं महत् (आदित्यस्य) स्थानम् (८-६९-७) 'ब्रध्नो यामः, महान् रथः' (१०-२०-९) । अन्तिमोदाहरणे याम इति विशेष्यं मन्त्र एव पठितम् । अत्र युञ्जन्तीत्यस्यामृचि अन्यत्र क्वचिच्च आदित्यपर्यायतया ब्रध्नपदं गृहीतं सायणीयव्याख्यायाम् । 'ब्रध्नमादित्यं अरुषमग्निं चरन्तं वायुम्' इति ब्राह्मणवाक्यबलेन तथा कृतम् । अनुक्रमणिकायामयं ऐन्द्रो मन्त्र इत्युक्तम्। तर्हि कथमनेन ब्राह्मणवाक्यं सङ्गच्छेत? इन्द्र एव आदित्याग्निवायुरूपेणावस्थित इत्युपपादितम् ।

ब्रध्नम्–विकल्पबहुला व्युत्पत्तिः 'बन्धेर्ब्रधिबुधी च' इत्युणादिसूत्रेण नक्प्रत्ययः बन्धेर्ब्रधिरादेशश्चेत्येके ।

अरुषम्– हिंसार्थाद् रुषधातोर्निष्पन्नं अहिंसकं अग्निमित्याचष्टे सायणः । बहुषु स्थलेषु आरोचमानमित्येव भवत्यन्यव्याख्या । आङ्पूर्वकाद् दीप्त्यर्थकाद् रुशतेर्निष्पादयति स्कन्दस्वामी, आहो ह्रस्वत्वं सकारस्य षश्च भवतः । अरुषपदस्य आरोचमानत्वं प्रायः तत्र सर्वेऽपि व्याख्यातारोऽभ्युपगच्छन्ति ।

तस्थुषः– विभक्तिव्यत्ययेन तस्थिवांस इति प्रथमाबहुवचनान्तं पदं सायणव्याख्यानुसारतः । युक्तमेतत् ।

अथ अर्थविचारः समासतः क्रियते । युञ्जन्ति युगयुगन्धरयोजनेन रथं युक्तं सुसम्बद्धं कुर्वन्ति । न च रथो विशालो रोचमानश्च भवति । सामर्थ्यात् 'चरन्तं' रथम् । परितोऽवस्थिताः नित्यसूरयस्तत्र स्थिराः चरन्तं रथं सन्नद्धं कुर्वन्ति । तथा रथसन्नाहे क्रियमाणे सति द्युलोके ज्योतिर्मयानि ऊर्ध्वस्थानानि भुवनानि वा रोचमानानि लक्ष्यन्ते। अन्तरर्थानुसारेण तात्पर्यं पुरस्ताद्वक्ष्यते ।। १ ।।

ऋक्संहिता पदपाठसहिता

**युञ्जन्त्यस्य काम्या हरी विपक्षसा रथे । शोणा धृष्णू नृवाहसा ।। २ ।।**

युञ्जन्ति । अस्य । काम्या । हरी इति । विऽपक्षसा । रथे । शोणा । धृष्णू इति । नृऽवाहसा ।।

ऋग्भाष्यम्

**.......... हरी चास्य मनोबुद्धी स्वशक्तयः ।**
**युञ्जन्त्यधिगुणत्वेन काम्यावश्वावथापि वा ।**
**विशिष्टपक्षसंयुक्ताविव क्षिप्रतरौ सदा ।**
**रथे देहेऽपि वा देवाः स्वमनोबुद्धिमेव च ।**
**अस्य देहे प्रयुञ्जन्ति सूर्यादीन्स्थापयन्ति च ।**
**सूर्यादिस्थापकत्वं च ब्रह्मादीनां भवेत्सदा ।**
**शोणौ च शमणौ प्रोक्तौ सुखप्राप्तौ यतस्सदा ।**
**श्यामौ मूर्धनि शोणौच शक्राश्वावग्रगौ स्मृतौ ।**
**धृष्टौ नृन्प्रति तं वेशं वहंतौ तावुभावपि ।। २ ।।**

**ऋग्भाष्यटीका**– **युञ्जन्त्यस्य** । हरीच । प्रकृता वासुदेवस्य स्वशक्तयः स्वरूपभूताः शक्तयोऽस्य **हरी** एतदधीने मनोबुद्धी **रथे** भक्तानां देहे **युञ्जन्ति** योजयन्ति । तान्मनस्विनो बुद्धिमतश्च कुर्वन्ति । एतामृचं मरुद्विषये व्याख्याति– **अपि वेति** ।। देवा मरुतोऽपि वा **अस्य** इन्द्रस्य हरी अश्वौ तस्यैव **रथे युञ्जन्ति** योजयन्ति । अथवा देवाः स्वीयं मनोबुद्धिं चास्य

जीवजातस्य ये देहे युञ्जन्ति तत्प्रेरणाय प्रयुञ्जते । पूर्वामप्यृचं मरुद्विषयतया तात्पर्यतो व्याचष्टे– **सूर्यादीनिति** ।। वासुदेवस्य पौंस्यानीति स्थाने देवा इति वक्तव्यम् । समानमन्यत् । सूर्यादि-स्थापकत्वं किं सर्वदेवतासु प्रतिपत्तव्यं नेत्याह– **सूर्यादीति** ।। अन्येषु लक्षणया प्रयोग इति भावः । ब्रह्मादीनामित्युक्त्या मरुच्छब्दः सर्वदेवतावचनः प्रतिपत्तव्यः । द्वितीयस्यामृचि काम्यादि-विशेषणानि मनोबुद्ध्योरश्वयोश्च योजयति– **अधिगुणत्वेनेत्यादिना** । अधिगुणत्वं काम्यत्वे हेतुर्नतु शब्दार्थः । विशिष्टौ पक्षौ ययोस्तौ विपक्षौ । असम्भवात् गौण्या वृत्त्या योजयति– **विशिष्टेति** ।। पक्षिणाविति शेषः । शमणावित्यस्यैव विवरणं सुखप्राप्तौ यतः सदेति । अणतेः पचाद्यच् । शं सुखमणौ प्राप्तौ शमणौ । तावेव शोणौ । शंशब्दसमानार्थः शशब्दः अकारस्योकारः । तस्यार्थः सदेति । नन्वस्तु मनोबुद्ध्योरिदं व्याख्यानमश्वयोस्तु शोणत्वं प्रसिद्धमेव किं न स्यादित्यत आह– **श्यामाविति** ।। यतः शक्राश्वौ श्यामौ प्रमितौ अतोऽसम्भवाद्योगस्तत्राप्यनुसर्तव्य एव । प्रकारान्तरेण शोणशब्दमश्वयोर्व्याचष्टे– **मूर्धनीति** ।। उत्तमाङ्गसम्बन्धिना गुणेन लक्षणया शोणा-वुच्येते । नन्विन्द्रस्य सहस्राश्वत्वात् द्वयोरेवाश्वयोर्ग्रहणं कस्मादित्यत आह– **अग्रगाविति** ।। प्राधान्यात् द्वयोरेव ग्रहणमिति भावः । **धृष्णू** धृष्टौ वियातौ । नृन्प्रतीत्यनेन नृवाहसावित्येतत् नृन्प्रति वहंताविति नरं तमीशमिन्द्रं विष्णुं वा वहन्ताविति च द्वेधा व्याख्यातम् । तावुभावपीति मनोबुद्धी अश्वौ चेत्यर्थः । काम्यावित्यादौ सर्वत्रेदं सम्बध्यते ।। २ ।।

**मन्त्रार्थमञ्जरी–** (ब्रह्मादिदेवाः) (प्रकृतविष्णुपौंस्यानि) वा । अस्य, इन्द्रस्य । रथे । काम्या, काम्यौ, गुणाधिकत्वेन कमनीयौ । विपक्षसा, विपक्षसौ, विशिष्टौ पक्षौ ययोस्तौ विपक्षौ, विपक्षावेव विपक्षसा, विशिष्टपक्षयुक्तपक्षिणाविव शीघ्रगतिमन्तावित्यर्थः । शोणा, शोणौ, श्यामवर्णत्वेऽप्यग्रगाम्यश्वयोर्मूर्ध्नि शोणत्वसम्बन्धाल्लक्षणया 'शोणौ' इत्युच्यमानौ । धृष्णू, धृष्टौ । नृवाहसा, नृवाहसौ, नृन्प्रति वहन्ताविति वा नरमिन्द्रं वहन्ताविति वा नृवाहसौ । हरी, इन्द्ररथाग्र-गामिनावश्वौ । युञ्जन्ति, योजयन्ति प्रवर्तयन्तीति यावत् ।। यद्वा (देवाः), (प्रकृतविष्णुपौंस्यानि) वा । अस्य, भक्तजातस्य । रथे, देहे । काम्या, गुणाधिकत्वेन काम्यौ । विपक्षसा, विपक्षसौ, क्षिप्रगामिनौ । शोणा, शोणौ, सुखं प्राप्तौ, शम्शब्दपर्याये शशब्द उपपदे 'अण गतौ' इत्यतः पचाद्यच्प्रत्यये धात्वकारस्योकारे 'शोण' इति रूपसिद्धेः, अव्याकुलाविति यावत् । धृष्णू, धृष्टौ धैर्ययुक्तौ । नृवाहसा, नृवाहसौ, नरमीशं वहन्तौ । हरी, विषयहरणाद्धरिशब्दोक्ते मनोबुद्धी ।

युञ्जन्ति, योजयन्ति प्रवर्तयन्ति, उक्तगुणविशिष्टे स्वकीयमनोबुद्धी भक्तरथे प्रेरणाय युञ्जन्ति । इति ।। २ ।। इति द्वितीया मारुती ।। २ ।।

**स्कन्द–** युञ्जन्ति सारथयः **अस्य** इन्द्रस्य स्वभूतौ काम्या कामयितव्यावृत्कृष्टौ कामसम्पादिनौ वा **हरी** अश्वौ । **विपक्षसा** सव्यदक्षिणभेदेन विभिन्नौ रथपक्षौ ययोस्तौ विपक्षसौ । सकारश्छान्दस उपसर्जनः । पर्यायान्तरं वा पक्षश्शब्दो द्रष्टव्यः । रथस्य सव्यदक्षिणपार्श्वस्थावित्यर्थः । क्व युञ्जन्ति ? रथे । कीदृशौ ? **शोणा** रक्तवर्णौ । **धृष्णू** प्रगल्भौ, अभिभवितारौ शत्रूणाम् । **नृवाहसा** मनुष्यान् प्रति मनुष्याकारस्य वेन्द्रस्य वोढारौ ।। २ ।।

**वेङ्कटमाधव–** युञ्जन्ति अस्य रथे कमनीयौ अश्वौ सत्यदक्षिणयो पार्श्वयोर्युज्यमानौ शोणवर्णौ शत्रूणां घर्षकौ नेतुरस्य वोढारौ देवाः ।। २ ।।

**मुद्गल– अस्य** इन्द्रस्य **रथे हरी** अश्वौ सारथयः **युञ्जन्ति** । कीदृशौ हरी ? **काम्या** कामयितव्यौ । **विपक्षसा** विविधे पक्षसी रथस्य पार्श्वौ ययोरश्वयोस्तौ विपक्षसौ । रथस्य द्वयोः पार्श्वयोर्योजितावित्यर्थः । **शोणा** रक्तवर्णौ **धृष्णू** प्रगल्भौ **नृवाहसा** नृणां पुरुषाणामिन्द्रतत्सारथिप्रमुखानां वोढारौ ।। २ ।।

**सायण– अस्य** ब्रध्नादिशब्दप्रतिपाद्यस्य आदित्यादिमूर्तिभिस्तत्र तत्रावस्थितस्येन्द्रस्य **रथे हरी** एतन्नामानौ द्वावश्वौ सारथयः **युञ्जन्ति** । इन्द्रसम्बन्धिनोरश्वयोर्हरिनामत्वं 'हरी इन्द्रस्य रोहितोऽग्नेः' (नि.१,१५,१) इति पठितत्वात् । कीदृशौ हरी ? **काम्या** कामयितव्यौ । **विपक्षसा** विविधे पक्षसी रथस्य पार्श्वौ ययोरश्वयोस्तौ विपक्षसौ । रथस्य द्वयोः पार्श्वयोर्योजितावित्यर्थः । **शोणा** रक्तवर्णौ **धृष्णू** प्रगल्भौ **नृवाहसा** नृणां पुरुषाणाम् इन्द्रतत्सारथिप्रमुखाणां वोढारौ ।।

अस्य । ब्रध्नम् इत्युक्तस्य परामर्शात् 'इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ' (पा.सू.२,४,३२) इति अश् । शित्वात् (पा.सू.१,१,५५) सर्वादेशोऽनुदात्तः । विभक्तिरनुदात्तैव इति सर्वानुदात्तत्वम् । काम्या । 'कमु कान्तौ' । 'कमेर्णिङ्' (पा.सू.३,१,३०) । कामयतेः 'अचो यत्' (पा.सू.३,१,९७) । तित्स्वरितापवादत्वेन 'यतोऽनावः' (पा.सू.६,१,२१३) इत्याद्यु-

दात्तत्वम् । 'सुपां सुलुक्' (पा.सू.७,१,३९) इति द्विवचनस्य डादेशः । हरतो रथमिति हरी । 'हृषिषि' (उ.सू.४,५५८) इत्यादिना इन् । नित्वादाद्युदात्तः । विपक्षसा । 'पचिवचिभ्यां सुट् च' (उ.सू.४,६५९) इति पचेः असुन् सुडागमश्च । विभिन्ने पक्षसी पार्श्वौ ययोस्तौ । विशब्दो निपातत्वादुदात्तः । पूर्वपदप्रकृतिस्वरेण स एव शिष्यते । द्विवचनस्य डादेशः । रथे । रमन्तेऽस्मिन्निति रथः । 'रमु क्रीडायाम्' । 'हनिकुषिनीरमिकाशिभ्यः क्थन्' (उ.सू.२,१५९) इति क्थन् । कित्त्वात् 'अनुदात्तोपदेश' (पा.सू.६,४,३७) इत्यादिना मकारलोपः । नित्स्वरेणाद्युदात्तः । शोणा । 'शोणृ वर्णगत्योः' गमनकरणत्वात् करणे घञ् । ञित्त्वादाद्युदात्तः । 'सुपां सुलुक्' इति डादेशः । धृष्णू । 'ञिधृषा प्रागल्भ्ये' । 'त्रसिगृधिधृषिक्षिपेः क्नुः' (पा.सू.३,२,१४०) । कित्त्वाद्गुणाभावः । प्रत्ययस्वरः । नृवाहसा । नॄन् वहतः इति वहेः 'वहिहाधाञ्भ्यश्छन्दसि' (उ.सू.४,६६०) इत्यसुन् । 'णित्' (उ.सू.४,६५७) इत्यनुवृत्तेर्वृद्धिः । नित्त्वादाद्युदात्तः कृदुत्तरपदप्रकृतिस्वरत्वेन स एव शिष्यते ।। २ ।।

**सिद्धाञ्जनम्–** द्वितीयामृचमाह– **अस्य हरी** अस्येन्द्रस्य अश्वौ (कर्म) **रथे** ब्रह्मादिगुणविशिष्टे पूर्वोक्ते रथे यञ्जन्ति योजयन्ति रथयुक्तौ विदधते । के ? पूर्वोक्ताः परितः स्थिता (नित्यसूरयो द्युस्थानाः)। कीदृशी हरी ? **काम्या** कमनीयौ कामयितव्यौ वा । अन्यानि हर्योर्विशेषणानि चत्वारि भवन्ति । **विपक्षसा** विपक्षौ वामवामेतरभेदेन विभिन्नौ रथपक्षौ ययोस्तौ, रथस्य पार्श्वद्वये युक्तावित्यर्थः। **शोणा** रक्तवर्णौ,**धृष्णू** धृष्टौ **नृवाहसा** नरं नेतृत्वबलाढ्यं देवं वहन्तौ ( नृपदं देवं मानुषं वा पुरुषं अभिधत्ते इदं बलोपलक्षणम् ।

प्रथमस्यामृचि विशालस्य रोचिष्मत इन्द्ररथस्य सन्नाहः प्रोक्तः। अस्यां तु कमनीययोर्धृष्टयोर्बलवाहयोरिन्द्राश्वयो रथयोग उक्तः । उभयत्रापि कार्यनिर्वाहः पर्यवस्थितैः स्थिरैर्दिविषद्भिः सूरिभिर्भवति । एवं पूर्वाङ्गे साधिते, इन्द्र एवाविर्भवतीति तृतीयस्यां उच्यते । स किं कुर्वन् प्रादुर्भवति ? ।। २ ।।

## ऋक्संहिता पदपाठसहिता

**केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे । समुषद्भिरजायथाः ।। ३ ।।**

केतुम् । कृण्वन् । अकेतवे । पेशः । मर्याः । अपेशसे । सम् । उषत्ऽभिः । अजायथाः ।।

## ऋग्भाष्यम्

**अज्ञाय कुर्वन्सज्ज्ञानं हेमाहेमाय चेश्वर ।**
**उषद्भिः सम्प्रकाशद्भिः शक्तिभिर्व्यक्ततामगाः ।**
**मर्या मरणवन्तोऽपि देवा एवम् ।। ३ ।।**

**ऋग्भाष्यटीका–** **केतुम्** । अज्ञाय । हे इन्द्र ईश्वर त्वं **अकेतवे** अज्ञाय अज्ञस्य **केतुं** सज्ज्ञानं **कृण्वन्** कुर्वन् **अपेशसे** अहेमाय हेमवर्जितस्य **पेशः** हेमच कुर्वन् । **उषद्भिः** वशकान्ता-वित्यस्येदं रूपम् । शकारस्य षकार आधिक्यार्थः । सम्प्रकाशद्भिः सम्प्रकाशमानैः पौंस्यैः शक्तिभिः । सह समजायथाः यज्ञे व्यक्ततामगाः । न केवलं त्वं किन्तु **मर्याः** मरणवन्तो देवाः अप्येवम् । अकेतवे केतुमपेशसे पेशश्च कुर्वन्तः स्वसामर्थ्यैः सह समजायन्तेति ।। ३ ।।

**मन्त्रार्थमञ्जरी–** (हे इन्द्र) ईश्वर । (त्वम्) अकेतवे, अज्ञाय, षष्ठ्यर्थे चतुर्थी, अज्ञस्य । केतुम्, सज्ज्ञानम्, 'केतुः केतश्चितिश्चित्तं मतिः क्रतुर्मनीषा माया' इति चतुर्थे गीताभाष्योक्तेः । कृण्वन्, कुर्वन् । अपेशसे, अपेशसो हेमहीनस्य । पेशः, हेम । (च) (कृण्वन्), कुर्वन् । उषद्भिः, सम्यक्प्रकाशमानैः, 'वश कान्तौ' इत्यतः शतृप्रत्यये 'ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चति पृच्छति भृज्जतीनां ङिति च' इति सम्प्रसारणे पूर्वरूपे शकारस्यातिशयार्थे षकारे 'उषद्भिः' इति सिद्धत्वात् । (पौंस्यैः) इत्यनुवृत्तिः शेषो वा, सामर्थ्यातिशयैः सह । सम् अजायथाः यज्ञे व्यक्ततामगाः । न केवलं त्वम्, किं तु मर्याः मरणवन्तो देवाः । (अपि) अकेतवे केतुम् अपेशसे पेशः (कुर्वन्तः स्वसामर्थ्यैः सह यज्ञे) सम् (अजायन्त) इति ।। ३ ।। इति तृतीयैन्द्रमारुती ।। ३ ।।

**स्कन्द–** 'केतुः' (निघ.३,९) इति प्रज्ञानाम । प्रज्ञां कुर्वन् । **अकेतवे** षष्ठ्यर्थे चतुर्थीयम् । प्रज्ञारहितस्य । पेशः रूपनामैतत् (तु.निघ.३,७) । रूपं च । हे **मर्याः** । व्यत्ययेनात्रैक-वचनस्य स्थाने बहुवचनम् । मर्य मर्त्याकार इन्द्र! **अपेशसे** रूपवर्जितस्य । प्रज्ञारूपे चात्र प्रदर्शनार्थे । यस्य यद्यदभिलषितं तस्य तत्तत् सम्पादयन्नित्यर्थः । **समुषद्भिः** सशब्दः सहार्थे । उषच्छब्दो वश कान्तावित्यस्य कान्तिवचनो न वसः, अर्थासम्भवात् । सह कान्तिभिः त्वं **अजायथाः** जन्मन एव प्रभृति त्वं सर्वस्य सर्वाभिलषितसम्पादी कान्तश्चासीरित्यर्थः । अथवा

माध्यमिकाः स्तनयित्नुलक्षणा वाच उषसः, ताभिः सह त्वमजायथाः । जन्मनः प्रभृति गर्जितेत्यर्थः ॥ ३ ॥

**वेङ्कटमाधव–** रात्रौ स्वपतो गतप्रज्ञस्य प्रज्ञा उदिते इन्द्रे भवति । तमसा तिरोहितरूपाणां गवादीनां रूपं च ज्ञायते । **केतुं कृण्वन्** प्रज्ञानरहिताय **पेशः** च **अपेशसे** समजायथाः त्वं उषोभिः सह । तमिममाश्चर्यं मनुष्याणां निवेदयितुं तान् सम्बोधयन्ति मर्याः! इति ॥ ३ ॥

**मुद्गल–** हे **मर्याः** मनुष्या इदमाश्चर्यं पश्यतेत्यध्याहारः । किमाश्चर्यमिति तदुच्यते । आदित्यरूपोऽयमिन्द्रः **उषद्भिः** दाहकैः रश्मिभिः प्रतिदिनं सम्भूय **अजायथाः** उदपद्यत । किं कुर्वन् । **अकेतवे** रात्रौ निद्राभिभूतत्वेन प्रज्ञानरहिताय प्राणिने । **केतुं कृण्वन्** प्रातः प्रज्ञानं कुर्वन् । **अपेशसे** रूपरहिताय अन्धकारनिवारणेन **पेशः** रूपमभिव्यज्यमानं कुर्वन् ॥ ३ ॥

**सायण– हे मर्याः** मनुष्या इदमाश्चर्यं पश्यतेत्यध्याहारः । किमाश्चर्यमिति तदुच्यते । आदित्यरूपोऽयमिन्द्रः **उषद्भिः** दाहकैः रश्मिभिः प्रतिदिनमुषःकालैर्वा सम्भूय **अजायथाः** उदपद्यत । अथवा सूर्यस्यैवास्तमये मरणमुपचर्य व्यत्ययेन बहुवचनं कृत्वा सम्बोधनं क्रियते । हे मर्य प्रतिदिनं त्वमजायथा इति योज्यम् । किं कुर्वन् । **अकेतवे** रात्रौ निद्राभिभूतत्वेन प्रज्ञानरहिताय प्राणिने **केतुं कृण्वन्** प्रातः प्रज्ञानं कुर्वन् । **अपेशसे** रात्रौ अन्धकारावृतत्वेन अनभिव्यक्तत्वात् रूपरहिताय पदार्थाय प्रातरन्धकारनिवारणेन **पेशः** रूपमभिव्यज्यमानं कुर्वन् । 'पेश इति रूपनाम पिशतेः' (निरु.८,११) इति यास्कः । अकेतवे अपेशसे इति चतुर्थ्यौ षष्ठ्यर्थे दृष्टव्यौ ।

केतुम् । प्रातिपदिकस्वरः । कृण्वन् । कृविहिंसाकरणयोश्च । लटः शत्रादेशः । इदितो नुम् धातोः (पा.सू.७,१,५८) इति नुमागमः । कर्तरि शपि प्राप्ते 'धिन्विकृण्व्योर च' (पा.सू.३,१,८०) इति उप्रत्ययः; तत्संनियोगेन वकारस्य च अकारः । 'अतो लोपः' (पा.सू.६,४,४८) इति अकारलोपः । तस्य स्थानिवद्भावात् पूर्वस्य लघूपधगुणो (पा.सू.७,३,८६) न भवति । अकारस्य प्रत्ययस्वरेणोदात्तत्वम् । अकेतवे । बहुव्रीहौ 'नञ्सुभ्याम्' (पा.सू.६,२,१७२) इत्युत्तरपदान्तोदात्तत्वम् । पेशः । 'नब्विषयस्यानिसन्तस्य' (फि.सू.२६) इत्याद्युदात्तः । मर्याः । 'छन्दसि निष्टर्क्य' (पा.सू.३,१,१२३) इत्यादौ म्रियतेर्निपातः । आमन्त्रितनिघातः (पा.सू.

८,१,१९) । असामर्थ्यात् पूर्वस्य न पराङ्गवद्भावः । अपेशसे । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । सम् । निपात आद्युदात्तः । उषद्भिः । 'उष प्लुष दाहे' । ज्वलद्भिः रश्मिभिः । लटः शत्रादेशे शपि प्राप्ते व्यत्ययेन शः । 'सार्वधातुकमपित्' (पा.सू.१,२,४) इति तस्य ङित्त्वात् लघूपधगुणो न भवति । शस्य प्रत्ययस्वरेणोदात्तत्वम् । उपरि शतुरदुपदेशाल्लसार्वधातुकानुदात्तत्वम् । 'एकादेश उदात्तेनोदात्तः' (पा.सू.८,२,५) । अजायथाः । अजायत इत्यर्थे पुरुषव्यत्यये निघातः ॥

**सिद्धाञ्जनम्–** तृतीयामृचमाह– हे **मर्याः** हे मर्य बलाढ्य, त्वं **अकेतवे** अविद्यमानप्रज्ञानाय तादर्थ्ये चतुर्थी । **केतुं** प्रज्ञानं **कृण्वन्** कुर्वन् **अपेशसे** अविद्यमानरूपाय **पेशः** रूपं (कृण्वन्) सम् सम्भूय **उषद्भिः** प्रज्ञानप्रभातरश्मिभिः **अजायथाः** जातोऽसि प्रज्ञामयानां देवतांशभूतानां सङ्गतानां सहायानां उदयेन त्वं प्रादुरभूरित्यर्थः ।

मर्यः– बलार्थकाः शब्दाः प्रायशो हितार्थकधातुभ्यो निष्पन्ना भवन्ति । दक्षपदं बलार्थे दंशतेः दंसतेः दंसयतेर्वेत्याहुः । शत्रूणां मारयितृत्वात् मर्यः बलवान् । 'स हि क्रतुः स मर्यः' (१-७७-३) इत्यत्र सायणव्याख्याऽपि इममर्थं समर्थयति । अन्यत्र च शतशो मर्यपदं बलद्योतकं प्रयुक्तं लक्षणीयम् । अत्र 'मर्य' इति इन्द्रसम्बोधनम् । रथे सन्नद्धे तत्र अश्वयोर्योगे च साधिते प्रज्ञामयदेवतांशुभिः सम्भूयोदिते, इन्द्रः प्रादुर्भूतः। स प्रसन्नो ऋषेर्दृष्टिगोचरोऽभवदित्यर्थः। तां च दृष्टिं स एव ऋषये ददाति । अत एव 'केतुं कृण्वन्' इत्याह । केतुः अन्तर्बोधाज्जायमानं प्रज्ञाचक्षुः । एवं इन्द्रप्रसादलब्धं प्राज्ञं अन्तश्चक्षुर्नालं स्थैर्येण दिव्यदर्शनेऽवस्थातुम् । तादृशस्य दिव्यदर्शनकर्मणः किमप्यधिकरणं अपेक्षितं भवति । तत्तु नेदं पार्थिवं शरीरं भवितुमर्हति । यथा बाह्यचक्षुषं आधारो बाह्यो देहः, तथा आन्तरस्य प्रज्ञाचक्षुषोऽपि तद्युक्तं शरीरं नियताय आश्रयणाय अवश्यं भवति । तच्च सामान्यतो मानुषे जने पार्थिवदेहे जडीभूतप्रज्ञे मिश्रितं मग्नं निलीनं अत एव अनभिव्यक्तं भवति । तदेव रूपपदलक्षितं सूक्ष्मं दिव्यदृष्टिं योग्यं शरीरं अभिव्यक्तं कुर्वन् प्रकाशोऽभवदिन्द्र इत्यर्थः ।

अथेदमवधातव्यम् । रथो गतिविशेषः दिव्यः विस्तृतो रोचमानश्च भवति । तमधितिष्ठतीन्द्रः । तद्युक्तौ हरी अपि दीप्तौ अश्वौ विशेषतो बलवाहिनी । ऋक्संहितायां इन्द्राश्वगुणवर्णनपरैर्वचनैः

हर्योः स्वरूपं सामान्यतोऽवगन्तुं शक्यम् । इमौ अन्तर्दर्शनशक्तिविशेषौ दिव्यौ प्रज्ञाविभवौ इति बोध्यम्। 'स्तवा हरी सूर्यस्य केतू' (२-१९-६) 'केता' 'द्युक्षा' इत्यपि इन्द्राश्वौ वर्ण्येते। इमौ प्रथमं ऋषेर्हार्दवागात्मना मन्त्रेण युक्तो भूत्वा ततः परं इन्द्राधिष्ठानभूते रथे युक्तौ भवतः। अत एव बहुषु मन्त्रवर्णेषु ब्रह्मयुजो हरी इन्द्रस्य गीतौ । 'आ तिष्ठ वृत्रहन् रथं युक्ता ते ब्रह्मणा हरी' (१-८४-३) 'ब्रह्मणा ते ब्रह्म युजा युनज्मि हरी सखाया' (३-३५-४) 'एहि हरी ब्रह्मयुजा शग्मा वक्षतः सखायम् । गीर्भिः श्रुतं गिर्वणसम् (८-२-२७) ।। 'एवमन्येऽपि भवन्ति मन्त्रवर्णाः, यैर्न केवलं इन्द्राश्वस्वरूपं गूढमगूढं च प्रतिपाद्यते, किंतु इन्द्राश्वप्रसादद्वारा दिव्यदृष्ट्यादिसम्पत्तये महर्षीणां ब्रह्मपदवाच्यमन्त्रात्मा हार्दवागेव साधनमभूदिति अवगम्यते ।

अथेन्द्रप्रादुर्भावात्परं तत्कार्यस्य मरुतां साहाय्यमपेक्षितं भवति । मरुतश्च चण्डवेगानां दीप्तानां धीवृत्तीनां दिव्यगतिविधायिनो देवविशेषाः । दिव्यमनस्साम्राज्यमिन्द्रस्येति वागस्माभिः प्रतिपादितं स्मार्यम् । तत्र परिपक्वस्य ऋषेर्धीप्रवेशात् तद्वृत्तीनां तत्र पुनर्जन्म भवति । इदं च मानुषे व्यष्टौ मरुतां द्वितीयं जन्म । प्रथमं तु सर्वेषां देवानामिव सृष्टौ समष्टौ स्वाधिकाराय भवति । इदं च मरुतां पुनर्जन्म इन्द्रजन्मनः परं भवति । अत एव इन्द्रज्येष्ठा मरुद्गणा इति प्रसिद्धिर्वेदे । इममेवार्थमाह ऋक् चतुर्थी । एवं पूर्वेषां मतमनुसृत्य मरुतां जन्मेत्युक्तम् । वस्तुतस्तु देवकामानां ऋषीणामेव दिव्यत्वप्राप्तये पुनर्जन्म तत् ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**आदहं स्वधामनु पुनर्गर्भत्वमेरिरे । दधाना नाम यज्ञियम् ।। ४ ।।**

आत् । अहं । स्वधाम् । अनुं । पुनः । गर्भऽत्वम् । आऽईरिरे । दधानाः । नाम । यज्ञियम् ।।

## ऋग्भाष्यम्

**.................... हरेर्वशात् ।**
**तदैव सुखमन्वेव पुनर्गूढत्वमापिरे ।**
**स्वेच्छयैव परेशस्य शक्तयो देवता अपि ।**
**यज्ञे वाच्यं दधानाश्च नाम .... ।। ४ ।।**

**ऋग्भाष्यटीका–** आदह ।। हरेर्वशात् । **यज्ञियं** यज्ञे भवं यज्ञे वाच्यं **नाम दधानाः**

परेशस्य शक्तयः । **आत्** अकारवाच्याद्विष्णोर्निमित्तात् । स्वेच्छयेति यावत् । **अह** तदैव यज्ञे व्यक्तत्वादनन्तरमेव **स्वधामनु** सुखमनु सुखेनैव न तु भयेन **पुनर्गर्भत्वं** गूढत्वं **एरिरे** आपिरे आप्ताः । देवता अप्येवम् ।। ४ ।।

**मन्त्रार्थमञ्जरी–** यज्ञियम्, यज्ञे भवम्, यज्ञशब्दाद्भवार्थे घप्रत्यये घस्येयादेशे 'यस्येति च' इत्यलोपे 'यज्ञियम्' इति सिद्धेः यज्ञे वाच्यम् । नाम दधानाः । (हरेः शक्तयः) (देवताः) वा । आत्, अकारवाच्याद्विष्णोर्निमित्तात्, विष्णिवच्छयेति यावत् । 'अह' इति निपातः 'तदा' इत्यर्थे, यज्ञे व्यक्तत्वादनन्तरमेव । स्वधाम् अनु, सुखेनैव, न तु भयेनेत्यर्थः । पुनः । गर्भत्वम्, गूढत्वम् । एरिरे, आपिरे प्राप्ताः ।। ४ ।। इति चतुर्थी मारुती ।। ४ ।।

**स्कन्द–** 'षडादह स्वधामिति मारुत्योऽनन्तरा ऋचः' (बृदे २,१३९) 'सुरूपकृत्नुमित्यैन्द्र-मामेधातिथे:' इत्यैन्द्रत्वे प्राप्तेऽयमपवादः । 'आदह स्वधाम्' इत्येताः षडनन्तराः मरुद्देवताः । 'वीळु चिदारुजत्नुभिः' (ऋ.१,६,५) इत्यस्या देवतान्तरोपदेशात् तद्वर्जमन्या षण्मारुत्यः प्रतीयेरन् तन्निवृत्त्यर्थमनन्तरवचनम् । आत्शब्दोऽथशब्दपर्याय आनन्तर्ये । अह इति विनिग्रहार्थीय एवशब्दार्थे । **स्वधां** इति स्वधाशब्द उदकनाम (तु.निघ. १,१२) । **अनु** इति पश्चादर्थे । कस्य पश्चात् । सामर्थ्याद् वृष्टेः । एवं सम्बन्धयोजनाद् वृष्टेः पश्चादेवोदकं **पुनर्गर्भत्वं एरिरे** ईर गतावित्यस्य ण्यन्तस्येदं रूपम् । गमयन्त्यापादयन्ति मरुतः । पुनः शब्दश्चातीतसंवत्सर-गर्भत्वापादनापेक्षः ।

एतदुक्तं भवति– 'वार्षिकांश्चतुरो मासान् वर्षित्वा तदनन्तरमष्टौ मासास्तदुदकं रश्मिभिः प्रत्याहृत्य तदागामिसवत्सरे वर्षितुं पुनर्गर्भमापादयन्ति मरुतः इति । अथवा 'स्वधा' (निघ २,७) इत्यन्ननाम । सस्यलक्षणं चान्नमुच्यते । अनुशब्दश्च पश्चादर्थ एतेन सम्बध्यते । स्वधामनु सस्यलक्षणस्यान्नस्य पश्चात् । सस्यं निष्पाद्यानन्तरमेव पुनर्गर्भत्वमापादयन्ति मरुत इत्यर्थः । किम्? सामर्थ्यादुदकम् । किं कुर्वन्तः? उच्यते । **दधानाः** धारयन्तोऽन्तरिक्ष आदित्यमण्डले वा । किम्? **नाम** तदेवोदकम् । 'नाम' (निघ.१,१०) इति ह्युदकनाम पठितम् । कीदृशम् **यज्ञियं** यज्ञसम्पादि मरुद्भिर्गृह्यते । अष्टौ मासानन्तरिक्ष आदित्यमण्डले वा धार्यमुदकं गर्भीभवति । अत एवमुच्यते– दधाना नाम यज्ञिय पुनर्गर्भत्वमेरिर इति । अथवा नामशब्दः संज्ञावचनः । धारयन्तो यज्ञियां संज्ञाम् । कतमाम्? सामर्थ्यान्मरुत इत्येताम् । मरुन्नामान इत्यर्थः ।

अथवैवमन्यथाऽस्या ऋचोऽर्थयोजना– अनुशब्दः पश्चादर्थः सामर्थ्याद् वृष्ट्यैव सम्बध्यते । स्वधामित्येतत्तु सस्यलक्षणान्नवचनं गर्भत्वमेरिरे इत्येतेन सम्बध्यते । दधाना इत्यपि दधातिर्दानार्थः । नामशब्दोऽप्युदकनाम । एवमेकवाक्यता– वृष्टेः पश्चादनन्तरमेव सस्यलक्षणमन्नं पुनर्गर्भत्वमेरिरे मरतो ददत उदक यज्ञसम्पादि । एतदुक्तं भवति– वर्षास्वोषधीर्जनयित्वा न तावत्येव कृतार्थीभवन्ति मरुतः । किन्तर्हि । ता एव पुनर्गर्भयन्ति उदकदानेनेति ।। ४ ।।

**वेङ्कटमाधव–** अनन्तरमेव वृष्टेर्मरुत अन्नार्थं पुनरपि गर्भत्वं प्राप्नुवन्ति । अष्टौ मासाः तिरोभूता वर्तन्ते वर्षाभ्योऽनन्तरम् । आश्चर्येऽहशब्दः । दधाना नाम यज्ञार्हम् । 'ईदृक् चान्यादृक् चैतादृक् च' (तै.४,६,५,५) इत्यादिकम् ।। ४ ।।

**मुद्गल– आत्** आनन्तर्यार्थे । **अह** अवधारणे । आदह वर्षर्तोरनन्तरमेव **स्वधामनु** इतः परं जनिष्यमाणमन्नमनुलक्ष्य मरुतो देवा **गर्भत्वं एरिरे** मेघमध्ये जलस्य कर्तारं पर्जन्यं प्रेरितवन्तः । प्रतिसंवत्सरमेवं कुर्वन्तीति दर्शयितुं पुनःशब्दः प्रयुक्तः । कीदृशा मरुतः ? **यज्ञियं** यज्ञार्हं नाम दधानाः धारयन्तः ।। ४ ।।

**सायण–** अत्रास्ति विशेषविनियोगः । चतुर्विंशेऽहनि प्रातःसवने ब्राह्मणाच्छंसिशस्त्रे 'आदह स्वधामनु' इति द्वे ऋचौ । 'इन्द्रेण सं हि दृक्षसे' इत्येका । अयं तृचः षळहस्तोत्रियसंज्ञकः । तथा च सूत्रितं 'चतुर्विंशे होताजनिष्ट' इति खण्डे– 'इन्द्रेण सं हि दृक्षस आदह स्वधामन्वित्येका द्वे च' (आश्व.श्रौ.७,२) इति । यद्यप्येतदैन्द्रं सूक्तं तथापि 'आदह' इत्यादिषु षट्सु मरुतो वर्ण्यते । 'प्रायेणैन्द्रे मरुतः' इति अनुक्रमणिकायामुक्तत्वात् (अनु.२,२२) । आत् इत्ययम् आनन्तर्यार्थो निपातः । अह इत्यवधारणार्थः । **आदह** वर्षर्तोरनन्तरमेव । **स्वधामनु** इतः परं जनिष्यमाणमन्नमुदकं वा अनुलक्ष्य मरुतो देवाः **गर्भत्वं एरिरे** मेघमध्ये जलस्य गर्भाकारं प्रेरितवन्तः । जलस्य कर्तारं पर्जन्यं प्रेरितवन्तः । प्रतिसंवत्सरमेवं कुर्वन्तीति दर्शयितुं पुनःशब्दः प्रयुक्तः । कीदृशा मरुतः ? **यज्ञियं** यज्ञार्हं **नाम दधानाः** धारयन्तः । सप्तसु गणेषु मरुतों 'ईदृङ्चान्यादृङ्च' इत्यादीनि यज्ञयोग्यानि नामानि अन्यत्राम्नातानि । 'अन्धः' इत्यादिष्वष्टाविंशतिसङ्ख्याकेष्वन्ननामसु 'ऊर्क् रसः स्वधा' (नि.२,७,१७) इति पठितम् । 'अर्णः' इत्यादिष्वेकशतसङ्ख्याकेषूदकनामसु 'तेजः स्वधा अक्षरम्' (नि.१,१२,९७) इति पठितम् ।

आदह निपातावाद्युदात्तौ । स्वधाम् । स्वं लोकं दधाति पुष्णातीति स्वधा । 'आतोऽनुपसर्गे कः' (पा.सू.३,२,३) । कृदुत्तरपदप्रकृतिस्वरत्वम् । अनुपुनःशब्दौ निपातावाद्युदात्तौ । गर्भस्य भावो गर्भत्वम् । प्रत्ययस्वरः । एरिरे । अन्तर्भावितण्यर्थात् 'ईर गतौ' इत्यस्मात् अनुदात्तेतः परस्य लिटो झस्य इरेच् (पा.सू.३,४,८१) । चित्त्वादन्तोदात्तः । 'सह सुपा' (पा.सू.२,१,४) इत्यत्र सुपेति योगविभागात् आङा सह तिङः समासेऽपि 'समासस्य' (पा.सू.६,१,२२३) इत्यन्तोदात्तत्वम् । 'इजादेश्च गुरुमतोऽनृच्छः' (पा.सू.३,१,३६) इति आम् न भवति मन्त्रत्वात् । अहशब्दयोगात् निघाताभावः, 'तुपश्यपश्यताहैः पूजायाम्' (पा.सू.८,१,३९) इति निषेधात् । दधानाः । शानचश्चित्त्वादन्तोदात्तत्वे प्राप्ते 'अभ्यस्तानामादिः' (पा.सू. ६,१,१८९) इत्याद्युदात्तत्वम् । यज्ञमर्हति यज्ञियम् । 'यज्ञर्त्विग्भ्यां घखञौ' (पा.सू.५,१,७१) इति घप्रत्ययः । 'आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्' (पा.सू.७,१,२) इति इयादेशः । प्रत्ययस्वरेण इकार उदात्तः ।। ४ ।।

**सिद्धाञ्जनम्**– चतुर्थीमृचमाह– **आदह** अनन्तरमेव (आत् इत्यानन्तर्ये अह इत्यवधारणे च निपातौ)। **स्वधां अनु** स्वधापदवाच्यस्वीयधारणधर्मानुसारेण **पुनः गर्भत्वं** पुनर्जनिष्यमाण-शिशुभावं **एरिरे** प्रापुः। के? सामर्थ्यात् देवकामा ऋषयः। कीदृशाः ? यज्ञियं यज्ञार्हं **नाम** अभिधानं (देवताव्यक्तिबोधकं संज्ञात्मकं) दधानाः धारयमाणाः ।

स्वधाम्–स्वं दधाति धारयते. स्वभावधारणसमर्था शक्तिः, ताम् । स्वभावं सर्वस्यापि विविधस्य सतः यो धारयते पोषयति वा स धर्मः स्वधापदवाच्यो भवति वेदे। एरिरे–आङ्पूर्वकस्य ईर गतौ इति धातोः लिटि रूपम् ।

इन्द्रप्रादुर्भावानन्तरमेव मरुतां जन्म । तच्च कथं पुनर्जन्मेति प्रागुक्तम् । इह तेषां स्वधारण-सामर्थ्यरूपधर्मानुसारि जन्मेत्युक्तम् 'स्वधामनु' । तत्र तथाविधपुनर्जन्मलाभविषये स्वार्थतावर्जं देवार्थं क्रियमाणस्य अर्पणरूपस्य यज्ञाख्यस्य कर्मणः यद्युक्तं देवताप्रतिबोधकं रहस्यं पावनं नाम भवति, तस्य धारणं साधनं भवति 'दधाना नाम यज्ञियम्' ।। ४ ।।

### ऋक्संहिता पदपाठसहिता

**वीळुचिंदारुजत्नुभिर्गुहां चिदिन्द्र वह्निंभिः । अविन्द उस्रिया अनुं ।। ५ ।।**

वीळु । चित् । आरुजत्नुऽभिः । गुहा । चित् । इन्द्र । वह्निऽभिः ।। अविन्दः । उस्रियाः । अनु ।। ५ ।।

ऋग्भाष्यम्

................... वीळुदृढं ह्यपि ।
आरुजद्भिः स्वसामर्थ्यैर्गुहायां संस्थितोऽपि सन् ।
वहद्भिरखिलं लोकं प्रकाशत्वानि लब्धवान् ।
देवैर्वैतादृशैः साकमानुकूल्येन लब्धवान् ।। ५ ।।

**ऋग्भाष्यटीका–** **वीळुचित्** । वीळुदृढम् । हे इन्द्र **गुहाचित्** गुहायां संस्थितोऽपि लोकानां गूढत्वेनावस्थितोऽपि संस्त्वं **वीळु** दृढं **चित्** अपि ब्रह्माण्डादिकं **आरुजत्नुभिः** आरुजद्भिः रुजोभङ्गे संहरद्भिः **वह्निभिः** अखिलं लोकं वहद्भिः पौंस्यैः स्वसामर्थ्यैः सह **उस्रियाः** प्रकाशत्वानि प्रकटत्वानि नानाविधं प्राकट्यमनु स्वेच्छानुसारेण **अविन्दः** लब्धवानसि । प्रकाशो वर्तसे । यद्वैतादृशैर्वीळुचिदारुजत्नुभिः वह्निभिर्देवैः साकं त्वमुस्रिया अन्वविन्दः आनुकूल्येन लब्धवानसि ।।

**मन्त्रार्थमञ्जरी–** (हे) इन्द्र । गुहा चित्, गुहायां संस्थितोऽपि, लोकानां गूढत्वेनावस्थितोऽपि सन् । (त्वम्) वीळु, दृढम् । चित्, अपि, दृढमपि । (ब्रह्माण्डादिकम्) आरुजत्नुभिः, आरुजद्भिः, 'रुजो भङ्गे' क्त्नुप्रत्ययोऽडागमश्च, संहरद्भिः । वह्निभिः, लोकं वहद्भिः, वहतोः निप्रत्ययः । (पौंस्यैः), स्वसामर्थ्यैः सह उस्रियाः, प्रकाशत्वानि प्रकटत्वानि, नानाविधप्राकट्यम् । अनु, स्वेच्छानुसारेण । अविन्दः, 'विद्लृ लाभे' लब्धवानसि, स्वप्रकाशो वर्तसे ।। यद्वा वीळु चित् दृढमपि । (ब्रह्माण्डादिकम्) आरुजद्भिः, संहरद्भिः । वह्निभिः, लोकान्वहद्भिर्देवैः सह । (त्वम्) उस्रियाः प्राकट्यानि । अनु, आनुकूल्येन । अविन्दः लब्धवानसि ।। ५ ।। इति पञ्चम्यैन्द्रमारुती ।। ५ ।।

**स्कन्द–** 'एका वीळु चिदिन्द्राय मरुद्भिः सह गायते' (बृदे २,१४०) न केवलं मरुद्भ्यः । ऐन्द्रमारुतीयं न मारुत्येव केवलेत्यर्थः । वीळयतेः संस्तम्भकर्मणो वीळु दृढम् । चित्शब्दोऽप्यर्थे । दृढमपि पर्वतादि **आरुजत्नुभिः** रुजो भङ्गे । सहयोगरक्षणा चेयं तृतीया । भञ्जद्भिर्मरुद्भिः सह । **गुहाचित्** गुहायामपि स्थिता । हे **इन्द्र!** कीदृशैर्मरुद्भिः? उच्यते । **वह्निभिः** वोढृभिः । **अविन्दः**

लब्धवानसि । काः ? **उस्रियाः** देवाना स्वभूता गाः । **अनु** पश्चात् । कस्य ? सामर्थ्यात् सरमाप्रत्यागमनस्य । पणिभिरसुरैरपहृताः गा गुहायां निहिताः सरमाप्रत्यागमनोत्तरकालं मरुद्भिः सह त्वमलब्धा इत्यर्थः ।। ५ ।।

**वेङ्कटमाधव–** दृढमपि पर्वतसानु आभिमुख्येन भञ्जद्भिः पर्वतस्य गुहायामपि इन्द्र त्वां वोढृभिर्मरुद्भिः त्व पणिभिरपहृता गा अनु अविन्दः ।। ५ ।।

**मुद्गल–** अस्ति किञ्चिदुपाख्यानम् । पणिभिर्देवलोकात् गावोऽपहृता अन्धकारे प्रक्षिप्ताः । ताश्चेन्द्रो मरुद्भिस्सहाजयदिति । **हे इन्द्र! वीळुचित्** दृढमपि दुर्गमं स्थानम् **आरुजत्नुभिः** भञ्जद्भिः **वह्निभिः** वोढृभिरनयत्र नेतु समर्थैर्मरुद्भिः सहितस्त्वं **गुहाचित्** गुहायामपि स्थापिता **उस्त्रियाः** गाः **अनु अविन्दः** अन्विष्य लब्धवानसि ।। ५ ।।

**सायण–** अस्ति किञ्चिदुपाख्यानम् । पणिभिर्देवलोकात् गावोऽपहृता अन्धकारे प्रक्षिप्ताः । ताश्चेन्द्रो मरुद्भिः सहाजयदिति । एतच्चानुक्रमणिकायां सूचितं– 'पणिभिरसुरैर्निगूळ्हा गा अन्वेष्टुं सरमां देवशुनीमिन्द्रेण प्रहितामयुग्भिः पणयो मित्रीयन्तः प्रोचुः' (अनु.ऋ.सं.१०,१०८) इति । मन्त्रान्तरे च दृष्टान्ततया सूचितं– 'निरुद्धा आपः पणिनेव गावः' (ऋ.सं.१,३२,११) इति । तदेतदुपाख्यानमभिप्रेत्योच्यते । **हे इन्द्र! वीळुचित्** दृढमपि दुर्गमस्थानं **आरुजत्नुभिः** भञ्जद्भिः **वह्निभिः** वोढृभिरन्यत्र नेतुं समर्थैर्मरुद्भिः सहितस्त्वं **गुहाचित्** गुहायामपि स्थापिता **उस्रियाः** गाः **अनु अविन्दः** अन्विष्य लब्धवानसि । 'ओजः पाजः' इत्यादिष्वष्टाविंशतिसङ्ख्याकेषु बलनामसु 'दक्षः वीळु च्यौत्नम्' (नि.२,९,१४) इति पठितम् । नवसङ्ख्याकेषु गोनामसु 'अघ्न्या उस्रा उस्रिया' (नि.२.११,३) सति पठितम् ।

वीळु । प्रातिपदिकस्वरः । चित् । चादिरनुदात्तः । आरुजत्नुभिः । 'रुजो भङ्गे' इति औणादिकः कत्नुच्प्रत्ययः । कित्त्वाद्गुणाभावः । चित्त्वादन्तोदात्तत्वम् । समासे कृदुत्तरपद-प्रकृतिस्वरत्वम् । गुहा । सप्तम्या डादेशः । 'ग्रामादीनां च' (फि.सू.३८) इत्याद्युदात्तः । वह्निभिः । 'वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित्' (उ.सू.४ ४९१) इति वहेः निप्रत्ययः । नित्त्वादाद्युदात्तः । अविन्दः 'शे मुचादीनाम्' (पा.सू. ७,१,५९) इति नुमागमः । 'लुङ्लङ्लृङ्-क्ष्वडुदात्तः' (पा.सू.६,४,७१) । वसन्तीति उस्रियाः । वसेः कर्तरि रियक्प्रत्ययः षत्वाभावाश्च

बाहुलकादूहनीयः । उक्तं हि– 'यत्र पदार्थविशेषसमुत्थं प्रत्ययः प्रकृतेश्च तदूह्यम्' (पा.सू. ३,३,१,२) ॥ ५ ॥

**सिद्धाञ्जनम्–** पञ्चमीमृचमाह– **हे इन्द्र ! वीळुचित्** दृढमपि (पर्वतादिस्थानम्) **आरुजत्नुभिः** भञ्जद्भिः **गुहाचित्** गुहायामपि (गुप्तिस्थानेऽपि) **वह्निभिः** वोढृभिः (त्वां वोढुं समर्थैः लब्धदिव्यजन्मभिः सहायभूतैः) **उस्रियाः** गाः **अनु** अनुगम्य **अविन्दः** अलब्धाः ।

वीळु–वीळयतेः संस्तम्भनार्थान्निष्पन्नं बलनामसु पठितम् । आरुजत्नुभिः रुज भङ्गे इत्यस्मात् आङ्पूर्वकाद्धातोः औणादिकत्नुप्रत्यये परे तृतीयाबहुवचनान्तं पदम् । गुहा स्सम्या डादेशः। उस्रियाः कान्त्यर्थात् वष्टेर्निष्पन्नाः । षस्य सः । वसतेरिति सायणीयम् । प्रज्ञानरश्मयो गावः स्रियाः प्रोक्ताः ।

ज्योतिर्दृशां पूर्वोक्तमन्त्रार्थानुसारेण अतिमानुषभुवि पुनर्जन्मलाभे पणिभिरपहृतानां पर्वतगुहायां स्थापितानां गवां अधिगमाय इन्द्रसाहाय्ये प्रवृत्तिरुक्ता । तेषां पर्वतशब्दलक्षितस्य घनीभूतप्रज्ञस्य जडस्य भञ्जने सामर्थ्यं तत्र अन्धकारबन्धुरं गुहापदवाच्यं रहस्यस्थानं प्रविश्य. तत्रेन्द्र-तद्विभूतीर्वोढुं शक्तीश्च प्रोक्ते । ईदृशः प्रभावः कथं समभवत् तेषामिति चेत्, इन्द्राधिकारे गर्भसम्भवाद् देवकामास्ते कर्तव्यमधिकृत्य इन्द्रप्रसादलभ्यं दिव्यावेशश्रवणं प्रतिपालयन्त उपतस्थिरे, अतोऽयमेषां विभव इति उत्तरत्र वक्ष्यते ।

॥ इति प्रथमाष्टके प्रथमाध्याये एकादशो वर्गः ॥

॥ अथ द्वादशो वर्गः ॥

ऋक्संहिता पदपाठसहिता

**देवयन्तो यथा मतिमच्छा विदद्वसुं गिरः । महामनूषत श्रुतम् ॥ ६ ॥**

देवऽयन्तः । यथा । मतिम् । अच्छ । विदत्ऽवसुम् । गिरः । महाम् । अनूषत । श्रुतम् ॥

ऋग्भाष्यम्

**सम्यक्प्रद्योतयंतोऽमुं मतिरूपं यथास्थितम् ।**
**विदद्वित्तं महान्तं च विश्रुतं सुगिरोऽस्तुवन् ॥ ६ ॥**

**ऋग्भाष्यटीका– देवयन्तः ।** सम्यक् । अच्छेति निपातः संशब्दार्थः । **अच्छ देवयन्तः** सम्यक् प्रद्योतयन्तः सम्यक् प्रकाशयन्त्यो **गिरः** वेदरूपाः सुगिरः । लिङ्गव्यत्यासः छान्दसः । अथवा गिर इति कर्तृसाधनः पुल्लिङ्गः । अत एव शोभना गिरो येषां ते सुगिरः । **यथा** यथास्थितं निर्विकारं **मतिं** मतिरूपं **विदद्वसुं** विदद्वित्तं विददिति कर्मणि छान्दसं रूपम् । लब्धवित्तम् । **महां** महान्तं **श्रुतं** विश्रुतं प्रसिद्धममुमिन्द्रं **अनूषत** अस्तुवन् ।। ६ ।।

**मन्त्रार्थमञ्जरी–** 'अच्छ' इति निपातः समुशब्दार्थे, संहितायां दैर्घ्यम्, अच्छ देवयन्तः, सम्यग्द्योतयन्तः, दीव्यतिः अत्र द्युत्यर्थः लिङ्गव्यत्ययश्छान्दसः, सम्यक्प्रकाशयन्त्यः । गिरः, वेदरूपा वाचः, यद्वा– गिरन्तीति गिरः, 'गॄ निगरणे' इत्यतः कर्तरि क्विप्, वेदरूपवाचमुच्चारयन्तः पुरुषा इत्यर्थः, तदा तु न लिङ्गव्यत्ययः । यथा, यथास्थितम्, निर्विकारमिति यावत् । मतिम्, मतिरूपम् । विदद्वसुम्, लाभार्थस्य विदेः कर्मणि च्छान्दसं रूपम्, लब्धवित्तम् । महाम्, महान्तम् । श्रुतम्, विश्रुतं प्रसिद्धम् । (अमुमिन्द्रम्) अनूषत, 'णु स्तुतौ' लुङ्, आत्मनेपदम्, अस्तुवन्नित्यर्थः ।। ६ ।।

**स्कन्द– देवयन्तः** देवशब्दोऽत्र प्रकृतान् मरुत एवाह । तानिच्छन्तो देवयन्तः । **यथा मतिं** मन्यतिरर्चतिकर्मा (तु.निघ.३,१४) । मन्यते स्तूयतेऽसाविति मतिरिन्द्रः । ज्ञाता वा मतिः विद्वान् ब्राह्मणः । यथा सर्वस्तुत्यमिन्द्रं विद्वांसं वा ब्राह्मणं तद्वत् । **अच्छ** निपातोऽयमाप्तुमित्यस्यार्थे आप्तुम् । किम् ? **विदद्वसुं** विन्दतेर्लाभार्थस्य विदच्छब्दः, कर्मसाधनश्च द्रष्टव्यः । गणाभिप्रायं चैतदेकवचनम् । लब्धधनं मरुद्गणम् । **गिरः** तृतीयार्थे प्रथमेयम् । गीर्भिः स्तुतिभिः **महां** महान्तं **अनूषत** नू स्तवने । स्तुवन्ति स्तुवन्तु वा ऋत्विजो मत्पुत्रपौत्रादयो वा । कीदृशम् ? श्रुतं ख्यातम् ।। ६ ।।

**वेङ्कटमाधव–** देवानिच्छन्तः यथा पूजनीयमिन्द्रं अभिष्टुवन्ति तथाऽभिष्टुवन्ति विदद्वसुं वेदयद्वसुं उदारं गिरः स्तोतारः महान्तं मरुद्गणमिति ।। ६ ।।

**मुद्गल– देवयन्तः** मरुत्संज्ञकान् देवानिच्छन्तः **गिरः** स्तोतारः ऋत्विजः **महां** प्रौढं मरुद्गणं **अच्छ** प्राप्तुं **अनूषत** स्तुतवन्तः । कीदृशं मरुद्गणम् ? **विदद्वसुं** वेदयद्भिः महिमानं प्रख्यापयद्भिर्वसुभिर्धनैर्युक्तं **श्रुतं** विख्यातम् । मरुद्गणस्य दृष्टान्तः– यथा मतिं मन्तारमिन्द्रं यथा स्तुवन्ति तथेत्यर्थः ।। ६ ।।

**सायण– देवयन्तः** मरुत्संज्ञकान् देवानिच्छन्तः **गिरः** स्तोतारः ऋत्विजः **महां** प्रौढं मरुद्गणं **अच्छ** प्राप्तुं **अनूषत** स्तुतवन्तः । कीदृशं मरुद्गणम् ? **विदद्वसुं** वेदयद्भिः स्वमहिमप्रख्यापकैर्वसुभिर्धनैर्युक्तं **श्रुतं** विख्यातम् । मरुद्गणस्य दृष्टान्तः । **यथा मतिं** मन्तारमिन्द्रं यथा स्तुवन्ति तथेत्यर्थः ।।

देवयन्तः देवानात्मन इच्छन्तः । 'सुप आत्मनः क्यच्' (पा.सू.३,१,८) । 'क्यचि च' (पा.सू.७,४,३३) इति ईत्वम्, 'अकृत्सार्वधातुकयोर्दीर्घः' (पा.सू.७,४,२५) इति दीर्घत्वं च न भवति; 'न च्छन्दस्यपुत्रस्य' (पा.सू.७,४,३५) इत्यनेन क्यचि यत् प्राप्तं ईत्वं दीर्घत्वं वा तस्य सर्वस्य प्रतिषेधात् । यद्यपि ईत्वमेव प्रकृतं तथापि व्यवहितस्यापि दीर्घत्वस्य स प्रतिषेध इति विज्ञायते; 'अश्वायन्तः' इत्यादौ 'अश्वाघस्यात्' (पा.सू.७,४,३७) इति आत्वविधानात् इति ह्युक्तम् । क्यजन्तात् शतृप्रत्ययः । क्यचश्चित्त्वात् 'चितः' (पा.सू.६,१,१६३) इत्यन्तोदात्तत्वम् । शपः पित्त्वेन शतुश्च लसार्वधातुकस्वरेणानुदात्तत्वे 'एकादेश उदात्तेनोदात्तः' (पा.सू.८,२,५) इत्युदात्तः । यथा । 'प्रकारवचने थाल्' (पा.सू.५,३,२३) । 'लिति' (पा.सू.६,१,१९३) इति प्रत्ययात् पूर्वमुदात्तत्वम् । मतिम् । 'मन्त्रे वृषेषपचमन' (पा.सू.३,३,९६) इत्यादिना क्तिन् उदात्तः । मतिशब्दो ज्ञानपरोऽप्युपचारात् ज्ञातरि इन्द्रे वर्तते । अथवा पदान्तरे विशेष्यानुपादानात् इन्द्रस्यैषा संज्ञा । ततश्च 'क्तिच्क्तौ च संज्ञायाम्' (पा.सू.३,३,१७४) इति मन्यतेः कर्तरि क्तिच् । तस्य उपदेशेऽनुदात्तत्वात् इट्प्रतिषेधः (पा.सू.७,२,१०) । चित्त्वादन्तोदात्तत्वम् । अच्छ । अध्याहृतगच्छत्यर्थयोगात् 'अच्छ गत्यर्थवदेषु' (पा.सू.१,४,६९) इति गतिसंज्ञया सह निपातसंज्ञाया अपि समावेशात् (पा.सू.१,४,६०) 'निपाता आद्युदात्ताः' (फि.सू.८०) इत्याद्युदात्तत्वम् । विदद्वसुम् । 'विद ज्ञाने' इत्यस्मादन्तर्भावितण्यर्थात् शतृप्रत्यये विदन्ति औदार्यातिशयवत्तया ज्ञापयन्ति वसूनि धनानि यं स विदद्वसुः । विदेः शतृप्रत्यये 'अदिप्रभृतिभ्यः शपः' (पा.सू.२,४,७२) इति शपो लुकि प्रत्ययस्वरेण शतुरुदात्तत्वम् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वेन तदेव शिष्यते । गृणन्ति स्तुवन्तीति गिरः गृणातेः क्विपि 'ऋत इद्धातोः' (पा.सू.७,१,१००) इति इत्वं रपरत्वम् । धातुस्वरेणोदात्तत्वम् । महां महान्तम् । नकारतकारयोर्लोपः छान्दसः । प्रातिपदिकस्वरेणोदात्तत्वम् । अनूषत । 'णु स्तुतौ' । व्यत्ययेनात्मनेपदम् । लुङि झस्य अदादेशः (पा.सू. ७,१,५) । सिचि कुटादित्वेन

ङित्त्वात् (पा.सू.१,२,१) गुणाभावः । इडभाव उकारदीर्घत्वं च छान्दसम् । निघातः । श्रुतम् । प्रत्ययस्वरः ॥ ६ ॥

**सिद्धाञ्जनम्– देवयन्तः** देवकामा ऋषयः **महां** महान्तं **श्रुतं** दिव्यावेशश्रुतिगोचरं इन्द्रं **अनूषत** स्तुतवन्तः (दिव्यवाणीश्रवणलाभात्) तत्र दृष्टान्तमाह– **गिरः** गृणन्तः स्तोतारः **विदद्वसुं** वेदयद्वसुं वेदवद्धनं **मतिं** मन्तारं इन्द्रं **अच्छ** अभिमुखं यथा स्तुवन्ति (अनूषत) वसुलाभात्तथेति ॥

देवयन्तः– देवानात्मन इच्छन्तः क्यच् । मतिम्–मतिशब्दो बुद्धिपरोऽपि उपचारादिन्द्रे बोद्धरि वर्तते। एवं गिरः स्तुतयः स्तोतृषूपचर्यन्ते ।

विदद्वसुम्– विदन्ति वेदयन्ति अन्तर्भावितण्यर्थः ज्ञापयन्ति लम्भयन्ति वा 'मतिम्' इन्द्रमात्मानं वसूनि धनानि यस्य तम् । वसु धनं ऐश्वर्यं भवति । तस्य ज्ञानमयत्वाद् इन्द्रं ज्ञापयितुं सामर्थ्यमस्तीति तात्पर्यम् । अनूषत-णू स्तवने इति धातोः लुङि प्रथमपुरुषबहुवचनम् । गुणाभावः छान्दसः, तथा चात्मनेपदं च ।

अयं मन्त्रार्थो भवति– यथा स्तोतारः स्ववैभवप्रापकदिव्यधनयुक्तं इन्द्रं स्तुतिभिः उपतिष्ठन्ते तथा प्रत्ययजन्मानो ज्योतिर्दर्शिन इन्द्रकामा इन्द्रात् श्रुतिं लभमानास्तं दिव्यावेशवाणीश्रवणगोचर-मुपासत इति । अथ प्राधान्येन प्राणपदमधिष्ठतां क्रियाशक्तिपराणामपि ऐन्द्रतेजोबलदीपितानां येषां मरुतां साहाय्यमत्यन्तमुपयुक्तमभूत् पर्वतभञ्जनादौ तेषामधुना समुदायेन गणरूपतया स्तुतिर्भवति ॥ ६ ॥

## ऋक्संहिता पदपाठसहिता

**इन्द्रे॑ण॒ सं हि दृक्ष॑से संज॒ग्मा॒नो अबि॑भ्युषा । म॒न्दू स॑मा॒नव॑र्चसा ॥ ७ ॥**

इन्द्रे॑ण । सम् । हि । दृक्ष॑से । स॒म्ऽज॒ग्मा॒नः । अबि॑भ्युषा । म॒न्दू इति॑ । स॒मा॒नऽव॑र्चसा ॥

## ऋग्भाष्यम्

**तस्य संदर्शनायैव सङ्गतस्तेन शङ्करः ।**
**मखात्मा पुरुहूतो वा श्रीभूमी च सुखात्मिके ॥ ७ ॥**

**ऋग्भाष्यटीका– इन्द्रेण** । तस्य । अत्र मखात्मेत्युत्तरस्यामृचि स्थितस्य मखशब्दस्य व्याख्यानम् । वाचशब्दौ व्यत्यासेन योज्यौ । मं मदं सुखं ददातीति मन्दुः शङ्करः पुरुहूतश्च । श्रीभूमीवा मन्दू । कथम् ? सुखात्मिके । ततश्च मन्दू शङ्करपुरुहूतौ श्रीभूमी वा । **संदृक्षसे** दृशेस्तुमर्थेकसे । तस्य परमेश्वरस्य संदर्शनाय **अबिभ्युषा** निर्भयेन **समानवर्चसा** निर्विकारतेजसा **इन्द्रेण** तेनैव परमेश्वरेण **संजग्मानः** संजग्मानौ सङ्गतः सङ्गतौ बभूवतुः । प्रसिद्धेन्द्रविषये मन्दू इति द्यावापृथिव्यौ । मदहेतुत्वात् । अन्यत्समानम् ।। ७ ।।

**मन्त्रार्थमञ्जरी–** मं सुखं दत्त इति मन्दू सुखप्रदौ शङ्करपुरंदरौ मखात्मकत्वात्, सुखरूपत्वाद्धेतोः श्रीभूमी वा मन्दू । सम् दृक्षसे, परमेश्वरसन्दर्शनाय, सम्पूर्वस्य दृशेः 'तुमर्थे सेसेनसेऽसेन्क्सेकसेन्' इत्यादिना कसेन्प्रत्यये शकारस्य क्सादेशे 'इण्कोः' इति षत्वे कषयोगे 'क्षः' इति सिद्धेः । अबिभ्युषा, निर्भयेन । समानवर्चसा, निर्विकारतेजसा । इन्द्रेण, परमेश्वरेण । संजग्मानः, संजग्मानौ व्यत्ययात्, संगतौ बभूवतुः, गमेः कर्मणि लिटः कानच् । हि, प्रसिद्धम् । प्रसिद्धेन्द्रविषये तु 'मन्दू' इति सुखहेतुत्वाद्द्यावाभूमी गृह्येते, अन्यत्समानम् ।। ७ ।।

**स्कन्द–** इन्द्रेणेति सहयोगलक्षणा तृतीया । **इन्द्रेण** सह त्वं मरुद्गणः । **सं हि दृक्षसे** हिशब्दः पदपूरणः । सम्यग् दृश्यसे । **सञ्जग्मानः** सङ्गच्छमानः तत्र तत्र वृक्षवधादौ कार्ये । **अबिभ्युषा** भयवर्जितेन । 'तस्या एकान्तरायास्तु अर्धर्चोऽन्त्यो द्विदेवतः' (बृदे २,१४०) । या ऐन्द्रमारुत्युक्ता ऋगेका 'वीळुचित्' इति तस्या एकान्तरा या 'इन्द्रेण सं हि' इत्येषा, तस्या अर्धर्चोऽन्त्यो द्विदेवतः ऐन्द्रमारुतः । **मन्दू** मन्दतेर्मोदनार्थस्यैतद्रूपम् । नित्यप्रमुदितौ **समानवर्चसा** तुल्यदीप्ती च इन्द्रमरुद्गणौ ।। ७ ।।

**वेङ्कटमाधव–** इन्द्रेण हि 'संदृश्यसे सङ्गच्छमानः अबिभ्युषा मरुद्गण? युद्धार्थं तौ युवां इन्द्रमरुद्गणौ मदिष्णू भवथः संयुक्तौ समानवर्चसौ । यद्वा मन्दुना समानवर्चसा इन्द्रेणेति ।। ७ ।।

**मुद्गल–** हे मरुद्गण! त्वं **इन्द्रेण सञ्जग्मानः** सङ्गच्छमानः **सम् दृक्षसे** सम्यग्दृश्येथाः खलु । अवश्यमस्माभिर्द्रष्टव्य इत्यर्थः । कीदृशेनेन्द्रेण? अविभ्युपा भयरहितेन । कीदृशाविन्द्रमरुद्गणौ ? **मन्दू** नित्यप्रमुदितौ **समानवर्चसा** तुल्यदीप्ती ।। ७ ।।

**सायण–** हे मरुद्गण त्वं **इन्द्रेण सञ्जग्मानः** सङ्गच्छमानः **सं दृक्षसे हि** सम्यग्दृश्येथाः खलु । अवश्यमस्माभिर्द्रष्टव्य इत्यर्थः । कीदृशेनेन्द्रेण ? अबिभ्युषा भीतिरहितेन । कीदृशाविन्द्रमरुद्गणौ ? **मन्दू** नित्यप्रमुदितौ । **समानवर्चसा** तुल्यदीप्ती । पुरा कदाचित् वृत्रवधदशायामिन्द्रस्य सखायः सर्वे देवा वृत्रश्वासेन अपसारिताः । तदानीमिन्द्रस्य वृत्रसम्बन्धि-सकलसेनाजयार्थं मरुद्भिः सङ्गमोऽभूत् । सोऽयमर्थो 'वृत्रस्य त्वा श्वसथात्' (ऋ.सं.८,९६,७) इति मन्त्रे सङ्गृहीतः, 'इन्द्रो वै वृत्रं हनिष्यन्' (ऐ.ब्रा.३,२०) इति ब्राह्मणे प्रपञ्चितश्च । इन्द्रशब्दः परमैश्वर्यवन्तं मरुद्गणं वाऽभिधत्ते । तदानीमिन्द्रस्य सम्बोधनं बहिरेवाध्याहर्तव्यम् । तथा चेयमृक् यास्केन व्याख्याता– 'इन्द्रेण हि संदृश्यसे सङ्गच्छमानोऽभिभ्युषा गणेन मन्दू मदिष्णू युवां स्थोऽपि वा मन्दुना तेनेति स्यात्समानवर्चसेत्येतेन व्याख्यातम्' (निरु.४,१२) इति ।

संदृक्षसे सम्पश्येथाः । 'दृशेश्चेति वक्तव्यम्' (का.१,३,२९) इत्यात्मनेपदम् । दृशेः 'लिङर्थे लेट्' (पा.सू.३,४,७) इति प्रार्थनायां लेट् । 'थासः से' (पा.सू.३,४,८०) । 'लेटोऽडाटौ' (पा.सू.३,४,९४) इत्यडागमः । 'सिब्बहुलं लेटि' (पा.सू.३,१,३४) इति सिप् । 'संज्ञापूर्वको विधिरनित्यः' (परिभा.९३,१) इति गुणाभावः । व्रश्चादिना (पा.सू.८,२,३६) षत्वम् । 'षढोः कः सि' (पा.सू.८,२,४१) इति कत्वम् । 'आदेशप्रत्यययोः' (पा.सू.८, ३,५९) इति सिपः षत्वम् । बहुलग्रहणात् सिपः परस्तात् शबपि भवति (पा.सू.२,४,७३) । सिपा व्यवधानात् पश्यादेशो न भवति (पा.सू.७,३,७८) । शपः पित्त्वादनुदात्तत्वम् । उत्तरस्य लसार्वधातुकानुदात्तत्वम् । धातुस्वर एव शिष्यते । हिशब्दयोगात् 'तिङ्ङतिङः' इति निघातो न भवति 'हि च' (पा.सू.८,१,३४) इति प्रतिषेधात् । सञ्जग्मानः । गमेः सम्पूर्वात् 'छन्दसि लुङ्लङ्लिटः' (पा.सू.३,४,६) इति वर्तमाने लिट् । 'समोगम्यृच्छिभ्याम्' (पा.सू.१,३,२९) इत्यात्मनेपदविधानात् लिट् कानजादेशः (पा.सू.३,२,१०६) । द्विर्भावः (पा.सू.६,१,८) । हलादिशेषः (पा.सू.७,४,६०) । अभ्यासस्य चुत्वम् (पा.सू.७,४,६२) । 'गमहन' (पा.सू. ६,४,९८) इत्युपधालोपः । कानचश्चित्त्वादन्तोदात्तत्वम् । गतिसमासे कृदुत्तरपदप्रकृतिस्वरत्वम् ।

अबिभ्युषा । 'ञिभी भये' । पूर्ववल्लिट् । 'शेषात्कर्तरि परस्मैपदम्' (पा.सू.१,३,७८) इति परस्मैपदम् । 'क्वसुश्च' (पा.सू.३,२,१०७) इति लिटः क्वसुरादेशः । तस्य कित्त्वाद्गुणा-भावः । द्विर्भावः । अभ्यासस्य ह्रस्वजश्त्वे (पा.सू.७,४,५९, ८,४,५४) । क्रादिनियमात्

(पा.सू.७,२,१३) प्राप्त इट् 'वस्वेकाजाद्घसाम्' (पा.सू.७,२,६७) इति नियमान्निवर्तते । नञ्समासे तृतीयैकवचने भत्वात् 'वसोः सम्प्रसारणम्' (पा.सू.६,... १३१) इति वकारस्य उकारः । 'सम्प्रसारणाच्च' (पा.सू.६,१,१०८) इति पूर्वरूपत्वम् । 'शासिवसिघसीनां च' (पा.सू.८,३,६०) इति षत्वम् । इयङादेशं बाधित्वा 'एरनेकाचोऽसंयोगपूर्वस्य' (पा.सू. ६,४,८२) इति यणादेशः । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । पूर्वेण सह संहितायामोकारस्य 'एङः पदान्तादति' (पा.सू.६,१,१०९) इति परपूर्वत्वे प्राप्ते 'प्रकृत्यान्तःपादमव्यपरे' (पा.सू.६,१, ११५) इति प्रकृतिभावः ।

मन्दू । 'मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु' । 'इदितो नुम् धातोः' (पा.सू.७,१,५८) इति नुमागमः । 'कुः' इत्यनुवृत्तौ 'खरु शङ्कु पीयु नीलङ्गु लिगु' (उ.सू.१,३६) इत्यत्र अविभक्तिकनिर्देशात् हन्तेः हिगुरितिवत् धात्वन्तरादपि कुः इत्युक्तम् । प्रत्ययस्वरेणान्तोदात्तः । द्विवचनम् औ (पा.सू.४,१,२) । 'प्रथमयोः पूर्वसवर्णः' (पा.सू.६,१,१०२) । तृतीयैकवचने चेत् 'सुपां सुलुक्' (पा.सू.७,१,३९) इत्यादिना पूर्वसवर्णदीर्घत्वम् । समानवर्चसा । समानं वर्चो ययोरिति वा यस्येति वा बहुव्रीहिः । द्विवचने 'सुपां सुलुक्' इत्यादिना आकारादेशः । समानपदस्य प्रातिपदिकान्तोदात्तत्वम् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरेण तदेवावशिष्यते ।।

**सिद्धाञ्जनम्–** सप्तमीमृचमाह– हे मरुद्गण ! त्वं **इन्द्रेण सञ्जग्मानः** सङ्गच्छमानः संवाद सम्पन्नो युक्त इति यावत् , **सन्दृक्षसे** हि सम्यक् दृश्यसे । कीदृशेन्द्रेण ? **अबिभ्युषा** भय-वर्जितेन । युवां इन्द्रो मरुद्गणश्च **मन्दू** मुदितौ **समानवर्चसा** तुल्यदीप्ती भवथः ।

दृक्षसे-लिङर्थे प्रार्थनायां लेट् इति सायणीयम् । 'दृश्यसे' इति कर्मणि लडेव स्कन्दस्वामीये । युक्तमेतत् प्रत्यक्षकृतो ह्ययम् । मन्दू-मन्दतेर्मोदनार्थस्येदं रूपम् । सञ्जग्मानः-सम्पूर्वाद्गमेः लिटः कानच् । अबिभ्युषा-बिभेतेः क्वसुः, अन्यत् छान्दसम् ।

एवं इन्द्रेण सङ्गतस्य तत्तुल्यतेजसो मुदितस्य मरुद्गणस्य सन्दर्शनात् सम्प्राप्तद्युतिविशेष ऋषिर्यज्ञकारी बलवदृचमुच्चारयतीति वक्ष्यते ।। ७ ।।

## ऋक्संहिता पदपाठसहिता

**अनवद्यैरभिद्युभिर्मखः सहस्वदर्चति । गणैरिन्द्रस्य काम्यैः ।। ८ ।।**

अनवद्यैः । अभिद्युऽभिः । मखः । सहस्वत् । अर्चति । गणैः । इन्द्रस्य । काम्यैः ॥८॥

ऋग्भाष्यम्

**अनवद्यैर्महाज्ञानैः प्रियैर्देवगणैः सह ।**
**वायुनाच सहार्चन्ति सुधीत्वात्परमेश्वरम् ॥ ८ ॥**

**ऋग्भाष्यटीका– अनवद्यैः । मखः** मखात्मा मखाभिमानी पुरुहूतः **अनवद्यैः** निर्दोषैः **अभिद्युभिः** अभितो द्यौः प्रकाशो ज्ञानं येषां तैः महाज्ञानैः **इन्द्रस्य** परमेश्वरस्य **काम्यैः** प्रियैर्गणैर्देवतागणैः सह **सहस्वत्** सहस्वान् । सहो वायुस्तद्वान् । सहस्वद्यथा भवति तथेति वा । वायुनाच सहेति यावत् । इन्द्रस्य इन्द्रं परमेश्वरमर्चति । तात्पर्यमाह– **अर्चतीति** ॥ वायुरिन्द्रः सर्वे देवाश्च परमेश्वरमर्चन्तीत्युक्तं भवतीति । अनवद्यैरित्यादिविशेषणानि हेतुगर्भाणीत्यभिप्रेत्य सर्वेषां सङ्ग्रह उक्तः सुधीत्वादिति । इन्द्रविषये त्वनवद्यैरभिद्युभिरिन्द्रस्य काम्यैः ऋत्विग्गणैः क्रियमाणो मखः सहस्वद्बलवदतिशयेनेन्द्रमर्चतीति करणे कर्तृत्वोपचारेण योज्यम् ।

**मन्त्रार्थमञ्जरी–** मखः, मखाभिमानी पुरुहूतः । अनवद्यैः, निर्दोषैः । अभिद्युभिः, अभितो द्यौः प्रकाशो ज्ञानं येषां तैर्महाज्ञानैः । इन्द्रस्य, परमेश्वरस्य । काम्यैः प्रियैः । गणैः, देवगणैः सह । सहस्वत्, सहो वायुः, तद्वत्, सहस्वद्यथा भवति तथेति वा, वायुना च सहेति यावत् । (इन्द्रस्य) इत्यावृत्तिः, इन्द्रम्, व्यत्ययात्, परमेश्वरम् । अर्चति, अर्चयति ॥ वायुरिन्द्रो देवाश्च महाज्ञानित्वादनवद्यत्वान्मखाभिमानित्वादतिप्रियत्वाच्च भगवन्तमर्चयन्तीति भावः । प्रसिद्धेन्द्रविषये तु– अनवद्यैः अभिद्युभिः इन्द्रस्य काम्यैः । ऋत्विजां गणैः । क्रियमाणः मखः । सहस्वत् बलवत् । अतिशयेन (इन्द्रम्) अर्चति । इति करणे कर्तृत्वोपचारेण योज्यम् ॥ ८ ॥

**स्कन्द–** सर्वाश्चात्र द्वितीयार्थे तृतीया । अनवद्यान् अगर्ह्यान् । द्युशब्दो दीप्तिवचनः अभिगतदीप्तीन् अत्यन्तदीप्तान् । **मखः** यज्ञः । **सहस्वत्** बलवत् सुष्ठ्वित्यर्थः । **अर्चति** स्तौति । यद्यज्ञे ऋत्विजः स्तुवन्ति, तदिदं यज्ञ एव स्तौतीत्युच्यते । अथवा मखं करोति मखयति । 'तत् करोति' (पावा ३,१,२६) इति णिच् । ण्यन्तादच् । मखः यज्ञकारी । स स्तौति । कान् ? **गणैः** गणान् सप्त सप्तकान् । **इन्द्रस्य काम्यैः** काम्यान् प्रियान् । अथवा अनवद्यैरित्यादिषु तृतीयाः स्वार्थ एव । तृतीयानिर्देशात्तु युक्त इति च वाक्यशेषः। अर्चतीति

व्यत्ययेन कर्मणि कर्तृप्रत्ययः । अनवद्यादिगुणैर्मरुद्गणैर्युक्तो यज्ञः सुष्टवर्च्यते । सुष्टु अर्च्यन्तेऽत मरुतो देवा इन्द्रश्च अतः । यज्ञोऽत्यन्तं पूज्य इत्यर्थः ॥ ८ ॥

**वेङ्कटमाधव–** 'अवद्यरहितैः अभिद्योतमानैः सह स्तोता सहस्वन्तमिन्द्रं अर्चति गणैः इन्द्रस्य प्रियैः । गणशब्दे एकवचनबहुवचने पर्यायेण भवतः ॥ ८ ॥

**मुद्गल– मखः** प्रवर्तमानोऽयं यज्ञः **अनवद्यैः** दोषरहितैः **अभिद्युभिः** द्युलोकमभिगतैः **काम्यैः** फलप्रदत्वेन कामयितव्यै **गणैः** मरुत्समूहैः सहितम् । **इन्द्रस्य** इन्द्रम् । सहस्वत् बलोपेतं यथा भवति तथा अर्चति पूजयति ॥ ८ ॥

**सायण– मखः** प्रवर्तमानोऽयं यज्ञः **अनवद्यैः** दोषरहितैः **अभिद्युभिः** द्युलोकमभिगतैः **काम्यैः** फलप्रदत्वेन कामयितव्यैः **गणैः** मरुत्समूहैः सहितम् । **इन्द्रस्य** इन्द्रं **सहस्वत्** बलोपेतं यथा भवति तथा **अर्चति** पूजयति । अयं यज्ञो मरुत इन्द्रं चातिशयेन प्रीणयतीत्यर्थः । 'यज्ञः' इत्यादिषु पञ्चदशसु यज्ञनामसु 'मखः विष्णुः' (नि.३,१७,११) इति पठितम् । चतुश्चत्वारिंशत्सु अर्चतिकर्मसु 'अर्चति गायति' (नि.३,१४,१) इति पठितम् ।

न विद्यतेऽवद्यं येषां तेऽनवद्याः । 'नञ्सुभ्याम्' (पा.सू.६,२,१७२) इत्युत्तरपदान्तोदात्तत्वम् । अभिगता द्यौर्यैस्तेऽभिद्यवः । तैरभिद्युभिः । अभिशब्दः प्रातिपदिकस्वरेणान्तोदात्तः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरेण स एव शिष्यते । मखः । प्रातिपदिकस्वरः । सहो बलमस्मिन्नर्चनकर्मण्यस्तीति सहस्वत् । 'तसौ मत्वर्थे' (पा.सू.१,४,१९) इति भसंज्ञया पदसंज्ञाया बाधितत्वात् सकारस्य रुत्वाभावः । 'मादुपधायाश्च मतोर्वोऽयवादिभ्यः' (पा.सू.८,२,९) इति मतुपो मस्य वत्वम् । सहस्शब्दो 'नब्विषयस्यानिसन्तस्य' (फि.सू.२६) इत्याद्युदात्तः । मतुपः पित्त्वात् स एव शिष्यते । काम्यैः । 'कमेर्णिङ्' (पा.सू.३,१,३०) । 'अत उपधायाः' (पा.सू.७,२,११६) इति वृद्धिः । 'जनीजृष्क्नसुरञ्जोऽमन्ताश्च' (भ्वा.ग.सू.) इति अमन्तत्वेन प्राप्तस्य मित्त्वस्य 'न कम्यमिचमाम्' (भ्वा.ग.सू.) इति प्रतिषेधात् 'मितां ह्रस्वः' (पा.सू.६,४,९२) इति उपधाह्रस्वत्वं न भवति । ण्यन्तात् 'अचो यत्' (पा.सू.३,१,९७) । णिलोपः (पा.सू.६,४,५१) । 'तित्स्वरितम्' (पा.सू. ६,१,१८५) इति प्राप्ते 'यतोऽनावः' (पा.सू. ६,१,२१३) इत्याद्युदात्तत्वम् ॥

**सिद्धाञ्जनम्–** अष्टमीमृचमाह – **मखः** यज्ञकारी (तत् करोति तदाचष्टे मखयति वशं करोति) **अर्चति** स्तौति ऋचमुच्चारयति । कथम् ? **सहस्वत्** बलवत् वीर्यवद्यथा भवति तथा (अर्चति) कीदृशः सन् ? **गणैः** मरुद्गणैः उपेतः (प्रसादात्तेषामावेशाद्वा तैयुक्त इत्यर्थः) कीदृशै-र्गणैः ? **अनवद्यैः** दोषरहितैः शुभैरित्यर्थः (धीवृत्तीनां दिव्यभावमापन्नानां अत एव लब्धपुनर्जन्मनां दिव्यमनोमयसम्राज इन्द्रस्य साहाय्ये वर्तमानानां मरुतां निष्कलङ्कत्वमुपपन्नम् )। पुनः अभिद्युभिः अभितः (मखं यज्ञकारिणं) प्राप्ता द्युलक्षिता द्युतिः येषां तैः। पुनश्च, **इन्द्रस्य काम्यैः** इन्द्रस्य स्पृहणीयैः, प्रियैरित्यर्थः । अर्थाविष्कार एव विशिष्टशब्दनिर्वचनं दत्तम् , तेन तात्पर्यबोधाय द्वारं च कृतम् ।। ८ ।।

## ऋक्संहिता पदपाठसहिता

**अतः॑परिज्मन्नागहि दि॒वो वा॑ रोच॒नादधि॑ । सम॑स्मिन्नृञ्जते॒ गिरः॑ ।। ९ ।।**

अतः॑ । प॒रि॒ऽज्मन् । आ । ग॒हि॒ । दि॒वः । वा॒ । रो॒च॒नात् । अधि॑ । सम् । अ॒स्मि॒न् । ऋ॒ञ्ज॒ते॒ । गिरः॑ ।। ९ ।।

## ऋग्भाष्यम्

**अतो हेतोरिहायाहि दिवोवा सूर्यमण्डलात् ।**
**परिज्मन्सर्वगास्माकमधिकृत्य समर्हणम् ।**
**अस्मिन्गिरः प्राप्नुवन्ति सम्यक्परममुख्यतः ।**
**युञ्जन्तीत्यत्र बाहुल्याद्देवयन्तोत इत्यपि ।**
**बाहुल्यादृ(द्व)ष्टितो गीर्भिर्विनार्थो नान्य इष्यते ।। ९ ।।**

**ऋग्भाष्यटीका– अतः** । **अतः** हेतोः । परितः ज्मां भूमिं वर्तत इति परिज्मा हे **परिज्मन्** सर्वग यत एवं त्वं सर्वयज्ञानां भोक्ता अतो हेतोः **दिवः** स्वर्गात् रोचनात्सूर्यमण्डलाद्वा **अधि** अस्माकं समर्हणमधिकृत्य इह यज्ञस्थानं **आगहि** आयाहि । किञ्च । **अस्मिन्** स्थाने **गिरः** स्तुतिरूपा वेदवाचः **सं** सम्यक् तस्यैव विवरणं परममुख्यतस्त्वां **ऋञ्जते** धातूनामनेकार्थत्वात् प्राप्नुवन्ति । अतोऽप्यायाहि । अत्र सूक्ते प्रथमस्तृच ऐन्द्रः । आदहेत्याद्याः षण्मारुत्यः । तत्रापि वीळुचिदिन्द्रेणेति द्वे ऐन्द्र्यौ च । दशमी त्वैन्द्रीति केचिद्ब्रुवते । यथा युञ्जन्त्यादहेत्येताः षण्मारुत्यो वीळुचिदिन्द्रेणेत्यैंद्र्यौ चेति । अनाख्याते त्विन्द्रो देवतेति च । तदेतद्दशम्यां

विप्रतिपत्त्यभावात्तद्व्याख्यानात्प्रागेव निराकरोति– **युञ्जन्तीत्यत्रेति** ।। युञ्जन्ति ब्रध्नं युञ्जन्त्यस्येत्यत्र ऋग्द्वये देवताभ्योऽन्य इन्द्रलक्षणोऽर्थो नेष्यते प्रमाणिकैः । कुतः । बाहुल्यात् बहुवचनश्रवणात् । तस्य यथाकथञ्चिद्व्याख्याने ब्रध्नशब्दस्यादित्ये रूढिर्विरुध्यते । असौ वा आदित्यो ब्रध्न इति श्रुत्यन्तरव्याख्यानविरोधश्च । उपलक्षणं चैतत् । केतुं कृण्वन्नित्यस्यामृचि कृण्वन्नित्याद्येकवचनस्य मर्या इति बहुवचनस्य च श्रवणादन्यः केवलेन्द्रलक्षणोऽर्थो नेष्यते । चतुर्थ्यां पञ्चम्यां च न विप्रतिपत्तिः । उत्तरासु चतुर्षु प्रतिपाद्येऽर्थे बाहुल्यादृष्टितो बहुवचनस्याश्रवणादन्योऽर्थो देवतालक्षणो नेष्यते । कथञ्चिद्योजनातु क्लिष्टतरा ।

ननु देवयन्त इत्यस्यामृच्यतःपरिज्मन्नित्यस्यामपि बहुवचनश्रवणात्कथं बाहुल्यादृष्टित इत्युच्यत इत्यत उक्तं देवयन्तोऽत इत्यपि गीर्भिर्विना बाहुल्यादृष्टित इति । गिरां तत्र बहुवचनविषयत्वं न प्रतिपाद्यस्येत्यर्थः । बाहुल्याद्दृष्टित इति क्वचित्पाठः । तत्र युञ्जन्तीत्यत्र बाहुल्यात् देवानामेवार्थत्वमन्यस्त्विन्द्रलक्षणोऽर्थो नेष्यत इत्युक्ते शङ्क्ते एवं तर्हि देवयन्त इत्यत्रात इत्यत्रापि बाहुल्याद्देवार्थत्वमेवेन्द्रस्त्वर्थो नेष्यत इति । तत्रोत्तरं देवयन्त इति । देवयन्तोऽत इत्यपि बाहुल्याद्बहुवचनसामर्थ्यादन्यो देवतारूपोऽर्थो नेष्यते । तर्हि बहुवचनं निरर्थकं स्यात् तत्राह– **गीर्भिर्विनेति** ।। कुत एतदित्यत आह– **दृष्टित इति** ।। स्फुटं तथा प्रतीयमानत्वात् । विषयान्तराप्रतीतौ सत्यां प्राग्बहुवचनं हेतुत्वेनोक्तमिति भावः ।। ९ ।।

**मन्त्रार्थमञ्जरी–** परितो ज्मां भूमिं वर्तत इति परिज्मा, तस्य सम्बुद्धिः (हे) परिज्मन्, सर्वगत । अतः, प्रागुक्तदिशा सर्वयज्ञभोक्तृत्वादेव । दिवः, स्वर्गात् । रोचनात्, दीप्यमानात्सूर्य-मण्डलात् वा । अधि, अस्माकं समर्हणामधिकृत्य । (इह) यज्ञस्थानम् । आ गहि, आयाहि, गमेः छत्वाभावश्छान्दसः, अनुनासिकलोपः ।। आगमने हेत्वन्तरं चास्तीत्युच्यते– अस्मिन्, यज्ञस्थाने । गिरः, स्तुतिरूपावाचः । सम्, सम्यक्, परममुख्यया वृत्त्या । (त्वाम्) ऋञ्जते, ऋञ्जन्ते, प्राप्नुवन्ति ।। अतश्च 'आ गहि' इति ।। ९ ।।

**स्कन्द–** अत इति मरुद्गणस्थानस्यान्तरिक्षस्य निर्देशः । **अतः** अन्तरिक्षलोकात् । **हे परिज्मन्!** अज गतिक्षेपणयोरित्यस्यैतद् रूपम् । सर्वतोगामिन् मरुद्गण! **आगहि** आगच्छ । **दिवो वा** द्युलोकाद्वा । **रोचनात्** दीप्तात् । अधिशब्दस्तु आगहीत्येतेन सम्बध्यते धात्वर्थानुवादी

च । पादपूरणो वा नार्थान्तरवचनः 'अधिपरी अनर्थकौ' (पा.१,४,९३) इति । अथवा अधिशब्दः सामर्थ्याद्वार्थे । रोचनाद्वा आदित्यमण्डलाद्वेत्यर्थः । किं कारणमागच्छेति ? उच्यते । **सम् अस्मिन् ऋञ्जते** 'ऋञ्जतिः प्रसाधनकर्मा' (या.६,२१) । आत्मन एवायं परोक्षरूपेण प्रथमपुरुषनिर्देशः । अयं मधुच्छन्दानाम ऋषिः ऋत्विग् ब्राह्मणाच्छंस्याख्योऽस्मिन् यज्ञे समृञ्जते सम्यक् प्रसाधयति उपकल्पयति गिरः ।। ९ ।।

**वेङ्कटमाधव– अतः** अन्तरिक्षात् परितो गन्तर्मरुद्गण आगच्छ । आदित्यस्य वा रोचनात् लोकात् । अधिपरी सप्तमीपञ्चम्योरर्थं स्फुटीकुरुतः । **अस्मिन्** मरुद्गणे सम्प्रसाधयति स्तुतीः मधुच्छन्दाः ।। ९ ।।

**मुद्गल– हे परिज्मन्!** परितो व्यापिन्! मरुद्गण । **अतः** अस्मात् मरुद्गणस्थानादन्तरिक्षात् **आगहि** अस्मिन् कर्मणि आगच्छ । **दिवः** द्युलोकाद्वा समागच्छ । **रोचनादधि** दीप्यमानादादित्य-मण्डलाद्वाऽऽगच्छ । अस्मदीयकर्मकाले यत्र यत्र तिष्ठसि ततः सर्वस्मादागच्छेत्यर्थः । किमर्थमागमनमिति ? तदुच्यते । **अस्मिन्** कर्मणि वर्तमानः ऋत्विक् **गिरः** स्तुतीः **सम् ऋञ्जते** प्रसाधयति । एताः स्तुतीः श्रोतुमागच्छेत्यर्थः ।। ९ ।।

**सायण– हे परिज्मन्** परितो व्यापिन् मरुद्गण **अतः** अस्मात् मरुद्गणस्थानादन्तरिक्षात् **आगहि** अस्मिन् कर्मण्यागच्छ । **दिवो वा** द्युलोकाद्वा समागच्छ । **रोचनादधि** दीप्यमानादादित्य-मण्डलाद्वा समागच्छ । अस्मदीयकर्मकाले यत्र यत्र तिष्ठसि ततः सर्वस्मादागच्छ इत्यर्थः । किमर्थमागमनमिति तदुच्यते । **अस्मिन्** कर्मणि वर्तमानः ऋत्विक् **गिरः** स्तुतीः **सम् ऋञ्जते** सम्यक् प्रसाधयति । 'ऋञ्जतिः प्रसाधनकर्मा' (निरु.६,२१) इति यास्कः । एताः स्तुतीः श्रोतुमागच्छ इत्यर्थः । यद्यपि ऋत्विजा मन्त्रस्य प्रयुज्यमानत्वात् ऋञ्जतिधातोः उत्तमपुरुषेण भवितव्यं तथापि परोक्षकृतत्वेन निर्देशात् प्रथमपुरुषप्रयोगः । परोक्षकृतलक्षणं च यास्क आह– 'तास्त्रिविधा ऋचः परोक्षकृताः प्रत्यक्षकृता आध्यात्मिक्यश्च । तत्र परोक्षकृताः सर्वाभिर्नाम-विभक्तिभिर्युज्यन्ते प्रथमपुरुषैश्चाख्यातस्य' (निरु.७,१) इति ।

अतः । 'पञ्चम्यास्तसिल्' (पा.सू.५,३,७) । 'एतदोऽश्' (पा.सू.५,३,५) । शित्त्वात् सर्वादेशः (पा.सू.१,१,५५) । 'लिति' (पा.सू.६,१,१९३) इति प्रत्ययात् पूर्वस्योदात्तत्वम् ।

परिज्मन् । 'अज गतिक्षेपणयोः' । 'अन्येभ्योऽपि दृश्यन्ते' (पा.सू.३,२,७५) इति मनिन् । अकारलोपः छान्दसः । आमन्त्रितनिघातः । गहि । गमेः 'बहुलं छन्दसि' (पा.सू.२,४,७३) इति शपो लुक् । हेर्ङित्त्वात् (पा.सू.३,४,८७) 'अनुदात्तोपदेश' (पा.सू.६,४,३७) इत्यादिना मलोपः । 'अतो हेः' (पा.सू.६,४,१०५) इति हिलोपो न भवति, तस्मिन् कर्तव्ये 'असिद्ध-वदत्रा भात्' (पा.सू.६,४,२२) इति मलोपस्य असिद्धत्वेन अनकारान्तत्वात् । दिवः । 'ऊडिदम्' (पा.सू.६,१,१७१) इत्यादिना विभक्तेरुदात्तत्वम् । वा । 'चादयोऽनुदात्ताः' (फि.सू. ८४) इत्यनुदात्तः । रोचनात् । 'रुच दीप्तौ' । 'अनुदात्तेतश्च हलादेः' (पा.सू.३,२,१४९) इति युच् । 'युवोरनाकौ' (पा.सू.७,१,१) इति अनादेशः । चिदित्यन्तोदात्तः । अधि । 'अधिपरी अनर्थकौ' (पा.सू.१,४,९३) इति कर्मप्रवचनीयत्वेन सह निपातसंज्ञायाः समावेशात् 'निपाता आद्युदात्ताः' (फि.सू.८०) इत्याद्युदात्तः । अस्मिन् । परिज्मन् इति आदिष्टस्यैव अन्वादेशात् 'इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ' (पा.सू.२,४,३२) इति अश अनुदात्तः । शित्त्वात् सर्वादेशः । विभक्तिः 'अनुदात्तौ सुप्पितौ' (पा.सू.३,१,४) इत्यनुदात्ता इति सर्वानुदात्तत्वम् । ऋञ्जते । 'ऋजि भृजी भर्जने' । सम् इत्युपसर्गयोगात् प्रसाधने वर्तते । निघातः । गिरः । प्रातिपदिकस्वरः ।। ९ ।।

**सिद्धाञ्जनम्–** ऋषिर्यजमानः स्वीयामर्चनविधां मरुद्गणसहितेन्द्रप्रसादलब्धां विस्रम्भेण गायन् सर्वतोऽपि इन्द्रसान्निध्यं प्रार्थयत उत्तरे मन्त्रे ।

नवमीमृचमाह– **परिज्मन्** परितो गामिन् सर्वव्यापिन् इत्यर्थः, परि-उपसर्गस्य अजधातोः रूपम् , मनिन्प्रत्ययः) हे इन्द्र! **अतः** अस्मान्मध्यमादन्तरिक्षस्थानात् **आगहि** आगच्छ **दिवो वा** द्युलोकाद्वा, **रोचनादधि** रोचमानात् दीप्तात् ततोऽप्यूर्ध्वलोकाद्वा आगच्छ (सर्वत्र व्यापकत्वात्, तत्तत्स्थानविभवसम्पन्नस्य इन्द्रस्य आगमनं ऋषेर्दिव्याभ्युदयपोषकं भवति)। **अस्मिन्** मदीये अन्तर्यजने कर्मणि, (अयं मधुच्छन्दाः) **गिरः** स्तुतीः मन्त्रवाच इत्यर्थः, **समृञ्जते** प्रसाधयति, उज्वलाः करोति । प्राधान्येनास्मिन् ऐन्द्रे सूक्ते, विस्पष्टा इन्द्रस्तुतिरन्ते भवति ।। ९ ।।

## ऋक्संहिता पदपाठसहिता

**इतोवा सातिमीमहे दिवो वा पार्थिवादधि । इन्द्रं महो वा रजसः ।। १० ।।**

इतः । वा । सातिम् । ईमहे । दिवः । वा । पार्थिवात् । अधि । इन्द्रम् । महः । वा । रजसः ॥ १० ॥

## ऋग्भाष्यम्

**इतो दिवोवा पातालात्सातिं लाभस्वरूपिणम् ।**
**महतो रञ्जकाद्विष्णोर्लोकाद्वा तमधीमहे ॥ १० ॥**

**ऋग्भाष्यटीका– इतोवा ।** इतोदिवः । वयं **इतः** दिवोऽर्वाक्तनात् द्युलोकाद्वा । **पार्थिवात्** पृथिवीसम्बन्धिनः पातालाद्वा । **महः** महतो महतां **रजसः** रञ्जकाद्विष्णोर्लोकाद्वा । एतेषु लोकेषु स्थितमिति यावत् । **सातिं** षणसम्भक्तावित्यस्येदं रूपम् । लाभस्वरूपिणं भगवानेव हि भक्तानां लाभः । तं **इन्द्रं अधीमहे** स्मरामः । इक् स्मरणे स्तुमो वा इङ् अध्ययने । याचामहे वा । याच्ञाकर्मसु पाठात् ॥ १० ॥

**मन्त्रार्थमञ्जरी–** (वयम्) इतः । दिवः, अर्वाक्तनाद्द्युलोकात् । वा पार्थिवात्, पृथिवीसम्बन्धिनः पातालात् । वा । महः, महतः । रजसः, रञ्जकाद्विष्णुलोकात् वा । एतेषु लोकेषु स्थितमिति यावत् । सातिम्, लाभस्वरूपिणम् । इन्द्रम् । अधि ईमहे, स्मरामः– 'इक् स्मरणे' स्तुमो वा 'इङ् अध्ययने' इति धातोः, याचामहे वा– याच्ञाकर्मसु पाठात् । अत्र सूक्ते देवताविवादनिरासो भाष्यादौ व्यक्तः ॥ १० ॥ इति शेषा ऐन्द्यः ॥

**स्कन्द–** अतः परं यथाप्राप्तमैन्द्रमेव । इतो वा इत्येतस्य सन्निहितवचनस्य पार्थिवात् इत्यनेन व्यवहितेनापि सामानाधिकरण्यम् । इतो वा पार्थिवाल्लोकात् । **सातिं** षणु दाने, वन षण सम्भक्तौ इत्यस्य वा । सातिर्दानं लाभो वा । तां ईमहे याच्ञाकर्माऽयम् (तु निघ. ३,१९) । याचामहे । **दिवः वा** द्युलोकाद्वा । अधिशब्दस्तु पदपूरणः । कं याचामहे । **इन्द्रं** नचैताभ्यामेव केवलाभ्याम् । किन्तर्हि ? **महो वा रजसः** रजश्शब्दो लोकवचनः । महतो लोकाद्वा । कतमस्मात् ।? महत्त्वात् पारिशेष्याच्चान्तरिक्षात् । यतः कुतोऽप्यस्मभ्यमिन्द्रो ददात्वित्यर्थः ॥ १० ॥

**वेङ्कटमाधव–** अत उत्तरमिन्द्र एव देवता । कुत इन्द्र आगच्छतीति न वयं जानीमः । तमिन्द्रं अस्याः भूमेरागच्छन्तं देयं धनं याचामहे । अपि वा दीप्तात् पार्थिवात् लोकात् । पृथिवीत्यन्तरिक्षनाम (तु.निघ.१,३) । **इन्द्रं महः वा रजसः** स्वर्गादिति ॥ १० ॥

**मुद्गल–** इदं देवं प्रति **सातिं** धनदानं **अधि ईमहे** आधिक्येन याचामहे । कस्माल्लोकादिति, तदुच्यते । **इतः** अस्मादभिदृश्यमानात् **पार्थिवात्** पृथिवीलोकाद्वा **दिवः वा** द्युलोकाद्वा **महः** महतः प्रौढात् **रजसो वा** पक्ष्यादीनां रञ्जकादन्तरिक्षलोकाद्वा । अयमिन्द्रो यतः कुतश्चिदानीय अस्मभ्यं धनं प्रयच्छत्वित्यर्थः ॥ १० ॥

**सायण–** **इन्द्रं** देवं प्रति **सातिं** धनदानं **अधि ईमहे** आधिक्येन याचामहे । कस्माल्लोकादिति तदुच्यते । **इतः** अस्मादभिदृश्यमानात् **पार्थिवात्** पृथिवीलोकाद्वा **दिवो वा** द्युलोकाद्वा **महः** महतः प्रौढात् **रजसः वा** पक्ष्यादीनां रञ्जकादन्तरिक्षलोकाद्वा । अयमिन्द्रो यतः कुतश्चिदानीय अस्मभ्यं धनं प्रयच्छत्वित्यर्थः । सप्तदशसु याश्चाकर्मसु 'ईमहे यामि' (नि.३,१९,१) इति पठितम् ।

इतः । इदं शब्दात् पञ्चम्याः तसिल् । 'इदम इश्' (पा.सू.५,३,३) इति इश् । शित्त्वात् सर्वादेशः । अत्र 'ऊडिदम्' (पा.सू.६,१,१७१) इत्यस्यावकाशः आभ्यां एभिः । 'लिति' (पा.सू.३,१,१९३) इत्यस्यावकाशः पचनं पाचकः । उभावपि नित्यौ । तत्र परत्वात् 'विप्रतिषेधे परं कार्यम्' (पा.सू.१,४,२) इति 'लिति' इति इकारस्य उदात्तत्वम् । पश्चात् तसेः 'प्राग्दिशो विभक्तिः' (पा.सू.५,३,१) इति विभक्तिसंज्ञकत्वात् 'ऊडिदम्' इत्यादिना असर्वनामस्थानविभक्तेरुच्यमानं उदात्तत्वं भवति । 'सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव' (परिभा.४०) इति 'ऊडिदम्' इत्यस्य पुनरप्रवृत्तिरेव इति चेत्, न । लक्ष्यानुरोधेन पुनः प्रसङ्गविज्ञानं चेति स्वीकारात् (परिभा.३९) । ननु एवं यतस्तत इत्यादावपि परेण लित्स्वरेण बाधितमपि 'सावेकाचः' (पा.सू.६,१,१६८) इति तसिलः उदात्तत्वं स्यादिति चेत्, न । यत्तच्छब्दयोः साववर्णान्तत्वे 'न गोश्वन्साववर्णः' (पा.सू.६,१,१८२) इति निषेधात् । न च पुनः प्रसङ्गविज्ञानं चेत्येतत् सार्वत्रिकं लक्ष्यानुरोधेन क्वचिदेव तदाश्रयणादिति ।

सातिम् । 'षणु दाने' । 'धात्वादेः षः सः' (पा.सू.६,१,६४) । भावे क्तिन् । 'जनसनखानां सञ्झलोः' (पा.सू.६,४,४२) इति नकारस्य आत्वम् । 'तितुत्रतथसिसुसरकसेषु च' (पा.सू.७,२,९) इति निषेधात् इण् न भवति । नित्स्वरे प्राप्ते 'उदात्तः' इत्यनुवृत्तौ 'ऊतियूतिजूतिसातिहेतिकीर्तयश्च' (पा.सू.३,३,९७) इति निपातनादन्तोदात्तत्वम् । ईमहे ।

'ईङ् गतौ' । श्यनोऽपि 'बहुलं छन्दसि' (पा.सू.२,४,७३) इति लुक् । अस्य धातोर्ङित्वात् 'तास्यनुदात्तेन्ङिददुपदेशात्' (पा.सू.६,१,१८६) इति लसार्वधातुकस्य अनुदात्तत्वे धातुस्वर एव शिष्यते । न च 'तिङ्ङतिङः' इति निघातः, 'चवायोगे प्रथमा' (पा.सू.८,१,५९) इति निषेधात् । उत्तरवाक्ययोरपि हि वाशब्दयोगात् अन्यथा वाक्यपरिपूर्तेः तिङ्विभक्तेः अवश्य-मध्याहारात् तदपेक्षया एषा प्रथमा तिङ्विभक्तिरिति । दिवः । 'ऊडिदम्' इत्यादिना विभक्तेरुदात्तत्वम् । पार्थिवात् । 'प्रथ प्रख्याने' । प्रथते इति पृथिवी । 'प्रथेः षिवन् सम्प्रसारणं च' (उ.सू.१,१४८) इति षिवन्प्रत्ययः । 'षिद्गौरादिभ्यश्च' (पा.सू.४,१,४१) इति ङीप् । प्रत्ययस्वरेणोदात्तः । शेषनिघातेन अनुदात्तादिः पृथिवीशब्दः । 'पृथिव्या विकार इत्यर्थे 'ओरञ्' (पा.सू.४,३,१३९) इत्यनुवृत्तौ 'अनुदात्तादेश्च' (पा.सू.४,३,१४०) इति अञ् । 'यस्येति च' (पा.सू.६,४,१४८) इति ईकारलोपः । 'तद्धितेष्वचामादेः' (पा.सू.७,२,११७) इति आदिवृद्धिः । रपरत्वम् (पा.सू.१,१,५१) । 'ञ्नित्यादिर्नित्यम्' (पा.सू.६,१,१९७) इत्याद्युदात्तः । अधि । निपातत्वादाद्युदात्तः । इन्द्रम् । रन्प्रत्ययान्त आद्युदात्तः । महः । महतः इत्यस्य अकारतकारयोर्लोपश्छान्दसः । 'सावेकाचः' इति विभक्तेरुदात्तत्वम् । रजसः । 'नब्विषयस्यानिसन्तस्य' इत्याद्युदात्तत्वम् ।। १० ।।

**सिद्धाञ्जनम्–** दशमीमृचमाह– **इतो वा** अस्माकं सन्निहितात् पृथिवीस्थानाद्वा **सातिं** लब्धिं सम्भजनीयं प्राप्तव्यमित्यर्थः। **ईमहे** प्रार्थयामहे । न च प्राप्तव्य इन्द्र एव भवति । **इन्द्रं** प्राप्तव्यतया ईहामहे । तस्य त्रैलोक्याधिराज्यत्वात् इतो वा स प्राप्यो भवति । **पार्थिवादधि दिवो वा** पृथिवीसम्बन्धिनो द्युलोकाद्वा । **महो रजसो वा** महतो अन्तरिक्षलोकाद्वा तं प्राप्तव्यमिन्द्रमीहामहे ।

व्याख्यातं युञ्जन्तीति सूक्तम्। अनुक्रमणिकोक्तप्रकारेण ऐन्द्रमारुतऋचौ द्वे मारुत्यश्चतस्र ऐन्द्र्यश्चतस्रः व्याख्याताः। दशर्चेऽस्मिन् ऋचां पूर्वोत्तरम्बन्धः प्रदर्शितः । रहस्यगर्भितमिदं स्थूलपक्षव्याख्यातॄणामर्थाविष्कारनये शुष्कभावं संवृत्तम् । नेष्यते तत्तात्पर्यपरीक्षा । अस्ति त्वस्माकमिह वक्तव्यम् ।

बह्वस्ति रहस्यमस्मिन् गाढं कामतो निक्षिप्तमृषिणेति वक्तव्यम् । इदं च प्रबलं निदर्शनं भवति प्रागस्माभिर्भूमिकायां आर्षं रहस्यमधिकृत्य प्रतिपादितस्यार्थस्य । इदञ्च रहस्यं ऋषीणां

विदितं, तच्छिष्याणां च । ये च गुरुभ्यो महर्षिभ्यो दीक्षां लब्ध्वा अन्तरङ्गशोधनसाधनादिभिः अन्तर्यजनाय शिक्षिताः । इत्यादि ह्युक्तम् । अत्र गवाश्वकेत्वादिपदानि साङ्केतिकानि व्यर्थानि वा पदानि परिचितान्यस्माकमधुना न कष्टप्रदानि भवन्ति । तथाऽपि रहस्यं सूक्ते स्पष्टं विचारपूर्वकं निहितमिति वक्तुं वाक्यान्येवालम् ।

परमस्यामृचि 'युञ्जन्ती'त्याह । के? कर्तृपदं नोक्तम् । 'परि' 'तस्थिवांसः' इति विभक्तिव्यत्ययेन गृहीतमपि विशेषणमेव तत्, विशेष्यस्य स्वरूपमनुक्त्वा शिष्यशिक्षा अन्तर्याजिनो बोधाय वा विसृष्टम् । 'चरन्तम्' अत्रापि कम् ? इति नोक्तम् । द्वितीयस्यामपि कर्तृपदमध्याहृतं तत्तु सुलभं प्रथमर्गपेक्षया। तृतीयस्यां, 'उषद्भिः' कैः इन्द्रजन्म? नोक्तम् । चतुर्थ्यां, के 'पुनर्गर्भत्वमेरिरे'? पञ्चम्यां 'आरुजत्नुभिः' वह्निभिः कैः इन्द्रस्य गोलाभः ? षष्ठ्यां के 'देवयन्तः' देवकामाः महान्तं श्रुतं नुतवन्तः ? सप्तम्यां, कः सम्बोध्यते इन्द्रेण सह सन्दृश्यमानः, तेन 'समानवर्चाः' ? अष्टम्यामपि कण्ठतो नोक्तं 'इन्द्रस्य काम्या गणाः' के? इति । नवम्यां 'परिज्मन्' इति कस्यामन्त्रणम् ? दशम्यामेव स्पष्टमुक्तमिन्द्रं 'ईमहे' इति ।

अस्य सर्वस्योत्तरं वचनं उद्देशपूर्वकमेवान्तर्निधाय गोपितं वाक्यविदैव साक्षात्कृतधर्मणा महर्षिणा मधुच्छन्दसेति ब्रूमहे । एवमपि तत्र तत्र ऋक्षु स्पष्टान्यस्पष्टानि वा लिङ्गानि क्षिप्तानि । तेषां परीक्षणेन प्राचीनैः कृतं देवतनिर्णयं आधारीकृत्य बृहद्देवतानुक्रमणिकादयः प्रवृत्ताः । बहुषु स्थलेषु पूर्वेषामेव देवतनिर्णये मतभेदः सन्देहो विवादश्च दृश्यन्ते । इदं च पर्यालोचनीयम् । आद्यानां मन्त्रद्रष्टॄणां तदपेक्षया अर्वाचीनानां श्रौतकल्पादिसूत्रकाराणां च युगान्तरकालभेद एव कारणं भवति देवतादिविषयकविचिकित्सायाः । प्राधान्येनान्तर्यागसम्बन्धिनो हि मन्त्राः । तेषां बहिर्यागोपयोगाय भावमाविष्कर्तुमुद्यताः, तत्राप्यर्वाचीनाः मन्त्रप्रतिपादितदेवता अत्यन्तस्थूलदृष्ट्या निरणैषुरिति नात्र चित्रम् । अत एव सामान्येन मन्त्रार्थविचारे विशेषतोऽन्तर्यागानुरोधेन क्रियमाणे, मन्त्रार्थस्य कात्यायनादिभिरुक्ताया देवतायाश्च उभयोर्न लक्ष्यते संवादः । अस्मिन्नेव 'युञ्जन्ति' इति सूक्ते 'देवयन्तः' इत्यादिमन्त्रेषु विस्पष्टं विसंवादो भवति । यद्यपि यावत् शक्यं यथासम्भवं अनुक्रमणिकाकारमेव देवताप्रतिपादनविषयेऽनुसरामः, क्वचित् स्पष्टं अयुक्तस्थलेषु विप्रतिपन्नाः स्मः । तस्मादरविन्दश्रीचरणानामाशयमवलम्ब्य अन्तरर्थपरेऽस्मिन् विवरणे 'देवयन्तः' इति मन्त्रे मरुतो देवता इति नाङ्गीकृताः । तथा 'अतः परिज्मन्' इत्यत्र न मरुद्गण आमन्त्रितः । अन्यत् सर्वं व्याख्यायामुक्तम् ।। १० ।।

।। इति प्रथमाष्टके प्रथमाध्याये द्वादशो वर्गः ।।

## ।। अथ त्रयोदशो वर्गः ।।

### (सूक्तम् ७)

### ऋक्संहिता पदपाठसहिता

१० मधुच्छन्दा वैश्वामित्रः । इन्द्रः । गायत्री ।

**इन्द्रमिद्गाथिनो बृहदिन्द्रमर्केभिरर्किणः । इन्द्रं वाणीरनूषत ।। १ ।।**

इन्द्रम् । इत् । गाथिनः । बृहत् । इन्द्रम् । अर्केभिः । अर्किणः । इन्द्रम् । वाणीः । अनूषत ।।

### ऋग्भाष्यम्

**तमेव गाथिनः साम्ना स्तुवंत्यृग्भिश्च बह्वृचाः ।**
**बृहंतमन्यवाणीभिरपि ................ ।। १ ।।**

**ऋग्भाष्यटीका– इन्द्रमित्** । दशर्चमैन्द्रं सूक्तम् । तमेव । **बृहत्** बृहन्तं इन्द्रमेव **गाथिनः** गाथाः गानानि तद्वन्तः सामवेदिन उद्गातारः साम्ना **अनूषत** अस्तुवन् । सदा स्तुवन्ति । **अर्किणः** अर्का ऋचः तद्वन्तो बह्वृचा होतारश्च **अर्केभिः** ऋग्भिरिन्द्रमनूषत । अन्याश्च यजुराद्या **वाणीः** वाण्यः । सुपां सुलुक्पूर्वसवर्णेति पूर्वसवर्णः । इन्द्रमनूषत । अत्र करणे कर्तृत्वोपचार इति भावेनान्यवाणीभिरपीति मुख्यार्थो दर्शितः । अध्वर्युप्रभृतय इति शेषः । उभयत्र करणस्य दर्शनात्साम्नेत्यध्याहृतम् ।। १ ।।

**मन्त्रार्थमञ्जरी–** अथ सप्तममपि दशर्चं वर्गद्वयात्मकमैन्द्रं सूक्तम् । बृहत्, बृहन्तम् । इन्द्रम् इत्, इन्द्रमेव । गाथिनः, गाथा गानानि, तद्वन्तः सामवेदिन उद्गातारः । 'अर्केभिः' इत्यग्रे श्रवणादिहापि 'साम्ना' इति योज्यम्, (साम्ना) अनूषत, अस्तुवन्, 'णु स्तुतौ' लुङ् सार्वकलिकः, सदा स्तुवन्तीत्यर्थः, एवमग्रेऽपि ।। अर्किणः, अर्का ऋचः, तद्वन्तो बह्वृचाः । अर्केभिः अर्कैः, अर्कशब्दितैर्ऋग्भिः । इन्द्रम् । (अनूषत) वाणीः, वाण्यः, 'सुपां सुलुक्पूर्वसवर्ण' इति पूर्वसवर्णदीर्घः, अन्याश्च यजुराद्या वाण्यः । इन्द्रम् । (अनूषत), सर्वशः स्तुवन्तीति सार्वकालिकोऽयं लुङ् ध्येयः करणे कर्तृत्वोपचारः ।। यद्वा (अध्वर्युप्रभृतयः) इत्यध्याहृत्य वाणी, वाणीभिः, (व्यत्ययात्) । (अनूषत) इति योजना ।। १ ।।

**स्कन्द–** इत्शब्द एवार्थे । इन्द्रम् एव । गीयन्ते इति गाथाः सामानि, तद्वन्तो **गाथिन** उद्गातार । बृहत् तृतीयार्थे द्वितीयेयम् । बृहत्साम्ना, महता वा साम्ना । **इन्द्रं एव अर्केभिः** मन्त्रैः ऋग्लक्षणैः **अर्किणः** मन्त्रवन्तो होतारः । इन्द्रं एव **वाणीः** वाङ्नामैतत् (तु निघ.१,११) । तृतीयार्थे चात्र द्वितीया । यजुर्लक्षणैः । अध्वर्यवः अनूषत अस्तुवन् ।।१।।

**वेङ्कटमाधव–** इन्द्रं एव उद्गातारः बृहता साम्ना स्तुवन्ति । इन्द्रं शस्त्रैः होतारः । इन्द्रं एव सर्वा गिरः स्तुवन्ति ।। १ ।।

**मुद्गल–** 'इन्द्रम्' इति दशर्चं चतुर्थं सूक्तम् । मधुच्छन्दा ऋषिः । इन्द्रो देवता । गायत्रम् । **गाथिनः** उद्गातारः **इन्द्रमित्** इन्द्रमेव **बृहत्** 'त्वामिद्धि हवामहे' (ऋ ६,४६,१) इत्येतस्यामृचि उत्पन्नेन बृहन्नामकेन साम्ना **अनूषत** स्तुतवन्तः । **अर्किणः** अर्चनमन्त्रोपेता होतारः **अर्केभिः** ऋग्रूपैर्मन्त्रैः इन्द्रमेव अनूषत । ये त्ववशिष्टा अध्वर्यवस्ते **वाणीः** वाग्भिर्यजूरूपाभिः इन्द्रं अनूषत ।। १ ।।

**सायण–** 'इन्द्रम्' इत्यादिकं दशर्चं यत् सूक्तं तत् 'सुरूपकृत्नुम्' इत्यादिषु चतुर्थम् । ऋषिच्छन्दोदेवता विनियोगश्च पूर्ववत् । विशेषविनियोगस्तूच्यते । महाव्रते निष्केवल्यशस्त्रे 'इन्द्रमिद्गाथिनः' इति सूक्तम् । तथा च पञ्चमारण्यके सूत्रितं– 'शिरो गायत्रमिन्द्रमिद्गाथिनः' (ऐ.आ.५,२,१) इति । तथा चतुर्विंशेऽहनि ब्राह्मणाच्छंसिनः शस्त्रे 'इन्द्रमिद्गाथिनः' इति षळहस्तोत्रियस्तृचः । 'चतुर्विंशे होताऽजनिष्ट' इत्युपक्रम्य 'आ याहि सुषुमा हि त इन्द्रमिद्गाथिनो बृहत्' (आश्व.श्रौ.७,२) इति सूत्रितत्वात् । अतिरात्रे प्रथमे पर्यायेऽच्छावाकशस्त्रेऽयमेव तृचोऽनुरूपः । सूत्रितं च– 'इन्द्राय मद्वने सुतमिन्द्रमिद्गाथिनो बृहत्' (आश्व.श्रौ.६,४) इति ।।

**गाथिनः** गीयमानसामयुक्ता उद्गातारः **इन्द्रमित्** इन्द्रमेव **बृहत्** 'त्वामिद्धि हवामहे' (ऋ.सं.६,४६,१) इत्यस्यामृचि उत्पन्नेन बृहन्नामकेन साम्ना अनूषत स्तुतवन्तः । **अर्किणः** अर्चनहेतुमन्त्रोपेता होतारः **अर्केभिः** ऋग्रूपैर्मन्त्रैः इन्द्रं एव अनूषत । ये त्ववशिष्टा अध्वर्यवस्ते **वाणीः** वाग्भिर्यजूरूपाभिः इन्द्रं एव अनूषत । अर्कशब्दस्य मन्त्रपरत्वं यास्केनोक्तम्– 'अर्को मन्त्रो भवति यदेनेनार्चन्ति' (निरु.५,४) इति । 'श्लोकः' इत्यादिषु सप्तपञ्चाशत्सु वाङ्नामसु 'वाशी वाणी' (नि.१,११,१२) इति पठितम् ।

गाथिनः । 'उषिकुषिगार्तिभ्यस्थन्' (उ.सू.२,१६१) इति गायतेः थन्प्रत्ययः । नित्त्वादाद्युदात्तः । गाथा एषां सन्तीति गाथिनः । 'व्रीह्यादिभ्यश्च' (पा.सू.५.२,११६) इति इनिः । प्रत्ययस्वरेण इकार उदात्तः । स च सति शिष्टः । बृहत् बृहता । तृतीयैकवचनस्य 'सुपां सुलुक्' इति लुक् । 'पृषद्बृहन्महज्जगच्छतृवच्च' (उ.सू.२,२४१) इत्यन्तोदात्तो निपातितः । अर्केभिः । 'अर्च पूजायाम्' । अर्च्यते एभिः इति अर्का मन्त्राः । 'पुंसि संज्ञायां घः प्रायेण' (पा.सू.३,३,११८) इति घः । 'चजोः कु घिण्यतोः' (पा.सू.७,३,५२) इति कुत्वम् । प्रत्ययस्वरेणान्तोदात्तः । 'बहुलं छन्दसि' (पा.सू.७,१,१०) इति भिस ऐसादेशो न भवति । अर्काः स्तुतिसाधनभूता मन्त्रा एषां सन्तीति अर्किणः । वाणीः । 'वृषादीनां च' (पा.सू.६,१, २०३) इत्याद्युदात्तः । 'दीर्घाज्जसि च' (पा.सू.६,१,१०५) इति पूर्वसवर्णदीर्घनिषेधस्य 'वा छन्दसि' (पा.सू.६,१,१०६) इति विकल्पितत्वात् दीर्घत्वम् । तृतीयार्थे प्रथमा । अनूषत । 'णु स्तुतौ' । 'णो नः' (पा.सू.६,१,६५) इति नत्वम् । लुङि व्यत्ययेनात्मनेपदम् । झस्य अदादेशः (पा.सू.७,१,५) । सिचः इडभावः उकारस्य दीर्घत्वं च छान्दसम् । धातोः कुटादित्वात् सिचो ङित्त्वेन (पा.सू.१,२,१) गुणाभावः (पा.सू.१,१,५) ।। १ ।।

**सिद्धाञ्जनम्–** द्वितीयेऽनुवाके चतुर्थ इन्द्रं इत्यादिकं दशर्चं सूक्तम् । ऋषिच्छन्दोदेवताः पूर्ववत् ।

तत्र प्रथमामृचमाह– **गाथिनः** सामगायिनः (गाथा एषां सन्ति, गायतेर्गाथा) **इन्द्रं इत्** इन्द्रमेव **बृहत्** बृहता साम्ना 'त्वामिद्धि हवामहे' इति प्रसिद्धेन बृहत्साम्ना **अनूषत** स्तुतवन्तः। **अर्किणः** ऋग्भिः स्तोतारो होतारः **अर्केभिः** अर्कैः ऋग्रूपैर्मन्त्रैः **इन्द्रं** एव 'अनूषत'। **इन्द्रं वाणीः** वाचः अवशिष्टाः सर्वाः यजूंषीत्पर्थः, विभक्तिव्यत्ययेन यजुर्भिः सामर्थ्यादध्वर्यवः इन्द्रमेव 'अनूषत' । ऋक्संहितायामत्रैव प्रथमं ऋग्यजुस्सामात्मिका त्रयी, तस्या उपयोक्तारः क्रमशो होताध्वर्युद्गातार इति सूचितम् ।। १ ।।

## ऋक्संहिता पदपाठसहिता

**इन्द्र इद्धर्योः सचा संमिश्ल आवचो युजा । इन्द्रो वज्री हिरण्ययः ।। २ ।।**

इन्द्रः । इत् । हर्योः । सचा । सम्ऽमिश्लः । आ । वचःऽयुजा । इन्द्रः । वज्री । हिरण्ययः ।।

**ऋग्भाष्यम्**

**...... ...... ...... हर्योर्विमिश्रितः ।**
**रथेऽथवा मनोबुद्ध्योर्वाङ्मात्रेणैव योगिनोः ।**
**सचा सुखेन वज्रीच ज्ञानानन्दो हि धातुतः ।**
**हितश्च रमणीयश्च हिरण्यय इतीरितः ।। २ ।।**

**ऋग्भाष्यटीका–** इन्द्र इत् । हर्योः । स **इन्द्र इत्** इन्द्र एव **वचोयुजा** वचोयुजोः । सुपामित्यनेनैवादेशः । वाङ्मात्रेणैव योगिनोः **हर्योः** अश्वयो रथे **सचा** सुखेनैव आसमन्तात्**संमिश्लः** संमिश्रो विमिश्रितः सारथेरतिप्रयत्नमन्तरेण रथयोगवद्भ्यामश्वाभ्यां युक्तं रथमारूढ इति यावत् । अथवेन्द्रः परमेश्वरो भक्तशरीरे वचोयुजा वेदवाक्यानुवर्तिनोर्हर्योर्मनोबुद्ध्योः संमिश्लः तद्युक्तं शरीरं विशेषतोऽध्यतिष्ठत् । किं च स इन्द्रो वज्री प्रसिद्धे स्फुटम् । विष्णौ व्याख्याति– **ज्ञानानन्द इति ।** तदुपपादयति– **धातुत इति** ।। वजगतौ रमुक्रीडायामिति धातुभ्यां भावे डप्रत्ययः । तद्वान्वज्रीत्यर्थः । विशेषादेवेनिप्रत्यय इति ज्ञापयितुं ज्ञानानन्द इत्येव व्याख्यातम् । अर्श-आदिभ्योऽज्वा । हितश्चेत्यत्र वर्णलोपादिकमूह्यम् ।। २ ।।

**मन्त्रार्थमञ्जरी–** इन्द्रः इत्, इन्द्र एव । वचोयुजा, वचोयुजोः, 'सुपां सुलुक्' इत्यादिना 'आ' इत्यादेशः, वाङ्मात्रेणैव योगिनोः । हर्योः, अश्वयोः (रथे) सचा, सुखेनैव । आ, समन्तात् । संमिश्लः, संमिश्रः, विमिश्रितः, सारथेरतिप्रयत्नमन्तरेण रथयोगवद्भ्यामश्वाभ्यां युक्तं रथमारूढ इति यावत् । अध्यात्मं तु– इन्द्रः इत्, परमेश्वर एव । (भक्तदेहे) वचोयुजा, वचोयुजोः, वेदवाक्यानुवर्तिनोः । हर्योः, मनोबुद्ध्याख्याश्वयोः । सचा, सुखेनैव । आ, समन्तात् । संमिश्लः, तद्युक्तं तत्तद्देहाख्यं रथमध्यतिष्ठत् । इति योजना । किं च, (सः) इन्द्रः । वज्री, वज्रायुधवान्, परमेश्वरस्तु वज्री, ज्ञानानन्दवान्, 'व्रज गतौ' 'रमु क्रीडायाम्' इत्याभ्यां धातुभ्यां भावे औणादिके डप्रत्यये रलोपे 'वज्र' इति रूपसिद्धौ तद्वान् 'वज्री' इति सिद्धेः । हिरण्ययः, हितश्च रमणीयश्चेति हिरण्ययः, हितशब्दे तलोपश्च 'रमु क्रीडायाम्' इति धातोः (रमणीयार्थे) न्ययप्रत्ययेऽन्तलोपश्च 'ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि च्छन्दसि' इति निपातनात् ।। २ ।।

**स्कन्द–** इन्द्र एव **हर्योः** अश्वयोः **सचा** सह **सम्मिश्लः आ** आभिमुख्येन सम्मिश्रयिता । केन ? सामर्थ्याद् रथेन । रथे यौगपद्येन नियोक्तेत्यर्थः । कीदृशयोः ? **वचोयुजा** षष्ठीद्विवचन-

स्यायमाकारः । युज्येथामिति वचनमात्रेण स्वयमेव यौ युज्येते, तौ वचोयुजौ तयोः । अत्यन्त-विनीतयोरित्यर्थः । इन्द्र एव **वज्री** वज्रवान् **हिरण्ययः** सादृश्यादेष व्यवहारः । हिरण्मयसदृश दीप्तवर्ण इत्यर्थः ।। २ ।।

**वेङ्कटमाधव–** एकाकी चरन् इन्द्र एव स्वाश्वयोः सहायभूतः । स एव च संयोजयति उक्तिमात्रेण युज्यमानौ । इन्द्रः वज्रवान् हिरण्यमयसर्वशरीरः ।। २ ।।

**मुद्गल– इन्द्र इत्** इन्द्र एव **हर्योः** अश्वयोः **सचा** सह युगपत् **आ संमिश्लः** सर्वतः सम्यग् मिश्रयिता । कीदृशोर्हर्योः ? **वचोयुजा** इन्द्रस्य वचनमात्रेण रथे युज्यमानयोः । सुशिक्षितयो-रित्यर्थः । अयमिन्द्रः **वज्री** वज्रयुक्तः **हिरण्ययः** हिरण्मयः सर्वाभरणभूषितः ।। २ ।।

**सायण– इन्द्र इत्** इन्द्र एव **हर्योः** हरिनामकयोरश्वयोः **सचा** सह युगपत् **आ संमिश्लः** सर्वतः सम्यग्मिश्रयिता । कीदृशोर्हर्योः ? **वचोयुजा** इन्द्रस्य वचनमात्रेण रथे युज्यमानयोः सुशिक्षितयोरित्यर्थः । अयमिन्द्रः **वज्री** वज्रयुक्तः **हिरण्ययः** हिरण्मयः सर्वाभरणभूषित इत्यर्थः ।

हर्योः । हरतः इति हरी । इन् । नित्त्वादाद्युदात्तः । 'सचा सह' (निरु.५,५) इत्युक्तम् । संमिश्लः । मिश्रणं मिश्रः । मिश्रयतेर्घञ् (पा.सू.३,३,१८) । सम्यक् मिश्रो यस्यासौ संमिश्रः । लत्वं छान्दसम् । सम्यक् मिश्रयितेत्यर्थः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । वचोयुजा । वचसा युज्येते इति वचोयुजौ । तयोः षष्ठीद्विवचनस्य 'सुपां सुलुक्' इति आकारादेशः । युज्शब्दो धातुस्वरेणान्तोदात्तः । कृदुत्तरपदप्रकृतिस्वरेण स एव शिष्यते । वज्री । वज्रमस्यास्ति । 'अत इनिठनौ' (पा.सू.५,२,११५) प्रत्ययस्वरः । हिरण्ययः । 'ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि च्छन्दसि' (पा.सू.६,४,१७५) इति हिरण्यमयशब्दस्य मकारलोपो निपात्यते । अकारः प्रत्ययस्वरेण उदात्तः । पूर्वेण अनुदात्तेन सह 'एकादेश उदात्तेनोदात्तः' इत्युदात्तः ।। २ ।।

**सिद्धाञ्जनम्–** द्वितीयामृचमाह – **इन्द्रः इत्** इन्द्र एव **हर्योः** अश्वयोः, अश्वाभ्यामिति तृतीयार्थे । **सचा** सह **आ** आगच्छति । कीदृशः? **संमिश्लः** संमिश्रः लकारश्छान्दसः। सर्वेषां वस्तूनां सम्यङ्क्मिश्रयिता योजयितेति यावत् । कीदृशोर्हर्योः ? **वचोयुजा** वचोयुजोः वचोयुग्भ्यां । सुविनीतौ अश्वौ स्वामिन इन्द्रस्य वचनमात्रेण स्वयं युज्येते, इति स्थूलं व्याख्यानं पूर्वेषाम् । अस्माकं तु न चतुष्पात्पशुरश्वः, तत्रापि विशेषतो 'इन्द्रस्य हरी' प्रति किमु वक्तव्यम् दीप्ति-

विशिष्टप्राणबलसङ्केताविति? तस्मात् वचो युजा 'ब्रह्मयुजा' इति ग्राह्यम् । 'युञ्जन्त्यस्य काम्या हरी' इत्यस्या ऋचो व्याख्यानमवधेयम् । पुनः कीदृगिन्द्रः? इन्द्रो **वज्री** वज्रोपेतः **हिरण्ययः** हिरण्मयः स्वर्णप्रभोज्ज्वल इत्यर्थः । मिश्रणम् मिश्रः, समीचीनो मिश्रो यस्य सः संमिश्रः । इन्द्र आगच्छति । स हरिद्वयसहितः सर्ववस्तुसम्यक्संयोजनकारी, तस्याश्वौ ब्रह्मपदवाच्यमन्त्रवाग्युक्तौ । वृत्रभिदा वज्रेणोपेतः हिरण्योज्ज्वल आगत्य किं करोति ? ।। २ ।।

## ऋक्संहिता पदपाठसहिता

**इन्द्रो॑ दी॒र्घाय॒ चक्ष॑स॒ आ सूर्यं॑ रोहयद्दि॒वि । वि गोभि॒रद्रि॑मैरयत् ।। ३ ।।**

इन्द्रः॑ । दी॒र्घाय॑ । चक्ष॑से । आ । सूर्य॑म् । रो॒ह॒य॒त् । दि॒वि । वि । गोभिः॑ । अद्रि॑म् । ऐ॒र॒य॒त् ।। ३ ।।

## ऋग्भाष्यम्

**दीर्घकालं दर्शनाय सूर्यमारोहयद्दिवि ।**
**ज्ञानैरादरयोग्यं च प्राणात्मानं समैरयत् ।। ३ ।।**

**ऋग्भाष्यटीका–** इन्द्रो दीर्घाय । दीर्घकालम् ।। स इन्द्रो **दीर्घाय चक्षसे** जनानामहर्लक्षणं दीर्घकालं पदार्थदर्शनाय **सूर्यं दिवि** गगने **आरोहयत्** आरोपितवान् । किं च । आद्रियत इत्यद्रिः । **अद्रिं** आदरयोग्यं प्राणात्मानं **गोभिः** ज्ञानैः **व्यैरयत्** ज्ञानयुक्तं प्रावर्तयत् । प्रसिद्धेन्द्रस्तु **गोभिः** वज्रैः **अद्रिं** पर्वतं वज्रेण पर्वतान् **व्यैरयत्** हतवान् । यद्वोदकैर्वृष्ट्या पर्वतं हतवान् । अथवोदकैर्निमित्तैरुदकार्थमिति यावत् । (अद्रिं) मेघं **व्यैरयत्** नियमितवान् ।। ३ ।।

**मन्त्रार्थमञ्जरी–** इन्द्रः, पुरंदरः परमेश्वरो वा दीर्घाय चक्षसे, जनानामहर्लक्षणं दीर्घकालं पदार्थदर्शनाय । सूर्यम् । दिवि, गगने । आरोहयत्, आरोपितवान् । किं च, (इन्द्रः), पुरंदरः । गोभिः, वज्रैः । अद्रिम्, पर्वतम् । वि ऐरयत्, हतवान्, पक्षच्छेदमकरोत् । यद्वा गोभिः, उदकैः वृष्ट्येति यावत् । अद्रिम्, पर्वतम् । वि ऐरयत्, हतवान् । अथ वा गोभिः, उदकैर्निर्निमित्तैः, उदकार्थमिति यावत् । अद्रिम्, मेघम् । वि ऐरयत्, विमिश्रितवान् (नियमितवान्) इत्यर्थः । (इन्द्रः), परमेश्वरस्तु । अद्रिम्, आदरणयोग्यं मुख्यवायुम् । गोभिः, ज्ञानैः । वि ऐरयत्, समैरयत्, ज्ञानयुक्तं प्रावर्तयत्, इत्यर्थः । आङ्पूर्वात् 'दृङ् आदरे' इति धातोः कर्मणि क्विप्रत्ययः, यणादेशश्च, आङो ह्रस्वश्च । 'व्यवहिताश्च' इत्युपसर्गान्वयः ।। ३ ।।

**स्कन्द–** अत्रेतिहासमाचक्षते– 'वृत्रो महत्तमस्तताान । तेन तमसा वृतं सर्वमन्धप्रज्ञानं बभूव । तत इन्द्रो वृत्रं हत्वा तमसोऽपनोदनार्थं सूर्यं दिव्यारोहयाश्चकार' इति । तदेतदुच्यते– **इन्द्रः दीर्घाय** आप्रलयभाविने **चक्षसे** दर्शनाय **आ सूर्यं** रोहयत् सूर्यमारोपितवान् **दिवि** द्युलोके । किञ्च **वि गोभिः अद्रिं ऐरयत्** गोशब्दोऽत्र वज्रवचनः । 'अहन् गवा मघवन्' (ऋ.५,३०,७) इति यथा । 'अद्रिः' (निघ १,१०) इति मेघनाम । वज्रैर्व्यैरयत् प्राणेभ्यो विगमितवान् हतवान् हन्ति वेत्यर्थः । वधार्थं एव सामर्थ्यादीरयतिः । अथवा गोशब्द उदकवचनः । हेतौ च तृतीया । प्रयोजनस्य हेतुत्वविवक्षा । उदकार्थं मेघं हतवान् हन्ति वेत्यर्थः ।। ३ ।।

**वेङ्कटमाधव–** इन्द्रः मनुष्याणां चिराय दर्शनाय दिवि सूर्यं आ रोहयत् । तेजोभिश्च विविधं वर्षार्थं मेघं प्रेरयति ।। ३ ।।

**मुद्गल–** अयं **इन्द्रः दीर्घाय** प्रौढाय **चक्षसे** दर्शनाय **दिवि** द्युलोके **सूर्यं आ रोहयत्** वृत्रासुरेण जगति यदापातितं तमस्तन्निवारणेन प्राणिनां दृष्टिसिद्ध्यर्थमादित्यं द्युलोके स्थापितवानित्यर्थः । स च सूर्यः **गोभिः** स्वकीयैः रश्मिभिः **अद्रिं** पर्वतप्रमुखं सर्वं जगत् **वि ऐरयत्** विशेषेण दर्शनार्थं प्रेरितवान् प्रकाशितवान् ।। ३ ।।

**सायण–** अयं **इन्द्रः दीर्घाय** प्रौढाय निरन्तराय **चक्षसे** दर्शनाय **दिवि** द्युलोके **सूर्यं आ रोहयत्** पुरा वृत्रासुरेण जगति यत् आपातितं तमस्तन्निवारणेन प्राणिनां दृष्टिसिद्ध्यर्थमादित्यं द्युलोके स्थापितवानित्यर्थः । स च सूर्यः **गोभिः** स्वकीयरश्मिभिः **अद्रिं** पर्वतप्रमुखं सर्वं जगत् **वि ऐरयत्** विशेषेण दर्शनार्थं प्रेरितवान् प्रकाशितवानित्यर्थः । अथवा इन्द्रः एव गोभिः जलैर्निमित्तभूतैः अद्रिं मेघं व्यैरयत् विशेषेण प्रेरितवान् । पञ्चदशसङ्ख्याकेषु रश्मिनामसु 'खेदयः किरणाः गावः' (नि.१,५,३) इति पठितम् । त्रिंशत्सङ्ख्याकेषु मेघनामसु 'अद्रिः ग्रावा' (नि.१, १०,१) इति पठितम् ।।

दीर्घाय । प्रातिपदिकस्वरेणान्तोदात्तः । चक्षसे । चक्षेः 'सर्वधातुभ्योऽसुन्' (उ.सू.४,६२८) इति असुन् । बहुलग्रहणात् ख्यात्रादेशाभावः । नित्त्वादाद्युदात्तः । सूर्यम् । सुवति प्रेरयतीति सूर्यः । 'षू प्रेरणे' । 'धात्वादेः षः सः' । 'राजसूयसूर्य' (पा.सू.३,१,११४) इत्यादिना क्यपप्रत्ययः, तस्य रुडागमश्च निपात्यते । क्यपः कित्त्वाद्गुणाभावः । पित्त्वादनुदात्तत्वम् ।

धातुस्वर एव शिष्यते । रोहयत् । रुहेः ण्यन्तात् लङि 'बहुलं छन्दस्यमाङ्योगेऽपि' (पा.सू.६,४,७५) इत्यडभावो निघातश्च । दिवि । 'ऊडिदम्' इत्यादिना विभक्तेरुदात्तत्वम् । अद्रिम् । 'अदिशदिभूशुभिभ्यः क्रिन्' (उ.सू.४,५०५) इति क्रिन्प्रत्ययः । अदन्ति पशवस्तृणादिकमत्र इति अद्रिः । नित्त्वादाद्युदात्तत्वम् । ऐरयत् । 'ईर गतौ' । ण्यन्तात् लङ् । निघातः ॥३॥

**सिद्धाञ्जनम्–** तृतीयामृचमाह– **इन्द्रः दीर्घाय** दूरगामिने शाश्वताय प्रौढाय वा **चक्षसे** दर्शनाय सूर्यं (सर्वस्यापि जगतः) प्रेरकं सूर्यसङ्केतितं ऋतज्योतिरित्यर्थः । **दिवि** द्युलोके **आरोहयत्** आरोपितवान् । स इन्द्रः **गोभिः** स्वीयैः रश्मिभिः **अद्रिं** अद्रिशब्दलक्षितं तमोमयं जडं जगत् **व्यैरयत्** विभिन्नं यथा तथा **ऐरयत्** व्यभेत्सीदित्यर्थः ।

चक्षसे-दर्शनार्थात् चक्षेः सर्वधातुभ्योऽसुन् । ऐरयत्-ईर गतौ ण्यन्तात् लुङ् । सूर्यम्-षू प्रेरणे सुवति प्रेरयति धात्वादेः षस्य सः, सर्वस्यापि प्रेरकः सूर्यः प्रसिद्धः, कथं तं प्रेरयतीन्द्रः ? यद्यपि देवास्सर्वेऽपि ज्योतिर्मया ऋतजाः ऋतमदः. तथाऽपि तत्र ज्येष्ठः इन्द्रः, ऋतज्योतिस्तु साक्षात्सूर्यात्मकं सूर्यवाच्यं भवति । तस्माद् यदा इन्द्रः स्वीयैर्दिव्यैः प्रज्ञारश्मिभिस्तमस्सर्वं व्यपोहति, तदा ऋतज्योतिषः सन्ततदर्शनं सम्भवति । अत एव 'दीर्घाय चक्षसे वि ऐरयत्' वितत्य रश्मिभः सूर्यं यथा दिवि सर्वदा दर्शनक्षमं तथा उच्चं स्थानं प्रापदित्युक्तम् । 'सदा पश्यन्ति सूरयः दिवीव चक्षुराततम्' इत्युत्तरत्र मन्त्रोऽप्येवं सङ्गच्छते । इन्द्रमधिकृत्य प्रथमानुवाके द्वितीयसूक्तव्याख्याने समाख्यातमिति नेह विस्तर इष्यते ॥ ३ ॥

### ऋक्संहिता पदपाठसहिता

**इन्द्र वाजेषु नोऽव सहस्रप्रधनेषु च । उग्र उग्राभिरूतिभिः ॥ ४ ॥**
इन्द्र । वाजेषु । नः । अव । सहस्रऽप्रधनेषु । च । उग्रः । उग्राभिः । ऊतिऽभिः ॥४॥

### ऋग्भाष्यम्

**बहुभिर्युध्यमानेषु युद्धेष्वपि सदाऽवनः ।**
**दुष्टोग्रैः सदभिप्रायैः ......... ... ॥ ४ ॥**

**ऋग्भाष्यटीका–** इन्द्रवाजेषु । बहुभिः । हे इन्द्र दुष्टानामुग्रस्त्वं **वाजेषु** युद्धेषु अस्मासु **सहस्रप्रधनेषु** सत्सु सहस्रेण प्रधनं येषां ते तथोक्ताः । तेषु बहुभिरपि युध्यमानेषु सत्स्विति

यावत् । **नः** अस्मान् **उग्राभिरूतिभिः** दुष्टानामुग्रैः स्वयं तु सद्भिरनुग्रैरेवाभिप्रायैः **अव** सदा रक्ष ।। ४ ।।

**मन्त्रार्थमञ्जरी–** (हे) इन्द्र । उग्रः, दुष्टानाम् क्रूरः (त्वम्) वाजेषु, युद्धेषु । (अस्मासु) सहस्रप्रधनेषु च, सहस्रेण प्रधनं युद्धं येषां तेषु सत्स्वपि, अस्मासु बहुभिर्युध्यमानेषु सत्स्वपीति यावत् । नः, अस्मान् उग्राभिः, दुष्टानां क्रूरैः, स्वयं त्वनुग्रैः । ऊतिभिः, अभिप्रायैः । अव, सर्वदा रक्ष ।। ४ ।।

**स्कन्द– हे इन्द्र वाजेषु** युद्धेषु **नः** अस्मान् **अव** रक्ष । कीदृशेषु ? **सहस्रप्रधनेषु** प्रधनशब्दोऽत्र न सङ्ग्रामनाम । उत्कृष्टवचनः । प्रकृष्टानि धनानि प्रधनानि निमित्तभूतानि येषां ते सहस्रप्रधनाः । बह्वत्यन्तधना वेत्यर्थः । चशब्दस्तु पदपूरणो वा । चश्रुतिसामर्थ्याद्वा अल्पधननिमित्तकेषु चेति शेषः । **उग्रः** प्रत्यक्षकृतोऽयं मन्त्रः । न चेदमामन्त्रितम् । अतो यच्छब्दतच्छब्दावध्याहृत्यैकवाक्यता नेया । यस्त्वमुग्रः अन्येन वाऽप्रसह्यः क्रूर इत्यर्थः, स अव इति । कीदृशीभिः **उग्राभिः** अन्येनाप्रसह्याभिः **ऊतिभिः** पालनैः ।। ४ ।।

**वेङ्कटमाधव– इन्द्र!** क्षुद्रेषु संग्रामेषु अस्मान् रक्ष महत्सु च उद्गूर्णः उद्गूर्णैः पाल्नैः । अस्योत्तरा भूयसे निर्वचनाय ।। ४ ।।

**मुद्गल– हे इन्द्र! उग्र** शत्रुभिरप्रधृप्यस्त्वं **उग्राभिः** अप्रधृष्याभिः **ऊतिभिः** अस्मद्विषयरक्षाभिः **वाजेषु** युद्धेषु **नः** अस्मान् **अव** रक्ष । तथा सहस्रप्रधनेषु च सहस्रसंख्याकगजाश्वादिलाभयुक्तेषु महाबुद्धेष्वपि रक्ष ।। ४ ।।

**सायण– हे इन्द्र उग्रः** शत्रुभिरप्रधृष्यस्त्वं **उग्राभिः** अप्रधृष्याभिः **ऊतिभिः** अस्मद्विषय-रक्षाभिः **वाजेषु** युद्धेषु **नः** अस्मान् **अव** रक्ष । तथा **सहस्रप्रधनेषु च** सहस्रसङ्ख्याक-गजाश्वादिलाभयुक्तेषु महायुद्धेष्वपि रक्ष ।।

वाजेषु । 'वृषादीनां च' (पा.सू.६,१,२०३) इत्याद्युदात्तत्वम् । नोऽव । नसः सकारस्य रुत्वोत्वगुणेषु 'प्रकृत्यान्तःपादम्' (पा.सू.६,१,११५) इति प्रकृतिभावो न भवति 'अव्यपरे' इति निषेधात् । अव । 'अव रक्षणे' । 'तिङ्ङतिङः' इति निघातः । यद्यपि सहस्रप्रधनेषु

च अव इति अध्याहृतां क्रियामपेक्ष्य प्रथमायाः श्रूयमाणाया अव इति क्रियायाः 'चवायोगे प्रथमा' (पा.सू.८,१,५९) इति निघातनिषेधः प्राप्तः, तथापि वाजेषु इत्यत्र चकारस्य लुप्तत्वात् 'चादिलोपे विभाषा' (पा.सू.८,१,६३) इति निषेधस्य विकल्पितत्वादत्र निघातः प्रवर्तते । सहस्रशब्दः 'कर्दमादीनां च' (फि.सू.५९) इति मध्योदात्तः । सहस्रप्रधनेषु वाजेषु । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । उग्रः । 'उच समवाये' । चस्य गः । 'ऋज्रेन्द्रा' (उ.सू.२,१८६) इति रन् । व्यत्ययेनान्तोदात्तः । ऊतिभिः । 'ऊतियूति' इत्यादिना क्तिन् उदात्तः ।। ४ ।।

**सिद्धाञ्जनम्**– चतुर्थीमृचमाह– हे **इन्द्र**, **उग्र** अप्रधृष्य **उग्राभिः** अप्रधृष्यभिः **ऊतिभिः** रक्षाभिः **वाजेषु** समृद्धिषु (अस्माभिरधिगतासु, इतः परं प्राप्स्यमानास्वपि) **नः** अस्मान् **अव** रक्ष, यथा देवशत्रुभ्यो भीतिर्न भवति तथेति भावः । **सहस्रप्रधनेषु च** अत्यधिकप्रकृष्टधनेषु लब्धेष्वपि नोऽव। ज्ञानबलादीन्येव प्रकृष्टनि धनानि अन्तर्याजिनामृषीणाम् ।। ४ ।।

## ऋक्संहिता पदपाठसहिता

**इन्द्रं वयं महाधन इन्द्रमर्भे हवामहे । युजं वृत्रेषु वज्रिणम् ।। ५ ।।**

इन्द्रम् । वयम् । महाऽधने । इन्द्रम् । अर्भे । हवामहे । युजम् । वृत्रेषु । वज्रिणम् ।।

## ऋग्भाष्यम्

**............. ........ महदल्पधनार्थिनः ।**

**हवामहेऽरिवर्जं तं तमसां प्रतियोगिनम् ।। ५ ।।**

**ऋग्भाष्यटीका**– **इन्द्रं वयम्** । महत् । **वृत्रेषु** तमस्स्वज्ञानेषु **युजं** विरोधितया घटमानं तमसां प्रतियोगिनम् । प्रसिद्धेन्द्रविषये बहुवचनमाद्यर्थे । **वज्रिणं** वृजीवर्जन इत्यस्येदं रूपम् । भीतिवशेनारिभिर्वर्ज्यं तं इन्द्रं **महाधने** महाधनार्थं मोक्षार्थं **अर्भे** अल्पेच धने अल्पधनार्थं सांसारिकपुरुषार्थार्थं महदल्पधनार्थिनो वयं **हवामहे** आह्वयामः ।। ५ ।।

**मन्त्रार्थमञ्जरी**– वृत्रेषु, पूर्वोक्तनिरुक्त्या वृत्रशब्दवाच्येष्वज्ञानेषु । युजम्, तद्विरोधितया घटमानम् । प्रसिद्धेन्द्रपक्षे– वृत्रेषु, वृत्राद्यसुरेषु– इति बहुवचनमाद्यर्थे व्याख्येयम् । वज्रिणम्, शत्रुभिर्वर्जितम्, भीतिवशेनारयो नैनं प्राप्नुवन्तीति यावत्, 'वृजी वर्जने' इत्यतो रिनिप्रत्ययः ऋकारस्याकारो रपरत्वाभावश्च । इन्द्रम् । महाधने, निमित्तसप्तमी, मोक्षरूपमहापुरुषार्थसिद्ध्यर्थम् ।

इन्द्रम् । अर्भे (च) अल्पे च धने, सांसारिकपुरुषार्थार्थं च महदल्पधनार्थिनः वयम् । हवामहे, आह्वयामः ।। ५ ।।

**स्कन्द– महाधने** सङ्ग्रामनामैतत् (तृ.निघ. २,१७) महति सङ्ग्रामे । **इन्द्रं** एव **अर्भे** अल्पनामैतत् (तु.विघ.३,२) अल्पे । क ? पूर्वत्र निर्देशात् सङ्ग्राम एव । **हवामहे** आह्वयामः । **युजं** युज्यतेऽसाविति युक् सहायः तम् । **वृत्रेषु** सङ्ग्रामव्यतिरिक्तेष्वपि च शत्रुषु इन्द्रमेव समाह्वयामः वज्रिणम् ।। ५ ।।

**वेङ्कटमाधव–** इन्द्रं वयं महति सङ्ग्रामे हवामहे, इन्द्रं अल्पे च सहायं उपद्रवेषु आयुधवन्तम् ।

**मुद्गल– वयं** अनुष्ठातारः **महाधने** प्रभूतधननिमित्तं तं इन्द्रं **हवामहे** आह्वयामः । **अर्भे** अर्भके स्वल्पेऽपि धने निमित्तभूते सति इन्द्रं हवामहे । कीदृशमिन्द्रम् ? **युजं** सहकारिणं नृपेषु शत्रुषु धनलाभविरोधिषु प्राप्तेषु तन्निवारणाय **वज्रिणं** वज्रोपेतम् ।। ५ ।।

**सायण– वयं** अनुष्ठातारः **महाधने** प्रभूतधननिमित्तं **इन्द्रं हवामहे** आह्वयामः । **अर्भे** अर्भके स्वल्पेऽपि धने निमित्तभूते सति इन्द्रं हवामहे । कीदृशमिन्द्रम् ? **युजं** सहकारिणं समाहितं वा **वृत्रेषु** शत्रुषु धनलाभविरोधिषु प्राप्तेषु तन्निवारणाय **वज्रिणं** वज्रोपेतम् ।

महाधनशब्दो यद्यपि सङ्ग्रामनामसु पठितस्तथापि महत् धनं अत्र सङ्ग्रामे इति बहुव्रीहित्वे सति अन्तोदात्तत्वासिद्धेः नात्र तत् गृहीतम् । महाधने । महच्च तद्धनं चेति 'मासस्य' (पा.सू.६,१,२२३) इत्यन्तोदात्तः । अर्भे । 'अतिनॄभ्यां भन्' (उ.सू.३,४३२) । नित्वादाद्युदात्तः । हवामहे । 'ह्वेञ् स्पर्धायां शब्दे च' । 'ञित्त्वात् कर्त्रभिप्राये (पा.सू.१,३,७२) आत्मनेपदम् । लटः स्थाने महिङ् (पा.सू.३,४,७८) । 'टित आत्मनेपदानाम्' (पा.सू.३,४,७९) इति टेः एत्वम् । कर्तरि शप् (पा.सू.३,१,६८) । 'ह्वः सम्प्रसारणम्' (पा.सू.६,१,३२) इत्यनुवृत्तौ 'बहुलं छन्दसि' (पा.सू.६,१,३४) इति सम्प्रसारणं वकारस्य उकारः । परपूर्वत्वम् । गुणावादेशौ । 'अतो दीर्घो यञि' (पा.सू.७,३,१०१) इति दीर्घत्वम् । 'तिङ्ङतिङः' इति निघातः । युजम् । 'युज समाधौ' इत्यस्य क्विप् । 'युजेरसमासे' (पा.सू.७,१,७१) इति नुम् न भवति । स हि युजेः इति निर्देशात् इकाररहितस्य न भवति । 'अनित्यमागमशासनम्' (परिभा.९३,२) इति वा 'युजिर् योगे' इत्यस्यापि नुम् न भवति । वृत्रेषु । 'वृतु वर्तने'

प्रतिकूलतया वर्तन्ते इति वृत्राणि शत्रुकुलानि । 'स्फायितञ्चि' (उ.सू.२,१७०) इत्यादिना रक्प्रत्ययः । कित्त्वाद्गुणाभावः । प्रत्ययस्वरः । वज्रिणम् । 'अत इनिठनौ' (पा.सू.५,२,११५) इति इनिः । प्रत्ययस्वरः ।। ५ ।।

**सिद्धाञ्जनम्–** पञ्चमीमृचमाह– वयं देवार्थं आत्मानं समर्पयन्तोऽनुष्ठातारः **इन्द्रं महाधने** महत्यैश्वर्ये लब्धे लब्धव्ये वा, निमित्तसप्तमी । **अर्भे** तथा अल्पेऽपि **इन्द्रं हवामहे** आह्वयामः । न केवलं सम्पत्तौ विपत्तावपि तमेवाश्रयामह इति तृतीयपादेनोच्यते। **वृत्रेषु** बहुधा आवरकेषु शत्रुष्वसुरेषु प्राप्तेषु **युजं** युक्तं , अस्मासु कृतयोगं सहकारिणं वज्रिणं वृत्रवधसाधनेन वज्रेणायुधेनोपेतं इन्द्रमेवाह्वयामः। 'हवामहे' इत्याह्वानं च सर्वथा समाश्रयणम् ।।

।। इति प्रथमाष्टके प्रथमाध्याये त्रयोदशो वर्गः ।।

## ।। अथ चतुर्दशो वर्गः ।।

### ऋक्संहिता पदपाठसहिता

**सनो॑ वृषन्न॒मुं च॒रुं सत्रा॑दाव॒न्नपा॑वृधि । अ॒स्मभ्य॒मप्र॑तिष्कुतः ।। ६ ।।**

सः । नः॒ । वृ॒ष॒न् । अ॒मुम् । च॒रुम् । सत्रा॑ऽदावन् । अप॑ । वृ॒धि॒ । अ॒स्मभ्य॑म् । अप्र॑तिऽस्कुतः ।।

### ऋग्भाष्यम्

**अस्मदीयं चरुं भोज्यमानन्दं तमपावृणु ।**
**मोक्षगं सर्वदाऽतस्त्वमप्रतिद्वंद्व नो वृषन् ।। ६ ।।**

**ऋग्भाष्यटीका– सनः** । अस्मदीयम् । हे वृषन् वर्षितः श्रेष्ठवा । **सत्रादावन्** सत्राशब्दः सर्वपर्यायः सहार्थो वा । तदुपपदाद्ददातेर्वनिप् । हे सर्वदातः । सहार्थत्वेऽर्थतः सर्वेष्टदातृत्वमेव लभ्यते । त्वं **नः** अस्मदीयममुं तं परोक्षं मोक्षगम् । **चरुं** चरतिर्भक्षणार्थः । ततः कर्मण्युकारः । भोज्यमनुभवनीयमानन्दं **अस्मभ्यं** अस्मदर्थं **अपावृधि** अविद्यावृतमपावृणु । यतस्त्वमेव **अप्रतिष्कुतः** । ष्कुञ्आप्रवणे । आप्रवणमागमनम् । प्रतिष्कुतः प्रत्यागतः । नैवं त्वमित्य-प्रतिष्कुतः । वैरिभिर्युद्धेष्वप्रत्यागतः । अप्रतिद्वन्द्वः अप्रतिद्वन्द्वेति लुप्तविभक्तिको निर्देशः । प्रसिद्धेन्द्रं प्रति तु चरुं हविरपावृधि स्वीकारेण सफलीकुरु । यद्वा चरुं मेघम् । वज्रः चरुः वराह इति मेघनामसु पाठात् । नोऽस्मदर्थमेव जातमस्मभ्यमपावृधि उद्घाटयेति योज्यम् ।। ६ ।।

**मन्त्रार्थमञ्जरी–** (हे) वृषन्, अभीष्टवर्षक, श्रेष्ठेति वा । सत्रादावन्, सर्वप्रद, सर्वशब्द-पर्यायसत्राशब्दोपपदात् 'डुदाञ् दाने' इति धातोर्वनिप्रत्ययः । सः (त्वम्) नः, अस्मदीयम् । अमुम्, परोक्षम्, मोक्षगतमिति यावत् । चरुम्, चर्वणीयं, भक्षणीयं, अनुभवनीयमानन्द मित्यर्थः, 'चर गतिभक्षणयोः' इत्यस्मात्कर्मण्युकारप्रत्ययः । अस्मभ्यम्, अस्मदर्थम् । अपवृधि, अविद्यावृतमपावृणु ।। यतस्त्वमेव अप्रतिष्कुतः, अप्रतिद्वन्द्वः, 'स्कुञ् आप्रवणे' आप्रवणमाग-मनम्, वैरिभिर्युद्धेषु प्रत्यागतो नेत्यप्रतिष्कुतः, अप्रतिद्वन्द्व इति फलितार्थः ।। प्रसिद्धेन्द्रपक्षे तु चरुं, हविः । अपवृधि, स्वीकारेण सफलीकुरु । यद्वा– चरुम्, मेघम्, व्रजः । चरुः । वराहः । इति (वैदिकनिघण्टौ १।१०) मेघनामसु पाठात् । नः, अस्मदर्थमेव जातम् । अस्मभ्यम् । अपवृधि, उद्घाटय ।। इति योज्यम् ।। ६ ।।

**स्कन्द–** न इति तादर्थ्ये चतुर्थीयं वृषन् इत्यनेन सम्बध्यते । अस्मदर्थं वर्षितः । यो हि सर्वार्थं वर्षति वर्षत्यसौ मधुच्छन्दोऽर्थम् । तत एवैवमामन्त्रयते नो वृषन्निति । **अमुं चरुं** मेघम् । 'चरुः' (निघ.१,१०) इति मेघनाम । **सत्रादवन्** 'सत्रा' (निघ ३,१०) इति सत्यनाम । सततपर्यायो वा । सत्यं सततं वा दातः । **अपावृधि** उद्घाटय । **अस्मभ्यं** अस्मदर्थम् । **अप्रतिष्कुतः** स्कुञ् आप्रवणे । आप्रवणमागमनं प्रवतेर्गत्यर्थत्वात् । अन्येना-प्रतिगत अप्रतिष्कुतः । युद्धेऽभियुञ्जानः अन्येनाप्रत्यभियुक्तपूर्वं इत्यर्थः । अत्र च 'स नो वृषन्' इति तच्छब्दान्मन्त्रस्य चास्य प्रत्यक्षकृतत्वाद् 'अप्रतिष्कुतः' इत्येतस्या नामन्त्रिततत्वाद् यच्छब्दोऽध्याहार्यः । यस्त्वमप्रतिष्कुतः स अपावृधि ।। ६ ।।

**वेङ्कटमाधव–** सः नः वर्षितः! **अमुं** मेघं महतो दातः! तेजोभिः अपावृधि शत्रुभिर-प्रतिशब्दितः अप्रतिकृतो वा । 'नः अस्मभ्यम्' इत्यनयोः पूरणमेकम् ।। ६ ।।

**मुद्गल–** हे **सत्रादावन्** । अस्मदभीष्टानां सर्वेषां फलानां सह प्रदातः! अतो व्रीहादिनिष्पत्त्यर्थं हे **वृषन्!** वृष्टिप्रदेन्द्र! **नः** अस्मदर्थं **अमुं** दृश्यमानं **चरुं** मेघं **अपावृधि** उद्घाटय । तथैव **अस्मभ्यं** अस्मदर्थं **सः** त्वं **अप्रतिष्कुतः** प्रतिशब्दरहितः । यद्यदस्माभिर्याच्यते तत्र सर्वत्र नेति प्रतिशब्दं नोच्चारयतीत्यर्थः ।। ६ ।।

**सायण–** हे **सत्रादावन्!** अस्मदभीष्टानां सर्वेषां फलानां सह प्रदातः अतो व्रीह्यादिनिष्पत्त्यर्थं हे **वृषन्** वृष्टिप्रदेन्द्र! **नः** अस्मदर्थं **अमुं** दृश्यमानं **चरुं** मेघं **अपावृधि** उद्घाटय । तथैव **अस्मभ्यं**

अस्मदर्थं **अप्रतिष्कुतः** प्रतिशब्दरहितः । यद्यदस्माभिर्याच्यते तत्र सर्वत्र नेति प्रतिशब्दं नोच्चारयति । अतोऽस्मद्विषये कदाचिदपि अप्रतिस्खलितः । एतदेवाभिप्रेत्य यास्क आह– 'अप्रतिष्कुतोऽप्रतिष्कृतोऽप्रतिस्खलितो वा' (निरु.६,१६) इति ।

वृषन् । आमन्त्रितनिघातः । अमुम् । प्रातिपदिकस्वरेणान्तोदात्तः । चरुम् । चरतीति चरुः । 'भृमृशीतृचरित्सरितनिधनिमिमस्जिभ्य उः' (उ.सू.१,७) इति उप्रत्ययः । प्रत्ययस्वरेणान्तोदात्तः । सत्रादावन् । सत्राशब्दः सहार्थे । अभिमतफलजातं सकलं सह ददातीति सत्रादावा । 'आतो मनिन्क्वनिब्वनिपश्च' (पा.सू.३,२,७४) इति वनिप् । 'आमन्त्रितस्य च' (पा.सू.६,१,१९८) इत्याद्युदात्तत्वम् । पादादित्वान्न निघातः । अप । 'निपातस्य च' (पा.सू.६,३,१३६) इति दीर्घः । निपात आद्युदात्तः । वृधि । 'वृञ् वरणे' । लोटः सिप् । तस्य 'बहुलं छन्दसि' (पा.सू.२,४,७३) इति लुक् । 'श्रुशृणुपॄकृभ्यश्छन्दसि' (पा.सू.६,४,१०२) इति हेर्धिरादेशः। तस्य ङित्वात् पूर्वस्य गुणाभावः । निघातः । अस्मभ्यम् । अस्मच्छब्दात् 'भ्यसो भ्यम्' (पा.सू.७,१,३०) इति भ्यमादेशः। 'शेषे लोपः' (पा.सू.७,२,९०) इति दकारलोपः । 'बहुवचने झल्येत्' (पा.सू.७,३,१०३) इति एत्वं न भवति । 'अङ्गवृत्ते पुनर्वृत्तावविधिर्निष्ठितस्य' (पा.म.७,१,३०) इत्युक्तम् । प्रातिपदिकस्वरेण स्म इत्यकार उदात्तः । 'भ्यसोऽभ्यम्' इति अभ्यमादेशपक्षे 'शेषे लोपः' इति मपर्यन्तशेषस्य अद्शब्दस्य लोपः । तदा उदात्तनिवृत्तिस्वरेण अभ्यमः आदेः अकारस्योदात्तत्वम् (पा.सू.६,१,१६१) । अप्रतिष्कुतः केनचिदप्रतिशब्दितः । 'कुङ् शब्दे' । 'निष्ठा' (पा.सू.३,२,१०२) इति कर्मणि क्तप्रत्ययः । प्रतेः प्राक्प्रयोगः । पारस्करादेराकृतिगणत्वात् सुडागमः (पा.सू.६,१,१५७) । सुपामादेराकृतिगणत्वात् षत्वम् (पा.सू.८,३,९८) । नञ्समासेऽव्ययपूर्वपदप्रकृतिस्वरत्वम् ॥ ६ ॥

**सिद्धाञ्जनम्–** अथ 'इन्द्रमिद्गाथिन' इति सूक्ते षष्ठीमृचमाह– **सः** तथाभूतस्त्वं **नः** अस्मदर्थं हे **वृषन्** वर्षितः सर्वस्याप्यभीष्टस्य, हे **सत्रादावन्** सत्रा सह युगपत् दावन् दातः ज्ञानैश्वर्य-तेजोबलादेः, **अमुं** पुरतो दृश्यमानम् **चरुं** चरन्तं मेघं सततपरिचलत्प्राणमनोवृत्यात्मनाऽवस्थितं चित् तेजोबलाद्यावरकं **अप वृधि** अपावृणु, उद्धाटय प्रकाशय स्वात्मानम् । **अस्मभ्यं** अस्मदर्थं **अप्रतिष्कुतः** अप्रतिशब्दितः, दानशौण्डस्त्वं न कदापि 'न दास्यामि' इति न प्रतिवचनं ददासीत्यर्थः। अथवा त्वत्क्रियाविघातोपलक्षणं प्रतिवचनं न कुतोऽपि भवतीत्यर्थः। एवंविधं

सायणीयं व्याख्यानम् । वस्तुतस्तु न केनापि छादयितुं शक्य इति वक्तव्यम् । स्कुञ् आवरणे इति श्नाविकरणी धातुः । प्रतिपूर्वकात्तस्मात् क्तः। ततो नञ् समासः । आवरकं चरुं अपावृणु, निराच्छादनो नित्यप्रकाशो भव नः इत्यर्थः । 'अस्कुनात् शरवृष्टिभिः ' बाणवर्षैः छादितवान् इत्यादिः प्रयोगः अद्यापि द्रष्टव्यः ।

चरुम्-मेघनाम, पात्रेऽपि वर्तते क्वचित् । चरतेर्निष्पन्नं, तस्मादुपपन्नमन्तरर्थपरं व्याख्यानम्। सत्रादावन्-सत्रा सहार्थे, दवा दातरि, छान्दसं रूपम् । वृधि वृञ् वरणे, लोटि मध्यमपुरुषे धिरादेशः, छान्दसः ।।

## ऋक्संहिता पदपाठसहिता

**तुञ्जेतुञ्जे य उत्तरे स्तोमा इन्द्रस्य वज्रिणः । नविन्धे अस्य सुष्टुतिम् ।। ७ ।।**
तुञ्जेऽतुञ्जे । ये । उत्ऽतरे । स्तोमाः । इन्द्रस्य । वज्रिणः । न । विन्धे । अस्य । सुऽस्तुतिम् ।।

## ऋग्भाष्यम्

**त्वयैव प्रेरणे जाते तत्र तत्र य उत्तराः ।**
**तेऽपि स्तोमाः सुष्टुतित्वमस्यानन्त्यान्न चाप्नुयुः ।। ७ ।।**

**ऋग्भाष्यटीका– तुंजे** । त्वयैव । तुंजतिर्गतिकर्मा दानकर्मावा । ततश्च त्वया क्रियमाणे **तुंजे तुंजे** गमने दानेवा क्रियाया इति शेषः । प्रेरण इति तु तात्पर्यम् । यद्वा अनेकार्थत्वाद्धातूनां तुंजतिः प्रेरणे वर्तते । **तुंजेतुंजे** तत्र तत्र स्तोतृषु त्वयैव प्रेरणे जाते सति ये प्रवृत्ता **उत्तरे** उत्तरा उत्तमाः । **स्तोमाः** स्तुतिविशेषास्तेऽप्यस्य **इन्द्रस्य** तव **सुष्टुतिं** सुष्टुतित्वं **न विन्धे** वर्णव्यत्यासादिना न विन्दन्ते नाप्नुयुः आनंत्यात् । गुणैरनंतत्वेन सर्ववर्णकत्वाभावादिति भावः ।।

**मन्त्रार्थमञ्जरी–** (हे इन्द्र) तुञ्जेतुञ्जे, 'तुजि गतौ दाने वा' इति धातोस्त्वया क्रियमाणे गमने क्रियमाणे दाने वा, धातूनामनेकार्थत्वात्प्रेरणार्थो वा, स्तोतृषु त्वयैव प्रेरणे जाते सति । ये, प्रवृत्ताः । उत्तरे, उत्तराः, उत्तमाः स्तोमाः, स्तुतिविशेषाः । (तेऽपि) अस्य वज्रिणः इन्द्रस्य (तव) सुष्टुतिम्, सुष्टुतित्वम् । न विन्धे, न विन्दन्ते, न प्राप्नुवन्ति, भगवतोऽनन्तगुणत्वेन सर्वविषयकत्वाभावादिति भावः, वर्णव्यत्ययझप्रत्ययलोपादिना छान्दसं रूपम् ।। ७ ।।

**स्कन्द–** 'तुञ्जः' (तु.निष. २,२०) इति न वज्रनाम । किन्तर्हि । तुञ्जतेर्दानकर्मणः (तु.निघ.३,२०) । तुञ्जो दानम् । दाने दाने । कस्य ? सामर्थ्याद् वृष्टेः धनानां वा । **ये उत्तरे** पूर्वेभ्यः प्रकृष्टतमा मदीयाः **स्तोमाः इन्द्रस्य वज्रिणः** यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । तैरपि **न विन्धे** विदेर्लाभार्थस्येदं रूपम् । अहं **अस्य** इन्द्रस्य **सुष्टुतिं** सुष्ठु स्तुतिम् अशेषगुणप्रकाशनरूपाम् । तैरपि नाशेषानिन्द्रगुणान् प्रकाशयितुं शक्नोमीत्यर्थः । अथवा अयं 'न विन्ध' इति स्पर्शनार्थो वा । तैरपि न विन्धे न स्पृशामि । अस्य सुष्टुतिम् अशेषगुणप्रकाशन-रूपाम् । एतदुक्तं भवति– येऽपि दानपरितुष्टस्य ममात्यन्तमहान्तः स्तोमाः, तेऽपीन्द्रस्य गुणैक-देशवर्तिनः समस्तगुणप्रकाशनमप्राप्ताः । किं पुनरन्ये इति ।। ७ ।।

**वेङ्कटमाधव–** दाने दाने उत्तरोत्तरम् । ऋषय एनं स्तुवन्ति । तेषु स्तोमेषु न अस्य अहं दानानुगुणाम् सुष्टुतिम् विन्दामि ।। ७ ।।

**मुद्गल– तुञ्जे तुञ्जे** तस्मिंस्तस्मिन् फलदातरि देवान्तरे **ये स्तोमाः** स्तोत्रविशेषाः **उत्तरे** उत्कृष्टाः सन्ति तैः स्तोमैः सर्वैरपि **वज्रिणः** वज्रयुक्तस्य **इन्द्रस्य सुष्टुतिं** योग्यां शोभनां स्तुतिं **न विन्धे** न विन्दामि ।। ७ ।।

**सायण– तुञ्जे तुञ्जे** तस्मिंस्तस्मिन् फलदातरि देवान्तरे **ये स्तोमाः** स्तोत्रविशेषाः **उत्तरे** उत्कृष्टाः सन्ति तैः स्तोमैः सर्वैरपि **वज्रिणः** वज्रयुक्तस्य **अस्य इन्द्रस्य सुष्टुतिं** योग्यां शोभन-स्तुतिं **न विन्धे** न विन्दामि । इन्द्रस्यात्यन्तगुणबाहुल्येन देवान्तरेषूत्तमत्वेन प्रसिद्धान्यपि स्तोत्राणि न पर्याप्तानीत्यर्थः । एतामृचं यास्क एवं व्याचष्टे– 'तुञ्जस्तुञ्जतेर्दानकर्मणः । दाने दाने य उत्तरे स्तोमा इन्द्रस्य वज्रिणो नास्य तैर्विन्दामि समाप्तिं स्तुतेः' (निरु.६,१७-१८) इति ।

तुञ्जे तुञ्जे । तुञ्जतिर्दानकर्मा इत्युक्तम् । ततः कर्तरि पचाद्यच् (पा.सू.३,१,१३४) । 'चितः' (पा.सू.६,१,१६३) इत्यन्तोदात्तत्वम् । 'नित्यवीप्सयोः' (पा.सू.८,१,४) इति द्विर्भावः । 'तस्य परमाम्रेडितम्' (पा.सू.८,१,२) इति द्वितीयस्याम्रेडितसंज्ञा । 'अनुदात्तं च' (पा.सू.८,१,३) इत्यनुदात्तत्वम् । दातरि दातरीत्यर्थः । निरुक्ते तु 'दाने दाने' इत्यर्थतो व्याख्यानम् । उत्तरे । 'तॄप्लवनतरणयोः' । भावे 'ऋदोरप्' (पा.सू.३,३,५७) । उच्छब्द उत्कृष्टवचनः । उत्कृष्टः तरो यस्येति बहुव्रीहिः । उच्छब्दो 'निपाता आद्युदात्ताः' (फि.सू.८०)

इत्याद्युदात्तः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । स्तोमाः । 'अर्तिस्तुसु' (उ.सू.१,१३७) इत्यादिना स्तोमशब्दो मनन्तो नित्त्वादाद्युदात्तः । विन्धे । 'विदॢ लाभे' । लट् । स्वरितेत्त्वादात्मनेपदम् । उत्तमैकवचनमिट् (पा.सू.३,४,७८) । 'तुदादिभ्यः शः' (पा.सू.३,१,७७) । 'शे मुचादीनाम्' (पा.सू.७,१,५९) इति नुम् । दकारस्य व्यत्ययेन धकारः । अस्य । प्रकृतस्येन्द्रस्य परामर्शादन्वादेशे इदमोऽश् (पा.सू.२,४,३२) । शित्त्वात् सर्वादेशोऽनुदात्तः । सुष्टुतिम् । 'ष्टुञ् स्तुतौ' । 'धात्वादेः षः सः' इति सत्वम् । 'स्त्रियां क्तिन्' (पा.सू.३,३,९४) इति भावे क्तिन् । सु इति उदात्तेनोपसर्गेण प्रादिसमासः । (पा.सू.२,२,१८) । 'उपसर्गात्सुनोति' (पा.सू.८,३,६५) इत्यादिना षत्वम् । अत्र अव्ययपूर्वपदप्रकृतिस्वरत्वेन सोः प्राप्तमुदात्तत्वं बाधित्वा 'गतिकारकोपपदात्कृत्' इत्युत्तरपदप्रकृतिस्वरेण धातोरुदात्तत्वे प्राप्ते तदपवादत्वेन 'तादौ च निति कृत्यतौ' (पा.सू.६,२,५०) इत्यनन्तरस्य गतिसंज्ञकस्य सोः एव उदात्तत्वेन भवितव्यम् । तत्तु 'मन्क्तिन्व्याख्यानशयनासनस्थानयाजकादिक्रीताः' (पा.सू.६,२,१५१) इत्युत्तरपदान्तोदात्तत्वेन बाध्यते । तथा च 'सुहवां सुष्टुती हुवे' (ऋ.सं.२,३२,४), 'वृष्णे चोदस्व सुष्टुतिम्' (ऋ.सं.८,७५,६), 'यास्ते राके सुमतयः' (ऋ.सं.२,३२,५) इत्यादौ अन्तोदात्तत्वमित्याहुः । यथा तु 'मन्क्तिन्' इत्यादौ वृत्तौ उक्तं तथैव तत्र घटते इति लक्ष्यते । तत्र हि 'कारकाद्दत्तश्रुतयोरेवाशिषि' (पा.सू.६,२,१४८) इत्यतः 'कारकात्' इत्यनुवृत्तेः 'पाणिनिकृतिः' इत्यादावेव 'मन्क्तिन्' इत्यादिसूत्रमित्युक्तम् । 'कारकादित्येव । प्रकृतिः प्रहृतिः' (का.६,२,१५१) इति च प्रत्युदाहृतम् । स्यादेतत् । स्तूयतेऽनयेति स्तुतिरिति क्तिना करणभूता ऋक् अभिधीयते । सुशब्देन च करणमेव विशेष्यते न धात्वर्थः । तथा च सुष्टुतिरित्यत्र सुशब्दः कारकपर एव भविष्यति । प्रकृतिः प्रहृतिरित्यादौ तु प्रशब्दो धात्वर्थे विशेषणमेवेति तत्प्रत्युदाहरणोपपत्तिरिति । न । एवं सति सुशब्दस्य क्रियायोगाभावात् 'उपसर्गाः क्रियायोगे' (पा.सू.१,४,५९) इत्युक्ता उपसर्गसंज्ञा न स्यात् । तथा च 'उपसर्गात्सुनोति सुवति' इत्यादिना षत्वं न स्यात् । ननु क्तिना करणमभिधीयते । क्रियासाधनं च करणम् । तथा च करणविशेषणस्यापि सुशब्दस्य करणान्तर्गतक्रियायोगादुपसर्गता भविष्यतीति । न । तथा सति यत्क्रियायुक्ताः तं प्रति उपसर्गसंज्ञकाः (पा.सू.१,४,६०,३) इति करोत्यर्थमेव प्रति सोरुपसर्गता, न तु स्तुधात्वर्थं प्रतीत्यस्य षत्वं न स्यादेव ।

ननु स्तुधात्वर्थद्वारैव तत्करणस्य सुशब्दो विशेषणं भविष्यति । या हि शोभना स्तुतिस्तत्करणमपि शोभनमेवेति । एवं च स्तुधात्वर्थसम्बन्धात् तं प्रति उपसर्गत्वेन षत्वमपि भविष्यति । तद्वारा करणविशेषणत्वात् कारकवचनोऽपि सुशब्दो भविष्यतीति वृत्त्यविरोधेनैव मन्क्तिनादिसूत्रस्य सुष्टुतिशब्दो विषयो भविष्यति । प्रकृतिः प्रहृतिरित्यत्र भावे क्तिन् प्रत्युदाहृतेति । न । तत्र प्रशब्दस्य करणपरत्वम् । करणे क्तिन्नुदाहरणेऽपि धात्वर्थमात्रविशेषणतैव विवक्षिता न तद्वारा प्रत्ययार्थविशेषणताऽपि इति तत्प्रत्युदाहरणोपपत्तिरिति । सुष्टुतिरित्यत्र पुनः क्तिनभिधेयकरणपर्यन्तं सुशब्दस्य व्यापार इत्युदाहरणतैव न प्रत्युदाहरणतेति । न । किमत्र सुशब्दः श्रुत्यैव प्रकृतिप्रत्ययार्थोभयविशेषणपरः, उत श्रुत्या एकं विशिनष्टि अर्थादितरदिति । यदाऽप्युभयपरत्वं तदापि किं यौगपद्येन उत क्रमेणेति । आद्ये प्रतिविशेष्यं विशेषणपदावृत्तिरिति प्रसङ्गः । द्वितीये विरम्यव्यापारापातः । न च शब्दबुद्धिकर्मणां विरम्यव्यापारः कस्यचित् दृष्टः इष्टो वा । अतो न श्रुत्या उभयपरत्वम् । अथैकत्र श्रुत्या तात्पर्यम्, अपरत्र तु अर्थादिति । तत्र धात्वर्थसम्बन्धस्य आर्थिकत्वे षत्वासिद्धिः । प्रत्ययार्थसम्बन्धस्य आर्थिकत्वे 'मन्क्तिन्' इत्यादिस्वरासिद्धिः । आर्थिकेनापि कारकसम्बन्धेनोदाहरणत्वाभिधाने प्रकृतिः प्रहृतिरित्यादिप्रत्युदाहरणं न स्यात् । श्रुत्या धात्वर्थमात्रसम्बन्धस्यापि प्रशब्दस्यार्थात् तत्करणसम्बन्धः केन वारयितुं शक्यते इत्येषा दिक् । अत इह प्रत्ययार्थमात्रसम्बन्धपरत्वाङ्गीकारेण स्वरः सिध्यतु पत्वं तु छान्दसमस्तु । शोभना स्तुतिर्यस्यामिति बहुव्रीहिर्वा भवतु । एवं च 'नञ्सुभ्याम्' इत्यन्तोदात्तं भविष्यति । अथवा सुष्टु स्तुवन्तीति सुष्टुतय इति करणभूता ऋचः स्तुतिशब्देनोच्यन्ते । 'क्तिच्क्तौ च संज्ञायाम्' (पा.सू.३,३,१७४) इति क्तिच्प्रत्यये सति चित्त्वादन्तोदात्तता भविष्यति । न च करणीभूतानामृचां कर्तृप्रत्ययेन क्तिचा कथमभिधानमिति वाच्यम् । काष्ठानि पचन्तीतिवत् तासामपि स्वव्यापारप्राधान्यविवक्षया करणत्वोपपत्तेरिति ॥ ७ ॥

**सिद्धाञ्जनम्–** सप्तमीमृचमाह – **तुञ्जे तुञ्जे** प्रतिप्रेरणम् । (तुञ्जतिः यज्ञे वा दाने वेति पूर्वे, बलादानयोरपि वर्तते, त्वरयति प्रेरयतीत्यर्थेऽपि क्वचित् सा०. व्या०.। तस्मात् प्रेरणबलं, तदादानं वेति वयम् ।) **ये उत्तरे** उत्कृष्टतराः **स्तोमाः** स्तोत्राणि मदीयानि प्रवर्तन्ते, तैः **अस्य** मम सन्निहितस्य **वज्रिणः** महापराक्रमद्योतकवज्रयुक्तस्य **इन्द्रस्य सुष्टुतिं** सुष्टु पर्याप्तां स्तुतिं **न विन्धे** न विन्दामि, न लभे ॥

यदा यदा प्रेरणानि मामाविश्य स्तावयन्ति तदा तदा उत्तरोत्तराः श्रेष्ठाः स्तुतीः करोम्येव । तथाऽपि वज्रबाहोरिन्द्रस्य वर्णने नालमिमाः स्तुतय इति मे मतिः इति भावः । विन्धे-विद्लृ-लाभे दस्य व्यत्ययेन धः छान्दसः ।। ७ ।।

### ऋक्संहिता पदपाठसहिता

**वृषा यूथेव वंसगः कृष्टीरियर्त्योजसा । ईशानो अप्रतिष्कुतः ।। ८ ।।**
**वृषा । यूथाऽइव । वंसगः । कृष्टीः । इयर्ति । ओजसा । ईशानः । अप्रतिऽस्कुतः ।।८।।**

### ऋग्भाष्यम्

**प्रतिवीरो वृषावंसस्तद्गंतावंसगो विभीः ।**
**यूथान्याकर्षति यथा प्रजाः प्रेरयति प्रभुः ।**
**अल्पस्यापि प्रसिद्धयैव दृष्टान्तत्वं तु युज्यते ।। ८ ।।**

**ऋग्भाष्यटीका– वृषा** । प्रतिवीरः । एकस्य वृषस्य यः प्रतिवीरो वृषा स वंस उच्यते । तं वंसं प्रति यो विभीः युद्धाय गच्छति स वृषा **वंसगः** । स **यूथेव** यूथानीव यथागवां यूथान्याकर्षति एवं **ईशानः** प्रभुः **अप्रतिष्कुतः** अप्रतिद्वन्द्व इन्द्रः **कृष्टीः** प्रजाः **ओजसा** सामर्थ्येन **इयर्ति** गतिकर्माऽयम् । अन्तर्णीतण्यर्थः । गमयति प्रेरयतीति यावत् । नन्वीश्वरस्याल्पो वृषा दृष्टान्तः कथमुच्यत इत्याह– **अल्पस्यापीति** ।। दृष्टान्तो हि प्रत्यायनार्थं वक्तव्यः । तच्च प्रसिद्धेनैव भवतीति भावः ।। ८ ।।

**मन्त्रार्थमञ्जरी–** एकस्य वृषस्य यः प्रतिवीरोऽपरो वृषा वर्तते स वंस इत्युच्यते, तं वंसं प्रति यो निर्भयो युद्धाय गच्छति स वंसगः । वृषा, वृषभः । यूथेव, यूथानीव, गवां यूथानि यथाकर्षत्येवम् । ईशानः, प्रभुः । अप्रतिष्कुतः, पूर्वोक्तदिशा अप्रतिद्वन्द्वः । (इन्द्रः) कृष्टीः, प्रजाः । ओजसा, सामर्थ्येन । इयर्ति, 'ऋ गतौ' अन्तर्णीतण्यर्थः, गमयति प्रेरयतीति यावत् ।।

**स्कन्द– वृषा** वर्षिता इन्द्रः **यूथेव वंसगः** वंसगो वृषभ उच्यते वननीयगमनत्वात् । स यथा गोयूथानि प्रति तद्वत् । कृष्टीः यष्टॄन् शत्रून् वा मनुष्यान् प्रति **इयर्ति** गतिकर्माऽयम् । गच्छति । **ओजसा** स्वबलेन **ईशानः** सर्वस्येश्वरः **अप्रतिष्कुतः** अप्रत्यागतो युद्धेऽभियुञ्जानः अन्येनाप्रत्यभियुक्तपूर्व इत्यर्थः ।। ८ ।।

**वेङ्कटमाधव–** वर्षिता गोयूथानीव वननीयगमनऋषभः इन्द्रो वीरः युयुत्सून् मनुष्यान् बलेन अभिगच्छति सर्वस्य ईशानः अप्रतिकृतः ॥ ८ ॥

**मुद्गल–** **वृषा** कामानां वर्षितेन्द्रः **ओजसा** स्वकीयेन बलेन अनुग्रहीतुं **कृष्टीः** मनुष्यान् **इयर्ति** प्राप्नोति । कीदृश इन्द्रः ? **ईशानः** समर्थः **अप्रतिष्कुतः** प्रतिशब्दरहितः याच्यमानं न परिहरतीत्यर्थः । दृष्टान्तः **वंसगः** वननीयगतिर्वृषभो **यूथेव** गोयूथानि यथा प्राप्नोति तद्वत् ॥

**सायण–** **वृषा** कामानां वर्षितेन्द्रः **ओजसा** स्वकीयबलेनानुग्रहीतुं **कृष्टीः** मनुष्यान् **इयर्ति** प्राप्नोति । कीदृश इन्द्रः ? **ईशानः** समर्थः **अप्रतिष्कुतः** प्रतिशब्दरहितः । याच्यमानं न परिहरतीत्यर्थः । इन्द्रस्य दृष्टान्तः । **वंसगः** वननीयगतिर्वृषभः **यूथेव** गोयूथानि यथा प्राप्नोति तद्वत् ।

वृषा । 'कनिन्युवृषितक्षिधन्विराजिद्युप्रतिदिवः' (उ.सू.१,१५४) इति वर्षतेः कनिन्प्रत्ययः । कित्त्वाद्गुणाभावः । नित्त्वादाद्युदात्तः । यूथा इव । युवन्ति मिश्रीभवन्तीति यूथानि । 'यु मिश्रणामिश्रणयोः' । 'तिथपृष्ठसूथयूथप्रोथाः' (उ.सू.२,१६९) इति थक्प्रत्ययान्तो निपातितः । निपातनादीर्घत्वम् । प्रत्ययस्वरेण आकार उदात्तः । 'शेश्छन्दसि बहुलम्' (पा.सू.६,१,७०) इति लुक् । 'इवेन विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यम्' । पा.सू.२,१,४,२) इति समासेऽपि स एव स्वरः । वंसगः । पृषोदरादित्वात् अभिमतरूपस्वरसिद्धिः (पा.सू.६,३, १०९) । कर्षन्तीति कृष्टयः । 'क्तिच्क्तौ च संज्ञायाम्' इति क्तिच् । चित्त्वादन्तोदात्तः । इयर्ति । 'ऋ सृ गतौ' । तिप् । शपः श्लुः । 'श्लौ' (पा.सू.६,१,१०) इति द्विर्भावः । अभ्यासस्य उरदत्वहलादिशेषौ । (पा.सू.७,३,६६;६०) । 'अर्तिपिपर्त्योश्च' (पा.सू.७,४,७७) इति अकारस्य इकारः । 'अभ्यासस्यासवर्णे' (पा.सू.६,४,७८) इति इयङादेशः । अङ्गस्य गुणो रपरत्वम् । ओजसा । 'उब्जेर्बलोपश्च' (उ.सू.४,६३१) इत्यसुन् तत्संनियोगेन बकार-लोपः । लघूपधगुणः (पा.सू.७,३,८६) । नित्त्वादाद्युदात्तः । ईशानः । 'ईश ऐश्वर्ये' । लटः शानच् । 'अदिप्रभृतिभ्यः शपः' (पा.सू.२,४,७२) इति शपो लुक् । 'चितः' इत्यन्तोदात्तं बाधित्वा अनुदात्तेत्वात् लसार्वधातुकानुदात्तत्वेन धातुस्वर एव शिष्यते । अप्रतिष्कुतः अप्रतिशब्दितः । 'कु शब्दे' । कर्मणि क्तः । पारस्करादित्वात् सुडागमः (पा.सू.६,१,१५७) । सुषामादित्वात् षत्वम् (पा.सू.८,३,९८) । नञ्समासः । अव्ययपूर्वपदप्रकृतिस्वरत्वम् ॥७॥

**सिद्धाञ्जनम्–** अष्टमीमृचमाह – **वृषा** इन्द्रः वर्षिता दिव्यानां कामानां **कृष्टीः** कर्षणपदलक्षितनित्योद्यमशीलान् आर्यान् मनुष्यान् **ओजसा** वीर्यवत्तमेन स्वानुग्रहबलेन इयर्ति प्राप्नोति, प्रेरयतीत्यर्थः। तत्र दृष्टान्तः– **वंसगः** य वंसं वननीयं यथा तथा गच्छति, स वननीयगतिः **वृषा** वृषभः **यूथेव** गोयूथानीव । यथा गवां यूथानि प्रविष्टः बलिष्ठो बलीवर्दः तान् प्रेरयति तथा स चेन्द्रः **ईशानः** ईश्वरः, **अप्रतिष्कुतः** न केनापि छादयितुं शक्यः, अत एव नित्यप्रकाशः । अन्यत् प्रागुक्तम् ।। ८ ।।

### ऋक्संहिता पदपाठसहिता

**य एकश्चर्षणीनां वसूनामिरज्यति । इन्द्रः पञ्च क्षितीनाम् ।। ९ ।।**

यः । एकः । चर्षणीनाम् । वसूनाम् । इरज्यति । इन्द्रः । पञ्च । क्षितीनाम् ।। ९ ।।

### ऋग्भाष्यम्

**राजा भवति वित्तानां प्रजानां चैक एव यः ।**
**देवगन्धर्वदैतेयपितृमानुषभेदतः ।**
**प्रजानामपि पञ्चानां सामान्याच्च विशेषतः ।। ९ ।।**

**ऋग्भाष्यटीका– य एकः** । राजा । **यः** इन्द्र **एकः** एव **चर्षणीनां** प्रजानां **वसूनां** वित्तानां च **पञ्चक्षितीनां** देवादिभेदेन पञ्चविधानां प्रजानामपि **इरज्यति** ऐश्वर्यकर्माऽयं राजा भवति । स कृष्टीरियर्ति इति पूर्वेण सम्बन्धः । चर्षणीनामित्यादि षष्ठी द्वितीयार्थे । चर्षणीनां पञ्चक्षितीनां चेति पुनरुक्तिरित्यत आह– **सामान्यादिति** ।। चर्षणीनामिति सामान्यादुक्तं पञ्चक्षितीनामिति च विशेषतः । अतो नोक्तदोषः ।। ९ ।।

**मन्त्रार्थमञ्जरी–** यः इन्द्रः एकः (एव) । चर्षणीनाम्, प्रजानाम् । वसूनां (च), वित्तानां च । पञ्चक्षितीनाम् (अपि), देवगन्धर्वदैतेयपितृमानुषभेदेन पञ्चविधानां प्रजानामपि, अत्र षष्ठ्यन्तानां द्वितीयार्थत्वं ज्ञेयम् । इरज्यति, नियमयति, 'इरज् ऐश्वर्ये' इति धातोस्तेषां राजा भवतीति फलितार्थः । (सः) कृष्टीः इयर्ति इति पूर्वेण अन्वयः अत्र 'चर्षणीनाम्, पञ्च क्षितीनाम्' इति सामान्यविशेषभावात् (भाग.१०।१।६) अपौनरुक्त्यं ध्येयम् ।। ९ ।।

**स्कन्द– यः एकः** एक एव **चर्षणीनां** मनुष्याणां ब्रह्मणादीनां **वसूनां** धनानां च **इरज्यति** ऐश्वर्यकर्माऽयं (तु निघ.२,२१) ईष्टे । **इन्द्रः पञ्च** षष्ठ्यर्थे प्रथमैषा । पञ्चानां क्षितीनां मनुष्यजातीनां, गन्धर्वाः पितरो देवा इत्येतासाम् । यच्छब्दश्रुतेस्तच्छब्दमध्याहृत्यैकवाक्यता नेया ।। ९ ।।

**वेङ्कटमाधव–** यः एकः इन्द्रः मनुष्याणां पञ्चानां क्षितीनां निवसतां गन्धर्वाः पितरो देवा असुरा रक्षांसीति पञ्चत्वम् । तेषां प्रदेयानां धनानां ईष्टे । पूर्वस्यामृचि वाक्यपरिसमाप्तिः ।।

**मुद्गल– यः** इन्द्रः स्वयम् **एकः** एव **चर्षणीनां** मनुष्याणां तथा **वसूनां** धनानां **इरज्यति** ईष्टे । ईश ऐश्वर्ये । स **इन्द्रः पञ्च** निषादपञ्चमानां क्षितीनां निवासार्हाणां वर्णानामनुग्रहीतेति शेषः ।। ९ ।।

**सायण– यः** इन्द्रः स्वयम् **एकः** एव **चर्षणीनां** मनुष्याणां **इरज्यति** ईष्टे; तथा **वसूनां** धनानां इरज्यति स **इन्द्रः पञ्च** निषादपञ्चमानां क्षितीनां निवासार्हाणां वर्णानामनुग्रहीतेति शेषः ।

एकः । 'इण् गतौ' । 'इणभीकापाशल्यतिमर्चिभ्यः कन्' (उ.सू.३,३२३) इति कन् । बाहुलकात् कलोपाभावः । नित्त्वादाद्युदात्तत्वम् । चर्षणीनाम् । प्रातिपदिस्वरेणान्तोदात्तः । 'अन्तोदात्तात्' इत्यनुवृत्तौ 'नामन्यतरस्याम्' (पा.सू.६,१,१७७) इति विभक्तेरुदात्तत्वम् । वसूनाम् । 'नित्' इत्यनुवृत्तौ 'शृस्तृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च' (उ.सू.१,१०) इति उप्रत्ययः । नित्त्वादाद्युदात्तः । इरज्यति । कण्ड्वादिषु 'इरज् ईर्ष्यायाम्' । अत्र ऐश्वर्यार्थः । 'कण्ड्वादिभ्यो यक्' (पा.सू.३,१,२७) । प्रत्यस्वरणोदात्तः । पञ्च । 'पचि व्यक्तीकरणे' । 'पञ्चेश्च' इति कनिन् । नित्त्वादाद्युदात्तः । क्षितीनाम् । प्रातिपदिकस्वरेणान्तोदात्तः । 'नामन्यतर-स्याम्' इति विभक्तेरुदात्तत्वम् ।। ९ ।।

**सिद्धाञ्जनम्–** नवमीमृचमाह– **यः** इन्द्रः **एकः** समानः स्वयमेक एव **चर्षणीनां** चर्षणकर्षण-अरणादिप्रागुक्तलक्षणानां मनुष्याणां **इरज्यति** ईष्टे, ईश्वरो भवति, तथा **वसूनां** विविधानां धनानामपि इरज्यति ईश्वरो भवति, स **इन्द्रः** पञ्च पञ्चानां, विभक्तिव्यत्ययः । क्षितीनां निवासस्थानानां ईश्वर इति शेषः ।

चर्षणीनाम्– न केवलं मनुष्यसामान्यपरं ग्राह्यम् । यौगिकार्थानुसारेण 'आर्यः कृष्टिः' इत्यादिवद्ग्राह्यः । इरज्यति-ऐश्वर्यकर्मा । 'पञ्च क्षितीनाम्' इत्यत्र पञ्चजनानां इति सायणीयम् । सर्वत्र पञ्चजनाः निषादपञ्चमा इति व्याख्या । स्थूलपक्षानुसारेणापि सन्दिग्धमिदम् । उपन्यस्तोऽयं विषयो भूमिकायाम् । क्षियतेर्निवासार्थस्य रूपं क्षितिः। क्षितयो निवासस्थानानि पृथिव्यादीनि पञ्च इतः पृथिवीमारभ्य उत्तरोत्तरं ऊर्ध्वं सृष्टौ परिकल्पितानि भवन्ति । एवं त्रिलोकसंस्थानं, सप्तलोकसंस्थानं क्वचित् चतुर्व्याहृतिप्रतिपादितचतुर्लोकसंस्थानं चामनन्ति। यथा पृथिव्यस्तिस्र इति वेदे प्रतिपादिताः त्रैलोक्यसम्बन्धिनीः पृथुला भूमीरभिदधते, यत्रेयं नः पृथिवी स्थूला भूमिः प्रथमा भवति, तथा पञ्च क्षितयोऽपि पञ्च वासभूमयः यत्रेयं क्षितिर्नः प्रथमेति बोध्यम् ।।९।।

## ऋक्संहिता पदपाठसहिता

**इन्द्रं॑ वो वि॒श्वत॒स्परि॒ हवा॑महे॒ जने॑भ्यः । अ॒स्माक॑मस्तु॒ केव॑लः ।। १० ।।**

**इन्द्र॑म् । वः॒ । वि॒श्वतः॑ । परि॑ । हवा॑महे । जने॑भ्यः । अ॒स्माक॑म् । अ॒स्तु॒ । केव॑लः ।।१०।।**

## ऋग्भाष्यम्

**सम्यग्घवामहे सर्वगतं च व्यक्तरूपतः ।**
**स्थातुमेकत्र वोऽर्थाय जना नोऽस्तु सकेवलः ।। १० ।।**

**ऋग्भाष्यटीका– इन्द्रं वः ।** सम्यक् । जनेभ्यो व इति वचनाज्जनान्प्रतीदं वचनमिति विज्ञायते । अत उक्तं हे जनाः **विश्वतः** सर्वत्रास्थितं सर्वगतं **इन्द्रं जनेभ्यो वः** युष्माकमर्थाय **परि** सम्यक् **हवामहे** आह्वयामः । सर्वगतस्य कथमाह्वानमित्यतोऽभिप्रायमाह– **व्यक्तरूपत एकत्र स्थातुमिति ।।** आहूतश्चासौ केवल इन्द्रो नः सर्वेषामस्तु इष्टद इति शेषः ।।१०।।

**मन्त्रार्थमञ्जरी–** (हे जनाः) विश्वतः, सर्वतः, सर्वत्र स्थितं सर्वगतम् । इन्द्रं जनेभ्यः । वः, युष्मभ्यम्, युष्माकमर्थायेति यावत् । परि, सम्यक् । हवामहे, व्यक्तरूपतयैकत्र स्थातु-माह्वयाम इत्यर्थः ।। आहूतश्च (असौ) केवलः (इन्द्रः) अस्माकम्, नः । अस्तु । (इष्टदः) इति शेषः । वः जनेभ्यः इति (श्रुतौ) श्रवणात् 'हे जनाः' इति (व्याख्याने) सम्बोधनलाभ इति ध्येयम् ।। १० ।।

**स्कन्द–** व इति तादर्थ्ये चतुर्थी । यजमानप्रतिनिर्देशश्च । हे यजमानाः! **इन्द्रं** युष्मदर्थं **विश्वतः** सर्वेभ्यः **परिहवामहे** परिशब्दो धात्वर्थानुवादी पदपूरणः । आह्वयामः । **जनेभ्यः** 'पञ्चजनाः । विवस्वन्तः' (निघ २,३) इति मनुष्यनामसु पाठान्मनुष्यनामैतत् । अन्येभ्यो मनुष्येभ्यः । **अस्माकं अस्तु केवलः** षष्ठ्यर्थे प्रथमैषा । अस्माकं केवलानामस्तु । माऽन्येषां भूत् । कः ? सामर्थ्यात् स्तुत्यो यष्टव्यश्च ।। १० ।।

**वेङ्कटमाधव–** वः इति पञ्चमी । वः जनेभ्यः सर्वेभ्य एव वयं इन्द्रं हवामहे । स अस्माकम् अस्तु असाधारणः ।। १० ।।

**मुद्गल–** हे ऋत्विग्यजमानाः **विश्वतः** सर्वेभ्यः **जनेभ्यः परि** उपरि अवस्थितं इन्द्रं वः युष्मदर्थं **हवामहे** आह्वयामः । अतः स इन्द्रः **अस्माकं केवलः** असाधारणः अस्तु । इतरेभ्योऽप्यधिकमनुग्रहमस्मासु करोत्वित्यर्थः ।। १० ।।

**सायण–** आश्विनं शंसिष्यन् 'इन्द्रं वो विश्वतस्परि' इति जुहुयात् । 'संस्थितेष्वाश्विनाय स्तुवते' इति खण्डे 'बण्महाँ असि सूर्येति द्वाभ्यामिन्द्रं वो विश्वतस्परि' (आश्व.श्रौ.६,५) इति सूत्रितम् । चतुर्विंशेऽहनि प्रातः सवने ब्राह्मणाच्छंसिन 'इन्द्रं वो विश्वतस्परि' इत्यारम्भणीया । 'चतुर्विंशे' इत्युपक्रम्य 'ऋजुनीती नो वरुण इन्द्रं वो विश्वतस्परि' (आश्व.श्रौ.७,२) इति सूत्रितम् ।

हे ऋत्विग्यजमानाः **विश्वतः** सर्वेभ्यो **जनेभ्यः परि** उपरि अवस्थितं **इन्द्रं वः** युष्मदर्थं **हवामहे** आह्वयामः । अतः स इन्द्रः **अस्माकं केवलः** असाधारणः **अस्तु** इतरेभ्योऽप्यधिकमनुग्रहमस्मासु करोत्वित्यर्थः ।।

इन्द्रम् । रन्प्रत्ययान्तो नित्वादाद्युदात्तः । वः । 'अनुदात्तं सर्वम्' इत्यनुवृत्तौ 'बहुवचनस्य वस्नसौ' (पा.सू.८,१,२१) इति वस् । विश्वतः । 'लिति' (पा.सू.६,१,१९३) इति प्रत्ययात् पूर्वमुदात्तम् । परि । निपातत्वादाद्युदात्तः । संहितायां 'पञ्चम्याः परावध्यर्थे' (पा.सू.८,३,५१) इति विसर्जनीयस्य सत्वम् । हवामहे । ह्वेञः शपि 'बहुलं छन्दसि' (पा.सू.६,१,३४) इति सम्प्रसारणपरपूर्वत्वे । गुणावादेशौ । जनेभ्यः । जन्यन्ते इति जनाः । जनयतेः कर्मणि घञ् । 'जनिवध्योश्च' (पा.सू.७,३,३५) इति उपधाया वृद्ध्यभावः । ञित्वादाद्युदात्त्वम् । अस्माकम् ।

अस्मच्छब्दोऽन्तोदात्तः । 'शेषे लोपः' (पा.सू.७,२,९०) इत्यन्तलोपपक्षे 'साम आकम्' (पा.सू.७,१,३३) इति आकारेण एकादेश उदात्तः । टिलोपपक्षे उदात्तनिवृत्तिस्वरेण आकार उदात्तः । केवलः । वृषादेराकृतिगणत्वादाद्युदात्तः ।। १० ।।

**सिद्धाञ्जनम्–** दशमीमृचमाह– भो यजमानाः, देवतानुग्रहसम्पादनप्रवृत्तान् प्रति सम्बोधनम् । **वः** युष्मदर्थं **विश्वतः** सर्वेभ्यः **जनेभ्यः** जातेभ्यः मनुष्येभ्यः प्राप्तजन्मभ्यो लोकेभ्योऽपि **परि** उपरि अवस्थितं **इन्द्रं हवामहे** आह्वयामः । स इन्द्रः **अस्माकं** सर्वेषामनुष्ठातॄणां **केवलः** असाधारणः, अद्वितीयाराध्यः अनन्योपास्तिविषयभूतः **अस्तु** भवतु । इतरेभ्योऽप्यधिकमनुग्रहमस्माकं करोत्विति व्याख्यानमयुक्तम् । न तद्भक्ति- लक्षणम् । अल्पमनस्कता मधुच्छन्दसि महर्षावारोपिता भवति ।।

।। इति प्रथमाष्टके प्रथमाध्याये चतुर्दशो वर्गः । द्वितीयोऽनुवाकः ।।

## ।। अथ पञ्चदशो वर्गः ।।

### (सूक्तम् ८)

### ऋक्संहिता पदपाठसहिता

१० मधुच्छन्दा वैश्वामित्रः । इन्द्रः । गायत्री ।

**एन्द्र सानसिं रयिं सजित्वानं सदासहम् । वर्षिष्ठमूतये भर ।। १ ।।**
आ । इन्द्र । सानसिम् । रयिम् । सऽजित्वानम् । सदाऽसहम् ।। वर्षिष्ठम् । ऊतये । भर ।।

### ऋग्भाष्यम्

**जयिना सहितं लाभयुक्तं वित्तं सदाबलम् ।**
**वर्षिष्ठं सुमहद्रक्षानिमित्तं नित्यदा भर ।। १ ।।**

**ऋग्भाष्यटीका–** एन्द्र । दशर्चमेतदैन्द्रं सूक्तम् ।। जयिना । हे **इन्द्र सानसिं** सानो लाभः मतुबर्थे सिः लाभयुक्तम् । **सजित्वानं** जित्वना जयिना पुत्रादिना सहितं **सदासहं** सदाबलं सदाबलवत् । **वर्षिष्ठं** वृद्धतमं सुमहत् । **ऊतये** रक्षायै रक्षानिमित्तं **रयिं** वित्तं अस्मभ्यं नित्यदा भर आहर । देहीति यावत् ।। १ ।।

**मन्त्रार्थमञ्जरी–** अथाष्टममपि दशर्चं वर्गद्वयात्मकमैन्द्रं सूक्तम् ।। (हे) इन्द्र । सानसिम्,

सानो लाभः, मतुबर्थे सिप्रत्ययः, लाभयुक्तम् । सजित्वानम्, जित्वना जयिना पुत्रादिना सहितम् । सदासहम्, सदा बलवत् । वर्षिष्ठम्, वृद्धतमम्, सुमहदिति यावत् । ऊतये, रक्षायै, रक्षानिमित्तम् । रयिम्, वित्तम्, ज्ञानद्रविणरूपम् । आ भर, आहर, 'हृग्रहोर्भश्छन्दसि' इति हस्य (हकारस्य) भकारः, देहीति यावत् ॥ १ ॥

**स्कन्द–** आ इत्युपसर्गो भरेत्यनेनाख्यातेन सम्बध्यते । **हे इन्द्र! सानसिं** वन षण सम्भक्तौ । सम्भजनीयम् । **रयिं** धनम् । **सजित्वानं** सहभूतानामपि शत्रूणां जेतृ । **सदासहं** षह मर्षणे । अभिभवे छन्दसि । सर्वदा चाभिभवितृ । **वर्षिष्ठं** वृद्धतमं अत्यन्तबहु । **ऊतये** तर्पणायास्माकम् । **आ भर** आनय । देहीत्यर्थः ॥ १ ॥

**वेङ्कटमाधव–** आहर इन्द्र । भजनीयं रयिं जयशीलपुरुषयुक्तं सदा शत्रूणामभिभवितारं वृद्धतमं रक्षणायास्मभ्यम् ॥ १ ॥

**मुद्गल–** 'एन्द्र सानसिं रयिम्' इति– दशर्चं प्रथमं सूक्तम् । मधुचन्दा ऋषिः । इन्द्रो देवता । गायत्रम् । **हे इन्द्र उतये** अस्मद्रक्षार्थं **रयिं** धनं **आभर** आहर । कीदृशं रयिम् ? **सानसिं** सम्भजनीयम् । **सजित्वानं** समानशत्रुजयशीलम् । धनेन हि शूरान् भृत्यान् सम्पाद्य शत्रवो जीयन्ते । **सदासहं** सर्वदा शत्रूणामभिभवहेतुम् । **वर्षिष्ठं** अतिशयेन वृद्धं प्रभूतमित्यर्थः ॥

**सायण–** तृतीयेऽनुवाके चत्वारि सूक्तानि । तत्र 'एन्द्र सानसिम्' इत्यादिकं प्रथमं दशर्चं सूक्तं 'सुरूपकृत्नुम्' इत्यादिषु षट्सु पञ्चमम् । ऋष्यादयस्तु पूर्ववत् । विशेषविनियोगस्तु– महाव्रते निष्केवल्ये औष्णिहतृचाशीतौ 'एन्द्र सानसिं रयिम्' इत्यादिके द्वे सूक्ते । पञ्चमारण्यके 'औष्णिही तृचाशीतिः' इति खण्डे शौनकेन सूत्रितं– 'सुरूपकृत्नुमूतय इति त्रीण्येन्द्र सानसिं रयिमिति सूक्ते' (ऐ.आ.५,२,५) इति । अतिरात्रे प्रथमपर्यायेऽच्छावाकशस्त्रे 'एन्द्र सानसिम्' इति सूक्तम् । सूत्रितं च– 'इन्द्रमिद्गाथिनो बृहदेन्द्र सानसिम्' (आश्व.श्रौ.६,४) इति । दर्शयागे इन्द्रयाजिनः सांनाय्यस्य अनुवाक्या 'एन्द्र सानसिं रयिम्' इति । 'उक्ता देवताः' इत्यस्मिन् खण्डे 'एन्द्र सानसिं रयिं प्रससाहिषे पुरुहूत शत्रून्' (आश्व.श्रौ.१,६) इति सूत्रितम् ॥

**हे इन्द्र ऊतये** अस्मद्रक्षार्थं **रयिं** धनं **आ भर** आहर । कीदृशं रयिम् ? **सानसिं**

सम्भजनीयम् । **सजित्वानं** समानशत्रुजयशीलम् । धनेन हि शूरान् भृत्यान् सम्पाद्य शत्रवो जीयन्ते । **सदासहं** सर्वदा शत्रूणामभिभवहेतुम् । **वर्षिष्ठं** अतिशयेन वृद्धं प्रभूतमित्यर्थः ।

सानसिम् । 'वन षण सम्भक्तौ' इत्यस्मात् असिप्रत्ययो वृद्धिः अन्तोदात्तत्वं च 'सानसिधर्णसि' (उ.सू.४,५४७) इत्यादिना निपात्यते । रयिम् । प्रातिपदिकस्वरेणान्तोदात्तः । सजित्वानम् । समानान् अरीन् जेतुं शीलमस्य । 'अन्येभ्योऽपि दृश्यन्ते' (पा.सू.३,२,७५) इति क्वनिप् । उपपदसमासः । 'समानस्य च्छन्दस्यमूर्धप्रभृत्युदर्केषु' (पा.सू.६,३,८४) इति समानस्य सभावः । कृदुत्तरपदप्रकृतिस्वरेण धातुस्वर एव शिष्यते । वर्षिष्ठम् । वृद्धशब्दात् 'अतिशायने तमबिष्ठनौ' (पा.सू.५,३,५५) इति इष्ठन् । 'प्रियस्थिर' (पा.सू.६,४,१५७) इत्यादिना वृद्धशब्दस्य वर्षादेशः । इष्ठनो नित्त्वादाद्युदात्तत्वम् । ऊतये । 'उदात्तः' इत्यनुवृत्तौ 'ऊतियूतिजूतिसाति' इत्यादिना क्तिन् उदात्तो निपातितः । भर । 'हृग्रहोर्भश्छन्दसि' (पा.सू. ८,२,३२,१) इति हकारस्य भकारः । 'ते प्राग्धातोः' (पा.सू.१,४,८०) इति धातोः प्राक् प्रयोक्तव्यस्य आङः 'व्यवहिताश्च' (पा.सू.१,४,८२) इति छन्दसि व्यवहितप्रयोगः ।।१।।

**सिद्धाञ्जनम्–** तृतीयोऽनुवाकः चतुस्सूक्तात्मकः, तत्र प्रथमं 'एन्द्र सानसिं' इति दशर्चं सूक्तम् । ऋषिच्छन्दोदेवताः पूर्ववत् ।

**हे इन्द्र ऊतये** अस्मदभिवृद्धये **रयिं** धनं **आभर** आहर । नेदं साधारणं धनमिति ज्ञापयन्ति रयिविशेषणानि इमानि भवन्ति। **सानसिं** सभ्भजनीयं, षणधातोः असिप्रत्ययनिपातः । **सजित्वानं** समानजयशीलं समानस्य सभावः जयतेः क्वनिप् । **सदासहं** सदा साहयितारं अभिभवप्रापकं शत्रूणामिति शेषः । **वर्षिष्ठं** प्रवृद्धं, वृद्धशब्दस्य वर्षादेशः, तत इष्ठन् । अत्र तेजोबलरूपं प्रार्थ्यते । तत्तु सर्वस्यापि श्रेयस्कामस्य सम्भजनीयम् । प्रबलशत्रुभिः तेजोबलविरोधिभिः समानं युद्ध्वा तान् जेतुं शीलं अस्य तेजोबलरूपस्य धनस्य, अतः 'सजित्वानं रयिम्'। शत्रुजयपरिचयवान् 'रयिः' न तु अशिक्षितः, अत 'वर्षिष्ठं रयिम्' ।। १ ।।

## ऋक्संहिता पदपाठसहिता

**नियेन मुष्टिहत्यया नि वृत्रा रुणधामहै । त्वोतासो न्यर्वता ।। २ ।।**

**नि । येन । मुष्टिऽहत्यया । नि । वृत्रा । रुणधामहै । त्वाऽऊतासः । नि । अर्वता ।।२।।**

### ऋग्भाष्यम्

**येनारीन्मुष्टियुद्धेन तमांसि ज्ञानयुद्धतः ।**
**त्वत्प्रेरिता निरुन्धामः कांश्चिद्वा तुरगादिभिः ।**
**आवृत्त्यैवोपसर्गस्य क्रियावृत्तिर्भविष्यति ।। २ ।।**

**ऋग्भाष्यटीका– नियेन** । येनारीन् । **येन** वित्तेन निमित्तेन । **त्वोतासः** छन्दसि युष्मदस्मदोः प्रत्ययोत्तरपदयोराकारादेशः । अवतिः प्रेरणार्थः । त्वत्प्रेरिता वयं **मुष्टिहत्यया** मुष्टिघातेन मुष्टियुद्धेनारीन् **निरुणधामहै** निरुन्धाम । धात्वन्तरस्यैतद्रूपम् । किञ्च येन **वृत्रा** वृत्राणि तमांसि निरुणधामहै ज्ञानयुद्ध इति शेषः । अत्र येनेति ज्ञानवित्तमुच्यते । येन च **अर्वता** तुरगेण तुरगादिभिः कांश्चिदरीन्निरुणधामहै तादृग्वित्तमाभरेति पूर्वेण सम्बन्धः । ननु येन वृत्राण्यरींश्च मुष्टिहत्ययाऽर्वता च निरुणधामहा इत्येकमेव वाक्यं कस्मान्न क्रियते तत्राह– **आवृत्यैवेति** ।। अत्र नीत्युपसर्गस्य त्रिरावृत्या रुणधामहा इति क्रियाया धातोरप्यावृत्तिरङ्गीकर्तव्यैव । उपसर्गाः क्रियायोग इति क्रियायोग एवोपसर्गत्वस्मरणात् । वाक्यभेदेन सम्यगन्वयसिद्धावभ्यास-कल्पनानुपपत्तेः । प्रप्रवस्त्रिष्टुभमित्यादौ वाक्यस्य भेत्तुमशक्यत्वात् तत्कल्पनम् । आपंचभ्यः प्रयोक्तव्या उपसर्गा मनीषिभिरित्यपि विजातीयापेक्षम् ।। २ ।।

**मन्त्रार्थमञ्जरी–** येन, द्रविणेन वित्तेन निमित्तेन । त्वोतासः, त्वत्प्रेरिताः । (वयम्) मुष्टि-हत्यया, मुष्टिघातेन । (अरीन्) बाह्यशत्रून् । नि रुणधामहै, निरुन्ध्मः । किं च, (येन) वित्तेन । वृत्रा, वृत्राण्यज्ञानानि । नि (रुणधामहै) । (येन) (च) वित्तेन । अर्वता, तुरगेण, तुरगादिभिः । (कांश्चिदरीन्) । नि (रुणधामहै) । (तादृशं वित्तम्) । 'आभर' इति पूर्वेण अन्वयः । उपसर्गस्यात्र त्रिः श्रवणाद्धातोरप्यावृत्तिर्ज्ञेया ।। २ ।।

**स्कन्द–** किं कुरुथ इति उच्यते । नि येन नीत्युपसर्गश्रुतेर्योग्यक्रियापदाध्याहारः । नियतेन **येन** धनेन । मुष्टिहत्यया हन्तिर्गत्यर्थः । मुष्टेर्गमनेन उपांशुप्रहारेणेत्यर्थः । **वृत्रा** शत्रून् **निरुणधामहै** अपकर्तुं प्रवृत्तान्निवारयामः । **त्वोतासः** त्वया पालिताः सन्तः । अथवा न्युपसर्गाभ्यासात् तत्सम्बन्धिनो रुणधामहै इत्याख्यातस्याप्यभ्यासः । अभ्यासे च भूयांसमर्थं मन्यन्ते यथा अहो दर्शनीय, अहो दर्शनीय इति । (या.१०,४२) । सुष्ठु निवारयाम इत्यर्थः । कीदृशेन ? **अर्वता**

'अश्वनामैतत् (तु.निघ.१,१४) । सामर्थ्यादन्तर्हितमत्वर्थः । अर्ववता अश्वसंसक्तेन । अथवा अर्वतेर्गतिकर्मण एतद् रूपम् । आत्मनि गतेन स्वायत्तेनेत्यर्थः ।। २ ।।

**वेङ्कटमाधव–** कीदृशमित्याह– **येन** धनेन मुष्टिहननेन दारिद्र्याणि वयं निरुन्ध्मः । पादान्तरे पुनः निः प्रयुज्यते । त्वया रक्षिताः । शत्रूंश्च येन अश्ववता निरुणधामहै तमाहरेति । अस्योत्तरा भूयसे निर्वचनाय ।। २ ।।

**मुद्गल– येन** धनेन सम्पादितानां भटानां नि **मुष्टिहत्यया** नितरां मुष्टिप्रहारेण । **वृत्रा** शत्रून् **नि रुणधामहै** निरुद्धान् करवाम । तादृशं धनमाहरेत्यर्थः । **त्वोतासः** त्वया रक्षिता वयं **अर्वता** अस्मदीयेनाश्वेन निरुणधामहै इत्यनुषङ्गः ।। २ ।।

**सायण– येन** धनेन सम्पादितानां भटानां **नि मुष्टिहत्यया** नितरां मुष्टिप्रहारेण **वृत्रा** शत्रून् **नि रुणधामहै** निरुद्धान् करवाम तादृशं धनमाहरेत्यर्थः । **त्वोतासः** त्वया रक्षिता वयं **अर्वता** अस्मदीयेनाश्वेन निरुणधामहै इत्यनुषङ्गः । पदातियुद्धेनाश्वयुद्धेन च शत्रून् विनाशयाम इत्यर्थः ।

मुष्टिहत्यया । 'हनस्त च' (पा.सू.३,१,१०८) इति सुबन्ते उपपदे क्यप्; तत्संनियोगेन नकारस्य तकारः । कृदुत्तरपदप्रकृतिस्वरे प्राप्ते 'परादिश्छन्दसि बहुलम्' (पा.सू.६,२,१९९) इति बहुलग्रहणेन त्रिचक्रादीनां छन्दस्यन्तोदात्तत्वाभिधानात् (पा.सू.६,२,१९९,१) अन्तोदात्तत्वम् । नि । आख्यातसम्बन्धस्यापि नेरुपसर्गस्य 'व्यवहिताश्च' (पा.सू.१,४,८२) इति व्यवहितप्रयोगः । वृत्रा । 'शेश्छन्दसि बहुलम्' (पा.सू.६,१,७०) इति शेर्लोपः । नलोपः । रुणधामहै । आट्संयोगेन पित्त्वात् (पा.सू.३,४,९२) 'श्नसोरल्लोपः' (पा.सू. ६,४,१११) इति अकारलोपो न भवति । पित्वादेव च आख्यातस्यानुदात्तत्वेन विकरणस्य श्नम एव उदात्तत्वं शिष्यते । ननु 'तिङ्ङतिङः' इति निघातेन भवितव्यम् ? न । द्वे ह्यत्र तिङ्विभक्ती । निबिडया मुष्ट्या निरुणधामहै इत्यत्र श्रुतैका । अर्वता निरुणधामहै इत्यत्रानुषक्ता द्वितीया । तयोः समुच्चयार्थश्चकारो लुप्यते । तेन 'चादिलोपे विभाषा' (पा.सू.८,१,६३) इति प्रथमेयं तिङ्विभक्तिर्न निहन्यते । यथा 'नात्मना तृप्यति नान्यस्मै ददाति' (तै.सं.२,५,४,३) इत्यत्र हि समुच्चयार्थस्य चशब्दस्य लोपात् तृप्यतीति प्रथमा तिङ्विभक्तिर्न निहन्यते, ददातीति द्वितीया तु निहन्यते एव । ननु तत्र द्वे तिङ्विभक्ती श्रूयेते । इह पुनरेकैव श्रुता । सैवोत्तरत्रानुषज्यते

नान्या श्रूयते इति द्वितीयाभावात् कथमियं प्रथमा ? न । अनुषङ्गलब्धद्वितीयापेक्षमपि प्राथम्यमुपजीव्य निघातनिषेधदर्शनात् । 'पुरोडाशं चाधिश्रयत्याज्यं च' (तै.सं.१,६,९,३-४), 'प्रोक्षणीश्चासादयत्याज्यं च' (तै.सं.१,६,९,४) इत्यत्र हि अधिश्रयति आसादयति इति आख्यातयोः प्रथमवाक्यद्वयश्रुतयोः उत्तरवाक्यद्वयेऽनुषङ्गमपेक्ष्यैव प्राथम्यस्वीकारेण 'चवायोगे प्रथमा' (पा.सू.८,१,५९) इति निघातनिषेधो दृष्ट इति । त्वया ऊता रक्षिताः त्वोतासः । 'प्रत्ययोत्तरपदयोश्च' (पा.सू.७,२,९८) इति मपर्यन्तस्य त्वादेशे दकारलोपश्छान्दसः, अवतेः निष्ठायामिडभावश्च । 'ज्वरत्वरस्रिव्यविमवामुपधायाश्च' (पा.सू.६,४,२०) इति ऊठ् । 'एत्येधत्यूठ्सु' (पा.सू.६,१,८९) इति वृद्ध्यभावश्छान्दसः । 'तृतीया कर्मणि' (पा.सू.६,२,४८) इति पूर्वपदप्रकृतिस्वरेणाकार उदात्तः । 'एकादेश उदात्तेनोदात्तः' इत्युदात्त ओकारः । अर्वता । अर्वति गच्छति इति अर्वा । 'अर्वगतौ' । 'अन्येभ्योऽपि दृश्यन्ते' (पा.सू.३,२,७५) सति वनिप्प्रत्ययः । 'नेड्वशि कृति' (पा.सू.७,२,८) इति इट्प्रतिषेधः । 'लोपो व्योर्वलि' (पा.सू.६,१,६६) इति वकारलोपः । अर्वणस्त्रसावनञः' (पा.सू.६,४,१२७) इति तकारः । वनिपः पित्वात् धातुस्वर एव ।। २ ।।

**सिद्धाञ्जनम्–** द्वितीयामृचमाह– **येन** पूर्वोक्तलक्षणेन धनेन दिव्यतेजोबलेन **वृत्रा** आवरकतमोघनान् असुरान् शत्रून् **नि** नितरां **मुष्टिहत्यया** मुष्टिभिः प्रहरणेन **निरुणधामहै** निरुद्धान् करवाम वयम् । कीदृशो वयम् ? **त्वोतासः** त्वया रक्षिताः त्वद् इत्यत्र दकारलोप छान्दसः, ऊतासः अवतेर्निष्ठायां इडभावः, अन्यत् छान्दसम् । पुनः कीदृशा वयम् ? नि नितरां अर्वता अश्वेन तल्लक्षितेन प्राणबलेन युक्ताः इति सहयोगलक्षणा तृतीया ।। २ ।।

### ऋक्संहिता पदपाठसहिता

**इन्द्र त्वोतास आवयं वज्रं घना ददीमहि । जयेम संयुधि स्पृधः ।। ३ ।।**

इन्द्र । त्वाऽऊतासः । आ । वयम् । वज्रम् । घना । ददीमहि । जयेम । सम् । युधि । स्पृधः ।। ३ ।।

### ऋग्भाष्यम्

**त्वत्प्रेरिता ज्ञानरतिं दृढत्वेनाददीमहि ।। ३ ।।**

**ऋग्भाष्यटीका– इन्द्रत्वोतासः ।।** त्वत्प्रेरिताः । हे **इन्द्र त्वोतासः** त्वत्प्रेरिता वयं **वज्रं** ज्ञानं रतिं च ज्ञानविषयां ज्ञाननिमित्तां रतिं वा **घना** तृतीयैकवचनान्तमेतद्भावप्रधानं दृढत्वेन **आददीमहि** त्वत्प्रेरणयैव ज्ञानरतिमन्तो भवामः । त्वत्प्रेरिता एव **युधि स्पृधः** स्पर्धिनो युद्धानि वा संजयेम ।। ३ ।।

**मन्त्रार्थमञ्जरी–** (हे) इन्द्र । त्वोतासः, त्वत्प्रेरिताः, अवतेः औणादिके तक्प्रत्यये 'तितुत्रतथ' इतीडभावे केषांचिन्मते 'क्ङिति' इत्यनुवृत्तेः 'ज्वरत्वर' इत्यूठि 'छन्दसि युष्मदस्मदोः प्रत्ययोत्तरपदयोराकारादेशः' इति युष्मद आकारादेशे गुणे चाज्जसेरसुकि 'त्वोतासः' इति रूपम् । वयम् । वज्रम्, 'इन्द्रो॑ व॒ज्री हि॑र॒ण्यय॑ः' इत्यत्रोक्तदिशा वज्रशब्दस्य ज्ञानानन्दार्थत्वाज्ज्ञानं रतिं चेति (ज्ञानविषयरतिमिति) ज्ञाननिमित्तरतिमिति वार्थः । घना, तृतीयैकवचनान्तं भावप्रधानं च, घनत्वेन दृढत्वेन । आ ददीमहि, लभेमहि, त्वत्प्रेरणयैव ज्ञानरतिमन्तो भवामः । (त्वोतासः), त्वत्प्रेरिताः । (एव) युधि । स्पृधः, स्पर्धिनः, तस्य सम्बन्धीनि युद्धानि वा । सम् जयेम, तत्र जयवन्तो भवामः इति ।। ३ ।।

**स्कन्द– इन्द्र! त्वोतासः** त्वया पालिता वयं त्वद्धस्तात् **वज्रं घना** घनं सुवीरं हन्तारं वा शत्रूणाम् । **आददीमहि** गृह्णीयाम । गृहीत्वा **जयेम सम्** सम्यग् जयेम । **युधि** युद्धे । कान् ? **स्पृधः** स्पर्धितृन् । अथवा 'स्पृधः' (निघ २,१७) इति सङ्ग्रामनाम, तं करोति स्पृधयति । ण्यन्तात् क्विप् । स्पृधः सङ्ग्रामकारिण इत्यर्थः ।। ३ ।।

**वेङ्कटमाधव–** इन्द्र! त्वया रक्षिता वयं हन्तृ आयुधं आददीमहि । सम् जयेम युद्धे स्पर्धयितृन् शत्रून् इति ।। ३ ।।

**मुद्गल–** हे **इन्द्र! त्वोतासः** त्वया पालिता वयं **घना** घनं शत्रुप्रहरणायात्यन्तं दृढं **वज्रं** आयुधं **आददीमहि** स्वीकुर्मः । तेन वज्रेण **युधि** युद्धे **स्पृधः** स्पर्धमानान् शत्रून् **संजयेम** सम्यग् जयेम ।। ३ ।।

**सायण–** हे इन्द्र **त्वोतासः** त्वया पालिता वयं **घना** घनं शत्रुप्रहरणायात्यन्तदृढं **वज्रं** आयुधं **आददीमहि** स्वीकुर्मः । तेन च वज्रेण **युधि** युद्धे **स्पृधः** स्पर्धमानान् शत्रून् **संजयेम** सम्यक् जयेम ।

त्वोतासः । उक्तम् । वज्रम् । 'वज व्रज गतौ' । 'ऋज्रेन्द्राग्र' (उ.सू.२,१८६) इत्यादिना रन्प्रत्ययान्तो निपातः । घना । घनः काठिन्यम् । तदस्यास्तीति अर्श आदित्वात् अच् (पा.सू.५,२,१२७) । चित्त्वादन्तोदात्तः । 'सुपां सुलुक्' इति डादेशः । ददीमहि । 'डुदाञ् दाने' । प्रार्थनायां लिङ् । क्रियाफलस्य कर्तृगामित्वात् 'स्वरितञितः' (पा.सू.१,३,७२) इत्यात्मनेपदोत्तमपुरुषबहुवचनं महिङ् । जुहोत्यादित्वात् शपः श्लुः (पा.सू.२,४,७५) । 'श्लौ' (पा.सू.६,१,१०) इति द्विर्भावः । 'लिङः सलोपोऽनन्त्यस्य' (पा.सू.७,२,७९) इति सलोपः । 'श्नाभ्यस्तयोरातः' (पा.सू.६,४,११२) इति आकारलोपः । जयेम । शपः पित्त्वादनुदात्तत्वम् । तिङश्च लसार्वधातुकस्वरात् धातुस्वर एव शिष्यते । 'छन्दसि परेऽपि' (पा.सू.१,४, ८१) इति समः परः प्रयोगः । युधि । 'युध सम्प्रहारे' । सम्पदादित्वात् भावे क्विप् (पा.सू.३, ३,१०८,९) । 'सावेकाचः' इति विभक्तेरुदात्तत्वम् । स्पर्धन्ते इति स्पृधः । 'स्पर्ध सङ्घर्षे' । 'क्विप्च' (पा.सू.३,२,७६) इति क्विप् । 'बहुलं छन्दसि' इति रेफस्य सम्प्रसारणम् ऋकारः । अकारलोपश्च ।। ३ ।।

**सिद्धाञ्जनम्**– तृतीयामृचमाह– हे **इन्द्र त्वोतासः** त्वद्रक्षिताः वयं **वज्रं** दिव्यमायुधं घनीभूतारिष्टानृतज्ञानादिभेदकं **घना** घनत्वेन, तृतीयाविभक्तिः भावप्रधानं **आददीमहि** लभेमहि । युधि युद्धे **स्पृधः** स्पर्धमानान् शत्रून् **सञ्जयेम** सम्यग्जितवन्तः चाम ।

वज्रम्– वज व्रज गतौ, रन्प्रत्ययो निपात्यते। घना– वज्रविशेषणतया गृहीतं सायणीये । तत्रापि अस्मदीयतात्पर्यस्य न क्षतिः ।। ३ ।।

### ऋक्संहिता पदपाठसहिता

**वयं शूरेभिरस्तृभिरिन्द्र त्वया युजा वयम् । सासह्याम पृतन्यतः ।। ४ ।।**

वयम् । शूरेभिः । अस्तृऽभिः । इन्द्र । त्वया । युजा । वयम् । ससह्याम । पृतन्यतः।।४।।

### ऋग्भाष्यम्

**त्वया पृतन्यतः शत्रूनभिष्याम सुयोद्धृभिः ।। ४ ।।**

**ऋग्भाष्यटीका– वयं शूरेभिः ।** त्वया । हे **इन्द्र त्वया युजा** युनक्तीति युक् । सख्या सता त्वत्प्रसादेनैव **शूरेभिः** शूरैः **अस्तृभिः** अस्त्रिभिः सुयोद्धृभृत्यैः सह **पृतन्यतः** युद्ध्यतः शत्रून्

**सासह्याम** अतिशयेन पुनः पुनर्वा सहामहै । अभिष्यामाभिमुखाः स्याम । उपसर्गप्रादुर्भ्यामस्तिर्यच्परः । किञ्च **वयं** च त्वयैव च त्वदधीनसत्ताका इत्यर्थः ।। ४ ।।

**मन्त्रार्थमञ्जरी–** (हे) इन्द्र त्वया । युजा, युनक्तीति युक्, तेन सख्या सता, त्वत्प्रसादेनेति यावत् । शूरेभिः, शूरैः अस्तृभिः, अस्त्रिभिः, सुयोद्धभिर्भृत्यैः सह । पृतन्यतः, युध्यतः शत्रून् । वयम् । समह्याम, अतिशयेन पुनःपुनर्वा सहामहै । किं च, वयम् (च) (त्वया) (एव) त्वदधीनसत्ताका इत्यर्थः ।। ४ ।।

**स्कन्द– वयं शूरेभिः** शूरैः आत्मीयैर्मनुष्यैः **अस्तृभिः** स्तृणातिः सामर्थ्याद् हिंसार्थः । अहिंसितैः । हे **इन्द्र! त्वया** च **युजा** सहायेन । **वयं** सहयोगलक्षणतृतीयार्थे व्यत्ययेन प्रथमैषा । पृतन्यत इत्यनेन सम्बध्यते । अस्माभिः सह **पृतन्यतः** सङ्ग्रामं कर्तुमिच्छतः सासह्याम अत्यर्थं पुनः पुनर्वाभिभवेम ।। ४ ।।

**वेङ्कटमाधव– वयं शूरेभिः** आयुधानां क्षेप्तृभिः त्वया च सहायेन अभिभवेम । सङ्ग्रामं कर्तुमिच्छतः । पुनः वयम् इति पूरणम् ।। ४ ।।

**मुद्गल– वयं** कर्मानुष्ठातारः **शूरेभिः** शौर्ययुक्तैः **अस्तृभिः** आयुधानां प्रक्षेप्तृभिर्भटैः संयुज्येमहीति शेषः । हे **इन्द्र** तादृशभस्सहिताः **वयं युजा** सहायभूतेन त्वया **पृतन्यतः** सेनामिच्छतः शत्रून् **सासह्याम** अतिशयेनाभिवेम ।। ४ ।।

**सायण– वयं** कर्मानुष्ठातारः **शूरेभिः** शौर्ययुक्तैः **अस्तृभिः** आयुधानां प्रक्षेप्तृभिर्भटैः संयुज्येमहीति शेषः । हे **इन्द्र** तादृशभटसहिता **वयं युजा** सहायभूतेन **त्वया पृतन्यतः** सेनामिच्छतः शत्रून् **सासह्याम** अतिशयेनाभिभवेम ।।

शूरेभिः । 'शु श्रु गतौ' । 'क्रन्' (उ.सू.२,१८२) इत्यनुवृत्तौ 'शुसिचिमीनां दीर्घश्च' (उ.सू.२,१८३) इति क्रन् । कित्त्वाद्गुणाभावः । नित्त्वादाद्युदात्तत्वम् । 'बहुलं छन्दसि' (पा.सू. ७,१,१०) इति ऐसो निषिद्धत्वात् 'बहुवचने झल्येत्' (पा.सू.७,३,१०३) इति एत्वम् । सहयोगे तृतीयाबलात् (पा.सू.२,३,१९) वयमित्यस्मत्पदसमभिव्याहाराच्च वयं संयुज्येमहीति गम्यम् । विनापि सहशब्देन 'वृद्धो यूना' (पा.सू.१,२,६५) इति निपातनादिति ह्युक्तम् ।

अस्तृभिः शस्त्रास्त्रप्रक्षेपणशीलैः तद्धर्मभिः तत्साधुकारिभिर्वा । 'असु क्षेपणे' । 'तृन्' (पा.सू. ३,२,१३५) इति ताच्छील्यादिषु तृन् । नित्त्वादाद्युदात्तः । 'रधादिभ्यश्च (पा.सू.७,२,४५) इति विकल्पविधानात् अयं पक्षे इडभावः । त्वया । 'युष्यसिभ्यां मदिक्' (उ.सू.१,१३६) । कित्त्वाद्गुणाभावः । युष्मदः प्रत्ययस्वरेण अकार उदात्तः । तृतीयैकवचनं टा (पा.सू.४,१,२) । 'त्वमावेकवचने' (पा.सू.७,२,९७) इति मपर्यन्तस्य त्वादेशः । 'अतो गुणे' (पा.सू.६,१,९७) इति पररूपत्वम् । 'एकादेश उदात्तेनोदात्तः' इत्युदात्तः । युजा । 'अश्रुयुजिक्रुञ्चां च' (पा.सू. ३,२,५९) इति किन् । 'सावेकाचः' इति विभक्तेरुदात्तत्वम् । सासह्याम भृशं पुनः पुनः सहेमहि । 'षह मर्षणे' । 'धात्वादेः षः सः' । 'धातोरेकाचो हलादेः क्रियासमभिहारे यङ्' (पा.सू.३,१,२२) । 'यङोऽचि च' (पा.सू.२,४,७४) इति लुक् । 'सन्यङोः' (पा.सू. ६,१,९) इति द्विर्भावः । हलादिशेषः (पा.सू.७,४,६०) । 'दीर्घोऽकितः' (पा.सू.७,४,८३) इति दीर्घः । प्रार्थनायां लिङ् । चर्करीतं परस्मैपदम् अदादिवच्च द्रष्टव्यमिति परस्मैपदोत्तम-पुरुषबहुवचनं मस् । कर्तरि शप् । अदादिवद्भावात् लुक् । 'नित्यं ङितः' (पा.सू.३,४,९९) इति अन्त्यसकारलोपः । 'यासुट् परस्मैपदेषूदात्तो ङिच्च' (पा.सू.३,४,१०३) इति यासुट् । 'लिङः सलोपोऽनन्त्यस्य' (पा.सू.७,२,७९) इति सकारलोपः । सति शिष्टत्वात् यासुट एव उदात्तत्वं शिष्यते । पादादित्वात् न निघातः । पृतन्यतः । योद्धुं पृतनामात्मन इच्छतः । 'सुप आत्मनः क्यच्' इति क्यच् । 'सनाद्यन्ता धातवः' (पा.सू.३,१,३२) इति धातुसंज्ञायां 'सुपो धातुप्रातिपदिकयोः' (पा.सू.२,४,७१) इति सुपो लुक् । 'क्यचि च' (पा.सू.७,४,३३) इत्यनुवृत्तौ 'कव्यध्वरपृतनस्यर्चि लोपः' (पा.सू.७,४,३९) इति आकारलोपः । पृतन्यधातुः चित्त्वादन्तोदात्तः । उपरि लटः शत्रादेशः । कर्तरि शप् । पित्त्वादनुदात्तत्वम् । शतुश्च लसार्वधातुकस्वरेण उदात्तेन सह 'एकादेश उदात्तेनोदात्तः' इति पृतन्यच्छब्दोऽन्तोदात्तः । शसः सुप्स्वरेणानुदात्तस्य 'अन्तोदात्तात्' (पा.सू.६,१,१६९) इत्यनुवृत्तौ 'शतुरनुमो नद्यजादी' (पा.सू. ६,१,१७३) इत्युदात्तत्वम् ॥ ४ ॥

**सिद्धाञ्जनम्–** चतुर्थीमृचमाह– हे **इन्द्र वयं** त्वदाराधकाः अन्तर्यागानुष्ठायिनः **शूरेभिः** शूरैः शौर्ययुक्तैः **अस्तृभिः** दूरादेव आयुधप्रक्षेपणशीलैः (असु क्षेपणे, तृन् ताच्छील्ये) शत्रुभिः सह युद्धे जेतारः स्यामेति शेषः । केचन देवद्विषो यागशत्रवः क्वापि निलीय दूराद्वा अस्त्राणि प्रयुञ्जते

**सासह्याम** अतिशयेन पुनः पुनर्वा सहामहै । अभिष्यामाभिमुखाः स्याम । उपसर्गप्रादुर्भ्यामस्तिर्यच्परः । किञ्च **वयं** च त्वयैव च त्वदधीनसत्ताका इत्यर्थः ।। ४ ।।

**मन्त्रार्थमञ्जरी–** (हे) इन्द्र त्वया । युजा, युनक्तीति युक्, तेन सख्या सता, त्वत्प्रसादेनेति यावत् । शूरेभिः, शूरैः अस्तृभिः, अस्त्रिभिः, सुयोद्धभिर्भृत्यैः सह । पृतन्यतः, युध्यतः शत्रून् । वयम् । समह्याम, अतिशयेन पुनःपुनर्वा सहामहै । किं च, वयम् (च) (त्वया) (एव) त्वदधीनसत्ताका इत्यर्थः ।। ४ ।।

**स्कन्द– वयं शूरेभिः** शूरैः आत्मीयैर्मनुष्यैः **अस्तृभिः** स्तृणातिः सामर्थ्याद् हिंसार्थः । अहिंसितैः । हे **इन्द्र! त्वया च युजा** सहायेन । **वयं** सहयोगलक्षणतृतीयार्थे व्यत्ययेन प्रथमैषा । पृतन्यत इत्यनेन सम्बध्यते । अस्माभिः सह **पृतन्यतः** सङ्ग्रामं कर्तुमिच्छतः सासह्याम अत्यर्थं पुनः पुनर्वाभिभवेम ।। ४ ।।

**वेङ्कटमाधव– वयं शूरेभिः** आयुधानां क्षेप्तृभिः त्वया च सहायेन अभिभवेम । सङ्ग्रामं कर्तुमिच्छतः । पुनः वयम् इति पूरणम् ।। ४ ।।

**मुद्गल–** वयं कर्मानुष्टातारः **शूरेभिः** शौर्ययुक्तैः **अस्तृभिः** आयुधानां प्रक्षेप्तृभिर्भटैः संयुज्येमहीति शेषः । हे **इन्द्र** तादृशभस्सहिताः **वयं युजा** सहायभूतेन त्वया **पृतन्यतः** सेनामिच्छतः शत्रून् **सासह्याम** अतिशयेनाभिवेम ।। ४ ।।

**सायण– वयं** कर्मानुष्ठातारः **शूरेभिः** शौर्ययुक्तैः **अस्तृभिः** आयुधानां प्रक्षेप्तृभिर्भटैः संयुज्येमहीति शेषः । हे **इन्द्र** तादृशभटसहिता **वयं युजा** सहायभूतेन **त्वया पृतन्यतः** सेनामिच्छतः शत्रून् **सासह्याम** अतिशयेनाभिभवेम ।।

शूरेभिः । 'शु श्रु गतौ' । 'क्रन्' (उ.सू.२,१८२) इत्यनुवृत्तौ 'शुसिचिमीनां दीर्घश्च' (उ.सू.२,१८३) इति क्रन् । कित्त्वाद्गुणाभावः । नित्त्वादाद्युदात्तत्वम् । 'बहुलं छन्दसि' (पा.सू. ७,१,१०) इति ऐसो निषिद्धत्वात् 'बहुवचने झल्येत्' (पा.सू.७,३,१०३) इति एत्वम् । सहयोगे तृतीयाबलात् (पा.सू.२,३,१९) वयमित्यस्मत्पदसमभिव्याहाराच्च वयं संयुज्येमहीति गम्यम् । विनापि सहशब्देन 'वृद्धो यूना' (पा.सू.१,२,६५) इति निपातनादिति ह्युक्तम् ।

अस्तृभिः शस्त्रास्त्रप्रक्षेपणशीलैः तद्धर्मभिः तत्साधुकारिभिर्वा । 'असु क्षेपणे' । 'तृन्' (पा.सू. ३,२,१३५) इति ताच्छील्यादिषु तृन् । नित्त्वादाद्युदात्तः । 'रधादिभ्यश्च (पा.सू.७,२,४५) इति विकल्पविधानात् अयं पक्षे इडभावः । त्वया । 'युष्यसिभ्यां मदिक्' (उ.सू.१,१३६) । किंत्त्वाद्गुणाभावः । युष्मदः प्रत्ययस्वरेण अकार उदात्तः । तृतीयैकवचनं टा (पा.सू.४,१,२) । 'त्वमावेकवचने' (पा.सू.७,२,९७) इति मपर्यन्तस्य त्वादेशः । 'अतो गुणे' (पा.सू.६,१,९७) इति पररूपत्वम् । 'एकादेश उदात्तेनोदात्तः' इत्युदात्तः । युजा । 'अश्नुयुजिक्रुञ्चां च' (पा.सू. ३,२,५९) इति किन् । 'सावेकाचः' इति विभक्तेरुदात्तत्वम् । सासह्याम भृशं पुनः पुनः सहेमहि । 'षह मर्षणे' । 'धात्वादेः षः सः' । 'धातोरेकाचो हलादेः क्रियासमभिहारे यङ्' (पा.सू.३,१,२२) । 'यङोऽचि च' (पा.सू.२,४,७४) इति लुक् । 'सन्यङोः' (पा.सू. ६,१,९) इति द्विर्भावः । हलादिशेषः (पा.सू.७,४,६०) । 'दीर्घोऽकितः' (पा.सू.७,४,८३) इति दीर्घः । प्रार्थनायां लिङ् । चर्करीतं परस्मैपदम् अदादिवच्च द्रष्टव्यमिति परस्मैपदोत्तम-पुरुषबहुवचनं मस् । कर्तरि शप् । अदादिवद्भावात् लुक् । 'नित्यं ङितः' (पा.सू.३,४,९९) इति अन्त्यसकारलोपः । 'यासुट् परस्मैपदेषूदात्तो ङिच्च' (पा.सू.३,४,१०३) इति यासुट् । 'लिङः सलोपोऽनन्त्यस्य' (पा.सू.७,२,७९) इति सकारलोपः । सति शिष्टत्वात् यासुट एव उदात्तत्वं शिष्यते । पादादित्वात् न निघातः । पृतन्यतः । योद्धुं पृतनामात्मन इच्छतः । 'सुप आत्मनः क्यच्' इति क्यच् । 'सनाद्यन्ता धातवः' (पा.सू.३,१,३२) इति धातुसंज्ञायां 'सुपो धातुप्रातिपदिकयोः' (पा.सू.२,४,७१) इति सुपो लुक् । 'क्यचि च' (पा.सू.७,४,३३) इत्यनुवृत्तौ 'कव्यध्वरपृतनस्यर्चि लोपः' (पा.सू.७,४,३९) इति आकारलोपः । पृतन्यधातुः चित्त्वादन्तोदात्तः । उपरि लटः शत्रादेशः । कर्तरि शप् । पित्त्वादनुदात्तत्वम् । शतुश्च लसार्वधातुकस्वरेण उदात्तेन सह 'एकादेश उदात्तेनोदात्तः' इति पृतन्यच्छब्दोऽन्तोदात्तः । शसः सुप्स्वरेणानुदात्तस्य 'अन्तोदात्तात्' (पा.सू.६,१,१६९) इत्यनुवृत्तौ 'शतुरनुमो नद्यजादी' (पा.सू. ६,१,१७३) इत्युदात्तत्वम् ॥ ४ ॥

**सिद्धाञ्जनम्–** चतुर्थीमृचमाह– हे **इन्द्र वयं** त्वदाराधकाः अन्तर्यागानुष्ठायिनः **शूरेभिः** शूरैः शौर्ययुक्तैः **अस्तृभिः** दूरादेव आयुधप्रक्षेपणशीलैः (असु क्षेपणे, तृन् ताच्छील्ये) शत्रुभिः सह युद्धे जेतारः स्यामेति शेषः । केचन देवद्विषो यागशत्रवः कपि निलीय दूराद्वा अस्त्राणि प्रयुञ्जते

तान् प्रति इदमुक्तम् । कीदृशो वयं एवं जेतारो भवाम इति चेत् **युजा त्वया** युञ्जता युक्तेनास्मन्नित्यसहायेनेत्युक्तम् । तथाभूता **वयं पृतन्यतः** सेनामिच्छतः, सम्मुखीनं युद्धं कर्तुमिच्छतः शत्रूनपि **ससह्याम** अतिशयेन साहयेम अभिभवेम ।

पृतन्यतः– पृतनामात्मन इच्छतः क्यच् , आकारलोपः लटः शतरि, द्वितीयाबहुवचनान्तं रूपम् ॥ ४ ॥

## ऋक्संहिता पदपाठसहिता

**म॒हाँ इन्द्रः॑ प॒रश्च॒ नु म॑हि॒त्वम॑स्तु व॒ज्रिणे॑ । द्यौर्न प्र॑थि॒ना शवः॑ ॥ ५ ॥**

**म॒हान् । इन्द्रः॑ । प॒रः । च॒ । नु । म॒हि॒ऽत्वम् । अ॒स्तु॒ । व॒ज्रिणे॑ । द्यौः । न । प्र॒थि॒ना । शवः॑ ॥ ५ ॥**

## ऋग्भाष्यम्

**यस्मान्महाननादिश्च विष्णुर्जीवोऽवरस्तथा ।**
**तस्यैवास्तु महत्त्वं तन्न जीवब्रह्मतां स्मरेत् ।**
**आकाशवत्प्रथिम्नाऽसौ शवः सुखबले तथा ॥ ५ ॥**

**ऋग्भाष्यटीका– महाँ इन्द्रः** । यस्मात् । **नु** यस्मात् असाविन्द्रो विष्णुः **महान्** गुणैरनन्तः **परश्च** अनादिः । कालतोऽप्यनन्तः । **प्रथिना** प्रथिम्ना **द्यौर्न** आकाशवत् । देशतोऽप्यनन्तश्च । तथा **शवः** सुखबले । उभयनामसु पाठात् । नित्याभिव्यक्तसुखबलात्मकश्च । शशब्दः सुखवाची वशब्दो बलवाचीति वा । जीवस्त्ववरो गुणादिनेति शेषः । तत्तस्मात् **महित्वं** ब्रह्मत्वं **वज्रिणे** तस्य विष्णोरेवास्तु तस्यैव जानीयात् । न पुनर्जीवस्य ब्रह्मतां स्मरेदिति तात्पर्यार्थः ॥ ५ ॥

**मन्त्रार्थमञ्जरी–** नु, यस्मात् । (असौ) इन्द्रः, विष्णुः । महान्, गुणैरनन्तः । परः च, कालतोऽनन्तश्च । प्रथिना, प्रथिम्ना । द्यौः न आकाशवत्, देशतोऽप्यनन्तश्च । तथा, शवः, सुखबलात्मकश्च । (तत्) तस्मात् । महित्वम्, महत्त्वं ब्रह्मत्वम् । वज्रिणे, तस्य वज्रिनाम्नो विष्णोरेव । अस्तु, जानीयादित्यर्थः, जीवस्य ब्रह्मतां न स्मरेदिति तात्पर्यार्थः ॥ ५ ॥

**स्कन्द– इन्द्रः महान्** शरीरेण **परश्च** उत्कृष्टश्च सर्वतो गुणैः । नु इति पदपूरणः । **महित्वं** महत्वं चैतत् सर्वदा अस्तु **वज्रिणे** इन्द्राय इत्येतद् 'इन्द्रायाशास्महे । द्यौर्न नशब्द

उपरिष्टादुपचारः सर्वत्रोपमायां, द्युलोक इव च । **प्रथिना** प्रथिम्ना विस्तीर्णत्वेन । **शवः** इन्द्रस्य बलं सेनालक्षणम् । यथा द्यौर्विस्तीर्णा तद्वद् विस्तीर्णमित्यर्थः ।। ५ ।।

**वेङ्कटमाधव–** महनीयः इन्द्रः तारकश्च शत्रूणाम् । तस्मै सदा महित्वं अस्तु इति स्वयञ्चाशास्ते । द्यौ इव विस्तीर्णतया बलमस्य भवति ।। ५ ।।

**मुद्गल–** अयं **इन्द्रः महान्** शरीरेण प्रौढः **परः च** गुणैरत्कृष्टोऽपि । **नु** किञ्च **वज्रिणे** वज्रयुक्तायेन्द्राय **महित्वं** पूर्वोक्तं द्विविधमाधिक्यं सर्वदा अस्तु । भक्त्या प्रार्थनमेतत् । किञ्च **द्यौर्न** द्युलोक इव **शवः** बलं इन्द्रस्य सेनारूपं **प्रथिना** पृथुत्वेन युज्यतामिति शेषः ।। ५ ।।

अयं **इन्द्रः महान्** शरीरेण प्रौढः **परश्च** गुणैरुत्कृष्टोऽपि । **नु** किञ्च **वज्रिणे** वज्रयुक्तायेन्द्राय **महित्वं** पूर्वोक्तं द्विविधमाधिक्यं सर्वदा अस्तु । स्वभावसिद्धस्यापि भक्त्या प्रार्थनमेतत् । किञ्च **द्यौर्न** द्युलोक इव **शवः** बलमिन्द्रस्य सेनारूपं **प्रथिना** प्रथिम्ना पृथुत्वेन युज्यतामिति शेषः । यथा द्युलोकः प्रभूत एवमस्य सेना प्रभूता । नुशब्दो यद्यपि क्षिप्रनामसु 'नु मक्षु' (नि.२,१५,१) इति पठितस्तथाऽप्यत्र तस्यान्वयाभावात् निपातत्वेन अनेकार्थत्वसम्भवाच्च समुच्चयार्थोऽत्र गृहीतः । नशब्दो लोके प्रतिषेधार्थ एव । स्वाध्याये तु प्रतिषेधार्थ उपमार्थश्चेति द्विविधः । येन पदेनान्वीयते तस्मात् पूर्वं प्रयुज्यमानः प्रतिषेधार्थ उपरिष्टात् प्रयुज्यमान उपमार्थः । तथा च यास्क उदाहरति– 'उभयमन्वध्यायं नेन्द्रं देवममंसतेति प्रतिषेधार्थीयः पुरस्तादुपाचारस्तस्य यत्प्रतिषेधति । दुर्मदासो न सुरायामित्युपमार्थीय उपरिष्टादुपाचारस्तस्य येनोपमिमीते' (निरु.१,४) इति । अत्रोपमेयवाचिनो द्युशब्दस्यापि प्रयुक्तत्वात् उपमार्थः स्वीकृतः । अष्टाविंशतिसङ्ख्याकेषु बलनामसु 'ओजः पाजः शवः' (नि.२,९,३) इति पठितम् ।

महान् इति नकारस्य संहितायां 'दीर्घादटि समानपादे' (पा.सू.८,३,९) इति रुत्वम् । 'आतोऽटि नित्यम्' (पा.सू.८,३,३) इति पूर्वस्य आकारस्य अनुनासिकः । 'भोभगो-अघोअपूर्वस्य योऽशि' (पा.सू.८,३,१७) इति यकारः । तस्य लोपः (पा.सू.८,३,१९) । तस्यासिद्धत्वात् (पा.सू.८,२,१) स्वरसन्धिर्न भवति । महिः 'इन्' (उ.सू.४,५५७) इति औणादिक इन् । महेर्भावो महित्वम् । त्व इति प्रत्ययस्वरेणोदात्तः । स एव शिष्यते । वज्रिणे । इकारः प्रत्ययस्वरेणोदात्तः । द्यौः । द्यौशब्दः प्रातिपदिकस्वरेणान्तोदात्तः । 'गोतो णित्'

(पा.सू.७,१,९०) इति विभक्तेर्णित्त्वात् 'अचो ञ्णिति' (पा.सू.७,२,११५) इति वृद्धिः आन्तरतम्यात् उदात्तैव भवति । प्रथिना प्रथिम्ना । पृथोर्भाव इत्यर्थे 'पृथ्वादिभ्य इमनिज्वा' (पा.सू.५,१,१२२) इति इमनिच् । 'र ऋतो हलादेर्लघोः' (पा.सू.६,४,१६१) इति ऋकारस्य रभावः । 'तुरिष्ठेमेयःसु' (पा.सू.६,४,१५४) इत्यनुवृत्तौ 'टेः' (पा.सू.६,४,१५५) इति टिलोपः । प्रथिमन्शब्दः चित्त्वादन्तोदात्तः । तृतीयैकवचने भत्वात् 'अल्लोपोऽनः' (पा.सू.६,४,१३४) इति अकारलोपः । 'अनुदात्तस्य च यत्रोदात्तलोपः' (पा.सू.६,१,१६१) इति विभक्तेरुदात्तत्वम् । शवः । 'नब्विषयस्यानिसन्तस्य' (फि.सू.२६) इत्याद्युदात्तत्वम् ।। १५ ।।

**सिद्धाञ्जनम्–** पञ्चमीमृचमाह– **महान्** बृहत्स्वरूपः **इन्द्रः परश्च** उत्कृष्टोऽपि भवति । न केवलं स्वरूपेण बृहन्नयं, प्रभावेण सर्वोत्कृष्टश्च । नु पादपूरणः (बह्वर्थोऽयं निपातः) **वज्रिणे** वज्रयुक्ताय इन्द्राय **महित्वं** महत्त्वं परत्वं च पूर्वोक्तं द्विविधं गुरुत्वं **अस्तु** भवतु । इदं च भक्तेन ऋषिणा भगवते कृतं मङ्गलाशासनम्। तस्मादुपपन्नमिदं स्वभावसिद्धमहत्त्वादिविशिष्टस्येन्द्रस्य स्तोत्रे । अद्यापि गुरुदेवाद्याराधने मङ्गलाशासनसम्प्रदायः जयवादो लौकिक इव सुप्रसिद्धः। **द्यौर्न** द्युलोक इव **प्रथिना** पृथुलत्वेन वैपुल्येन **शवः** दीप्तं बलं अस्येति शेषः, **अस्तु** जयत्विति वा अध्याहारः । प्रथिना-प्रथिम्ना, मकारलोपश्छान्दसः ।। ५ ।।

।। इति प्रथमाष्टके प्रथमाध्याये पञ्चदशो वर्गः ।।

## ।। अथ षोडशो वर्गः ।।

### ऋक्संहिता पदपाठसहिता

**समोहे वाय आशत नरस्तोकस्य सनितौ । विप्रासो वा धिया यवः ।। ६ ।।**

सम्ऽओहे । वा । ये । आशत । नरः । तोकस्य । सनितौ । विप्रासः । वा । धियाऽयवः ।।

### ऋग्भाष्यम्

**अन्यसंवहनेनापि ये तं प्राप्ता जनार्दनम् ।**
**ज्ञानलाभेन तु नरस्त एव पशवोऽपरे ।**
**विप्राश्चैव धियायुक्ता मूर्खाः शूद्रसमा मताः ।। ६ ।।**

**ऋग्भाष्यटीका– समोहे** । अन्य । **ये समोहे** संवहने अन्यसंवहनेन वा अपि । अन्यैः प्रेरिता अपीति यावत् । **तोकस्य** अपत्यस्य । ज्ञानमेव हि जीवतोऽपत्यम् । **सनितौ** लाभे सति ज्ञानलाभेन तमिन्द्रं जनार्दनं **आशत** आश्नुवत प्राप्ताः । शरणमिति शेषः । त एव तु **नरः** पुरुषाः अपरे पशव इति शेषः । किञ्च । **ये धियायवः** धियायुक्ताः । युमिश्रणे । अन्येभ्योपि दृश्यन्त इति विच् । दृशिग्रहणाद्गुणाभावः तृतीयाया अलुक् । भगवज्ज्ञानिनः । **ते वा** त एव **विप्रासो** विप्राः मूर्खाः शूद्रसमा मता इति शेषः ।। ६ ।।

**मन्त्रार्थमञ्जरी–** समोहः संवहनम्, वाशब्दोऽप्यर्थः ।। ये । समोहे, संवहनेन, व्यत्ययात् । वा, प्रेरणेनापि, अन्यैः प्रेरिता अपीति यावत् । तोकस्य, अपत्यस्य, ज्ञानमेव हि जीवतोऽपत्यम् । सनितौ, लाभे सति । (इन्द्रम्) विष्णुम् । आशत, आश्नुवत, प्राप्ताः । (शरणम्) इति शेषः । 'ये' इति (श्रुतौ) श्रवणात् 'ते' इति (व्याख्याने) लभ्यते, (ते) (वा), त एव । नरः, पुमांसः, तदन्ये पशव इत्यर्थः । किं च, (ये) धियायवः, धिया युक्ताः, 'यु मिश्रणे' 'अन्येभ्योऽपि दृश्यन्ते' इति विच्, दृशिग्रहणसामर्थ्यात् 'सार्वधातुकार्धधातुकयोः' इति प्राप्तगुणाभावः, तृतीयाया अलुक्, भगवज्ज्ञानिनः । (ते) वा, त एव । विप्रासः, विप्राः, भगवदज्ञानिनस्तु शूद्रसमा इत्यर्थः ।।६।।

**स्कन्द– समोहे** (निघ २,१७) इति सङ्ग्रामनाम । वाशब्दोऽप्यर्थे समुच्चये । परापेक्षया च समुच्चयः । **ये** सङ्ग्रामेषु च **आशत** व्याप्नुवन्ति । कम् ? प्रकरणादिन्द्रम् । केन ? सामर्थ्यात् स्तुतिभिः । इन्द्रं स्तुवन्तीत्यर्थः । **नरः** मनुष्याः **तोकस्य** अपत्यनामैतत् (तु.निघ.२,२) । अपत्यस्य च । **सनितौ** सम्भक्तौ लाभे । **विप्रासः** मेधाविनः । **वा धियायवः** वाशब्दः परस्ताद् द्रष्टव्यः । धियायवो वा प्रज्ञाकामाश्चेत्यर्थः । किं तेषामिति साकाङ्क्षत्वाद् वाक्यस्य निराकाङ्क्षीकरणार्थम् । ते यथास्वमभिलषितं लभन्त इति वाक्यशेषः । अथवा समोहे वा य इत्यत्रैव यच्छ्रुतेः योग्यार्थक्रियाध्याहारः, तच्छब्दाध्याहारश्च । सङ्ग्रामे य इन्द्रं स्तुवन्ति ते आशत व्याप्नुवन्ति मनुष्याः । किम् ? समार्थ्यात् यज्ञम् । तत्र यजन्तः तोकस्य सनितौ धियायवश्च प्रज्ञाकामाश्च ।। ६ ।।

**वेङ्कटमाधव–** सङ्ग्रामजिगीषया ये एनं युद्धे आप्नुवन्ति मनुष्याः अपत्यस्य वा भजनार्थं, ये वा प्राज्ञाः कर्मकामाः । उत्तरत्र सम्बन्धः ।। ६ ।।

**मुद्गल–** **ये नरः समोहे** सङ्ग्रामे **तोकस्य** अपत्यस्य **सनितौ वा** लाभे वा **आशत** व्याप्तवन्तः । इन्द्रस्तुत्येति शेषः । वा अथवा **विप्रासः** मेधाविनः **धियायवः** प्रज्ञाकामाः सन्तः आशत । ते सर्वे लभन्ते इत्यध्याहारः ॥ ६ ॥

ये नरः पुरुषाः समोहे सङ्ग्रामे तोकस्य अपस्यस्य सनितौ वा लाभे वा आशत व्याप्तवन्तः । इन्द्रं स्तुत्येति शेषः । वा अथवा विप्रासः मेधाविनः धियायवः प्रज्ञाकामाः सन्तः आशत ते सर्वे लभन्ते इत्यध्याहारः । 'रणः' इत्यादिषु षट्चत्वारिंशत्संग्रामनामसु 'समोहे समिथे' (नि.२,१७,२५) इति पठितम् । पञ्चदशास्वपत्यनामसु 'तुक् तोकम्' (नि.२,२,२) इति पठितम् ॥ समोहे । प्रातिपदिकान्तोदात्तत्वम् । वा । 'चादयोऽनुदात्ताः' (फि.सू.८४) इत्यनुदात्तः । आशत । 'अशू व्याप्तौ' । छान्दसः च्लेर्लोपः । आडागम उदात्तः (पा.सू.६,४,७२) । सति शिष्टत्वेन स एव शिष्यते । नरः । प्रातिपदिकस्वरः । सनितौ । स्त्रियां क्तिन् । 'तितुत्रेष्वग्रहादीनाम्' (पा.सू.७,२,९,१) । निगृहीतिः निपठितिः इति वत् इडागमः । विप्रासः । 'ऋज्रेन्द्र' (उ.सू.२,१८६) इत्यादिना विप्रशब्दो रन्प्रत्ययान्तो निपातितः । धियायवः । 'धि धारणे' । धीयते धार्यतेऽवबुध्यते श्रुतमर्थजातम् अनया इति धिया प्रज्ञा । तामात्मन इच्छन्तीति क्यच् । 'क्याच्छन्दसि' (पा.सू.३,२,१७०) इति उप्रत्ययः । अतो लोपः । प्रत्ययस्वरेणान्तोदात्तः ॥ ६ ॥

**सिद्धाञ्जनम्**–अथास्मिन् सूक्ते षष्ठीमृचमाह– **ये नरः** पुरुषाः **समोहे** सङ्ग्रामे, देववैरिभिः सहेति बोध्यम् । **तोकस्य** अपत्यस्य **सनितौ वा** लाभे वा **आशत** प्राप्तवन्तः,अशू व्याप्तौ लुङि छान्दसं रूपम् । ये पुरुषा इन्द्रमाश्रयन्ते ते लभन्त इति शेषः। **वा** अथवा **धियायवः** प्रज्ञाकामाः **विप्रासः** विप्राः मेधाविनः ये इन्द्रं 'आशत,' तेऽपि लभन्त इत्यर्थः । नरः पुरुषा देवा मनुष्या वा बलिनः । देवानां अपत्यलाभस्तु मनुष्ये स्वांशप्रादुर्भावः । मनुष्याणामपि स्वान्तरे दैवतजन्मैव तोकपदवाच्यमपत्यं भवति । उभयथाऽपि अपत्यलाभपतिरोधकैर्विरोधिभिर्योद्धव्यमवश्यं भवति । अतः 'समोहे सङ्ग्रामे' इति निघण्टुपठितमभ्युपगम्य व्याख्यातम् ॥ ७ ॥

## ऋक्संहिता पदपाठसहिता

**यः कुक्षिः सोमपातमः समुद्र इव पिन्वते । उर्वीरापो न काकुदः ॥ ७ ॥**

**यः । कुक्षिः । सोमऽपातमः । समुद्रःऽइव । पिन्वते । उर्वीः । आपः । न । काकुदः ॥७॥**

ऋग्भाष्यम्

**यः कुक्षिस्तस्य देवस्य समुद्र इव सोऽखिलान् ।**
**कामान्क्षरति भक्ताय महाप इव तर्पकाः ।**
**काकुदस्तस्य जिह्वास्तु बह्व्यो बहुमुखेषु याः ।। ७ ।।**

**ऋग्भाष्यटीका–** **यः कुक्षिः** । तस्येन्द्रस्य देवस्य **यः सोमपातमः** अतिशयेन सोमपाः **कुक्षिः** स **समुद्र** इव रत्नाकर इव तत्र सोमं समर्पितवते भक्तायाखिलान् कामान् **पिन्वते** पिविमिहिसेचने । क्षरति सततं ददाति । किञ्च । तस्य **काकुदः** जिह्वाश्च ककुदिति तालुनाम तत्र भवा जिह्वा काकुत् । अकारलोपात् । **उर्वीः** उर्व्यः **आपो न** आप इव महाप इव भक्तानां तर्पकाः। कथं बहुवचनं ? बह्व्यः, तदेव कथं ? बहुमुखेषु याः ।। ७ ।।

**मन्त्रार्थमञ्जरी–** (तस्येन्द्रस्य देवस्य) यः कुक्षिः । सोमपातमः अतिशयेन सोमपाः । समुद्र इव, रत्नाकर इव । पिन्वते, क्षरति, यदीयं सोमं पिबति तस्मै सर्वान्कामान्ददाति, 'पिवि सेचने' इति धातोः । किं च, (तस्य) काकुदः, जिह्वाश्च, 'ककुद्' इति तालुनाम, 'तत्र भवः' इत्यर्थेऽण्प्रत्यये कृते आदिवृद्धावण्प्रत्ययाकारस्य लोपे 'काकुद्' इति रूपसिद्धेः, बहुवचनं तु बहुमुखेषु बहूनां जिह्वानां सत्त्वेन बहुत्वाज्ज्ञेयम् । उर्वीः, उर्व्यः, बह्व्यः । आपः न, आप इव, तर्पका इत्यर्थः ।। ७ ।।

**स्कन्द–** इन्द्रस्यावयवभूतः **कुक्षिः** आकारैकदेशः । **सोमपातमः** अतिशयेन सोमानां पाता । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । स समुद्र इव पिन्वते । पिविरिह सेचने । कर्मणि चायं व्यत्ययेन । यथा नदीभिः समुद्रस्तद्वत् पिन्वते सिच्यते अस्माभिः । केन ? सामर्थ्यात् सोमेन । **उर्वीः आपः न** द्वितीयेयमुपमा । तृतीयार्थे चात्र प्रथमा । बह्वीभिरद्भिरिव च । **काकुदः** काकुदं ताल्वित्याचक्षते । व्यत्ययेन चात्र पुंल्लिङ्गता । यथा तृषितस्य कस्यचिद् बह्वीभिरद्भिस्तालु सिच्यते, तद्वच्चेत्यर्थः । केचित्तु वारुणं काकुदमग्रोपमानमित्याहुः । तद्धयतिशयेन बह्वीभिः सिच्यते वरुणस्यापामधिदैवतत्वात् ।। ७ ।।

**वेङ्कटमाधव–** तेभ्यः सर्वेभ्यस्तांस्तान् कामान् यः अस्य कुक्षिः अतिशयेन सोमस्य पाता समुद्र इव सदाऽक्षीण उद्गमयति । सः कुक्षिः बहूनि उदकानि पिबन् तालु इव भवति । तद्धि निष्ठीवनेऽपि न शुष्यतीति ।। ७ ।।

**मुद्गल– यः कुक्षिः** अस्येन्द्रस्योदरप्रदेशः **सोमपातमः** अतिशयेन सोमस्य पाता । स कुक्षिः **समुद्र इव पिन्वते** वर्धते । **काकुदः** मुखसम्बन्धिन्यः **उर्वीः** बह्व्यः **आपः न** जलानीव । जिह्वासम्बन्धं आस्योदकं यथा कदाचिदपि न शुष्यति तथेन्द्रस्य कुक्षिः सोमपूरितः न शुष्यतीत्यर्थः ।। ७ ।।

**सायण– यः कुक्षिः** अस्येन्द्रस्योदरप्रदेशः **सोमपातमः** अतिशयेन सोमस्य पाता स कुक्षिः **समुद्र इव पिन्वते** वर्धते । सेचनार्थो धातुः औचित्येन वृद्धिं लक्षयति । **काकुदः** मुखसम्बन्धिन्यः **उर्वीः** बह्व्यः **आपो न** जलानीव । जिह्वासम्बन्धमास्योदकं यथा कदाचिदपि न शुष्यति तथेन्द्रस्य कुक्षिः सोमपूरितो न शुष्यतीत्यर्थः । यद्यपि 'श्लोकः' इत्यादिषु सप्तपञ्चाशत्सु वाङ्नामसु 'काकुत् जिह्वा' (नि.१,११,२८) इति पठितं तथाप्युदकसम्बन्धसिद्ध्यर्थमत्र काकुच्छब्देन मुखमुपलक्ष्यते । सम्बन्धवाचिनस्तद्धितस्यात्र छान्दसो लोपो द्रष्टव्यः ।

सोमपातमः । सोमं पिबतीति सोमपाः । आकारो धातुस्वरेणोदात्तः । कृदुत्तरपदप्रकृतिस्वरेण स एव शिष्यते । तमपः पित्त्वादनुदात्तत्वम् । समुद्रशब्दः प्रातिपदिकत्वादन्तोदात्तः । 'इवेन विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च' इति प्रकृतिस्वरः । पिन्वते । 'पिवि सेचने' । 'इदितो नुम् धातोः' (पा.सू.७,१,५८) इति नुमागमः । शपः पित्त्वेनानुदात्तत्वम् । तिङश्च लसार्वधातुकस्वरेण धातुस्वर एव शिष्यते । उर्वीः । उरुशब्दोऽन्तोदात्तः । 'वोतो गुणवचनात्' (पा.सू.४,१,४४) इति ङीष् । यणादेशः । 'उदात्तयणो हल्पूर्वात्' (पा.सू.६,१,१७४) इति ईकार उदात्तः । जसा सह 'एकादेश उदात्तेनोदात्तः' इति एकादेश उदात्तः । आपः । प्रातिपदिकस्वरः । काकुदः । प्रातिपदिकस्वरेणान्तोदात्तः ।।

**सिद्धाञ्जनम्–** सप्तमीमृचमाह– अस्येन्द्रस्य **यः कुक्षिः** उदरदेशः **सोमपातमः** अतिशयेन सोमरसस्य पाता, स **समुद्र इव पिन्वते** वर्धते, यथा समुद्रः अक्षयो गभीरो विपुलश्च भवति, सर्वसिन्धुसमागमेन विशेषतः पोषवान् लक्ष्यते, तथा इन्द्रकुक्षिः सर्वलोकरसभूयिष्ठः न कदाऽपि शुष्यति, सदा सिक्त आर्द्र एव भवति 'पिवि सेचने' इति धातोः पिन्वति नुमागमः, औचित्यात् वर्धते इति पूर्वैर्व्याख्यातम् । इन्द्रकुक्षेर्नित्यबृहत्त्वसोमसिक्तत्वबोधनाय उपमान्तरमाह– **उर्वीरापो न काकुदः** इति । ककुत् उच्छ्रितः प्रदेशः शिखरभूतः 'अग्निर्मूर्धा दिवः ककुत्' इत्याद्यवधेयम् ।

स च द्युलोकः तत्सम्बन्धिन्यः काकुदः **उर्वीः** बृहत्य **आपो न** आपः जलानीव, दिव्या आप इव बृहत्त्वं स्वभावसिद्धरसार्द्रत्वं च धत्ते कुक्षिरिति भावः। अत्र पूर्वे प्राहुः'काकुत् जिह्वा' इति निघण्टुपाठमालम्ब्य जिह्वासम्बन्धमास्योदकं यथा न कदाचिदपि शुष्यति तथेन्द्रस्य कुक्षिः सोमपूरितो न शुष्यतीति ॥ ७ ॥

### ऋक्संहिता पदपाठसहिता

**एवा ह्यस्य सूनृता विरप्शी गोमती मही । पक्का शाखा न दाशुषे ॥ ८ ॥**

एव । हि । अस्य । सूनृता । विऽरप्शी । गोऽमती । मही । पक्का । शाखा । न । दाशुषे ॥

### ऋग्भाष्यम्

**एवमेवास्य वाणी च वेदेता महती तथा ।**
**पक्का शाखेव यजते वरदात्री विरप्शिनः ।**
**बलिष्ठस्य हिते ............. ॥ ८ ॥**

**ऋग्भाष्यटीका– एवाह्यस्य** ॥ एवमेव ॥ यस्त्वं **विरप्शी** विशिष्टबलवांस्तस्य विरप्शिनो बलिष्ठस्य **अस्य** ते तव सम्बन्धिनी **गोमती** वाग्युता वेदेता वेदैः स्तुत्या **मही** महती या **सूनृता** साध्वी वाणी साऽपि **एवाहि** एवमेव हि कुक्ष्यादिवदेव **दाशुषे** यजते पक्कफलवती कल्पतरुशाखेव वरदात्री भवतीति शेषः । यद्वा विरप्शिनो बलिष्ठस्यास्य ते तव सम्बन्धिनी हि यस्मात्तस्माद्विरप्शीति प्रत्ययान्तभविन सूनृताया विशेषणमुक्तम् । यद्यपि विरप्सीति महन्नामसु पठितम् । तथापि महीत्यनेन गतार्थत्वादन्यथाव्याख्यातम् ॥ ८ ॥

**मन्त्रार्थमञ्जरी–** (यस्त्वम्) विरप्शी, विशिष्टबलवान् । अस्य, विरप्शिनो बलिष्ठस्य तव सम्बन्धिनी । गोमती, वाग्युक्ता, वेदेता, वेदैः स्तुत्या । मही, महती । (या) सूनृता, साध्वी वाणी । (सापि) एव हि एवमेव हि, कुक्ष्यादिवदेव दाशुषे, यजते । पक्का, पक्कफलवती । शाखा न, कल्पतरुशाखेव, वरदात्री भवतीत्यर्थः ॥ ८ ॥

**स्कन्द–** एवशब्द एवमित्यस्यार्थे । 'पक्का शाखा न' इत्येतस्माच्च परो द्रष्टव्यः । हि-शब्दस्तु पदपूरणः । **अस्य** इन्द्रस्य **सूनृता** सर्वकामधुक् । इन्द्रस्य स्वभूता धेनुः सूनृताऽत्रोच्यते । सा **विरप्शी** रप लप व्यक्तायां वाचि इत्यस्य क्रियाशब्दोऽयम् । न महन्नामैतत् । महीत्यन्यस्यात्र

महन्नाम्नो विद्यमानत्वात् सूनृतासामानाधिकरण्याच्च अस्य स्त्रीप्रत्ययान्तत्वात् । 'विरप्शिने वज्रिणे' (ऋ.६,३२,१) इत्यादिप्रयोगदर्शनाच्च इन्प्रत्ययान्तस्य महन्नामसु पाठात् (तु.निघ.३,३) । विरपणशीला शब्दकारिणी । गोमती 'अथाऽप्यस्यां ताद्धितेन कृत्सवन्निगमा भवन्ति' (या. २,५) इत्येवं पयोऽत्र गोशब्देनोच्यते । 'गोभिः श्रीणीत (ऋ ९,४६,४) इति यथा । पयस्वती । **मही** महती । **पक्का शाखा न** इव । पक्वानि फलानि यस्याः सा शाखैव पक्वेत्युच्यते । नशब्दश्चोपमार्थीयः अन्यत्रोपमानोपमेयगतधर्मप्रतिनिर्देशार्थयोर्यथा एवमित्येतयोरप्यर्थे वर्तते । 'अग्निर्न ये' (ऋ.१०,७८,२) । यथा 'अग्निः एवं' भ्राजसा रुक्मवक्षस इत्यर्थः । इह त्वेव-शब्दस्य श्रुतत्वाद् यथाशब्दमात्रार्थे । उपमानोपमेययोश्च सूनृताशाखयोः साधारणधर्मापेक्षत्वात् तत्सम्बन्धयोग्यपदाध्याहारः । यथा पक्वा शाखा रसबिन्दुं क्षरत्येवं क्षरति । किम् ? सामर्थ्यात् पयः । सर्वकामान् । पवस्वती हि सा सर्वकामधुक् । कस्मै क्षरति ? **दाशुषे** षष्ठ्यर्थे एषा चतुर्थी । दाशुषे यजमानस्यार्थाय । अथवा सूनृता गर्जितलक्षणा वाक् । गोमती माध्यमिकाः आपोऽत्र गाव उच्यन्ते । 'यस्य गा अन्तरश्मनः' (ऋ.६,४३,३) इति यथा । तद्वती । सा च पक्वेव शाखा क्षरति । किम् ? सामर्थ्यात् पयः ददते ॥ ८ ॥

**वेङ्कटमाधव–** एवं हि अस्य वाक् विविधरपणा पशुमती महती पक्वफलशाखा इव यजमानाय भवति ॥ ८ ॥

**मुद्गल– अस्य** इन्द्रस्य **सूनृता** प्रियसत्यरूपा वाक् **दाशुषे** हविर्दत्तवते यजमानाय तदर्थं **एव हि** एव खलु अनन्तरपदवक्ष्यमाणगुणोपेता भवतीत्यर्थः । कीदृशी ? **विरप्शी** विविध-गुणोपेतवाक्ययुक्ता बहुविधोपचारवादिनीत्यर्थः । **गोमती** बह्वीभिर्गोभिरुपेता गोप्रदेत्यर्थः । अत एव **मही** महती पूज्या । दृष्टान्तः । **पक्वा शाखा न** यथा बहुभिः पक्वैः फलैरुपेता पनसवृक्षादिशाखा प्रीतिहेतुस्तद्वत् ॥ ८ ॥

**सायण–** अभिप्लवषडहगतेषु उक्थ्येषु तृतीयसवने ब्राह्मणाच्छंसिनः 'एवा ह्यस्य सूनृता' इति अनुरूपस्तृचः । 'एह्यू षु ब्रवाणि ते' इति खण्डे 'अथ ब्राह्मणाच्छंसिनः' इत्युपक्रम्य 'एवा ह्यसि वीरयुरेवा ह्यस्य सूनृता' (अश्व.श्रौ.७,८) इति सूत्रितम् ।

**अस्य** इन्द्रस्य **सूनृता** प्रियसत्यरूपा वाक् **दाशुषे** हविर्दत्तवते यजमानाय तदर्थं **एवा हि**

एवं खलु अनन्तरपदवक्ष्यमाणगुणोपेता भवतीत्यर्थः । कीदृशी ? **विरप्शी** विविधरपणोपेत-वाक्ययुक्ता बहुविधोपचारवादिनीत्यर्थः । **गोमती** बह्वीभिर्गोभिरुपेता गोप्रदेत्यर्थः । अत एव **मही** महती पूज्या । यथोक्तवाचो दृष्टान्तः । **पक्वा शाखा न** यथा बहुभिः पक्वैः फलैरुपेता पनसवृक्षादिशाखा प्रीतिहेतुस्तद्वत् । यद्यपि महन्नामसु 'व्राधन् किरप्शी' (नि.३,३,२२) इति पठितं, तथाऽप्यत्र मही इत्यनेन पुनरुक्तिप्रसङ्गात् अवयवार्थो गृहीतः ।

एव । 'एवमादीनामन्तः' (फि.सू.८२) इत्यन्तोदात्तः । संहितायां 'निपातस्य च' (पा.सू. ६,३,१३६) इति दीर्घः । हि । निपात आद्युदात्तः । अस्य । प्रकृतस्येन्द्रस्य परामर्शात् 'इदमोऽन्वादेशे' (पा.सू.२,४,३२) इत्यादिना अशादेशोऽनुदात्त इति सर्वानुदात्तः । सूनृता । 'ऊन परिहाणे' । सुतरां ऊनयति अप्रियमिति सून् । सा चासौ ऋता सत्या चेति सूनृता प्रियसत्या वाक् । 'परादिश्छन्दसि बहुलम्' (पा.सू.६,२,१९९) इति ऋकार उदात्तः । विरप्शी । विचित्रं रपणं विरप् । 'रप लप व्यक्तायां वाचि' । सम्पदादित्वात् भावे क्विप् । तदेषामस्तीति विरप्शानि वाक्यानि । तानि यस्यां वाचि सन्ति सा वाक् विरप्शिनी । 'अत इनिठनौ' (पा.सू.५,२,११५) इति इनिः । 'यस्येति च' (पा.सू.६,४,१४८) इति अकारलोपः । 'ऋन्नेभ्यो ङीप्' (पा.सू.४,१,५) इति ङीप् । इकारः प्रत्ययस्वरेणोदात्तः । नकारलोपश्छान्दसः । सवर्णदीर्घः । 'एकादेश उदात्तेनोदात्तः' इत्युदात्तः । गावोऽस्यां सन्तीति गोमती । मतुब्ङीपौ पित्त्वादनुदात्तौ । प्रातिपदिकस्वर एव शिष्यते । मही महती । 'उगितश्च' (पा.सू.४,१,६) इति ङीप् । तस्य पित्त्वादनुदात्तत्वे प्राप्ते 'शतुरनुमो नद्यजादी' इत्यत्र 'बृहन्महतोरुपसङ्ख्यानम्' (पा.सू.६,१,१७३,१) इत्युदात्तत्वम् । अच्छब्दलोपश्छान्दसः । पक्वा । 'डुपचष् पाके' । 'निष्ठा' (पा.सू.३,२,१०२) इति क्तप्रत्ययः । 'पचो वः' (पा.सू.८,२,५२) इति वत्वम् । 'चोः कुः' (पा.सू.८,२,३०) इति कुत्वम् । प्रत्ययस्वरेणान्तोदात्तः । टापा सह सवर्णदीर्घः 'एकादेश उदात्तेनोदात्तः' इत्युदात्तः । शाखा । 'शाखृ श्लाखृ व्याप्तौ' । पचाद्यच् । चित्त्वा-दन्तोदात्ते प्राप्ते वृषादेः आकृतिगणत्वात् वृषादित्वादाद्युदात्तत्वम् । दाशुषे । 'दाशृ दाने' । 'दाश्वान्साह्वान्मीढ्वांश्च' (पा.सू.६,१,१२) इति निपातनात् क्वसौ इडभावो द्विर्वचनाभावश्च । चतुर्थ्येकवचने 'यचि भम्' (पा.सू.१,४,१८) इति भसंज्ञायां 'वसोः सम्प्रसारणम्' (पा.सू. ६,४,१३१) इति सम्प्रसारणं वकारस्य उकारः । परपूर्वत्वम् । 'शासिवसिघसीनां च' (पा.सू. ८,३,६०) इति षत्वम् । प्रत्ययस्वरेण उकार उदात्तः ॥ ८ ॥

**सिद्धाञ्जनम्–** अष्टमीमृचमाह– **एव हि** एवं खलु वक्ष्यमाणप्रकारेण **अस्य** इन्द्रस्य सूनृता वाक् (प्रियसत्येति सामान्यवादः) वस्तुतस्तु कल्याणी सत्या वाक् सम्पद्यत इति शेषः । 'चोदयित्री सूनृतानाम्' इति मन्त्रस्य व्याख्याने प्रतिपादितम् । का सा सूनृता? **मही** भारतीति प्रसिद्धा इळासरस्वत्योः सहचरी ऋतज्योतिषो बृहत्त्वद्योतिनी, न केवलं महतीत्यर्थः, न विशेषणं किं तु विशेष्यम्, 'इळा सरस्वती मही' इति भारतीपर्यायत्वात् । पुनः कीदृश्येषा मही इन्द्रसम्बन्धिनी सम्पन्ना भवति ? **विरप्शी** वैपुल्यवाहिनी महन्नामैतदिति बहुषु मन्त्रेषु सायणव्याख्या । इह तु विविधरपणशीला विविधोपचारवादिनीत्यादि दृश्यते। पुनश्च सा **गोमती** अंशुमती प्रज्ञा-किरणवती । अत्रोपमामाह– **पक्वा** पक्वफला शाखा **दाशुषे न** यजमानाय यथा। पक्वफलगुच्छ-सम्पन्ना शाखा भोग्या यथा यजमानाय सन्तृप्तये भवति तथा इन्द्रकृते उक्तगुणसम्पन्ना भारती भवतीति भावः ।। ८ ।।

## ऋक्संहिता पदपाठसहिता

**एवा हि ते विभूतय ऊतय इन्द्र मावते । सद्यश्चित्सन्ति दाशुषे ।। ९ ।।**

एव । हि । ते । विऽभूतयः । ऊतयः । इन्द्र । माऽवते । सद्यः । चित् । सन्ति । दाशुषे ।।

## ऋग्भाष्यम्

**........... संति सद्योऽपि यजते हिते ।**
**मावते ज्ञानिने नित्यमूतयश्च विभूतयः ।। ९ ।।**

**ऋग्भाष्यटीका–** एवाहिते । सन्ति । हे इन्द्र ते **दाशुषे** त्वां यजते **मावते** ज्ञानिने दातुं **ते** तव **विभूतयः** ऐश्वर्याणि **ऊतयः** रक्षाश्च **सद्यश्चित्** सद्योऽपि नित्यमिति यावत् । संत्येवहि ।। ९ ।।

**मन्त्रार्थमञ्जरी–** (हे) इन्द्र । (ते) दाशुषे, त्वां यजते । मावते, ज्ञानिने । (दातुम्) ते, तव । विभूतयः, ऐश्वर्याणि । ऊतयः (च) रक्षाश्च । सद्यः चित्, सद्योऽपि, प्राक् 'सद्यो वृद्धा' इत्यत्रोक्तदिशा नित्यमिति यावत् । सन्ति एव हि ।। ९ ।।

**स्कन्द–** **एव** इत्येवमर्थे प्रकृते सूनृतापेक्षश्च । हि इति पदपूरणः । यथा सूनृतैवं **ते** तव स्वभूता **विभूतयः** एश्वर्याणि **ऊतयः** पालनानि च हे **इन्द्र! मावते सद्यश्चित् सन्ति**

**दाशुषे** माशब्दोऽत्र 'माच्छन्दः प्रमाच्छब्दः' (मा.१४,१८, तै.४,३,७,१) इति छन्दःशब्द-सामानाधिकरण्याच्छन्दोविशेषवचनः । तद्वान् मावान् । मत्सदृशो वा । वतुप्रकरणे 'युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसङ्ख्यानम्' (पावा ७,२,३०) इति । मावते दाशुष इति चोभयत्र तादर्थ्ये चतुर्थी । चिच्छब्द एवार्थे । छन्दोविशेषवतो मासदृशस्य वा यजमानस्यार्थाय **सन्ति** भवन्ति । यदैव मत्सदृशो यजमानः स्वार्थायार्थयते, तदैव तदर्था भवन्ति ।। ९ ।।

**वेङ्कटमाधव–** एवं हि ते विभूतयः रक्षणानि च मत्सदृशाय यजमानाय तदानीमेव भवन्ति ।।

**मुद्गल–** हे **इन्द्र ते** तव **विभूतयः** ऐश्वर्यविशेषाः **एव हि** एवंविधाः खलु । किंविधा इति । तदुच्यते– **मावते** मत्सदृशाय **दाशुषे** हविर्दत्तवते यजमानाय **ऊतयः** त्वदीयरक्षारूपाः **सद्यश्चित् सन्ति** यदा कर्म अनुष्ठितं तदैव भवन्ति ।। ९ ।।

**सायण–**हे **इन्द्र ते** तव **विभूतयः** ऐश्वर्यविशेषाः **एवा हि** एवं विधाः खलु । किंविधा इति ? तदुच्यते– **मावते** मत्सदृशाय **दाशुषे** हविर्दत्तवते यजमानाय **ऊतयः** त्वदीयरक्षारूपाः **सद्यश्चित् सन्ति** यदा कर्म अनुष्ठितं तदैव भवन्ति ।

मावते मत्सदृशाय । वतुप्प्रकरणे युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसङ्ख्यानम्' (पा.सू.५,२,३९,१) इति अस्मच्छब्दात् वतुप् । मपर्यन्तस्य 'प्रत्ययोत्तरपदयोश्च' (पा.सू. ७,२,९८) इति मादेशः । अद्शब्देन सह 'अतो गुणे' (पा.सू.६,१,९७) इति पररूपत्वम् । 'दृग्दृशवतुषु' (पा.सू.६,३,८९) इत्यनुवृत्तौ 'आ सर्वनाम्नः' (पा.सू.६,३,९१) इति दकारस्य आकारः । सवर्णदीर्घत्वम् । वतुपः पित्त्वात् प्रातिपदिकस्वर एव शिष्यते । सद्यः । समाने द्यवि इत्यर्थे 'सद्यः परुत्परार्यैषमः' (पा.सू.५,३,२२) इत्यादिना निपातितम् । प्रत्यय-स्वरेणान्तोदात्तत्वम् । चित् । 'चादयोऽनुदात्ताः' (फि.सू.८४) इत्यनुदात्तः । सन्ति । 'असभुवि' । लटः स्थाने झि । 'झोऽन्तः' (पा.सू.७,१,३) । 'अदिप्रभृतिभ्यः शपः' (पा.सू. २,४,७२) इति शपो लुक् । तिङः प्रत्ययाद्युदात्तत्वम् । 'प्रत्ययलोपे प्रत्ययलक्षणम्' (पा.सू. १,१,६२) इति शबकारमाश्रित्य लसार्वधातुकानुदात्तत्वं न भवति । 'वर्णाश्रयविधौ प्रत्ययलक्षणं नास्ति' (परिभा.२१) इति निषेधात् । दाशुषे । गतमन्त्रे गतम् ।। ९ ।।

**सिद्धाञ्जनम्–** नवमीमृचमाह– हे **इन्द्र! एव हि** एवं महीपदवाच्यभारतीसमाश्रितः खलु त्वम् । **ते** तव **विभूतयः** विभवा ऐश्वर्यविशेषाः **मावते** मत्सदृशाय मद्विधायेत्यर्थः (अस्मच्छब्दात् छन्दसि वतुप्) **दाशुषे** यजमानाय **सद्यश्चित्** सपद्येव **ऊतयः सन्ति** अस्मदभिवर्धनानि भवन्ति । अन्यथाऽपि व्याख्येयम्– 'एव हि' एवं वक्ष्यमाणरीत्या खलु । 'ते विभूतयो मावते दाशुषे सद्यश्चित् ऊतयः सन्ति' इति ।। ९ ।।

### ऋक्संहिता पदपाठसहिता

**एवा ह्यस्य काम्या स्तोम उक्थं च शंस्या । इन्द्राय सोमपीतये ।। १० ।।**

एव । हि । अस्य । काम्या । स्तोमः । उक्थम् । च । शंस्या । इन्द्राय । सोमऽपीतये ।।

### ऋग्भाष्यम्

**स्तोमा उक्थानि चैवास्य तस्मै काम्यानि सर्वदा ।**
**गेयाः शंस्यानि सोमस्य पीतये नान्यथा पिबेत् ।। १० ।।**

**ऋग्भाष्यटीका– एवाह्यस्य** । स्तोमाः । **अस्य** परमेश्वरस्य **काम्या** काम्यानि प्रियाणि । **उक्थं** उक्थानि । **सोमपीतये** सोमपानार्थम् । तस्मै इन्द्राय । **शंस्या** शंस्यान्येव हि । **स्तोमः** स्तोमाश्च इन्द्राय सोमपीतये गेया इति शेषः । सोमपीतय इत्युपपादयति– **नान्यथेति** ।। स्तुत्या प्रसन्न एवहि पिबति । नत्वभिलाषेणेति ।। १० ।।

**मन्त्रार्थमञ्जरी–** अस्य, इन्द्रस्य, परमेश्वरस्य । काम्या, काम्यानि, प्रियाणि । उक्थम्, उक्थानि । सोमपीतये, सोमपानार्थम् । इन्द्राय । शंस्या, शंस्यानि । 'एव हि' इत्येवहि-शब्दयोरन्वयः । स्तोमः, स्तोमाः सामविशेषाः । च । (इन्द्राय सोमपीतये) (गेयाः) इति शेषः । स्तुत्या प्रसन्न एव पिबति, न त्वभिलाषेणेति, 'आप्तकामस्य का स्पृहा' (मा.उ.१।१५) इत्यादेरिति भावः ।। १० ।।

**स्कन्द– एव** एवमित्यर्थे । **अस्य** तथैव कमनीये **स्तोमः उक्थं च** स्तोत्रं च शस्त्रं च **शंस्या** आ सोमाप्तेः शंसनीये । किमर्थम् ? अस्मै एव **इन्द्राय सोमपीतये** । सोमास्युत्तरकालं कथमयमिन्द्रः सोमं पिबेदित्येवमर्थमित्यर्थः ।। १० ।।

**वेङ्कटमाधव–** यथाऽहमस्याऽशंसिषमेवं अस्य कमनीये स्तोत्रशास्त्रे शंसनीये सोमपानार्थं इन्द्राय । विरम्याभिधानात् षष्ठीचतुर्थ्यौ सङ्गच्छेते । अर्थभेदादित्यपरे इति ।। १० ।।

**मुद्गल– अस्य** इन्द्रस्य **स्तोमः** सामसाध्यं स्तोत्रं **उक्थं च** ऋक्साध्यं शस्त्रमपि **एव हि** एते उभे एवंविधे खलु । किंविधे इति ? तदुच्यते– **काम्या** कामयितव्ये **शंस्या** ऋत्विग्भिश्शंसनीये । किमर्थं शंसनमिति ? तदुच्यते– **इन्द्राय सोमपीतये** इन्द्रस्य सोमपानार्थम् ।।

**सायण– अस्य** इन्द्रस्य **स्तोमः** सामसाध्यं स्तोत्रं **उक्थं च** ऋक्साध्यं शस्त्रमपि **एवा हि** एते उभे एवंविधे खलु । किंविधे इति तदुच्यते– **काम्या** कामयितव्ये **शंस्या** ऋत्विग्भिः शंसनीये । किमर्थं शंसनमिति तदुच्यते । **इन्द्राय सोमपीतये** इन्द्रस्य सोमपानार्थम् ।

एवा ह्यस्य । व्यवहितमन्त्रे गतम् । काम्या । कमेर्णिङन्तात् 'अचो यत्' (पा.सू. ३,१,९७) । 'णेरनिटि' (पा.सू.६,४,५१) इति णिलोपः । 'तित्स्वरितम्' (पा.सू.६,१,१८५) इति स्वरिते प्राप्ते 'यतोऽनावः' (पा.सू.६,१,२१३) इत्याद्युदात्तत्वम् । सुपो डादेशः । स्तोमः । 'अर्तिस्तुसु' (उ.सू.१,१३७) इत्यादिना मन्प्रत्ययः । उक्थम् । 'वच परिभाषणे' । 'पातृतुदिवचिरिचिसिचिभ्यस्थक्' (उ.सू.२,१६४) इति थक् । कित्त्वात् सम्प्रसारणम् । परपूर्वत्वगुणाभावौ । शंस्या । 'शंसु स्तुतौ' । ण्यन्तात् 'अचो यत्' । 'यतोऽनावः' इत्याद्युदात्तत्वम् । सुपो डादेशः । सोमस्य पीतिः सोमपीतिः । कृदुत्तरपदप्रकृतिस्वरे प्राप्ते व्यत्ययेनाद्युदात्तत्वम् । अथवा सोमस्य पीतिर्यस्येन्द्रस्य इति सोमपीतिरिन्द्रः । 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' (पा.सू.६,२,१) इति पूर्वपदप्रकृतिस्वरत्वम् ।। १० ।।

**सिद्धाञ्जनम्–** दशमीमृचमाह– **एव हि** एवं खलु अस्मदनुष्ठानप्रकारेणेत्यर्थः। **अस्य** इन्द्रस्य **काम्या** कामनायोग्ये स्पृहणीये प्रिये इत्यर्थः, **स्तोमः उक्थं च** सामगानात्मकं ऋग्रूपं च **शंस्या** शंसनीये। किमर्थम् ? **इन्द्राय** इन्द्रार्थम् , **सोमपीतये** तदीयसोमपानाय तदीयसोमस्वीकारः सर्वशिवङ्करः यजमानस्यर्षेस्तेजोबलवृद्धिदेवतापत्यलाभादये प्रभवति इति सूक्तमन्वार्थपर्यालोचनया दृढं भवेदित्यसंशयम् ।। १० ।।

।। इति प्रथमाष्टके प्रथमाध्याये षोडशो वर्गः ।।

## ।। अथ सप्तदशो वर्गः ।।

### (सूक्तम् ९)

### ऋक्संहिता पदपाठसहिता

१० मधुच्छन्दा वैश्वामित्रः । इन्द्रः । गायत्री ।

**इन्द्रेहि मत्स्यन्धसो विश्वेभिः सोमपर्वभिः । महाँ अभिष्टिरोजसा ।। १ ।।**

**इन्द्र । आ । इहि । मत्सि । अन्धसः । विश्वेभिः । सोमपर्वऽभिः । महान् । अभिष्टिः । ओजसा ।। १ ।।**

### ऋग्भाष्यम्

**सोमपाः सोमपर्वाणः सर्वं यस्मात्तदिच्छया ।**
**अभिष्टिरोजसा नित्यं मदं सुखमवाप्स्यसि ।। १ ।।**

**ऋग्भाष्यटीका– इन्द्रेहि ।** एतदपि दशर्चमैन्द्रं सूक्तम् । सोमपर्वशब्दार्थमाह– **सोमपा इति ।।** सोमशब्दोपपदात्पिबतेरर्वनूप्रत्यये कृते सोमपाः सोमपर्वाण इत्युच्यन्त इत्यर्थः । यद्वा सोमस्य यानि पर्वाणि अवदानानि तानि येषान्ते सोमपर्वाणः । योहि यस्याहारः स तस्य भवतीति सोमपा इत्यर्थः । अभिष्टिपदं व्याख्याति– **सर्वमिति ।।** सर्वं जगद्यस्मात्तदिच्छया वर्ततेऽतोऽसावभिष्टिः अभितः सर्वविषये इष्टिरिच्छा यस्येति शकंध्वादित्वाद्दीर्घाभावः । ओजसेत्यस्याभिष्टित्वोपपादकत्वं सूचयितुं स्वरूपेण ग्रहणम् । मत्सीति व्याख्याति– **मदमिति ।।** विकरणादिव्यत्यासेनेत्यर्थः । अवाप्स्यसीत्युक्त्या प्राप्तामनित्यत्वशङ्कां निवारयति– **नित्यमिति ।। हे इन्द्र महान्** ओजसा सामर्थ्येनाभिष्टिश्च त्वं **विश्वेभिः** विश्वैः **सोमपर्वभिः** देवैः सह एहि । एत्य च **अन्धसः** अन्धसा हविरादिनाऽस्मद्दत्तेन **मत्सि** मदं प्राप्स्यसि ।। १ ।।

**मन्त्रार्थमञ्जरी–** अथ नवममपि दशर्चं वर्गद्वयात्मकमैन्द्रं सूक्तम् । 'इन्द्र, आ, इहि' इति विभागः, 'ओमाङोश्च' इति पररूपम्, 'इन्द्रेहि' इति संहिता । (हे) इन्द्र । ओजसा, सामर्थ्येन । अभिष्टिः, अभितः सर्वविषये इष्टिरिच्छा यस्यासावभिष्टिः, 'अभीष्टिः' इति वाच्ये 'शकन्ध्वादिषु पररूपं वाच्यम्' इति पररूपेण 'अभिष्टिः' इत्युक्तम्, सामर्थ्येन हेतुना सर्वं जगदिच्छाधीनं यस्य वर्तते तादृश इति फलितोऽर्थः । महान् । ओजसा अभिष्टिः (च त्वम्) विश्वेभिः विश्वैः । सोमपर्वभिः, सोमपातृभिर्देवैः सह, सोमशब्दोपपदात् 'पा पाने' इत्यतोऽर्वन्प्रत्यये (तस्य कित्त्वे

ङित्त्वे वा) आतो लोपे च 'सोमपर्वन्' इति सिद्धेः । आ इहि । एत्य च– अन्धसः, अन्धसा, हविरादिनान्नेन । मत्सि, माद्यसि, मदं सुखं प्राप्स्यसि, 'मदी हर्षे' व्यत्ययेन लुग्विकरणम् ।।

**स्कन्द–** हे **इन्द्र ! आ इहि** आगच्छ । आगत्य च **मत्सि** मन्दस्व तृप्य । **अन्धसः** अन्धः (निघ.२.७) इत्यग्निनाम । तृतीयार्थे चेयं षष्ठी । अन्नेन । कतमेन ? **विश्वेभिः सोमपर्वभिः** सर्वैः सोमविशेषैः । यानि त्वदर्थमभिषुतानि सोमाख्यस्यान्नस्य पर्वाणि तैः सर्वैरित्यर्थः । अथवा सोममयानि पर्वाणि येषां ते सोमपर्वाणः देवाः । यो हि यदाहारो भवति, तस्य तन्मयानि पर्वाणि भवन्ति सोमाहाराश्च देवाः । सहयोगलक्षणा चात्र तृतीया । तृप्य सोम-लक्षणेनान्नेन सर्वैः सोमाहारैर्देवैः सहेत्यर्थः । किं कारणम् ? उच्यते– यस्मात् **महान्** त्वं वीर्येण शरीरेण वा । **अभीष्टिः** अभ्येषणशीलश्च शत्रूणाम् । अभियष्टव्यो वा । केन हेतुना ? **ओजसा** बलेन बलवत्वादित्यर्थः । अथवा यस्त्वं महानभीष्टिश्च मत्सीत्येवं यच्छब्दतच्छब्दावध्याहृत्यैक-वाक्यता ज्ञेया ।। १ ।।

**वेङ्कटमाधव–** इन्द्र! आगच्छ माद्य च अन्नेन विश्वैः सोमलतापर्वभिरभिषुतेन **महान्** बलेन शत्रूणामभ्येषणशीलः ।। १ ।।

**मुद्गल–** 'इन्द्रेहि' इति दशर्चं द्वितीयं सूक्तम् । मधुच्छन्दा ऋषिः । इन्द्रो देवता । गायत्रम् ।

हे **इन्द्र! एहि** अस्मिन् कर्मण्यागच्छ । आगत्य च **विश्वेभिः** सर्वैः **सोमपर्वभिः** सोमरसरूपै **अन्धसः** अन्धोभिरन्नैः **मत्सि** माद्य हृष्टो भव । तत ऊर्ध्वम् **ओजसा** बलेन **महान्** भूत्वा **अभिष्टिः** शत्रूणामभिभविता भवेति शेषः ।। १ ।।

**सायण–** 'इन्द्रेहि' इत्यादिकं दशर्चं सूक्तं 'सुरूपकृत्नुम्' इत्यादिषु षष्ठम् । ऋष्यादयस्तस्य पूर्ववत् । विशेषस्तु अतिरात्रे द्वितीयपर्यायेऽच्छावाकशस्त्रे 'इन्द्रेहि' इत्यनुरूपस्तृचः । 'अतिरात्रे पर्यायाणाम्' इति खण्डे 'इदं वसो सुतमन्ध इन्द्रेहि मत्स्यन्धसः' (आश्व.श्रौ.६,४) इति सूत्रितम् ।।

हे **इन्द्र एहि** अस्मिन् कर्मण्यागच्छ । आगत्य च **विश्वेभिः** सर्वैः **सोमपर्वभिः** सोमरसरूपैः **अन्धसः** अन्धोभिः अन्नैः **मत्सि** माद्य हृष्टो भव । तत ऊर्ध्वम् **ओजसा** बलेन **महान्** भूत्वा

**अभिष्टिः** शत्रूणामभिभविता भव इति शेषः । अष्टाविंशतिसङ्ख्याकेषु बलनामसु 'ओजः पाजः' (नि.२,९,१) इति पठितम् ।

आ इहि । 'आद्गुणः' (पा.सू.६,१,८७) । इन्द्र एहि । यो ह्युभयोः स्थाने लभतेऽसावन्यतरव्यपदेशमिति आङ्गाङोः एकादेशस्य आङ्व्यपदेशात् 'ओमाङोश्च' (पा.सू.६,१,९५) इति पररूपम् । मत्सि माद्य । 'मदी हर्षग्लेपनयोः' । लोटः सिप् । 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' (परिभा.३५) इति सेर्हिरादेशः (पा.सू.३,४,७८) न भवति । 'दिवादिभ्यः श्यन्' (पा.सू.३,१,६९) इति श्यन् । 'बहुलं छन्दसि' (पा.सू.२,४,७३) इति श्यनो लुक् । 'न लुमताङ्गस्य' (पा.सू.१,१,६३) इति प्रत्ययलक्षणप्रतिषेधात् 'शमामष्टानां दीर्घः श्यनि' (पा.सू.७,३,७४) इति उपधादीर्घो न भवति । सिपः पित्त्वात् धातुस्वर एव । अन्धसः । 'अदेर्नुम् धश्च' (उ.सू.४,६४५) इति असुन् । व्यत्ययेन तृतीयाबहुवचनं कर्तव्यम् । नित्त्वादाद्युदात्तः । विश्वेभिः । 'अशिप्रुषि' (उ.सू.१,१४९) इत्यादिना कन् । नित्त्वादाद्युदात्तत्वम् । ऐसादेशः 'बहुलं छन्दसि' (पा.सू.७,१,१०) इति न भवति । सोमपर्वभिः । लतारूपं सोमं पृणन्ति पूरयन्तीति सोमपर्वाणःसोमरसाः । 'पॄ पालनपूरणयोः' । 'अन्येभ्योऽपि दृश्यन्ते' (पा.सू.३,२,७५) इति वनिप् । गुणो रपरत्वम् । वनिपः पित्त्वात् धातुस्वर एव । उपपदसमासे कृदुत्तरपदप्रकृतिस्वरेण पुनः स एव भवति । अभिष्टिः अभिगन्ता । 'इष गतौ' । 'मन्त्रे वृष' (पा.सू.३,३,९६) इत्यादिना क्तिन् उदात्तः । स हि भावपरोऽपि भवितारं लक्षयति । कित्त्वात् लघूपधगुणाभावः । 'तितुत्रतथसिसुसरकसेषु च' (पा.सू.७,२,९) इति इडागमो न भवति । अभिशब्दस्य इकारे 'एमनादिषु पररूपं वक्तव्यम्' (पा.सू.६,१,९४,६) इति पररूपत्वम् । प्रादिसमासे कृदुत्तरपदप्रकृतिस्वरत्वम् । ओजसा । 'उब्जेर्बलोपश्च' (उ.सू.४,६३१) इति असुन् । नित्त्वादाद्युदात्तः ॥

**सिद्धाञ्जनम्–** तृतीयेऽनुवाके द्वितीयं 'इन्द्रेहि' इत्यादिकं दशर्चं सूक्तम् ऋषिच्छन्दोदेवताः पूर्ववत् ।

तत्र प्रथमामृचमाह– हे **इन्द्र एहि** आगच्छ। **अन्धसः** अन्नैः सोमात्मकैर्भोग्यैः (व्यत्ययेन तृतीया) **मत्सि** माद्य हृष्टो भव । **विश्वेभिः** सर्वैः **सोमपर्वभिः** सोममयानि रसभरितानि पर्वाणि

अङ्गानि अवयवसन्धयो वा येषां तैः देवैः सह आगत्य सोमैः स्वीकृतैः प्रहृष्टो भवेत्यर्थः। ततः **ओजसा** स्पष्टेन बलेन **महान्** प्रभूतस्त्वं **अभीष्टिः** अभिगन्ता शत्रूणां भवसि । ओजसा-व्यक्तीभावार्थात् आर्जनाथाद्वा उब्जतेर्धातो ओजतेर्वा । अभीष्टिः अभिपूर्वकात् इषधातोः इष्टिरिति भावप्रधानं पदं, तेन भविता लक्ष्यते। सोमपर्वभिः सोमरसपूर्णैः 'अन्धसः' अन्नैरिति पूर्वेषां व्याख्या । पर्व पूरणे इति धात्वर्थानुसारेणेदं समर्थयन्ति । 'पर्व' अङ्गं, तेन शरीरं, अवपव-सन्धिश्च, द्विधाऽपि वेदे प्रयुक्तम् । तथा सायणव्याख्या च (१-६१-१२, ४-१९-९, ७-१०३-५, १०-१६३-६)।।

### ऋक्संहिता पदपाठसहिता

**एमेनं सृजता सुते मन्दिमिन्द्राय मन्दिने । चक्रिं विश्वानि चक्रये ।। २ ।।**
**आ । ईम् । एनम् । सृजत । सुते । मन्दिम् । इन्द्राय । मन्दिने । चक्रिम् । विश्वानि । चक्रये ।। २ ।।**

### ऋग्भाष्यम्

**एनमासृजतेन्दौ च विष्णुं तं मदकारिणम् ।**
**मन्दिने विष्णवे सम्यक्कर्मिणं सर्वकर्मिणे ।। २ ।।**

**ऋग्भाष्यटीका– एमेनम्** । एनम् । हे ऋत्विजः तं **एनं मन्दिं** मदकारिणम् । करणे इकारः । **चक्रिं** आदृगमेति करणे किः । आ इत्युपसर्गस्य चक्रिमित्यनेनापि सम्बन्धः । सम्यक्कर्मिणं विष्णुम् । **मन्दिने** मदशीलाय । **विश्वानि चक्रये** विश्वानि कार्याणि कृतवते सर्वकर्मिणे । **इन्द्राय** विष्णवे तस्य पानार्थम् । **सुते** इन्दौ सोमे **आसृजत** सन्निहितं कुरुतैव । स्वसन्निधानपवित्रितमेव सोमं देवः पिबतीति ।। २ ।।

**मन्त्रार्थमञ्जरी–** 'आ, ईम्, एनम्' इति विभागः । (हे ऋत्विजः) एनम् । मन्दिम्, मदकारणम्, 'मदीहर्षे' करणे इकारप्रत्ययो नुमागमश्च । चक्रिम्, 'एमेनम्' इत्यत्र श्रुताकारोप-सर्गस्येहाप्यन्वयः, (आ) चक्रिम्, सम्यक्कर्मसाधनं विष्णुम्, 'आदृगमहनजनः किकिनौ लिट् च' इति कृञः करणे किप्रत्यये तस्य लिड्वद्भावे 'लिटि धातोरनभ्यासस्य' इति द्वित्वे यणादेशेऽ-भ्यासस्य 'उरत्' इति 'कुहोश्चुः' इत्याभ्यामत्त्वचुत्वयोः 'चक्रिम्' इति सिद्धेः । मन्दिने मदशीलाय ।

विश्वानि चक्रये, विश्वानि कार्याणि कृतवते । इन्द्राय, विष्णवे, तस्य पानार्थमिति यावत् । सुते सोमे । आ सृजत ईम्, संनिहितं कुरुतैवेत्यर्थः । स्वसंनिधानपवित्रितमेव सोमं देवः पिबतीति यथा संनिधिस्तस्य भवति तथा कुरुत, भो ऋत्विजः । इति भावः । 'सृजता' इति दैर्घ्यं संहितायाम् ।। २ ।।

**स्कन्द–** आ इत्युपसर्गः सृजत इत्याख्यातेन सम्बन्धयितव्यः । ईम् इति पदपूरणः । **एनं** सोमं **आ सृजत** सृजतिरत्र दानार्थः । आ इत्येष वि इत्येतस्य स्थाने । विसृजत इत्युच्यते । अध्वर्यूणां चायं प्रैषः । दत्त यूयमध्वर्यवः । **सुते** द्वितीयार्थे सप्तमीयम् । अभिषुतम् । अथवा सुत इति स्वार्थ एव सप्तमी । सृजतिस्तु प्रक्षेपणार्थः । प्रक्षिपतैनं सोममन्यस्मिन् महाचमसस्थे सोमे । पुनरभ्युन्नयतेत्यर्थः । कीदृशम् ? मन्दिं तर्पयितारम् । कस्मै ? **इन्द्राय** सम्प्रदाने तादर्थ्ये वा चतुर्थीयम् । इन्द्राय दत्त, इन्द्राय वाऽभ्युन्नयत । कीदृशाय ? **मन्दिने** तर्पयित्रे तर्पयितव्याय वा । कीदृशम् ? **चक्रिं** ताच्छील्येऽयं किन् । स्वकार्यकरणशीलम् । कीदृशाय ? **विश्वानि चक्रये** सर्वसृष्ट्यादिकर्मकरणशीलाय ।। २ ।।

**वेङ्कटमाधव– आ सृजत एनं** सोमं सुते । ईम् इति पदपूरणम् । तर्पयितारं इन्द्राय तर्पयित्रे । विश्वस्य कर्मणः कर्तारम् । विश्वानि कर्माणि चक्रये 'न लोकाव्यय' (पा.२,३,६९) इति प्रतिषिद्धा षष्ठी ।। २ ।।

**मुद्गल–** ईम् इत्यनर्थकः पादपूरणाय प्रयुक्तः । हे अध्वर्यवः । **सुते** अभिषुते चमसस्थे सोमे एनं सोमं **इन्द्राय** इन्द्रार्थं **आ सृजत** पुनरभ्युन्नयत । शुक्रामन्थिचमसगणेषु पुनरभ्युन्नयत । कीदृशमेनम् ? **मन्दिं** हर्षहेतुम् । **चक्रिं** साधुकरणशीलम् । कीदृशायेन्द्राय ? **मन्दिने** हर्षयुक्ताय । **विश्वानि** सर्वाणि कर्माणि **चक्रये** कृतवते ।। २ ।।

**सायण– ईम्** इत्यनर्थकः पादपूरणाय प्रयुक्तः । हे अध्वर्यवः **सुते** अभिषुते चमसस्थे सोमे **एनं** सोमं **इन्द्राय** इन्द्रार्थं **आसृजत** पुनरभ्युन्नयत । शुक्रामन्थिचमसगणे पुनरभ्युन्नयनं आपस्तम्बोनोक्तं– 'होत्रकाणां चमसाध्वर्यवः सकृत्सकृद्धुत्वा शुक्रस्याभ्युन्नीयोपावर्तध्वमिति' (आप.श्रौ.१२,२३,४) इति । कीदृशं एनम् ? **मन्दिं** हर्षहेतुं **चक्रिं** साधुकरणशीलम् । कीदृशाय इन्द्राय ? **मन्दिने** हर्षयुक्ताय **विश्वानि** सर्वाणि कर्माणि **चक्रये** कृतवते । सर्वकर्मनिष्पादन-

शीलयेत्यर्थः । ईम् इत्यस्य पादपूरणार्थत्वं यास्क आह– 'अथ ये प्रवृत्तेऽर्थेऽमिताक्षरेषु ग्रन्थेषु वाक्यपूरणा आगच्छन्ति पदपूरणास्ते मिताक्षरेष्वनर्थकाः कमीमिद्विति' (निरु.१,९) इति । अस्यायमर्थः । अन्यैरेव पदैर्विवक्षितेऽर्थे समाप्ते सति ये शब्दा ईमित्यादयः प्रयुक्तास्ते शब्दा अमिताक्षरेषु छन्दोराहित्येन परिमिताक्षररहितेषु ब्राह्मणादिवाक्येषु वाक्यपूरणार्था द्रष्टव्याः । मिताक्षरेषु छन्दोयुक्तेषु ग्रन्थेषु पादपूरणार्थाः । ते च कमीमित्यादय इति । ईमित्यस्य शब्दस्यानर्थक्याय एतामृचमुदाजहार– 'एमेनं सृजता सुते । आसृजतैनं सुते' (निरु.१,१०) इति ।

एनम् । इदमो द्वितीयायां 'द्वितीयाटौः स्वेनः' (पा.सू.२,४,३४) इति एनादेशः 'अनुदात्तः' (पा.सू.२,४,३२) इत्यनुवृत्तेः सर्वानुदात्तः । सृजत । संहितायां 'अन्येषामपि दृश्यते' (पा.सू.६,३,१३७) इति दीर्घः । मन्दिं प्रमोदहेतुम् । 'मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु' । 'इदितो नुम् धातोः' (पा.सू.७,१,५८) इति नुम् । मन्दमानं प्रयुङ्क्ते इत्यर्थे 'हेतुमति च' (पा.सू.३,१,२६) इति णिच् । ण्यन्तस्य अजन्तत्वात् 'अच इः' (उ.सू.४,५७८) इति इकारप्रत्ययः । 'णेरनिटि' (पा.सू.६,४,५१) इति णिलोपः । प्रत्ययस्वरेणान्तोदात्तत्वम् । मन्दिने । मन्देः पूर्ववत् । चतुर्थ्येकवचनेऽनपुंसकस्यापि व्यत्ययेन नुमागमः (पा.सू७,१,७३) । चक्रिम् । 'डुकृञ् करणे' । 'आदृगमहनजनः किकिनौ लिट् च' (पा.सू.३,२,१७१) इति तच्छीलतद्धर्मतत्साधुकारिषु कर्तृषु किन्प्रत्ययः । तस्य कित्त्वात् गुणाभावः । यणादेशः । लिड्वद्भावात् द्विर्वचनम् । 'द्विर्वचनेऽचि' (पा.सू१,१,५९) इति यणादेशस्य स्थानिवद्भावात् कृशब्दो द्विरुच्यते । अभ्यासस्य उरत्त्व-रपरत्व-चुत्व-हलादिशेषाः । किनो नित्त्वादाद्युदात्तः । विश्वानि । विशेः क्वन् नित्त्वादाद्युदात्तः । अस्य चक्रये इति कृदन्ते योगेऽपि 'कर्तृकर्मणोः कृति' (पा.सू.२,३,६५) इीत षष्ठी न भवति । 'किकिनौ लिट् च' इति किनो लिड्वद्भावेन 'न लोकव्ययनिष्ठाखलर्थतृनाम्' (पा.सू.२,३,६९) इति निषेधात् ।। २ ।।

**सिद्धाञ्जनम्**– द्वितीयामृचमाह– अन्तर्यागे प्रवृत्तान् सखीन् सम्बोधयति । ईम् पादपूरणाय । **सुते** अभिषुते अभिषवे समाप्ते निष्पीडिते रसे संस्कृते सति, **एनं मन्दिं** मोदमानं सोमं रसात्मानं **इन्द्राय आसृजत** अतिसृजत, अभ्युन्नयनार्थं दत्त । कीदृशम् मन्दिम् ? **चक्रिं** साधुकार्यकरण-शीलम् (करोतेरभ्यासः, किन् ताच्छील्ये, अन्यच्छान्दसम्) । कीदृशे इन्द्राय ? **मन्दिने** मोदहेतवे,

मोदमानाय वा । पुनः कीदृशे? **विश्वानि चक्रये** विश्वेषां कार्याणां कर्त्रे। अन्तर्याजिना स्वानुभूतिरसार्पणेन स्वाभ्युन्नतये स्वस्मिन् स्रष्टव्यानि सर्वाणि समोद इन्द्रः स्रष्टा साध्नोति ।। २ ।।

### ऋक्संहिता पदपाठसहिता

**मत्स्वा सुशिप्र मन्दिभिः स्तोमेभिर्विश्वचर्षणे । सचैषु सवनेष्वा ।। ३ ।।**

मत्स्व । सुऽशिप्र । मन्दिऽभिः । स्तोमेभिः । विश्वऽचर्षणे ।। सचा । एषु । सवनेषु । आ ।। ३ ।।

### ऋग्भाष्यम्

**स्वानन्द विश्वजीवेश मत्स्वास्मद्रक्षया सह ।। ३ ।।**

**ऋग्भाष्यटीका– मत्स्व** । स्वानन्द । हे **सुशिप्र** स्वानन्द शोभनानन्द । विश्वाश्चर्षणयः प्रजा यस्यासौ विश्वचर्षणिः । **विश्वचर्षणे** विश्वजीवेश **एषु** त्रिषु सवनेषु **सचा** सह अस्मद्रक्षयेति शेषः । अस्मद्रक्षां कुर्वन् । **मन्दिभिः** मदहेतुभिः **स्तोमेभिः** अस्माभिः क्रियमाणैः स्तोमैः **आमत्स्व** सम्यक् मदमवाप्नुहि ।। ३ ।।

**मन्त्रार्थमञ्जरी–** (हे) सुशिप्र, शोभनानन्द । विश्वचर्षणे, विश्वाश्चर्षणयः प्रजा यस्यासौ यथा तस्य सम्बुद्धिः, विश्वजीवेश्वर । एषु (त्रिषु) सवनेषु । सचा, सह । (अस्मद्रक्षया) इति शेषः, अस्मद्रक्षां कुर्वन् । मन्दिभिः, प्रागुक्तरीत्या मदहेतुभिः । स्तोमेभिः, अस्माभिः क्रियमाणैः स्तोमैः । आ मत्स्व, सम्यङ्गदं सुखमवाप्नुहि ।। ३ ।।

**स्कन्द– मत्स्व** मोदस्व स्तूयस्व वेत्यर्थः । हे **सुशिप्र!** 'शिप्रे हनू नासिके वा' (या. ६,१७) । सुहनो सुनस वा । कीदृशैः ? **मन्दिभिः** मोदयितृभिः स्तावकैर्वा । कैः ? **स्तोमेभिः** स्तवनैः । हे **विश्वचर्षणे!** पश्यतिकर्माऽयम् । सर्वस्यापि द्रष्टः । **सचा** सह । केन ? सामर्थ्यात् स्वसखैर्मरुद्भिः । क्व ? **एषु सवनेषु** 'सवनम्' (निघ.३,१७) इति यज्ञनाम । एतेषु यज्ञेषु प्रातस्सवनमाध्यन्दिनतृतीयसवनेषु वा । आकारः पदपूरणः ।। ३ ।।

**वेङ्कटमाधव–** मन्दस्व सुहनो ! मादयितृभिः स्तोमैः सर्वस्य द्रष्टः सहास्माभिः एषु सवनेषु । आकारः सप्तम्यर्थं स्फुटीकरोति ।। ३ ।।

**मुद्गल–** हे **सुशिप्र** शोभनहनो! तादृश! हे इन्द्र! **मन्दिभिः** हर्षहेतुभिः **स्तोमेभिः** स्तोमैः स्तोत्रैः **मत्स्व** हृष्टो भव । हे **विश्ववर्षणे!** सर्वमनुष्ययुक्त! सर्वैर्यजमानैः पूज्य! इत्यर्थः । तादृशेन्द्र! त्वं **एषु** यागगतेषु त्रिषु **सवनेषु सचा** देवैरन्यैः सह आ गच्छेति शेषः ।।३।।

**सायण–** हे **सुशिप्र** हे शोभनहनो शोभननासिक वा । 'शिप्रे हनू नासिके वा' (निरु. ६,१७) इति यास्केनोक्तत्वात् । तादृश हे इन्द्र **मन्दिभिः** हर्षहेतुभिः **स्तोमेभिः** स्तोत्रैः **मत्स्व** हृष्टो भव । हे **विश्वचर्षणे** सर्वमनुष्ययुक्त सर्वैर्यजमानैः पूज्य इत्यर्थः । तादृशेन्द्र त्वं **एषु** यागगतेषु त्रिषु **सवनेषु सचा** देवैरन्यैः सह आगच्छेति शेषः ।

'मदि स्तुति' इत्यस्य लोटि 'अनित्यमागमशासनम्' (परिभा.९३,२) इति कृत्वा 'इदितो नुम् धातोः' (पा.सू.७,१,५८) इति नुम् न भवति । अनुदात्तेत्वात् 'तास्यनुदात्तेन्ङिददुपदेशात्' (पा.सू.६,१,१८६) इति लसार्वधातुकानुदात्तत्वम् । धातुस्वर एव । संहितायां 'द्व्यचोऽतस्तिङः' (पा.सू.६,३,१३५) इति दीर्घत्वम् । सुशिप्रेत्यामन्त्रितनिघातः । मन्दिभिः । गतमन्त्रे व्याख्यातम् । स्तोमेभिः । मन्प्रत्ययस्य नित्त्वादाद्युदात्तत्वम् । 'बहुलं छन्दसि' (पा.सू.७,१,१०) इति भिस ऐसादेशो न भवति । विश्वचर्षणे । निघातः । सचा । उक्तम् । एषु । 'ऊडिदम्' इत्यादिना विभक्तेरुदात्तत्वम् ।। ३ ।।

**सिद्धाञ्जनम्–** तृतीयामृचमाह – **सुशिप्र!** शोभनहनो, सुनस वा, शिप्रं हनुर्नसा वा । सुमुखेति दर्शनीयत्वं द्योतितं, मुखैकदेशेन मुखं लक्षितम् । **विश्वचर्षणे** पश्यतिकर्माऽयं निघण्टुपठितः विश्वदृष्टे, इन्द्र! **मत्स्व** मोदस्व, कान्तो भव वा, । कैः ? **मन्दिभिः** स्तोमेभिः मोदहेतुभिः, कान्तिहेतुभिर्वा, अस्मदीयैः स्तोत्रैः । अथ च **सचा** सह त्वदीयैः विभूतिभूतैरन्यैर्देवैर्वा, इति शेषः । **एषु सवनेषु** अस्मदीयेषु यज्ञेषु देवाराधनेषु, **आ** आगत्य सन्निहितो भव । भो विश्वदर्शिन् ! अस्माकं मदकरैः स्तोत्रैः हर्षितः कमनीयवदनः सन् अस्मदीयदेवताराधनकर्मसु अन्तर्यागेषु सन्निधिं कुरु, इति भावः ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**असृ॑ग्रमिन्द्र ते॒ गिरः॒ प्रति॒ त्वामुद॑हासत । अजो॑षा वृष॒भं पति॑म् ।। ४ ।।**

**असृ॑ग्रम् । इ॒न्द्र॒ । ते॒ । गिरः॑ । प्रति॑ । त्वाम् । उत् । अ॒हा॒स॒त॒ । अजो॑षाः । वृ॒ष॒भम् । पति॑म् ।। ४ ।।**

ऋग्भाष्यम्

**त्वन्निस्सृता वेदवाचस्त्वां प्रत्येवाप्यनारतम् ।**
**उच्चैर्मुख्यतया सम्यग्विसृष्टाः स्वपतिं प्रति ।**
**अजोषाः स्तुत्यरूपेण त्वत्सेव्यास्त्वदृते क्वचित् ।। ४ ।।**

**ऋग्भाष्यटीका– असृग्रम्** । त्वन्निःसृताः । हे **इन्द्र अजोषाः** त्वदृतेऽन्ये न स्तुत्यरूपेण क्वचिदप्यसेव्याः **ते** त्वदीयास्त्वन्निःसृता **गिरः** वेदवाचः **असृग्रं** अनारतं **वृषभं** श्रेष्ठं **पतिं** स्वपतिं **त्वां** प्रत्येव **उत्** उच्चैः सम्यक् मुख्यतयैवेति यावत् **अहासत** अगमन् । ओहाङ्गतौ । विसृष्टाः । त्वामेव मुख्यया वृत्या प्रतिपादयितुमस्माभिरुच्चारिता इति तात्पर्यम् ।। ४ ।।

**मन्त्रार्थमञ्जरी–** (हे) इन्द्र । अजोषाः, त्वदृतेऽन्येन स्तुत्यरूपेण क्वचिदप्यसेव्याः । ते, त्वदीयाः, त्वन्निःसृताः । गिरः, वेदवाचः । असृग्रम्, अनारतम् । वृषभम्, श्रेष्ठम् । पतिम्, स्वपतिम् । त्वाम् प्रति (एव) उत्, उच्चैः, सम्यङ्मुख्यतयैवेति यावत् । अहासत, अगमन्, 'ओहाङ् गतौ' लुङात्मनेपदं बहुवचनम् । त्वद्विसृष्टास्त्वामेव मुख्यया वृत्त्या प्रतिपादयितु मस्माभिरुच्चारिता इति तात्पर्यार्थः ।। ४ ।।

**स्कन्द– असृग्रं** सृष्टवानहम् । हे **इन्द्र! ते** तव **गिरः** स्तुतीः । ताश्च सृष्टाः सत्यः **प्रति त्वां उत् अहासत** ओहाङ् गतौ । स्वर्व्यवस्थितं त्वां प्रतीतो लोकादूर्ध्वं गताः । **अजोषाः** सेवितवानसि । कीदृशं त्वामुदहासत ? **वृषभं** वर्षितारं **पतिं** स्वामिनं सर्वस्य ।। ४ ।।

**वेङ्कटमाधव–** असृजं इन्द्र! ते स्तुतीः । सृष्टाश्च ताः त्वां प्रत्युदागच्छन् । त्वञ्च सेवित-वानसि स्तुतीनां वर्षितारं मां स्तोमानामीश्वरम् ।। ४ ।।

**मुद्गल–** हे इन्द्र! **ते गिरः** त्वदीयाः स्तुतीः **असृग्रं** सृष्टवानस्मि । ताश्च गिरः स्वर्गेऽवस्थितं **त्वां प्रति उदहासत** उद्गत्य प्राप्नुवन् । तादृशीर्गिरः त्वं **अजोषाः** सेवितवानसि । कीदृशं त्वाम् ? **वृषभं** कामानां वर्षितारं पतिं यजमानानां पालयितारम् ।। ४ ।।

**सायण–** हे **इन्द्र ते गिरः** त्वदीयाः स्तुतीः **असृग्रं** सृष्टवानस्मि । ताश्च गिरः स्वर्गेऽवस्थितं **त्वां प्रति उदहासत** उद्गत्य प्राप्नुवन् । तादृशीर्गिरः त्वं **अजोषाः** सेवितवानसि । कीदृशं

त्वाम् ? **वृषभं** कामानां वर्षितारं **पतिं** सोमस्य पातारं यजमानानां पालयितारं वा । 'पाता वा पालयिता वा' (निरु.४,२६) इति यास्केनोक्तत्वात् ।

असृग्रम् असृजम् । 'सृज विर्गे' । लङो मिप् । 'तुदादिभ्यः शः' (पा.सू.३,१,७७) । 'बहुलं छन्दसि' (पा.सू.७,१,८) इत्यत्र विकरणस्य रुडागमः । जकारस्य गकारः । 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' (पा.सू.६,४,७१) इति अडागम उदात्तः । सति शिष्टत्वात् स एव शिष्यते । गिरः । प्रातिपदिकस्वरः । अहासत । 'ओहाङ् गतौ' । लुङ् । झस्य उदादेशः (पा.सू.७,१,५) । 'च्लेः चित्' (पा.सू.३,१,४४) । अडागमो निघातश्च । अजोषाः । 'जुषी प्रीतिसेवनयोः' । लङस्थास् । तुदादिभ्यः शः । तस्य 'छन्दस्युभयथा' (पा.सू. ३,४,११७) इत्यार्धधातुकत्वेन ङित्वाभावात् लघूपधगुणः । थासः थकारलोपश्छान्दसः । सवर्णदीर्घः । अडागमः । सति शिष्टत्वात् उदात्तः शिष्यते । वृषभम् । 'पृषु वृषु मृषु सेचने' । 'अभच्' (उ.सू.३,४०२) इत्यनुवृत्तौ 'ऋषिवृषिभ्यां कित्' (उ.सू.३,४०३) इति अभच्-प्रत्ययः । कित्त्वाद्गुणाभावः । चित्त्वादन्तोदात्तः । पतिम् । 'पा रक्षणे' । 'पातेर्डतिः' (उ.सू. ४,४९७) । डित्त्वात् टिलोपः । प्रत्ययाद्युदात्तत्वम् ।। ४ ।।

**सिद्धाञ्जनम्–** चतुर्थीमृचमाह – हे **इन्द्र! ते** तुभ्यं **गिरः** स्तुतीः **असृग्रं** असृजं, सृष्टवानस्मि । जकारस्य गकारः छान्दसः रुडागमश्च । ताश्च गिरः **त्वां प्रति उदहासत** स्वर्वासिनं त्वां प्रति ऊर्ध्वं गताः । ओहाङ् गतौ, लुङ्, छान्दसम् । **अजोषाः** सेवितवानसि, ताः स्तुतीः । जुषी प्रीतिसेवनयोः, लङ् छान्दसम् । कीदृशं त्वां गिरः उद्गत्य प्राप्नुवन् ? **वृषभं** वर्षितारं, पुनः कीदृशम् ? **पतिं** पातारं रक्षकम् ।। ४ ।।

### ऋक्संहिता पदपाठसहिता

**सं॒चो॑दय चि॒त्रम॒र्वाग्राध॑ इन्द्र॒ वरे॑ण्यम् । अस॒दित्ते॑ वि॒भु प्र॒भु ।। ५ ।।**

सम् । चो॒द॒य॒ । चि॒त्रम् । अ॒र्वाक् । राध॑ः । इ॒न्द्र॒ । वरे॑ण्यम् । अस॑त् । इत् । ते॒ । वि॒ऽभु । प्र॒ऽभु ।। ५ ।।

### ऋग्भाष्यम्

**अर्वाङ्नीचान् प्रति त्वस्मान् भद्रं राधः प्रचोदय ।**
**अस्त्येव ते विशेषेण प्रकृष्टं शुभमच्युतम् ।। ५ ।।**

**ऋग्भाष्यटीका– संचोदय** । अर्वाक् । हे **इन्द्र अर्वाक्** अधस्तात् स्थितानस्मान् प्रति **चित्रं** भद्रं **वरेण्यं** वरणीयं **राधः** ऐश्वर्यं **सञ्चोदय** अस्मभ्यं देहीति यावत् । दातुं च **ते** तव विशिष्टं भवतीति **विभु** प्रकृष्टं भवतीति **प्रभु** विशेषेण प्रकृष्टमिति यावत् । शुभमिति शेषः । विप्रसंभ्योड्वसंज्ञायाम् । **असदित्** लडर्थे पञ्चमो लकारः । अस्त्येव । **प्रभु** प्रभूतमक्षयमिति प्रभुशब्दस्यार्थान्तरमाह– **अच्युतमिति** ।। ५ ।।

**मन्त्रार्थमञ्जरी–** (हे) इन्द्र । अर्वाक्, अधस्तात्स्थितानस्मान्प्रति चित्रम्, भद्रम् । वरेण्यम्, वरणीयम् । राधः, ऐश्वर्यम् । सम् चोदय, अस्मभ्यं देहीति यावत् । दातुं च– ते, तव । विशिष्टं भवतीति विभु, प्रकृष्टं भवतीति प्रभु, विशेषेण प्रकृष्टमिति यावत्, प्रभु प्रभूतमक्षयमिति वा, 'विप्रसम्भ्योड्वसंज्ञायाम्' इति भवतेर्डुप्रत्ययः । (शुभम्) इति शेषः । असत् इत्, अस्त्येवेत्यर्थः, 'अस भुवि' इत्यस्य लडर्थे लेट्, 'लेटोऽडाटौ' इति तिपोऽडागमः, 'इतश्च लोपः परस्मैपदेषु' इतीकारलोपः ।। ५ ।।

**स्कन्द– सं चोदय** प्रेरय **चित्रं अर्वाक्** अस्मान् प्रति । अस्मभ्यं देहीत्यर्थः । किम् ? **राधः** धनम् । हे **इन्द्र!** कीदृशम् ? **वरेण्यं** वरणीयं अत्यन्तोत्कृष्टम् । किं कारणम् ? उच्यते– **असत् इत्** लडर्थेऽयं पञ्चमो लकारः । इच्छब्दोऽपि यस्मादर्थे । अस्ति यस्मात् **ते** तव **विभु प्रभु** विभूतं च प्रभूतं च धनम् । यावता कार्यं साध्यते, तद् विभु । ततोऽतिरिक्तं प्रभु । यस्मादत्यन्तप्रभूतधनोऽसीत्यर्थः ।। ५ ।।

**वेङ्कटमाधव–** सं प्रेरय पूजनीयं धनं अस्मदभिमुखम् इन्द्र! वरणीयम् । अस्ति हि ते विभु च प्रभु च धनम् ।। ५ ।।

**मुद्गल–** हे **इन्द्र! वरेण्यं** श्रेष्ठं **राधः** धनं **चित्रं** मणिमुक्तादिरूपेण बहुविधं **अर्वाक्** अस्मदभिमुखं यथा भवति तथा **सं चोदय** सम्यक् प्रेरय । भोगाय यावत्पर्याप्तं तावद्विभुशब्देनोच्यते । ततोऽप्यधिकं प्रभुशब्देन । तादृशं धनं **ते असत् इत्** अस्त्येव । तस्मादस्मभ्यं प्रयच्छेत्यर्थः ।। ५ ।।

**सायण–** हे **इन्द्र वरेण्यं** श्रेष्ठं **राधः** धनं **चित्रं** मणिमुक्तादिरूपेण बहुविधं अर्वाक् अस्मदभिमुखं यथा भवति तथा **संचोदय** सम्यक् प्रेरय । भोगाय यावत् पर्याप्तं तावत् विभु-

शब्देनोच्यते । ततोऽप्यधिकं प्रभुशब्देन । तादृशं धनं **ते** तवैव **असदित्** अस्त्येव । तस्मादस्मभ्यं प्रयच्छेत्यर्थः । 'मघम्' इत्यादिषु अष्टाविंशतिधननामसु 'रायः राधः' (नि.२, १०,१७) इति पठितम् ।

चोदय । 'चुद प्रेरणे' । ण्यन्तात् लोट् । 'तिङ्ङतिङः' इति निघातः । राधः । राध्नुवन्ति अनेनेति राधो धनम् । 'सर्वधातुभ्योऽसुन्' (उ.सू.४,६२८) । नित्त्वादाद्युदात्तः । वरेण्यम् । वृञ एण्यः । वृषादित्वादाद्युदात्तः । असत् । 'अस भुवि' । लेट् । तिप् । 'इतश्च लोपः' (पा.सू.३,४,९७) इति इकारलोपः । 'लेटोऽडाटौ' (पा.सू.३,४,९४) इति अडागमः । 'अदिप्रभृतिभ्यः शपः' (पा.सू.२,४,७२) इति शपो लुक् । 'आगमा अनुदात्ताः' (पा.म.३,१,३,७) इति अटोऽनुदात्तत्वात् धातुस्वर एव । विभु । विभवतीति विभु । 'भुवः' (पा.सू.३,२,१७९) इत्यनुवृत्तौ 'विप्रसम्भ्यो ड्वसंज्ञायाम्' (पा.सू.३,२, १८०) इति डुप्रत्ययः । डित्त्वात् टिलोपः । प्रत्ययस्वरेण उकार उदात्तः । कृदुत्तरपद-प्रकृतिस्वरेण स एव शिष्यते । एवं प्रभु ।। १७ ।।

**सिद्धाञ्जनम्**– पञ्चमीमृचमाह– हे **इन्द्र ! चित्रं** विविधं **वरेण्यं** श्रेष्ठं **राधः** धनं **अर्वाक्** अस्मदभिमुखं **सञ्चोदय** सम्यक् प्रेरय । नेदं लौकिकं पश्वादि धनं, इन्द्रस्यैवेदमिति तत्स्वरूपं तृतीयचरणेनाह– **ते** तव इदं 'राधः' **असत् इत्** अस्त्येव, अस भुवि, छन्दसि लेट् । कीदृशं तत् ? **विभु** विततं भवति, अपि च **प्रभु** प्रकर्षेण भवति । प्रभुत्वं एकत्र संहत्य स्थित्वा राजमानत्वं ईशितृत्वरूपं ऐश्वर्यम् । विभुत्वं तु वितत्य व्यापकतया विभूतिभूतत्वं ऐश्वर्यम् । एवं द्विविधमपि 'राधः' ऐश्वर्यमिन्द्रस्य, तदीश्वरप्रेरणया विना नेषदपि प्राप्यम् । अन्यत्सर्वं धीमद्भिरूह्यम् ।। ५ ।।

**।। इति प्रथमाष्टके प्रथमाध्याये सप्तदशो वर्गः ।।**

**।। अथ अष्टादशो वर्गः ।।**

**ऋक्संहिता पदपाठसहिता**

**अस्मान्त्सु तत्र चोदयेन्द्र राये रभस्वतः । तुविद्युम्न यशस्वतः ।। ६ ।।**

अस्मान् । सु । तत्र । चोदय । इन्द्र । राये । रभस्वतः । तुविऽद्युम्न । यशस्वतः ॥६॥

## ऋग्भाष्यम्

**रभस्वतः शब्दवतः स्तोतॄनस्मान्यशस्वतः ।**
**तत्र त्वयि महाराये महाकीर्ते सुचोदय ॥ ६ ॥**

**ऋग्भाष्यटीका– अस्मान्** । रभस्वतः । हे **तुविद्युम्न** महाकीर्ते **इन्द्र रभस्वतः** शब्दवतः स्तोतॄनिति यावत् । रेभतीति तत्कर्मसु पाठात् । **यशस्वतः** यशस्विनोऽस्मान् **राये** सप्तम्येषा । महाराये महैश्वर्यरूपे **तत्र** त्वयि **सुचोदय** त्वद्विषयबुद्ध्यादियुक्तान् कुरु ॥ ६ ॥

**मन्त्रार्थमञ्जरी–** (हे) तुविद्युम्न, महाकीर्त्ते । इन्द्र । रभस्वतः, शब्दवतः, स्तोतॄनिति यावत् । यशस्वतः, यशस्विनः । अस्मान् । राये, सप्तम्येषा, महैश्वर्यरूपे । तत्र, त्वयि । सुचोदय, सम्यक्प्रेरय, 'चुद प्रेरणे', त्वद्विषयबुद्धियुक्तान्कुर्वित्यर्थः ॥ ६ ॥

**स्कन्द– अस्मान् सुष्ठु तत्र चोदय** हे **इन्द्र! राये** धनार्थम् । क्व ? सामर्थ्याद् यत्र गते धनं लभ्यते । कीदृशान् ? **रभस्वतः** क्षिप्रानित्यर्थः । **तुविद्युम्न!** 'तुवि' (निघ.३,१) इति बहुनाम । द्युम्नं धनं वा यशो वा अन्नं वा । बहुधन! बहुयशः! बह्वन्न वा । **यशस्वतः** 'यशः' (निघ २,७) इत्यन्ननाम । हविर्लक्षणेनान्नेनान्नवतः । यष्टॄनित्यर्थः ॥ ६ ॥

**वेङ्कटमाधव–** अस्मान् सुष्ठु तत्र चोदय यत्र धनं लभ्यते इन्द्र! धनार्थं वेगवतः स्तुतिप्रवृत्तान् अपि वा युद्धोद्युक्तान् बह्वन्न! हविष्मतः ॥ ६ ॥

**मुद्गल–** हे **तुविद्युम्न!** प्रभूतधन **इन्द्र राये** धनसिद्ध्यर्थं **अस्मान्** अनुष्ठातॄन् **तत्र** कर्मणि **सुचोदय** सुष्ठु प्रेरय । कीदृशानस्मान् ? **रभस्वतः** उद्योगवतः **यशस्वतः** कीर्तिमतः ॥ ६ ॥

**सायण–** हे **तुविद्युम्न** प्रभूतधन **इन्द्र राये** धनसिद्ध्यर्थं **अस्मान्** अनुष्ठातॄन् तत्र कर्मणि **सुचोदय** सुष्ठु प्रेरय । कीदृशानस्मान् । **रभस्वतः** उद्योगवतः **यशस्वतः** कीर्तिमतः ।

तत्र । तच्छब्दात् 'सप्तम्यास्त्रल्' (पा.सू.५,३,१०) । 'लिति' (पा.सू.६,१,१९३) इति प्रत्ययात् पूर्वस्योदात्तत्वम् । इन्द्र । आमन्त्रिताद्युदात्तत्वम् । पादादित्वान्न निघातः ।

राये । 'ऊडिदम्' इत्यादिना विभक्तेरुदात्तत्वम् । रभस्वतः । 'रभ राभस्ये' राभस्यं कार्योपक्रमः । 'सर्वधातुभ्योऽसुन्' (उ.सू.४,६२८) । नित्त्वादाद्युदात्तः । मतुपः पित्वादनुदात्तत्वम् । 'स्वादिष्वसर्वनामस्थाने' (पा.सू.१,४,१७) इति न पदत्वं 'तसौ मत्वर्थे' (पा.सू.१,४,१९) इति भसंज्ञया बाधितत्वात्; 'आ कडारादेका संज्ञा' (पा.सू.१,४,१) इति नियमात् । तुविद्युम्न । तुवि बहु द्युम्नं धनं यस्य । षाष्ठिकम् आमन्त्रिताद्युदात्तत्वम् । यशस्वतः । यशोऽस्यास्तीति मतुप् । 'अस्मायामेधास्रजो विनिः' (पा.सू.५,२,१२१) इति विनिना न बाध्यते, मतुपः सर्वत्र समुच्चयात् । यशस्शब्दो 'नब्विषयस्यानिसन्तस्य' इत्याद्युदात्तः । मतुपः पित्त्वात् स एव शिष्यते ।। ६ ।।

**सिद्धाञ्जनम्**– अथास्मिन् सूक्ते षष्ठीमृचमाह– हे **इन्द्र तुविद्युम्न!** बहुद्युते चित्रभानो इत्यर्थः । तुवि बहुनाम, द्युम्नं द्युतिः । **अस्मान्** तव स्तावकान् **तत्र** यत्र 'विभु प्रभु राधः' वर्तते तत्र **सु** सुष्ठ **चोदय** प्रेरय । किमर्थम् ? **राये** धनाय पूर्वोक्तलक्षणाय । कीदृशे ? **रभस्वतः** चतुर्थ्यर्थे षष्ठ्येकवचनम् । तीव्रवेगाय । रभ राभस्ये, तीव्रवेगेन उद्योगवते इत्यर्थः। पुनः **यशस्वतः** विश्रुताय चतुर्थ्यर्थे षष्ठी। पूर्वस्यामृचि तत्र तव धाम्नि स्थितं विभु प्रभु धनं अस्मदर्थं प्रेरय 'संचोदय' इत्युक्तम् । अस्यां ऋचि तस्मा एव धनाय अस्मान् प्रेरय 'सुचोदय' इत्युक्तम् । तच्च दिव्यं धनं ऊर्ध्वं वर्तते, तस्मिन्नस्माकं इह लब्धव्ये स्वामिन इन्द्रस्य प्रेरणमवश्यं भवति । तेन तदस्मदर्थमिह आगच्छेत् । अस्माभिरपि तत्र गन्तव्यम् । तत्रापि इन्द्रप्रेरणया विना गमनशक्तिर्न सिद्ध्यति । उभयथाऽपि गत्यागती स्याताम् । ऊर्ध्वस्थस्य धनस्येहागमनम् , इतश्चास्माक-मूर्ध्वगमनं उभयं च इन्द्रकृतप्रेरणासाध्यम् । प्रेर्यमाणस्य 'रायः' रभसा गतिसामर्थ्यं, तस्य विश्रुतत्वं च द्योतयितुं 'रभस्वतः' 'यशस्वतः' इति विशेषणद्वयम् । नेमे 'अस्मान्' इत्यस्य विशेषणे । स्तोतारः स्वयमेव 'वयं यशस्विनः सरभसं प्रार्थयामहे, अतः प्रेरय ते धनम्' इति आविष्कृतं व्याख्यानमसमञ्जसम् । तस्य ऐन्द्रस्य धनस्य स्वरूपमुत्तरत्रापि वक्ष्यते ।। ६ ।।

## ऋक्संहिता पदपाठसहिता

**संगोमदिन्द्र वाजवदस्मे पृथु श्रवो बृहत् । विश्वायुर्धेह्यक्षितम् ।। ७ ।।**

सम् । गोऽमत् । इन्द्र । वाजऽवत् । अस्मे इति । पृथु । श्रवः । बृहत् । विश्वऽआयुः । धेहि । अक्षितम् ।। ७ ।।

## ऋग्भाष्यम्

**अस्मास्वतिबृहज्ज्ञानं नित्य सन्धेहि चाक्षयम् ।। ७ ।।**

**ऋग्भाष्यटीका– संगोमत्** ।। अस्मासु । हे **इन्द्र** विश्वं सम्पूर्णमायुर्यस्यासौ **विश्वायुः** नित्य (त्यः) त्वं **अस्मे** अस्मासु **गोमत्** गोयुक्तं **वाजवत्** अन्नेनापि सहितं **अक्षितं** अक्षयं **पृथु** बृहत् अतिबृहत् । श्रवसा श्रवणेन जायत इति **श्रवः** ज्ञानं **सन्धेहि** सम्यक् देहि ।।७।।

**मन्त्रार्थमञ्जरी–** (हे) इन्द्र । विश्वं सम्पूर्णमायुर्यस्यासौ विश्वायुः, नित्यः । (त्वम्) अस्मे, अस्मासु, 'सुपां सुलुक्' इत्यादिना सुपः 'शे' इत्यादेशे शेषे लोप 'अस्मे' इति रूपम् । गोमत्, गोयुक्तम् । वाजवत्, अन्नादिसहितम् । अक्षितम्, अक्षयम् । पृथु बृहत्, अतिबृहत् । श्रवः, ज्ञानं, श्रवसा श्रवणेन जातत्वाद्धेतोः श्रवस्शब्देन ज्ञानमुच्यते । सम् धेहि, सम्यग्देहीति, वर्णव्यत्ययः ।। ७ ।।

**स्कन्द–** सम् इत्युपसर्गो धेहि इत्याख्यातेन सम्बन्धयितव्यः । **गोमत्** गावो यस्मिन् सन्ति तत् गोमत् । गोभिः सहितम् । हे **इन्द्र! वाजवत्** अन्नेन च सहितम् । **अस्मे** अस्मभ्यम् । **पृथु** विस्तीर्णं प्रभूतम् । **श्रवः** धननामैतत् (तु निघ २,१०) । धनम् । **बृहत्** महत् सारवत् । **विश्वायुः** आयुर्जीवितम् । तेन च सर्वेण सहितं **संधेहि** सम्यग् देहि । **अक्षितं** अहिंसितम्, केनचिदपि हिंसितुशक्यम् ।। ७ ।।

**वेङ्कटमाधव–** गोमत् बलवच्च अस्मासु विस्तीर्णं परिबृळ्हं उच्छ्रितं अन्नं धेहि सर्वान्नस्त्वम् अक्षीणम् ।। ७ ।।

**मुद्गल–** हे **इन्द्र! श्रवः** धनं **अस्मे** अस्मभ्यं सम्यक् प्रयच्छ । कीदृशं श्रवः । **गोमत्** बह्वीभिर्गोभिरुपेतं **वाजवत्** प्रभूतेनान्नेनोपेतं **पृथु** परिमाणेनाधिकं **बृहत्** गुणैरधिकं **विश्वायुः** कृत्स्नायुषयकारणं **अक्षितं** विनाशरहितम् ।। ७ ।।

**सायण–** हे **इन्द्र! श्रवः** धनं **अस्मे सं धेहि** अस्मभ्यं सम्यक् प्रयच्छ । कीदृशं श्रवः ? **गोमत्** बह्वीभिर्गोभिरुपेतं **वाजवत्** प्रभूतेनान्नेनोपेतं **पृथु** परिमाणेनाधिकं **बृहत्** गुणैरधिकं **विश्वायुः** कृत्स्नायुष्यकारणम् **अक्षितं** विनाशरहितम् ।

गोमत् । वाजवत् । उभयत्र मतुपोऽनुदात्तत्वात् प्रातिपदिकस्वर एव । वाजशब्दो वृषादिः आद्युदात्तः । अस्मे । अस्मच्छब्दात् चतुर्थीबहुवचनस्य 'सुपां सुलुक्' इत्यादिना शे आदेशः । शित्त्वात् सर्वादेशः । प्रातिपदिकस्वरेण अन्तोदात्तत्वम् । 'शेषे लोपः' (पा.सू.७,२,९०) टिलोप इति पक्षे उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम् । अन्त्यलोपपक्षे 'अतो गुणे' इति पररूपे 'एकादेश उदात्तेनोदात्तः' इत्युदात्तत्वम् । पृथु । 'प्रथ प्रख्याने' । 'प्रथिम्रदिभ्रस्जां सम्प्रसारणं सलोपश्च' (उ.सू.१,२८) सति कुप्रत्ययः । रेफस्य सम्प्रसारणं ऋकारः । परपूर्वत्वम् । कोः कित्त्वात् न लघूपधगुणः । श्रूयते इति श्रवो धनम् । असुन्प्रत्ययः । नित्त्वादाद्युदात्तः । बृहत् । प्रातिपदिकस्वरः । विश्वायुः । विश्वमायुर्यस्मिन् धने । विश्वशब्दः कन्प्रत्ययान्तः । तस्य बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वे प्राप्ते 'परादिश्छन्दसि बहुलम्' (पा.सू. ६,२,१९९) इति पूर्वपदान्तोदात्तत्वम् । 'एकादेश उदात्तेनोदात्तः' इत्युदात्तः । अक्षितम् । 'क्षि क्षये' इत्यस्मात् अन्तर्णीतण्यर्थात् कर्मणि निष्ठा । तेन ण्यदर्थत्वात् 'निष्ठायामण्यदर्थे' (पा.सू.६,४,६०) इति न दीर्घत्वम् । अत एव 'क्षियो दीर्घात्' (पा.सू.८,२,४६) इति न निष्ठानत्वम् । नञ्समासेऽव्ययपूर्वपदप्रकृतिस्वरत्वम् ।। ७ ।।

**सिद्धाञ्जनम्–** सप्तमीमृचमाह – हे **इन्द्र ! अस्मे** अस्मभ्यं **सन्धेहि** सन्धानं कुरु अविच्छिन्नं यथा तथा सम्बन्धय पूर्वोक्तं राय इति शेषः। तस्य 'राधसः' धनस्य विशेषणानि भवन्ति । **गोमत्** प्रज्ञांशुमत् **वाजवत्** समृद्धिमत् । अन्यच्च **सन्धेहि पृथु** पृथुलं विस्तीर्णं **श्रवः** दिव्यावेशश्रवणम् **बृहत्** प्रभावेण महत् च अपि च **अक्षितं** क्षयरहितं **विश्वायुः** विश्वायुष्यं विश्वजीवितं सन्धेहि । यजमानव्यष्टौ विश्वायुष्ट्वं धातव्यमिति प्रार्थना । अत्र 'श्रवः' धनमिति कृत्वा तद्विशेषणानि गोमदादीनि गृहीतानि स्थूलव्याख्यानेषु ।। ७ ।।

### ऋक्संहिता पदपाठसहिता

**अ॒स्मे धे॑हि॒ श्रवो॑ बृ॒हद्द्यु॒म्नं स॑हस्र॒सात॑मम् । इन्द्र॒ ता र॒थिनी॒रिषः॑ ।। ८ ।।**

अ॒स्मे इति॑ । धे॒हि॒ । श्रवः॑ । बृ॒हत् । द्यु॒म्नम् । स॒ह॒स्र॒ऽसात॑मम् । इन्द्र॑ । ताः । र॒थिनीः॑ । इषः॑ ।। ८ ।।

### ऋग्भाष्यम्

**विद्यां कीर्तिं सदेहान्नं बहुलाभयुतं बृहत् ।**
**प्रार्थने पौनरुक्त्यं न चोदयेति ततः पुनः ।। ८ ।।**

**ऋग्भाष्यटीका– अस्मे ।** विद्याम् । हे **इन्द्र अस्मे** अस्मासु **बृहच्छ्रवः** महतीं विद्यां **सहस्रसातमं** अतिशयेन सहस्रलाभसहितं बहुलाभयुतं **द्युम्नं** कीर्तिं च **ताः** प्रसिद्धाः **रथिनीः इषः** रथो देहस्तद्वतीः । सदेहान्नमिति यावत् । अविकलेन देहेन युक्तमन्नं च धेहि । ननु संचोदय चित्रमित्यादिनोक्तमेवोच्यत इत्यतः पुनरुक्तिदोषस्तत्राह– **प्रार्थन इति ।।** पौनरुक्त्यं न दोषो यत इति शेषः । ततश्चोदयेत्युक्त्वा पुनः सन्धेहीत्यादिवचनं युज्यत इति योज्यम् ।।

**मन्त्रार्थमञ्जरी–** (हे) इन्द्र । अस्मे, अस्मासु । बृहत् श्रवः, महतीं विद्याम् । सहस्रसातमम्, अतिशयेन सहस्रलाभसहितं, बहुलाभप्रदम् । द्युम्नं, कीर्त्तिम् । (च)ताः, प्रसिद्धाः । रथिनीः, रथो देह आसामस्तीति रथिन्यस्ता रथिनीः । इषः, अन्नानि, अविकलेन देहेन युक्तमन्नम् । (च) । धेहि, देहि, वर्णव्यत्ययः । अत्र 'संचोदय चित्रम्' इत्यादिनोक्तस्य पुनः पुनः कथनेऽपि प्रार्थनारूपत्वान्न पौनरुक्त्यदोषः ।। ८ ।।

**स्कन्द–** अस्मभ्यं देहि । किम् ? **श्रवः बृहत्** श्रवोऽत्र कीर्तिरच्यते । कीर्तिं महतीम् । **द्युम्नं** धननामात्र द्युम्नम् (तु.निघ.२,१०) । धनञ्च । कियत् ? **सहस्रसातमं** सहस्रसङ्ख्यानामतिशयेन सम्भक्तृ बहुसहस्रसङ्ख्याकमित्यर्थः । न च केवले कीर्तिधने । किं तर्हि ? हे **इन्द्र ता रथिनीः इषः** तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽत्राध्याहर्तव्यः । या वयमर्थयामहे, या अन्येभ्योऽपि स्तोतृभ्यो धत्से । ता रथिनी रथसहिताः इष अन्नानि ।। ८ ।।

**वेङ्कटमाधव–** अस्मासु धेहि बृहत् अन्नं द्योतमानं अनेकपुरुषसम्भक्तृ । दत्तानि च तानि अन्नानि कुरु रथयुक्तानि ।। ८ ।।

**मुद्गल–** हे **इन्द्र! बृहत् श्रवः** महतीं कीर्तिं **अस्मे धेहि** अस्मभ्यं प्रयच्छ । तथा **सहस्रसातमं** अतिशयेन सहस्रसङ्ख्यादिनोपेतं **द्युम्नं** धनं अस्मे धेहि । तथा **ताः** व्रीहियवादिरूपेण प्रसिद्धा **रथिनीः** बहुरथोपेता **इषः** अन्नानि अस्मे धेहि ।। ८ ।।

**सायण–** हे **इन्द्र! बृहत् श्रवः** महतीं कीर्तिं **अस्मे धेहि** अस्मभ्यं प्रयच्छ । तथा **सहस्रसातमं** अतिशयेन सहस्रसङ्ख्यादानोपेतं **द्युम्नं** धनं अस्मे धेहि । तथा **ताः** व्रीहियवादिरूपेण प्रसिद्धाः **रथिनीः** बहुरथोपेताः **इषः** अन्नानि अस्मे धेहि । अस्मे । 'सुपां सुलुक्' इत्यादिना शे आदेशः । धेहि । 'ध्वसोरेद्धावभ्यासलोपश्च' (पा.सू.६,४,११९) इति एत्वाभ्यासलोपौ ।

श्रूयते इति श्रवः । असुनो नित्त्वादाद्युदात्तत्वम् । सहस्रं सनुते ददातीति सहस्रसाः । 'षणु दाने' । 'जनसनखनक्रमगमो विट्' (पा.सू.३,२,६७) । 'विड्वनोरनुनासिकस्यात्' (पा.सू. ६,४,४१) इति आकारादेशः । धातुस्वरेणान्तोदात्तः । पुनः कृदुत्तरपदप्रकृतिस्वरेण स एव शिष्यते । रथा आसां सन्तीति रथिन्य इति प्रत्ययस्याद्युदात्तत्वम् । 'ऋन्नेभ्यो ङीप्' (पा.सू.४,१,५) । स च पित्त्वादनुदात्तः । इषः । यौगिकत्वे धातुस्वरः; रूढत्वे प्रातिपदिक-स्वरः ।। ८ ।।

**सिद्धाञ्जनम्–** अष्टमीमृचमाह – हे **इन्द्र अस्मे** अस्मभ्यं **बृहत्** महत् **श्रवः** श्रवणं दिव्या-वेशप्रेरितं धेहि धारय, देहीत्यर्थः। **सहस्रसातमं** अतिशयेन सहस्रसंख्यालक्षित-बाहुल्यसम्भक्तृ-बह्वर्थसम्भजनसमर्थमित्यर्थः । **द्युम्नं** प्रकाशं तेजो वा धेहि। **रथिनीः** रथः आसामस्तीति रथिन्यः ताः, (रथो रंहतेः) शीघ्रगमना इत्यर्थः । **इषः** प्रेरणाः धेहि । **ताः** याः पूर्वं प्रार्थिताः 'सञ्चोदय, सुचोदय' इति । अत्र **इषः** अन्नानि कर्मठानां, तदनुसारेण विशेषणस्य बहुरथोपेता इति व्याख्या ।

ऋक्संहिता पदपाठसहिता

**वसोरिन्द्रं वसुपतिं गीर्भिर्गृणन्त ऋग्मियम् । होम गन्तारमूतये ।। ९ ।।**

वसोः । इन्द्रम् । वसुऽपतिम् । गीःऽभिः । गृणन्तः । ऋग्मियम् । होम । गन्तारम् । ऊतये ।।

ऋग्भाष्यम्

**वसोर्वसूनां च पतिं देवदेवेश्वरं प्रभुम् ।**
**ऋङ्ज्ञेयमाह्वयामोऽत्र गृणन्तोऽभीष्टसिद्धये ।। ९ ।।**

**ऋग्भाष्यटीका–** **वसोः** । वसुपतिम् । वसुशब्दो देवपर्यायः जातावेकवचनं वसूनां ये वसवस्तेषां पतिं देवदेवेश्वरं **ऋग्मियं** ऋङ्ज्ञेयं ऋग्भिर्ज्ञेयं इन्द्रं प्रभुं भक्तान्प्रति गन्तारं **गीर्भिर्गृणन्तः** स्तुवन्तो वयं **ऊतये** अभीष्टसिद्धयेऽत्र **होम** आह्वयामः ।। ९ ।।

**मन्त्रार्थमञ्जरी–** वसोः, वसुशब्दो देववाची, जातावेकवचनम्, वसोर्वसूनां देवानाम्,ये वसवस्तेषां पतिं वसुपतिम्, देवदेवेश्वरम् । ऋग्मियं, ऋग्भिर्ज्ञेयम् । इन्द्रम्, प्रभुम् । गन्तारं, भक्तान्प्रति गन्तारम् । गीर्भिः । गृणन्तः, स्तुवन्तः । (वयम्) ऊतये, अभीष्टसिद्धये । होम, आह्वयामः, 'ह्वेञ् शब्दे' इति धातोश्छान्दसं रूपम् ।। ९ ।।

**स्कन्द– वसोः** इति षष्ठीनिर्देशादर्थायेति शेषः । धनस्यार्थाय **इन्द्रं वसुपतिं** धनानां स्वामिनं **गीर्भिः** स्तुतिभिः **गृणन्तः** स्तुवन्तः । **ऋग्मियं** ऋच स्तुतौ । अर्चना ऋक् । सम्पदादित्वात् क्विप् । तद्वन्तं, स्तुतियोग्यमित्यर्थः । **होम** आह्वयाम स्वयज्ञे । **गन्तारं** यज्ञं प्रति **ऊतये** सोमेन तर्पकाय । अथवा वसोरिति वसुपतिमित्येतदपेक्षयैव । वसुपतिशब्दस्तु यद्यपि वसूनां पतिर्वसुपतिरित्येवं व्युत्पद्यते, तथाप्यत्र स्वामिनमाह । धनस्यैव स्वामिनम् । तद् यथा– प्रवीणब्दः प्रकृष्टो वीणायामित्येवं व्युत्पद्यते । अथ च प्रवीणो व्याकरणे प्रवीणो वीणायामिति च प्रयोगदर्शनात् प्रकृष्टमात्रमाह । वीणायामेव प्रकृष्टम् । वसोर्वसुपतिं धनस्य स्वामिनं **इन्द्रमाह्वयाम ऊतये** पालनायात्मनः ।। ९ ।।

**वेङ्कटमाधव–** वसोः वसुपतिं इन्द्रं स्तुतिभिः स्तुवन्तः ऋगर्हं आह्वयामो वयं गन्तारं रक्षणाय ।

**मुद्गल– वसोः** वसुनोऽस्मदीयस्य धनस्य **ऊतये** रक्षार्थं इन्द्रं **होम** वयमाह्वयामः । किं कुर्वन्तः । **गीर्भिः** स्तुतिभिः **गृणन्तः** स्तुवन्तः । कीदृशमिन्द्रम् ? **वसुपतिं** धनपालकं । **ऋग्मियं** ऋचां मातारम् । **गन्तारं** यागदेशे गमनशीलम् ।। ९ ।।

**सायण– वसोः** वसुनोऽस्मदीयस्य धनस्य **ऊतये** रक्षार्थं **इन्द्रं होम** वयमाह्वयामः । किं कुर्वन्तः ? **गीर्भिः** स्तुतिभिः **गृणन्तः** स्तुवन्तः । कीदृशमिन्द्रम् ? **वसुपतिं** धनपालकं **ऋग्मियं** ऋचां मातारं गन्तारं यागदेशे गमनशीलम् ।

वसोः । 'वस निवासे' । 'श्रृस्वृस्निहि' (उ.सू.१,१०) इत्यादिना उप्रत्ययः । 'नित्' इत्यनुवृत्तेः नित्त्वादाद्युदात्तः । वसुपतिम् । समासान्तोदात्तत्वे प्राप्ते 'पत्यावैश्वर्ये' (पा.सू. ६,२,१८) इति पूर्वपदप्रकृतिस्वरत्वम् । गीर्भिः । 'सावेकाचः' (पा.सू.६,१,१६८) इति विभक्तेरुदात्तत्वम् । गृणन्तः । 'गॄ शब्दे' । लटः शतृ । 'क्र्यादिभ्यः श्ना' (पा.सू.३,१,८१) । शतुः 'सार्वधातुकमपित्' (पा.सू.१,२,४) इति ङित्त्वात् 'श्नाभ्यस्तयोरातः' (पा.सू.६,४, ११२) इति आकारलोपः । शतुः अकारस्य प्रत्ययस्वरेणोदात्तत्वम् । ऋग्मियम् । ऋचो मिमीते इति ऋग्मीः, तमृग्मियम् । 'माङ् माने शब्दे च' । 'क्विप् च' (पा.सू.३,२,७३) इति क्विप् । 'घुमास्था' (पा.सू.६,४,६६) इत्यादिना ईत्वम् । चकारस्य 'चोः कुः' । 'झलां जशोऽन्ते' (पा.सू.८,२,३९) इति जश्त्वं गकारः । द्वितीयैकवचने 'अचिश्नुधातु' (पा.सू.६,४,७७)

इत्यादिना इयङादेशः । 'एरनेकाचः' (पा.सू.६,४,८२) इति यणादेशः 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' (परिभा.३५) इति न भवति । कुदुत्तरपदप्रकृतिस्वरेण इकार उदात्तः । होम आह्वयामः । 'ह्वेञ् स्पर्धायां शब्दे च' । लट् । तस्य अस्मदो बहुत्वेऽपि व्यत्ययेन मिप् । इकारस्य व्यत्ययेन अकारः । शपः 'बहुलं छन्दसि' इति लुक् । 'बहुलं छन्दसि' (पा.सू. ६,१,३४) इति ह्वः सम्प्रसारणं परपूर्वत्वं गुणः । 'धातोः' (पा.सू.६,१,१६२) इति ओकार उदात्तः । मिपः पित्स्वरेणानुदात्तत्वम् । गन्तारम् । 'गम्लृ सृप्लृ गतौ' । ताच्छील्ये तृन् । नित्त्वादाद्युदात्तः । ऊतये । 'ऊतियूति' (पा.सू.३,३,९७) इत्यादिना क्तिन् उदात्तो निपातितः ॥ ९ ॥

**सिद्धाञ्जनम्**– नवमीमृचमाह – **वसोः** वसुनः (यावल्लब्धं अन्तर्धनस्य) **ऊतये** वृद्धये **इन्द्रं होम** वयं आह्वयामः ह्वेञ् स्पर्धायां गमने चेत्यस्य रूपम् , लट् छान्दसम् । वयं किं कुर्वन्तः? **गीर्भिः गृणन्तः** स्तुतिभिः स्तुवन्तः। कीदृशममिन्द्रम् ? **वसुपतिं** वसूनां धनानां पतिं पालकं, पुनश्च, ऋग्मियं ऋचां मातारं (ऋचो मिमीत इति ऋग्मी तमिति सायणयाख्या)। अर्चना ऋक् तद्वन्तं (स्तुतियोग्यमिति स्कन्दस्वामीयम् ) पुनः कीदृशम् ? **गन्तारं** यजमानं तदीयं यजनं वा गन्तुं शीलमस्येति गन्ता, तम् । अत्र 'वसोः वसुपतिं' अन्वयं उपपादयति स्कन्दस्वामी । प्रकृष्टो वीणायामिति प्रवीणशब्दव्युत्पत्तौ सिद्धायामपि वीणायां प्रवीण इति प्रयोगो दृश्यते, एवं वसोर्वसुपतिरिति ॥ ९ ॥

### ऋक्संहिता पदपाठसहिता

**सुतेसु॑ते न्यो॑कसे बृहद्बृ॑हत एद॒रिः । इन्द्रा॑य शू॒षम॑र्चति ॥ १० ॥**
सु॒तेऽसु॑ते । निऽओ॑कसे । बृहत् । बृ॒हते । आ । इत् । अ॒रिः । इन्द्रा॑य । शू॒षम् । अ॒र्च॒ति ॥

### ऋग्भाष्यम्

**अविनाश्यरिरुद्दिष्टो बृहच्छूषं सुखं प्रति ।**
**सुते सुते सद्गृहाय देवाय बृहतेऽर्चति ॥ १० ॥**

**ऋग्भाष्यटीका– सुते ।** अरिशब्दं व्याख्याति– **अविनाशीति** ।। यद्यप्यरिशब्द ईश्वरनामसु पठितस्तथाप्यत्रानन्वयादन्यथा व्याख्यातः । न रिष्यति न रीयते वेति अरिः । यः **अरिः**

अविनाशी आत्मनोऽविनाशेच्छुरदुष्टो वा पुरुषः स **बृहच्छूषं** महासुखं प्रति तच्चोदिश्य **सुतेसुते** प्रतिसोमसवनं **ओकसे** गृहाय सदिति योग्यतया सम्बन्धः । सतामाश्रयाय **बृहते** पूर्णायेन्द्राय देवाय **न्यर्चति** । द्वितीयार्थे चतुर्थी । इष्टानिष्टप्राप्तिपरिहारकामः परमेश्वरमेवार्चेदिति ।।१०।।

**मन्त्रार्थमञ्जरी–** (यः) अरिः, अविनाशी, नञुपपदात् 'रिष हिंसायाम्' इत्यतः 'रीङ् क्षये' इत्यतो वा कर्तरि डिप्रत्यये 'अरिः' इति सिद्धेः, आत्मनोऽविनाशेच्छुः पुरुषः । (सः) बृहत्, महत् । शूषम्, सुखं प्रति, तच्चोदिश्य । सुतेसुते, प्रतिसोमसवनम् । ओकसे, गृहाय । (सताम्) इति योग्यतयान्वयः, सतामाश्रयाय । बृहते, पूर्णाय । इन्द्राय इत्, परमेश्वरायैव । आ नि अर्चति, द्वितीयार्थे चतुर्थी, इष्टानिष्टप्राप्तिपरिहारकामः परमेश्वरमेवार्चयेदिति भावः ।।१०।।

**स्कन्द–** अभिषुते सोमे । **न्योकसे** ओको नियतवासस्थानं, एतन्नियतं यस्य सोमे एव नान्यत्र । स न्योकाः । सर्वत्र चात्र बलविशेषणत्वात् षष्ठ्यर्थे चतुर्थी । **न्योकसः** नियत-सोमाख्यस्थाननिवासस्य स्वभूतम् । **बृहद्** महत् । बृहते महते शरीरेण वीर्येण वा । आ इत् इति पदपूरणौ । **अरिः** ईश्वरः स्तुत्युच्चारणे समर्थ इत्यर्थः । **इन्द्राय** इन्द्रस्य । **शूषं** बलम् । **अर्चति** स्तौति । सर्वः स्तोता आत्मानमेव परोक्षरूपेण प्रथमपुरुषेण प्रतिनिर्दिशति । अहं स्तौमीत्यर्थः । अथवा न्योकसे बृहते इन्द्रायेति स्वार्थ एव तादर्थ्ये चतुर्थी । सुतेसुत इत्यनेन च सम्बध्यते । इन्द्रार्थमभिषुते सोमे महद् बलं स्तौति । कस्य? सामर्थ्यात् सन्निधेश्चेन्द्रस्य ।।

**वेङ्कटमाधव–** सर्वेषु सुतेषु न्योकसे आत्मीयगृहबुद्धिं कुर्वते महद् बलं महते इन्द्राय एव स्तोमानां प्रेरिता स्तोता वदति ।। १० ।।

**मुद्गल–** एदरिः सर्वोऽपि यजमानः **इन्द्राय सुतेसुते** इन्द्रार्थमभिषुते तत्तत्सोमे **शूषं** बलं **अर्चति** स्तौति । इन्द्रस्य पराक्रमं प्रशंसतात्पर्थः । कीदृशं शूषं? **बृहत्** प्रौढम् । कीदृशायेन्द्राय ? **न्योकसे** नियतस्यानाय **बृहते** प्रौढाय ।। १० ।।

**सायण–** आकार इच्छब्दश्च पादपूरणौ । यद्वा । व्याप्तिवचन आकारः । 'आङीषदर्थेऽभि-व्याप्तौ' (अमर.३,२३८) इत्यभिधानात् । इच्छब्दोऽपिशब्दार्थः । इयर्ति गच्छति अनुष्ठेयं कर्म प्राप्नोति इति **अरिः** यजमानः । **एदरिः** सर्वोऽपि यजमानः **इन्द्राय सुतेसुते** इन्द्रर्थमभिषुते तत्तत्सोमे **शूषं** बलं **अर्चति** स्तौति । इन्द्रस्य पराक्रमं प्रशंसतीत्यर्थः । कीदृशं शूषम् । **बृहत्** प्रौढम् । कीदृशयेन्द्राय ? **न्योकसे** नियतस्थानाय **बृहते** प्रौढाय ।

सुतेसुते । 'षुञ् अभिषवे' । क्तप्रत्ययः प्रत्ययस्वरेणोदात्तः । 'नित्यवीप्सयोः' (पा.सू. ८,१,४) इति वीप्सायां द्विर्भावः । 'तस्य परमाम्रेडितम्' (पा.सू.८,१,२) इति द्वितीयस्य आम्रेडितत्वेन 'अनुदात्तं च' (पा.सू.८,१,३) इत्यनुदात्तत्वम् । न्योकसे । नियतमोको यस्य तस्मै । निशब्दो 'निपाता आद्युदात्ताः' (फि.सू.८०) इत्युदात्तः । तस्य यणादेशे 'उदात्त-स्वरितयोर्यणः स्वरितोऽनुदात्तस्य' (पा.सू.८,२,४) इति ओकारः स्वरितः । बृहते । 'बृहन्महतोरुपसङ्ख्यानम्' (पा.सू.६,१,१७३,१) इति अजादिविभक्तेरुदात्तत्वम् । अरिः । 'ऋ गतौ' । 'अच इः' (उ.सू.४,५७८) इति इकारप्रत्ययः । गुणो रपरत्वम् । प्रत्ययस्वरेण इकार उदात्तः । इन्द्राय । 'ऋज्रेन्द्रः' (उ.सू.२,१८६) इत्यादिना रन्प्रत्यय इकार उदात्तः । शूषम् । प्रातिपदिकस्वरः । अर्चति । निघातस्वरः ।। १० ।।

**सिद्धाञ्जनम्–** दशमीमृचमाह– **सुतेसुते** यत्र यत्र अभिषुतः सोमः तत्र तत्रेत्यर्थः, **इन्द्राय** सोमपायिने **अरिः** स्वामी यजमानः (इयर्ति गच्छति कर्तव्यमित्वरिरित्याहुः. अरणशीलोऽरिरर्य इत्यादि प्रागुक्तम् ) **शूषं** बलं (इन्द्रसम्बन्धि) **अर्चति** स्तौति । कीदृशं शूषम् ? **बृहत्** महत्। कीदृशे इन्द्राय? **न्योकसे** नियतं ओकः स्थानं यस्य तस्मै नियतवासस्थानाय **बृहते** महते (स्वरूपतः प्रभावतश्चे बोध्यम् )। इन्द्रस्य नियतं दिव्यं धाम स्वर्लोकः, तत्स्वरूपं प्रागुक्तं अवधातव्यम् । आकारः इच्छब्दश्च पादपूरणौ ।। १० ।।

।। इति प्रथमाष्टके प्रथमाध्याये अष्टादशो वर्गः ।।

।। अथ एकोनविंशो वर्गः ।।

(सूक्तम् १०)

ऋक्संहिता पदपाठसहिता

१२ मधुच्छन्दा वैश्वामित्रः । इन्द्रः । अनुष्टुप् ।

**गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः ।**
**ब्रह्माणस्त्वा शतक्रत उद्वंशमिव येमिरे ।। १ ।।**

गायन्ति । त्वा । गायत्रिणः । अर्चन्ति । अर्कम् । अर्किणः ।
ब्रह्माणः । त्वा । शतक्रतो इति शतऽक्रतो । उत् । वंशम्ऽइव । येमिरे ।। १ ।।

### ऋग्भाष्यम्

**गायन्ति सामगास्त्वृग्भिः शंसंत्यृग्वेदिनोऽतिकम् ।**
**विरिंचास्त्वां बहुज्ञान शक्रकेतुमिवोच्छ्रितम् ।**
**व्यजानन् ................ ।। १ ।।**

**ऋग्भाष्यटीका– गायन्ति** । द्वादशर्चमेतदैन्द्रं सूक्तम् । हे **शतक्रतो** बहुज्ञान **अर्कं** अरं कं अतिकं अतिशयेन सुखरूपं त्वां **गायत्रिणः** गायत्रं सामविशेषः । तद्वन्तः सामगा गायन्ति । **अर्किणः** अर्का ऋचस्तद्वन्तः ऋग्वेदिनस्त्वामर्चन्ति । ऋचस्तुतौ । ऋग्भिः शंसन्ति । किञ्च । **ब्रह्माणः** विरिञ्चाः **उद्वंशमिव** उच्चं वंशमिव शक्रकेतुमिवोच्छ्रितमिति यावत् । त्वां **येमिरे** व्यजानन् । यद्यपि यमिर्न ज्ञाने पठ्यते तथाप्युद्येमिरे उदयच्छन् उच्छ्रयन्तीति व्याख्यानस्य पूर्वोक्तन्यायेन दुष्टत्वाज्ज्ञानार्थो व्याख्यातः । यद्वा उद्येमिरे उच्छ्रितमकुर्वन् करणं तु न सम्भवतीत्युच्छ्रितं व्यजानन्निति ।। १ ।।

**मन्त्रार्थमञ्जरी–** अथ 'गायन्ति त्वा' इत्येतदपि द्वादशर्चं वर्गद्वयात्मकमैन्द्रं दशमं सूक्तमनुष्टुपृछन्दस्कम् । अनुष्टुपृछन्दोभिमानिनी तु ब्रह्माणी (रोहिणी च) (हे) शतक्रतो, बहुज्ञान । अर्कम्, अर् अति, कं सुखम्, अतिशयेन सुखरूपम् । त्वा, त्वाम् । गायत्रिणः, गायत्रं सामविशेषः, तद्वन्तः सामगा इति यावत् । गायन्ति ।। अर्किणः, अर्का ऋचः तद्वन्त ऋग्वेदिनः । (त्वा) त्वाम् । अर्चन्ति, 'ऋच स्तुतौ' ऋग्भिः शंसन्तीत्यर्थः । किं च, ब्रह्माणः, विरिञ्चाः । उत् वंशमिव, उच्चवंशमिव, शक्रकेतुमिवोच्छ्रितमिति यावत् । त्वा, त्वाम् । येमिरे, व्यजानन्, धातूनामनेकार्थत्वाद्यमिः अत्र ज्ञानार्थः, यद्वा– 'उत् येमिरे' इत्युपसर्गान्वयः, उदयच्छन्नित्यर्थः, तस्योच्छ्रितत्वेन करणं न सम्भवतीत्युच्छ्रितत्वेन व्यजानन्नित्यर्थः, 'येमिरे' इति लिडात्मनेपदं छान्दसम् ।। १ ।।

**स्कन्द–** गायतिरर्चतिकर्मा स्तुवन्ति । **त्वा गायत्रिणः** गायत्रं साम, तद्वन्त उद्गातारः । न च त एव केवलाः । किन्तर्हि ? **अर्चन्ति** स्तुवन्ति । **अर्कं** देवं त्वां **अर्किणः** मन्त्रोऽत्रार्क उच्यते । तद्वन्तः होतारोऽपि । **ब्रह्माणः** ब्रह्मा एक ऋत्विक् । तत्पुरुषांस्तु ब्राह्मणाच्छंस्यादीनपेक्ष्येद बहुवचनम् । ब्रह्माणोऽपि त्वा हे **शतक्रतो** बहुकर्मन् बहुप्रज्ञ वा । **उत् वंशमिव**

**येमिरे** यथा कश्चिद् वंशमुद्यच्छेत्, एवमुद्यच्छन्ति उत्क्षिपन्ति । उच्छ्रयन्तीत्यर्थः । वीर्यवृद्धिश्चात्रोच्छ्रायोऽभिप्रेतः । स्तूयमाना हि देवता वीर्येण वर्धन्ते । सर्वर्त्विजः स्वैः स्वैः स्तोत्रैस्त्वा स्तुवन्तीति समस्तार्थः ।। १ ।।

**वेङ्कटमाधव–** गायन्ति त्वां उद्गातारः । अर्चन्ति अर्चनीयं होतारः । इत्थमुभये ब्राह्मणाः त्वां शतक्रतो! वंशमिव बाहुभिः स्तोत्रशस्त्रैः उद्यच्छन्ति ।। १ ।।

**मुद्गल–** 'गायन्ति' इति द्वादशर्चं तृतीयं सूक्तम् । मधुच्छन्दाः । अनुष्टुप् ।

हे **शतक्रतो! इन्द्र! त्वा** त्वां **गायत्रिणः** उद्गातारः **गायन्ति** स्तुवन्ति । **अर्किणः** अर्चनहेतुमन्त्रयुक्ता होतारः **अर्कं** अर्चनीयमिन्द्रं **अर्चन्ति** शस्त्रगतैर्मन्त्रैः प्रशंसन्ति । **ब्रह्माणः** ब्रह्मप्रभृतय इतरे ब्राह्मणाः **त्वा** त्वां **उत् येमिरे** उन्नतिं प्रापयन्ति । दृष्टान्तः– **वंशमिव** यथा वंशाग्रे नृत्यन्तः शिल्पिनः प्रौढं वशं उन्नतं कुर्वन्ति तद्वत् ।। १ ।।

**सायण–** 'गायन्ति' इति सूक्तस्य मन्त्रसङ्ख्या छन्दोविशेषश्चैवमनुक्रम्यते– 'गायन्ति द्वादशानुष्टुभं तु' इति । 'तुहिहवै' (अनु.१२,३) इत्यादिपरिभाषायां तुशब्दस्य सूक्तद्वये परिभाषितत्वात् अस्य सूक्तस्य वक्ष्यमाणस्य च आनुष्टुभत्वं द्रष्टव्यम् । ऋषिदेवते पूर्ववत् । अभिप्लवषडहस्य उक्थ्येषु तृतीयसवनेऽच्छावाकस्य 'गायन्ति' इति स्तोत्रियस्तृचः । 'एह्यू षु' इति खण्डे 'गायन्ति त्वा गायत्रिण आ त्वा गिरो रथीरिव' (आश्व.श्रौ.७,८) इति सूत्रितम् ।

हे **शतक्रतो** बहुकर्मन् बहुप्रज्ञ वा इन्द्र **त्वां गायत्रिणः** उद्गातारः **गायन्ति** स्तुवन्ति । **अर्किणः** अर्चनहेतुमन्त्रयुक्ता होतारः **अर्कं** अर्चनीयमिन्द्रं **अर्चन्ति** शस्त्रगतैर्मन्त्रैः प्रशंसन्ति । **ब्रह्माणः** ब्रह्मप्रभृतय इतरे ब्राह्मणाः त्वां **उत् येमिरे** उन्नतिं प्रापयन्ति । तत्र दृष्टान्तः – **वंशमिव** । यथा वंशाग्रे नृत्यन्तः शिल्पिनः प्रौढं वंशमुन्नतं कुर्वन्ति । यथा वा सन्मार्गवर्तिनः स्वकीयं कुलमुन्नतं कुर्वन्ति तद्वत् । एतामृचं यास्क एवं व्याचष्टे– 'गायन्ति त्वा गायत्रिणः प्रार्चन्ति तेऽर्कमर्किणो ब्राह्मणास्त्वा शतक्रत उद्येमिरे वंशमिव । वंशो वनशयो भवति वननाच्छ्रूयत इति वा' (निरु.५,५) इति । अर्कशब्दं च बहुधा व्याचष्टे– 'अर्को देवो भवति यदेनमर्चन्त्यर्को मन्त्रो भवति यदेनेनार्चन्त्यर्कमन्नं भवत्यर्चति भूतान्यर्को वृक्षो भवति स वृतः कटुकिम्ना' (निरु. ५,४) इति ।

गायन्ति । शप्तिङौ' पित्त्वात् लसार्वधातुकत्वाच्च अनुदात्तौ । धातुरुदात्तः । गायत्रिणः । गायत्रं साम येषामुद्गातॄणामस्ति ते । 'अत इनिठनौ' । प्रत्ययस्वरेण इकार उदात्तः । अर्चन्ति । 'अर्च पूजायाम्' । भौवादिकः । शप्तिङौ अनुदात्तौ । धातुस्वर एव । पादादित्वात् न निघातः । अर्कम् । अर्चन्त्येभिरिति अर्का मन्त्राः । तैरर्चनीयतया तदात्मक इन्द्रोऽपि लक्षणया अर्कः । 'पुंसि संज्ञायां घः प्रायेण' (पा.सू.३,३,११८) इति करणे घः । 'चजोः कु घिण्यतोः' (पा.सू. ७,३,५२) इति चकारस्य कुत्वं ककारः । प्रत्यस्वरेणान्तोदात्तः । अर्का मन्त्रा एषां सन्तीत्यर्किणो होतारः । 'एकाक्षरात्कृतो जातेः सप्तम्यां च न तौ स्मृतौ' (पा.म.५,२,११५,१) इति कृदन्तात् इनिठनौ यद्यपि प्रतिषिद्धौ तथाप्यत्र व्यत्ययात् इनिः । प्रत्ययस्वरेण इकारः उदात्तः । ब्रह्माणः । प्रातिपदिकस्वरेणान्तोदात्तः । शतक्रतो । निघातः । संहितायां अवादेशे 'लोपः शाकल्यस्य' (पा.सू.८,३,१९) इति वकारलोपः । वंशशब्दः प्रातिपदिकस्वरेणान्तोदात्तः । 'इवेन विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च' इति स एव शिष्यते । येमिरे । 'यम उपरमे' । 'तिङ्ङतिङः' इति निघातः ।। १ ।।

**सिद्धाञ्जनम्–** तृतीयेऽनुवाके तृतीयं गायन्ति इति द्वादशर्चं सूक्तम् । अनुष्टुपछन्दस्कम् । ऋषिदेवते पूर्ववत् । हे **शतक्रतो** शतसंख्यालक्षितबहुप्राज्ञकर्मन् , **त्वा** त्वां **गायत्रिणः** स्तोतारः **गायन्ति** सामभिः स्तुवन्ति, **अर्किणः** ऋग्भिर्मन्त्रैः अर्चन्तः, **अर्कं** अर्चनीयं त्वां **अर्चन्ति** स्तुवन्ति । **ब्रह्माणः** स्वयं साक्षात्कृतब्रह्मपदवाच्यमन्त्राः मन्त्रदर्शिनः **त्वा** त्वां **उद्येमिरे** उद्गत्य प्राप्नुवन्ति । तत्र दृष्टान्तः– वंशमिव यथा वंशं वंशनिर्मितं सोपानपथमारोहन्ति तथा, वंशः वेणुः प्रकृतिः तद्विकारः आरोहणसाधनभूतः सोपानपथोऽपि प्रकृत्या वंशेन प्रतिपाद्यते । अयं च प्रयोगः साधारणो वेदे । 'गोभिः श्रीणीत मत्सरम्' (१-४६-४) अत्र 'गोभिः गोविकारैः पयोभिः सोमं संस्कुरुत' इति सायणीयम् । इन्द्रमेव सानुमन्तं बृहन्तं शिखरिणमिव आरोहन्ति पदे पदे क्रमश इति भावः । अयमर्थः स्पष्टं समर्थितो भवति 'यत् सानोः सानुम्' इति मन्त्रवर्णेनेति न सन्देहः । 'यथा वंशाग्रे नृत्यन्तः शिल्पिनः प्रौढं वंशं उन्नतं कुर्वन्ति, यथा वा सन्मार्गवर्तिनः स्वकीयं कुलं उन्नतं कुर्वन्ति तद्वत्' इति पूर्वव्याख्या । अर्थसङ्गतिर्मृग्या ।।

ऋक्संहिता पदपाठसहिता

**यत्सानोः सानुमारुहद्भूर्यस्पष्ट कर्त्वम् ।**
**तदिन्द्रो अर्थं चेतति यूथेन वृष्णिरेजति ।। २ ।।**

यत् । सानोः । सानुम् । आ । अरुहत् । भूरि । अस्पष्ट । कर्त्वम् ।
तत् । इन्द्रः । अर्थम् । चेतति । यूथेन । वृष्णिः । एजति ।। २ ।।

ऋग्भाष्यम्

**......... उच्चतोऽप्युच्चं सामर्थ्यं करणे तव ।**
**ततोऽपि भूरि यत्तेन चेतत्यर्थमतो भवान् ।**
**मुक्तामुक्तसमूहेन शोभते गूढशक्तिमान् ।**
**उच्चादुच्चं विरिंचादिगतं कर्तृत्वमेव यत् ।**
**भूरि स्पष्टमभूत्तेन परेशस्य ततश्च सः ।**
**चेतत्यर्थानशेषांश्च महायूथेन चेष्टते ।। २ ।।**

**ऋग्भाष्यटीका– यत्सानोः** । उच्चतः । अस्पष्टो गूढशक्तिमांस्तत्सम्बुद्धिः **हे अस्पष्ट** यद्यस्मात्तव **कर्त्वं** कर्तृत्वं करणे सामर्थ्यम् । **सानोः सानुमारुहत्** सानुशब्दो गिरिशिखरवाची । उपचारेणोच्चतोऽप्युच्चमभवत् । **भूरि** ततोऽप्यधिकं चाभवत् । तत्तेन कारणेन **वृष्णिः** वर्षिता इन्द्रो भवान् **अर्थं** सर्वपदार्थान् **चेतति** जानाति । अत एव च **यूथेन** मुक्तामुक्तसमूहेन **एजति** एजृदीप्त्यर्थः शोभते । न हि पूर्णशक्तित्वमन्तरेण सार्वज्ञं सर्वसेव्यत्वं च युज्यते ।

ऋचं प्रकारान्तरेण व्याचष्टे– **उच्चादिति** ।। यद्यस्मात्कारणादिन्द्रस्य परमेश्वरस्य **कर्त्वं** कर्तृत्वं **सानोः सानुमारुहत्** उच्चादुच्चं विरिश्चादिदेवताजातं गतं प्राप्तम् । परमेश्वरोहि तेषु स्थित्वा करोति । तेनैव कारणेन तत्कर्तृत्वं **भूर्यस्पष्ट** अतिशयेन स्पष्टमभूत् । स्पश अज्ञातदृशा-विति वक्ष्यति । नह्यन्यान्तर्गततया विना साक्षादीश्वरगतं कर्तृत्वं मन्दैर्ज्ञायते । ततश्च सर्वकर्मकर्तृत्वादेव स इन्द्रोऽर्थमशेषार्थांश्चेतति । **यूथेन** स्वरूपाणां महायूथेन **एजति** कम्पते चेष्टते । यद्यपि कृत्यार्थे त्वविहितस्तथापि कृत्यल्युटो बहुलमिति तृजर्थे भवति । सच भावप्रधान इति कर्त्वं कर्तृत्वम् । यद्वा तृचो लोपोऽत्र द्रष्टव्यः । अथवा कर्तव्यमेव कर्त्वं लक्षणया कर्तृत्वमित्युक्तम् ।।२।।

**मन्त्रार्थमञ्जरी–** (हे) अस्पष्ट, गूढशक्तिमन् । यत्, यस्मात् । (तव) कर्त्वम्, करणे सामर्थ्यम्, 'कृत्यार्थे तवैकेन्केन्यत्वनः' इति कृञः भावे त्वन्, लक्षणया सामर्थ्यलाभः । सानोः सानुम् आ अरुहत् । सानुपदस्य गिरिशृङ्गवाचित्वेऽप्यत्र तदयोगाल्लक्षणयोच्चादुच्चमभवदित्यर्थः । भूरि, ततोऽप्यधिकं चाभवत् । तत्, तेन कारणेन । वृष्णिः, वर्षिता, अभीष्टसेचकः । इन्द्रः (भवान्) अर्थम्, सर्वपदार्थान् । चेतति, 'चिती संज्ञाने' जानाति ।। अत एव, यूथेन, मुक्तामुक्त-समूहेन । एजति, एजतिः अत्र दीप्त्यर्थः, नहि पूर्णशक्तितामन्तरेण सार्वज्ञं सर्वसेव्यत्वं च युज्यत इति भावः ।। यद्वा– यत्, यस्मात्कारणात् । (इन्द्रस्य) परेशस्य । कर्त्वम्, कर्तृत्वम्, 'तृ' इत्यस्य च्छान्दसो लोपः । सानोः सानुम्, उच्चादुच्चम् । (ब्रह्मादिदेवताजातम्) आ अरुहत्, प्राप्तम् । परमेश्वरस्तेषु स्थित्वा करोति । (तत्) तेन कारणेन । तत् कर्तृत्वम् । भूरि अस्पष्ट, 'स्पश अज्ञातदृशौ', असंशयेन स्पष्टमभूदित्यर्थः, नह्यन्यान्तर्गततया विना साक्षादीश्वरकर्तृत्वं मन्दैर्ज्ञायते । (तत्) ततश्च सर्वकर्मकर्तृत्वादेव । इन्द्रः । अर्थम्, अशेषार्थान् । चेतति, जानाति । वृष्णिः, वर्षिता । यूथेन, स्वीयरूपाणां महासमूहेन । एजति, 'एजृ कम्पने' कम्पते चेष्टत इत्यर्थः ।। २ ।।

**स्कन्द– यत्** अभ्रं **सानोः सानुं** समुच्छ्रितात् उच्चाद् गिरिशिखरादन्यमुच्चतरं गिरिशिखरं **आरुहत्** आरोहति । आरुह्य च **भूरि** बहु **अस्पष्ट** स्पश बन्धने, शुद्धोऽपि सोपसर्गार्थे द्रष्टव्यः । प्रतिबध्नाति । **कर्त्वं** कर्म । 'कर्त्वम्' (निघ २,१) इति हि कर्मनाम । वृष्टिर्ह्यभ्रनिरुद्धा । तदायत्तानि सर्वकर्माणि प्रतिबध्नाति । **तत् इन्द्रः अर्थं** अर्तेर्गतिकर्मण एतद् रूपम् । गमनशीलं नश्वरमपि **चेतति** जानाति । ज्ञात्वा च **यूथेन** समुदायसामान्यात् मरुद्गणोऽत्र यूथमुच्यते । सहयोगलक्षणा चात्र तृतीया । मरुद्गणेन सह । **वृष्णिः** वर्षिता । **एजति** गतिकर्माऽयम् । वधार्थं गच्छति । अथवा एजृ कम्पन इत्येतस्यान्तणीतण्यर्थस्यैतद् रूपम् । एजयति कम्पयति । उदकशोधनार्थं धूनयतीत्यर्थः ।। २ ।।

**वेङ्कटमाधव–** यदाऽर्थलिप्सुः स्तोता सन् मनुष्य गिरेः गिरिं आरोहति, यदा वा भूरि कृष्यादिकं कर्म स्पृशति तदानीं तस्याभिलषितं अर्थं इन्द्रः जानाति । ज्ञात्वा च वसुसमूहेन मरुद्गणेन वा सह वर्षणशीलः तत्समीपमागच्छति ।। २ ।।

**मुद्गल– यत्** यदा **सानोः सानुं आ अरुहत्** यजमानः सोमवल्लीसमिदाद्याहरणाय एकस्मात्पर्वतभागादपरपर्वतभागमारूढवान् तदा **भूरि** प्रभूतं **कर्त्वं** कर्म सोमयागरूपं **अस्पष्ट** स्पृष्टवान् । उपक्रान्तवानित्वर्थः । **तत्** तदानीम् इन्द्रः **अर्थं** यजमानस्य प्रयोजनं **चेतति** जानाति । ज्ञात्वा च **वृष्णिः** कामानां वर्षिता सन् **यूथेन** मरुद्गणेन सह **एजति** कम्पते । स्वस्थानाद्यज्ञभूमिमागन्तुमुद्युङ्क्ते इत्यर्थः ॥ २ ॥

**सायण– यत्** यदा **सानोः सानुं आरुहत्** यजमानः सोमवल्लीसमिदाद्याहरणाय एकस्मात् पर्वतभागात् अपरं पर्वतभागं आरूढवान् तथा **भूरि** प्रभूतं **कर्त्वं** कर्म सोमयागरूपं **अस्पष्ट** स्पृष्टवान् । उपक्रान्तवानित्यर्थः । **तत्** तदानीं **इन्द्रः अर्थं** यजमानस्य प्रयोजनं **चेतति** जानाति । ज्ञात्वा च **वृष्णिः** कामानां वर्षिता सन् **यूथेन** मरुद्गणेन सह **एजति** कम्पते । स्वस्थानात् यज्ञभूमिमागन्तुमुद्युङ्क्ते इत्यर्थः ।

सानोः 'षणु दाने' । सनोति ददाति निवसतामवकाशमिति सानुः । 'दॄसनिजनिचरिचटिरहिभ्यो ञुण्' (उ.सू.१,३) । णित्वात् उपधाया वृद्धिः; ञित्त्वादाद्युदात्तत्वं च । अरुहत् । रुहेर्लङि तिपि शपि 'संज्ञापूर्वको विधिरनित्यः' (परिभा. ९३,१) इति लघूपधगुणो न भवति । 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' । सति शिष्टत्वात् स एव शिष्यते । 'निपातैर्यद्यदिहन्त' (पा.सू.८,१,३०) इति निषेधात् निघातो न भवति । भूरि । 'अदिशदिभूशुभिभ्यः क्रिन्' (उ.सू.४,५०५) । कित्त्वाद्गुणाभावः । नित्त्वादाद्युदात्तः । अस्पष्ट । 'स्पश बाधनस्पर्शनयोः' । 'स्वरितञितः' (पा.सू.१,३,७२) इत्यात्मनेपदम् । लङः प्रथमपुरुषैकवचनं त । 'बहुलं छन्दसि' इति शपो लुक् । व्रश्चादिषत्वष्टुत्वे (पा.सू.८,२,३६; ८,४,४१) । 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' इति अडागम उदात्तः । स एव शिष्यते । अनुषङ्गेण यच्छब्दयोगात् निघाताभावः । कर्त्वम् । 'डुकृञ् करणे' । 'अन्येभ्योऽपि दृश्यन्ते' (पा.सू.३,२,७५) इति विच् । गुणो रपरत्वम् । विचः सर्वापहारी लोपः । करो भावः कर्त्वम् । अर्थम् । अर्तेः 'उषिकुषिगार्तिभ्यस्थन्' (उ.सू.२,१६१) । नित्त्वादाद्युदात्तः । यूथेन । 'तिथपृष्टगूथपूथप्रोथाः' (उ.सू.२,१६९) इति थक्प्रत्ययान्तो निपातितः । वृष्णिः । 'निः' इत्यनुवृत्तौ 'सृवृषिभ्यां कित्' (उ.सू.४,४८९) इति निप्रत्ययान्तः । कित्त्वाद्गुणाभावः । प्रत्ययस्वरेणान्तोदात्तः । एजति । 'एजृ कम्पने' । 'तिङ्ङतिङः' इति निघातः ॥ २ ॥

**सिद्धाञ्जनम्–** द्वितीयामृचमाह– **यत्** यदा **सानोः** एकस्मात् पर्वतसंविभागात् **सानुं** अन्य उपरिष्टात् स्थितं पर्वतप्रस्थं **आरुहत्** आरोहति ऋषिरन्तर्यजनाध्वगामीति शेषः। लडर्थे लङ् । **भूरि** प्रभूतं **कर्त्वं** कर्तव्यं, कर्मनाम; आरोहणकर्मसाध्यं **अस्पष्ट** अस्पशत स्पृष्टवान् । स्पश स्पर्शने,लङ् लडर्थे । आरोहणीयं अवशिष्टं प्रभूतमिति स्पष्टं भवतीत्यर्थः । **तत्** तदा **इन्द्रः अर्थं** आरोहणलक्ष्यभूतं प्रयोजनं उच्चैर्धामेत्यर्थः, **चेतति** चेतयति, अन्तर्भावितण्यर्थः, संज्ञपयति प्रकाशयतीति यावत् । अथ च **वृष्णिः** वर्षिता स इन्द्रः **यूथेन** गणेन, स्वीयविभूतिभूतदैवतगणेन सहेत्यर्थः । मरुद्गणेनेति सायणीयम् । **एजति** कम्पते, ईषच्चलति ऋषेरिन्द्रकामस्यानुग्रहाय तदभिमुखं तद्वाचः श्रोतुं प्रवर्तत इत्यर्थः । अनयोरुभयो ऋचोरात्यन्तिकः सम्बन्धः अन्तर्यागपरेऽर्थे स्पष्टो भवति, तथा च व्याख्यातम् । विस्तरभिया नातोऽपि विवृतिः क्रियते । क्रमनियमानुसारेण ऊर्ध्वगतौ शरीरिणा पुरुषेण लभ्यमानायां, उत्तरोत्तराधिरोहे प्रभूतं प्राप्तव्यमिति स्पष्टं भवति । तादृश्यां दशायां देवराज इन्द्रः सगणः 'एजति' भक्तं गम्यं समयं स्वर्धाम नेतुम् । एवं साधनरहस्यं किञ्चित् प्रदर्श्य ऋषिरिन्द्रं आसूक्तसमाप्ति स्तौति ।। २ ।।

**नीतिमञ्जरी–** याचकानां धैर्यं कुत इत्यर्थ आह-

**याचकानां कुतो धैर्यं यत्तत्याज पुरन्दरः ।**
**अभूत्सोममना सानौ दृष्ट्वर्षिमिध्ममानसम् ।। ६ ।।**

याचकानां याचकवृत्तीनां धैर्यं साहस्यं कुतो भवति । यद्धैर्यं पुरन्दरः इन्द्रोऽपि याचकत्व-मापन्नः सन् तत्याज त्यक्तवान् । तत्कुत इत्याह– सानौ पर्वतशिखरे कश्चिदृषिं इध्मं मानसे यस्य तं दृष्ट्वा स एव सोममनाः सोमे अभिषवार्थवल्लीरूपे मनो यस्य सः एवंविधमना अभूत् । तत्रेतिहासपूर्विका ऋक्–

**यत्सानोः सानुमारुहद्भूर्यस्पष्ट कर्त्वम् ।**
**तदिन्द्रो अर्थं चेतति यूथेन वृष्णिरेजति ।।** (ऋ०१.१०.२)

यत् । सानोः । सानुम् । आ । अरुहत् । भूरि । अस्पष्ट । कर्त्वम् । तत् । इन्द्रः । अर्थम् । चेतति । यूथेन । वृष्णिः । एजति ।। ५ ।।

**इन्धनार्थमृषिः कश्चिन्निर्जगाम वनाद्बहिः ।**
**पर्वतभ्रमणं कुर्वन् सानोर्वै सानुमारुहत् ।। १ ।।**
**अचेतीदर्थमिन्द्रस्तं सामार्थं भ्रमति ह्ययम् ।**
**इति सञ्चिन्त्य सुत्रामा देवयूथेन चाचलत् ।। २ ।।**

मधुच्छन्दा इन्द्रो गायत्री महदुक्थे तृचं विनियुक्तम् ।

इन्द्रं वृत्राय हन्तवे (ऋ०३.३७.५) गायन्ति त्वा गायत्रिणः (ऋ०१.१०.१) । ऋचोऽयमर्थः– यत् यदा सानोः सानुमारुहत् यजमानः समिदाद्याहरणाय एकस्मात् पर्वतशिखराद् अपरं पर्वतशिखरं आरूढवान् तदा इन्द्रः अयं भूरि महत् प्रभूतं वा कर्त्वं ज्योतिष्टोमादिकं कर्म कर्तुं करिष्यति इति अस्पष्ट स्पृष्टवान् उपक्रान्तवान् । तत्तदानीमिन्द्रः अर्थं प्रयोजनं एतदेव चेतति अचेतीत् । ज्ञात्वा च यूथेन देवयूथेन स ह वृष्णिः कामानां वर्षिता सन् एजति चकम्प । 'एजृ कम्पने' । स्वस्ववाहनादियुक्तो यज्ञभूमिमागन्तुं चलचित्तोऽभूदित्यर्थः । एवमर्थित्वं प्राप्य इन्द्रेणापि धैर्यं त्यक्तमिति तात्पर्यार्थः । आरुहत्– निपातैर्यद्यदिहन्तेति (पा०८.१.३०) निघाताभावः । चेतति– तिङ्ङतिङः ( पा० ८.१.२८) इति निघातः । एजतीति तद्वत् ।।

### ऋक्संहिता पदपाठसहिता

**युक्ष्वा हि केशिना हरी वृषणा कक्ष्यप्रा ।**
**अथा न इन्द्र सोमपा गिरामुपश्रुतिं चर ।। ३ ।।**

युक्ष्व । हि । केशिना । हरी इति । वृषणा । कक्ष्यऽप्रा ।
अथ । नः । इन्द्र । सोमऽपाः । गिराम् । उपऽश्रुतिम् । चर ।। ३ ।।

### ऋग्भाष्यम्

**कक्ष्याभिपूरकौ पुष्ट्या युंक्ष्व त्वं केशिनौ हरी ।**
**अथोपगम्य शृणु नो गिरः ............. ।। ३ ।।**

**ऋग्भाष्यटीका–** युक्ष्वाहि ।। कक्ष्या । हे **सोमपा इन्द्र केशिना** केशिनौ **प्र** प्रलम्बकेशवन्तौ **वृषणौ** सेचकौ युवानौ **कक्ष्यप्रा** कक्ष्यप्रौ । कक्ष्येति यया रज्वाऽश्व उरसि बध्यते सोच्यते ।

प्रा पूरणे पुष्ट्या कारणेन कक्ष्याभिपूरकौ । **हरी अश्वौ युक्ष्व** युंक्ष्व रथे योजय । अथ तदनन्तरमिहोपगम्य **नः गिरामुपश्रुतिं** उपश्रवणं च कुरु । स्तुतिरूपा नो गिरः शृणु ।।३।।

**मन्त्रार्थमञ्जरी–** (हे) सोमपाः इन्द्र । केशिना, केशिनौ, प्रलम्बकेशवन्तौ । वृषणा, वृषणौ, सेचकौ युवानौ । कक्ष्यप्रा, कक्ष्यप्रौ, 'कक्ष्या' इत्यश्वस्योरसि बध्यमानरज्जुरुच्यते, 'पॄ पालन-पूरणयोः' कप्रत्ययः, पुष्टत्वहेतुना कक्ष्याभिपूरकौ । हरी, अश्वौ । युक्ष्व, युङ्क्ष्व, नलोपश्छान्दसः, अन्तर्णीतणिच्, रथे योजय । 'हि' इत्यवधारणे । अथ, तदनन्तरम् । (इहोपगम्य) नः, अस्माकम् । गिराम् स्तुतिरूपवाचाम् । उपश्रुतिम्, उपश्रवणम् । चर, कुरु, अस्मदीयस्तुतिगिरः शृण्वित्यर्थः ।। ३ ।।

**स्कन्द– युक्ष्व हि** नियुङ्क्ष्व स्वरथे । **केशिना** केशवन्तौ प्रलम्बकेसरौ **हरी** आत्मीयाश्वौ । **वृषणा** वृषुमृषु सेचने । रेतस्सेचनसमर्थौ, तरुणावित्यर्थः । **कक्ष्यप्रा** कक्ष्या रज्जुरश्वस्य यया पर्याणमुरसि बध्यते । प्रा पूरणे । कक्ष्यायाः पूरयितारौ, मांसपूर्णशरीरावित्यर्थः । **अथ** अनन्तरं च **नः** अस्माकं स्वभूतानां हे **इन्द्र! सोमपाः!** सोमानां पातः! **गिरां** स्तुतीनां **उपश्रुतिं** श्रुतेः समीपं **चर** गच्छ । यत्रास्मदीयाः स्तुतीः शृणोषि, तत्रागच्छेत्यर्थः ।। ३ ।।

**वेङ्कटमाधव–** योजय प्रशस्तेकशाौ अश्वौ तरुणौ मेदुरतया कक्ष्यायाः पूरयितारौ । अथ अस्माकं इन्द्र! सोमस्य पातः! स्तुतीनां उपश्रवणं चर ।। ३ ।।

**मुद्गल– हे सोमपाः** सोमपानयुक्त! इन्द्र! **हरी** त्वदीयावश्वौ **युक्ष्व हि** सर्वथा संयोजय । **अथ** अननतरं **नः** अस्मदीयानां **गिरां** स्तुतीनां **उपश्रुतिं** समीपे श्रवणं उद्दिश्य **चर** तत्प्रदेशं गच्छ । कीदृशौ हरी ? **केशिना** स्कन्धप्रदेशे लम्बमानकेशयुक्तौ **वृषणा** सेचनसमर्थौ युवानौ **कक्ष्यप्रा** अश्वस्योदरबन्धनरज्जुः कक्ष्या तस्याः पूरकौ । पुष्टाङ्गावित्यर्थः ।। ३ ।।

**सायण–** हे **सोमपाः** सोमपानयुक्त **इन्द्र हरी** त्वदीयावश्वौ **युक्ष्वा हि** सर्वथा संयोजय । **अथ** अनन्तरं **नः** अस्मदीयानां **गिरां** स्तुतीनां **उपश्रुतिं** समीपे श्रवणमुद्दिश्य **चर** तत्प्रदेशं गच्छ । कीदृशौ हरी ? **केशिना** स्कन्धप्रदेशे लम्बमानकेशयुक्तौ **वृषणा** सेचनसमर्थौ युवानौ । **कक्ष्यप्रा** अश्वस्योदरबन्धनरज्जुः कक्ष्या तस्याः पूरकौ पुष्टाङ्गावित्यर्थः ।

युक्ष्वा । श्नमो लोपश्छान्दसः । सति शिष्टत्वेन प्रत्ययस्वरः शिष्यते । 'द्व्यचोऽतस्तिङः' (पा.सू.६३,१३५) इति संहितायां दीर्घत्वम् । केशिना । प्रशस्ताः केशा अनयोः सन्तीति सन्तीति मत्वर्थीय इनिः । प्रत्ययस्वरः । 'सुपां सुलुक्' (पा.सू.७,१,३९) इत्यादिना द्विवचनस्य आकारादेशः । वृषणा । 'पृषु वृषु मृषु सेचने' । 'कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिवः' (उ.सू. १,१५४) इति कनिन् । 'ञ्नित्यादिर्नित्यम्' इत्याद्युदात्तः । 'वा षपूर्वस्य निगमे' (पा.सू. ६,४,९) इति उपधायाः पक्षे दीर्घाभावः । पूर्ववदाकारः । कक्ष्यप्रा । कक्षयोर्भवं कक्ष्यं सूत्रम् । तत् प्रातः पूरयतः पुष्टत्वादिति कक्ष्यप्रौ । 'प्रा पूरणे' । 'आतोऽनुपसर्गे कः' (पा.सू.३,२,३) इति कप्रत्ययः । कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तत्त्वम् । आकारः पूर्ववत् । अथ । 'निपातस्य' (पा.सू.६,३,१३६) इति संहितायां दीर्घः । नः । 'अनुदात्तं सर्वमपादादौ' (पा.सू.८,१,१८) इत्यनुवृत्तौ 'बहुवचनस्य वरनसौ' (पा.सू.८,१,२१) इति नसादेशोऽनुदात्तः । इन्द्र सोमपाः । उभौ 'आमन्त्रितस्य च' (पा.सू.८,१,१९) इति सर्वानुदात्तौ । गिराम् । 'सावेकाचस्तृतीयादि-र्विभक्तिः' (पा.सू.६,१,१६८) इति विभक्तिरुदात्ता । उपशब्दो निपातत्वादाद्युदात्तः । श्रुतिशब्देन प्रादिसमासे कृदुत्तरपदप्रकृतिस्वरत्वे प्राप्ते 'तादौ च निति कृत्यतौ' (पा.सू.६,२,५०) इति तुवर्जिततादिपरत्वात् गतेः प्रकृतिस्वरः । चर । निघातः ।। ३ ।।

**सिद्धाञ्जनम्–** तृतीयामृचमाह– **हे सोमपाः** सोमस्य पातः, इन्द्र! **हरी** त्वदीयावाश्वौ **युक्ष्व हि** संयोजय (छान्दसः श्नमूलोपः)। कीदृशौ हरी? **केशिना** केशिनौ, प्रशस्ताः स्कन्धप्रदेशे लम्बमाना केशाः अनयोः। पुनः कीदृशौ ? **वृषणा** वर्षितारौ स्वीयेन ओजसा सेक्तारौ । पुनः कीदृशौ ? **कक्ष्यप्रा** पुष्टाङ्गौ (कक्ष्या उदरबन्धनरज्जुः तस्याः पूरको, अतः शरीरपुष्टिं द्योतायतुमिदं विशेषणम्) अथ एवं अश्वयोगसन्नाहादनन्तरं नः अस्माकं गिराम् स्तुतीनां उपश्रुतिम् श्रुतेः समीपं चर आगच्छ, यावति देशे नः स्तुतयः त्वदीयश्रवणगोचराः भवन्ति तावन्तं देशं प्राप्नुहीत्यर्थः। अश्वः प्राणबलसङ्केतोऽस्माकं परिचितः । इन्द्रहर्योर्विशेषतः कान्तिमत्त्वं स्मार्यम् । 'केशिनौ' केशमशक-मक्षिकादयः तामस्यः शक्तयो विधूयन्ते। 'वृषणौ' अन्तर्याजिन ओजसो वर्धयितारौ। 'कक्ष्यप्रा' पुष्टौ सन्तौ आयासवर्जं देवराजं वहतः यजमानानुग्रहाय । अत्र तात्पर्यग्रहणपद्धतिः सूचिता । अन्यत् स्पष्टं भवेन्मतिमताम् ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**एहि स्तोमाँ अभिस्वराभि गृणीह्यारुव ।**
**ब्रह्म चनो वसो सचेन्द्र यज्ञं च वर्धय ।। ४ ।।**
**आ । इहि । स्तोमान् । अभि । स्वर । अभि । गृणीहि । आ । रुव ।**
**ब्रह्म । च । नः । वसो इति । सचा । इन्द्र । यज्ञम् । च । वर्धय ।। ४ ।।**

## ऋग्भाष्यम्

**........................ अभिस्वर वस्तुतिम् ।**
**प्रशंसां कुरुशब्दं च पुनर्हर्षान्महत्तरम् ।**
**ब्रह्मयज्ञं च नोऽतस्थो बहिष्ठश्चैव वर्धय ।। ४ ।।**

**ऋग्भाष्यटीका–** एहि । अभिस्वर । हे **इन्द्र एहि स्तोमान्** स्तुतिं **अभिस्वरच** स्वीकारानुसारिणं स्वरं कुरु । **अभिगृणीहि** प्रशंसां कुरु । अस्मदीयामिति शेषः । हे स्तोतारः साधुकृतमिति । **आरुव** पुनर्हर्षान्महत्तरं शब्दं च कुरु । सर्वत्र वसति सर्वस्यान्तस्थो बहिष्ठश्च वर्तते इति वसुः । हे **वसो नः** अस्मदीयं **ब्रह्म** वेदं स्तुतिं च यज्ञं च **सचा** सहैव सुखेनैव वा **वर्धय** प्रवर्तय ।। ४ ।।

**मन्त्रार्थमञ्जरी–** (हे) इन्द्र । आ इहि, आगच्छ ।। स्तोमान्, स्तुतिम् । अभि स्वर, स्वीकारानुसारेण स्वरं कुरु ।। अभि गृणीहि, हे स्तोतारः 'साधु कृतम्' इत्येवमस्मत्प्रशंसा-वाक्यमुच्चारय ।। आ रुव, 'रु शब्दे' पुनर्हर्षान्महत्तरं शब्दं च कुरु । (हे) वसो, वसति सर्वत्रेति वसुः, सर्वस्य बहिरन्तर्विद्यमान, वसतेः उप्रत्ययः । नः, अस्मदीयम् । ब्रह्म च, स्तुतिं च । यज्ञम् च । सचा, सहैव, सुखेनैव वा । वर्धय, प्रवर्तय ।। ४ ।।

**स्कन्द– एहि** आगच्छ! आगत्य च **स्तोमान् अभिस्वर** । अन्यत्र स्वृशब्दोपतापयोः । इह तु सामार्थ्याद् गत्यर्थः । अस्मदीयाः स्तुतीरभिगच्छ । अथवा स्वरतिः शब्दार्थ एव । स्तोमानित्येतच्च एहीत्यनेन सम्बध्यते । एह्यस्मदीयान् स्तोमान् प्रति । आगत्य चाभिस्वर अभिशब्दयास्मान्– आगच्छत स्तोतारः! आगतोऽहं, स्तुत, किमतः परमाध्वे इति । अभिस्वृत्य च **अभिगृणीहि** । अभीत्ययं प्रतीत्येतस्य स्थाने । प्रतिगृणीहि । **आरुव च** शब्दय च ।

किम् ? सामर्थ्याच्छस्त्रं चोच्चारयेत्यर्थः । हेतुकर्तृतया चोभयत्रापि इन्द्रस्य कर्तृत्वम् । प्रतिगृणन्तमध्वर्युं शंसन्तं च मां प्रयुङ्क्ष्वेत्यर्थः । एतत् कुर्वन् **ब्रह्म च** स्तुतिलक्षणं **नः** अस्माकं स्वभूतम् । **वसो!** शतपथे वसिष्ठ इति वसुशब्दस्यातिशयितप्रत्ययान्तस्य 'यद्वै नु श्रेष्ठस्तेन वसिष्टः' (माश.८,१,१,६) इति प्रशस्यतमवचनेन श्रेष्ठशब्देनार्थविवरणदर्शनाद् वसुशब्दः प्रशस्यनाम । प्रशस्य । अथवा 'वसु' (निघ.२,१०) इति धननाम । सामर्थ्याच्चान्तर्णीतमत्व-र्थम् । धनवन् । **सचा** सह हे इन्द्र! **यज्ञं च वर्धय** समापय । स्तुतियज्ञयोर्हि समाप्तिरेव वृद्धिः ।। ४ ।।

**वेङ्कटमाधव–** आगच्छ स्तोमान् अस्मदीयान् । सशब्देन मुखेन पुनः पुनः प्रोत्साहय । 'ओथा मोदैव' (आश्रौ ५,९,४) इति अभिगृणीहि । प्रतिगृणन्तम् अध्वर्युं शसन्तं मां च नियुङ्क्ष्व । आ च रुव श्लोकम् । अस्माकम् इन्द्रः! स्तोत्रं च सह वर्धय वासयितः ।। ४ ।।

**मुद्गल–** हे वसो निवासकारणभूत **! इन्द्र! एहि** अस्मिन् कर्मण्यागच्छ । आगत्य च **स्तोमान्** उद्गातृप्रयुक्तानि स्तोत्राणि **अभिस्वर** अभिलक्ष्य प्रशंसारूपं शब्दं कुरु । तथा होतृप्रयुक्तानि शस्त्राणि आलक्ष्य रुव शब्दं कुरु । परितोषेण सर्वा ऋत्विजः प्रशंसेत्यर्थः । तत ऊर्ध्वं **नः** अस्माकं **ब्रह्म च** अन्नं च **यज्ञं च** अनुष्ठीयमानं कर्म च सचा सह । **वर्धय** साङ्गत्वसम्पादनेन यज्ञं वर्धयित्वा तत्फलमन्नं च प्रवृद्धं कुरु ।। ४ ।।

**सायण–** विशेषविनियोगस्तु यत्र श्रौतो न सूत्रितः । स्मार्तं तत्र विजानीयादृग्विधानादि-सूत्रतः । 'एहि स्तोमान्' इति ऋगेषा सूत्रे विशेषाकारेण न विनियुक्ता । साधारणविनियोगस्तु ब्रह्मयज्ञादौ सर्वत्रानुसन्धेयः ।

हे **वसो** निवासकारणभूत **इन्द्र एहि** अस्मिन् कर्मण्यागच्छ । आगत्य च **स्तोमान्** उद्गातृप्रयुक्तानि स्तोत्राणि **अभि स्वर** अभिलक्ष्य प्रशंसारूपं शब्दं कुरु । तथा आध्वर्यवमभिलक्ष्य गृणीहि शब्दं कुरु । तथा होतृप्रयुक्तानि शस्त्राण्यालक्ष्य **रुव** शब्दं कुरु । परितोषेण सर्वानृत्विजः प्रशंसेत्यर्थः । तत ऊर्ध्वं **नः** अस्माकं **ब्रह्म च** अन्नं च **यज्ञं च** अनुष्टीयमानं कर्म च **सचा** सह वर्धय । साङ्गत्वसम्पादनेन यज्ञं वर्धयित्वा तत्फलमन्नं च प्रवृद्धं कुरु । 'अन्धः' इत्यादि-ष्वष्टाविंशत्यन्ननामसु 'ब्रह्म वर्चः' (नि.२,७,२५) इति पठितम् ।

इहि । 'इण् गतौ' । सेर्हिः । हेरपित्त्वेन ङित्त्वात् गुणाभावः । निघातः । आङा सह गुणः 'एकादेश उदात्तेनोदात्तः' इत्युदात्तः । स्तोमान् । 'अर्तिस्तुसु' (उ.सू.१,१३७) इत्यादिना मन् । नित्त्वादाद्युदात्तः । उत्तरपदेन संहितायां नकारस्य 'दीघादटि समानपादे' (पा.सू.८,३,९) इति रुत्वम् । 'आतोऽटि नित्यम्' (पा.सू.८,३,३) इति आकारस्यानुनासिकः । 'भोभगोअघोअपूर्वस्य योऽशि' (पा.सू.८,३,१७) इति यत्वम् । तस्य 'लोपः शाकल्यस्य' (पा.सू. ८,३,१९) इति लोपः । तस्यासिद्धत्वात् स्वरसन्धिर्न भवति । अभि । 'एवमादीनामन्तः' (फि.सू.८२) इत्यन्तोदात्तः । स्वर । 'स्वृ शब्दोपतापयोः' । निघातः । अभि । गतम् । गृणीहि । 'गृ शब्दे' । 'सेर्ह्यपिच्च' (पा.सू.३,४,८७) इति हिः । 'क्र्यादिभ्यः श्ना' । 'ई हल्यघोः' (पा.सू.६,४,११३) इति ईत्वम् । 'प्वादीनां ह्रस्वः' (पा.सू.७,३,८०) इति ऋकारस्य ऋकारः । 'ऋवर्णाच्चेति वक्तव्यम्' (का.८,४,१,१) इति णत्वम् । 'तिङ्ङतिङः' इति निघातः । रुव । 'रु शब्दे' । सेर्ह्यपिच्च । शपि प्राप्ते व्यत्ययेन शः । तस्य ङित्वेन गुणाभावात् उवङादेशः । 'अतो हेः' (पा.सू.६,४,१०५) इति हेर्लुक् । 'तिङ्ङतिङः' इति निघातः । ब्रह्म । 'तृहि बृहि वृद्धौ' । 'मनिन्' इत्यनुवृत्तौ 'बृहेरम् नलोपश्च'? (उ.सू.४,५८५) इति मनिन्; तत्सन्नियोगेन नलोपः अमागमश्च । 'मिदचोऽन्त्यात्परः' (पा.सू.१,१,४७) इति ऋकारात्परः । यणादेशः । मनिनो नित्वादाद्युदात्तत्वम् । वसो । आमन्त्रितनिघातः । यज्ञम् । 'यजयाच' (पा.सू.३,३,९०) इत्यादिना नङ् । प्रत्ययस्वरः । वर्धय । निघातः । अत्र चकारद्वयश्रवणात् इयमेव तिङ्विभक्तिः पूर्ववाक्येष्वनुषज्यते । अतोऽनुषक्तैव प्रथमा न श्रुता इति अश्रुतायाः 'चवायोगे प्रथमा' (पा.सू.८,१,५९) इति निघातनिषेधो न भवति ।। ४ ।।

**सिद्धाञ्जनम्**–चतुर्थीमृचमाह– हे **इन्द्र एहि** आगच्छ। **स्तोमान्** अस्मदीयानि स्तोत्राणि **अभिस्वर** अभिमुखीभूय ॐ इति अनुज्ञाक्षरं शब्दय, 'ओमित्यनुज्ञाक्षरं' 'ओमिति स्वरन्नुदेति'इति छन्दोगाः । स्वरतिर्न शब्दसामान्यार्थकः, तत्र वैशिष्ट्यं बोध्यम् । ओमिति स्वरात्मकं शब्दं कुर्वित्यर्थः । एवमनुज्ञानात्परं **अभिगृणीहि आरुव** अभितः गृणीहि, सर्वतः शब्दय । हेतुमत्कर्तृतया उभयत्रापि इन्द्रस्य कर्तृत्वं इति स्कन्दस्वामीयं उपपन्नतरं, त्वमेव स्तावय उच्चारयेत्यर्थः । **वसो** वसुभूत, सर्वस्यापि प्राप्तव्यत्वेन धनभूत, अन्तर्णीतमत्वर्थे धनवन् । शतपथे वसिष्ठ इति वसुशब्दः प्रशस्यनामेति च स्कन्दस्वामी । **नः** अस्माकं **ब्रह्म च** मन्त्रं

च **यज्ञं च सचा** सह **वर्धय** वृद्धिं प्रापय । मन्त्रात्मकं ब्रह्म ज्ञानसम्पाद्यं ज्ञानसम्पादकं च भवति । यज्ञो यजनम् , तच्च योगयुक्तकर्मानुष्ठानेन सम्पाद्यं तस्य सम्पादकं च भवति । इदमुभयं भक्तस्येन्द्रानुग्रहलभ्यम् । तस्माद्वर्धय इति प्रार्थना ।। ४ ।।

ऋक्संहिता पदपाठसहिता

**उक्थमिन्द्राय शंस्यं वर्धनं पुरुनिःषिधे ।**
**शक्रो यथा सुतेषुणो रारणत्सख्येषु च ।। ५ ।।**
उक्थम् । इन्द्राय । शंस्यम् । वर्धनम् । पुरुनिःऽसिधे ।
शक्रः । यथा । सुतेषु । नः । ररणत् । सख्येषु । च ।। ५ ।।

ऋग्भाष्यम्

**नित्यवृद्धत्वतो विष्णोर्वर्धनं तु प्रकाशनम् ।**
**बहुशत्रून्निष्षिदसौ हरिर्दनुजघातकः ।**
**अस्मत्सख्याय शब्दं च चकारास्मासु संस्थितः ।**
**यथा सुतेषु सोमेषु करोत्यृत्विक्षु च स्थितः ।। ५ ।।**

**ऋग्भाष्यटीका– उक्थम्** । नित्यवृद्धत्वतः । **इन्द्राय** परमेश्वराय तस्यैव वर्धनम् । **उक्थं शंस्यं** शंसनीयम् । अत्रोक्थस्येन्द्रवर्धनत्वं प्रतीयते तत्कीदृशमित्यत आह– **नित्येति** ।। ततश्च वर्धनं प्रकाशकम् । **पुरुनिष्षिधे** इतीन्द्रविशेषणम् । तद्व्याचष्टे– **बह्विति** ।। निषेधतीति निष्षित् । पुरुशब्दस्य बह्विति व्याख्यानम् । शत्रूनिति तस्य विशेष्यम् । उपपदं द्वितीयान्तमिति दर्शयितुं शत्रूनित्युक्तम् । अथवा विभक्तिव्यत्ययेन शत्रूणामित्यर्थः । तात्पर्यार्थमाह– **दनुजघातक इति** ।। स शक्रो यथा सोमेषु सुतेषु सत्सु **रारणत्** शब्दं करोति । ऋत्विक्षु स्थितः स्तुतीः प्रवर्तयति एवं **नः सख्येषु** अस्मत्सख्याय च **रारणत्** अस्मासु संस्थितः शब्दं चकार सखाऽहमस्मीति । रारणदिति रणतेर्यङ्लुगन्ताल्लेट् । सच लडाद्यर्थे ।। ५ ।।

**मन्त्रार्थमञ्जरी–** पुरुनिःषिधे, शत्रूणां बहुनिषेधकाय, दनुजघातकायेति यावत्, निर्(स्) पूर्वकात्सेधतेः क्विप्, 'उपसर्गात्सुनोति' इति षत्वम् । इन्द्राय, परमेश्वराय । तस्यैव वर्धनम्, वृद्धिकरम्, प्रकाशकरमिति यावत् । उक्थम्, उक्थनामकऋग्जातम् । शंस्यम्, शंसनीयम् । (सः)

शक्रः यथा (सोमेषु) सुतेषु, सत्सु । (ररणत्), 'रण शब्दे' शब्दं करोति, ऋत्विक्षु स्थितः स्तुतिं प्रवर्तयति । (एवम्) नः सख्येषु, अस्मत्सख्याय । च । रारणत्, शब्दमकरोत्, अस्मासु स्थितः 'सखाहमस्मि' इति रारणदित्यर्थः, 'रणतेः यङ्लुकि लेटि तिपीकारलोपे तिपोऽडागमे 'रारणत्' इति रूपम् ।। ५ ।।

**स्कन्द–** उक्थं इन्द्रस्यार्थाय शंसनीयम् । कीदृशम् ? वर्धनीयम् । कस्य ? सामर्थ्यादिन्द्रस्य । स्तूयमाना हि देवता वर्धते वीर्येण । कीदृशायेन्द्राय ? **पुरुनिष्षिधे** निरित्येष नीत्येतस्य स्थाने । बहूनां शत्रूणां निषिधे निवारकाय । निष्कृत्य वा साधयित्रे स्ववशीकर्त्रे । कथं च पुनः शंसनीयः ? **शक्रः** शक्त इन्द्रः । यथा **सुतेषु नः** अस्माकं **रारणत्** रमेरिदं छान्दसं णत्वम् । रणिर्वा रमेरर्थे । अत्यन्तं रमते । **सख्येषु च** सखित्वेषु चास्माभिः सह । अवैगुण्यमनेन प्रकारेणोच्यते । अविगुणशंसिनो हि सुतेषु सख्येषु च देवता रमते ।। ५ ।।

**वेङ्कटमाधव–** उक्थं इन्द्राय शंसनीयं, बलस्य वर्धनं अनेकेषां शत्रूणां निषेद्धे यथा शक्रः शक्तः सोऽस्माकं यज्ञेषु सख्येषु च अत्यन्तं रमेत ।। ५ ।।

**मुद्गल– इन्द्राय** इन्द्रार्थं वर्धनं वृद्धिसाधनं **उक्थं** शस्त्रं **शंस्यं** अस्माभिः शंसनीयम् । कीदृशायेन्द्राय ? **पुरुनिष्षिधे** बहूनां शत्रूणां निषेधकारिणे । **शक्रः** इन्द्रः **नः** अस्मदीयेषु **सुतेषु** पुत्रेषु **सख्येषु च** सखित्वेष्वपि **यथा** येन प्रकारेण **रारणत्** अतिशयेन शब्दं कुर्यात् तथा शंस्यमिति पूर्वत्रान्वयः । अस्मदीयेन शस्त्रेण परितुष्ट इन्द्रोऽस्माकं पुत्रान् अस्मात्सख्यानि च बहुधा प्रशंसत्वित्यर्थः ।। ५ ।।

**सायण–** अभिप्लवषडहगतोक्थ्येषु अच्छावाकस्य तृतीयसवने 'उक्थमिन्द्राय शंस्यम्' इत्यनुरूपस्तृचः । 'एह्यू षु' इति खण्डे 'इन्द्रं विश्वा अवीवृधन्नुक्थमिन्द्राय शंस्यम्' (आश्व.श्रौ.७,८) इति सूत्रितम् ।।

**इन्द्राय** इन्द्रार्थं **वर्धनं** वृद्धिसाधनं **उक्थं** शस्त्रं **शंस्यं** अस्माभिः शंसनीयम् । कीदृशायेन्द्राय ? **पुरुनिष्षिधे** बहूनां शत्रूणां निषेधकारिणे । **शक्रः** इन्द्रः **नः** अस्मदीयेषु **सुतेषु** पुत्रेषु **सख्येषु च** सखित्वेष्वपि **यथा** येन प्रकारेण **रारणत्** अतिशयेन शब्दं कुर्यात् तथा शंस्यमिति पूर्वत्रान्वयः । अस्मदीयेन शस्त्रेण परितुष्ट इन्द्रोऽस्माकं पुत्रान् अस्मत्सख्यानि च बहुधा प्रशंसत्वित्यर्थः ।

उक्थम् । वचेस्थक्प्रत्यय उक्तः (उ.सू.२,१६४) ! प्रत्ययस्वरः । शंस्यम् । 'शंसु स्तुतौ' । ण्यन्तात् 'अचो यत्' । 'णेरनिटि' (पा.सू.६,४,५१) इति णिलोपः । तित्स्वरिते प्राप्ते 'यतोऽनावः' इत्याद्युदात्तत्वम् । वर्धनम् । 'करणाधिकरणयोश्च' (पा.सू.३,३,११७) इति करणे ल्युट् । 'लिति' इति प्रत्ययपूर्वस्य उदात्तत्वम् । पुरुनिष्षिधे बहूनां शत्रूणां निषेधकाय । 'षिध गत्याम्' । 'धात्वादेः षः सः' । अत्र निरित्युपसर्गस्य निशब्दसमानार्थस्य प्राक्प्रयोगः । 'क्विप् च' इति क्विप् । क्विपः सर्वापहारी लोपः । 'कुगतिप्रादयः' (पा.सू.२,२,९८) इति समासः । निसः सकारेण इणो व्यवधानं छान्दसत्त्वादनादृत्य 'उपसर्गात्सुनोति' (पा.सू.८,३,६५) इत्यादिना धातुसकारस्य षत्वम् । निसः सकारस्य 'ष्टुना ष्टुः' (पा.सू.८,४,४१) इति षत्वम् । पुरुशब्देन कर्मणि षष्ठ्यन्तेन समासः । षिधो धातुस्वरेणोदात्तत्वम् । निष्षिधे इति प्रादिसमासे कृदुत्तरपदप्रकृतिस्वरत्वम् । कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणात् पुनः कारकसमासेऽपि स एव स्वरः । शक्नोतीति शक्तः । 'स्फायितञ्चिवञ्चिशकि' (उ.सू.२,१७०) इत्यादिना रक् । प्रत्ययस्वरः । यथा । 'प्रकारवचने थाल्' (पा.सू.५,३,२३) । लित्स्वरेण प्रत्ययात् पूर्वोऽकार उदात्तः । सुतेषु । क्तः प्रत्ययस्वरेणोदात्तः । नसो नकारस्य 'नश्च धातुस्थोरुषुभ्यः' (पा.सू.८,४,२७) इति संहितायां णत्वम् । रारणत् । 'रण शब्दार्थः' । 'धातोरेकाचः' (पा.सू.३,१,२२) इति यङ् । 'यङोऽचि च' (पा.सू.२,४,७४) इति लुक् । प्रत्ययलक्षणेन द्विर्भावः (पा.सू.६,१,९) । हलादिशेषः । 'दीर्घोऽकितः' (पा.सू.७,४,८३) इति दीर्घः । प्रत्ययलक्षणेन 'सनाद्यन्ता धातवः' (पा.सू.३,१,३२) इति धातुसंज्ञायां 'लिङर्थे लेट्' (पा.सू.३,४,७) इति हेतुहेतुमद्भावलक्षणे लिङर्थे (पा.सू.३,३,१५६) लेट् । अत्र हि इन्द्रकर्तृकं रारणनम् उक्थशंसनस्य कर्तव्यत्वे हेतुः । लेटस्तिप्' । 'इतश्चलोपः परस्मैपदेषु' (पा.सू.३,४,९७) इति इकारलोपः । 'लेटोऽडाटौ' (पा.सू.३,४,९४) इति अडागमः । कर्तरि शप् । तस्य चर्करीतं परस्मैपदम् अदादिवच्च द्रष्टव्यम् इति अदादिवद्भावात् 'अदिप्रभृतिभ्यः शपः' इति प्राप्तो लुक् 'बहुलं छन्दसि' इति निषिध्यते । शपोऽनुदात्तत्वात् धातोः अन्तोदात्त एव शिष्यते । शपा लसार्वधातुकस्य व्यवधानात् तत्र परतो विधीयमानं 'अभ्यस्तानामादिः' (पा.सू.६,१,१८९) इत्याद्युदात्तत्वं न भवति । न च 'तिङ्ङतिङः' इति निघातः । अत्र यथाशब्दयोगेन 'यावद्यथाभ्याम्' (पा.सू. ८,१,३६) इति निषेधात् । 'चवायोगे प्रथमा' इति वाऽत्र निघातो न भविष्यति । अत्र ह्युत्तरवाक्ये सख्येषु च इति चानुकृष्टविभक्त्यपेक्षया इयं प्रथमा तिङ्विभक्तिः । सख्येषु । सख्युः

कर्माणि सख्यानि तेषु । 'कर्मणि च' (पा.सू.५,१,१२४) इत्यनुवृत्तौ 'सख्युर्यः' (पा.सू. ५,१,१२६) इति सखिशब्दात् यप्रत्ययः । तत्र भसंज्ञायां 'यस्येति च' (पा.सू.६,४,१४८) इति इकारलोपः । प्रत्ययस्वरः ॥ ५ ॥

**सिद्धाञ्जनम्–** पञ्चमीमृचमाह– **इन्द्राय उक्थं** ऋग्रूपं शस्त्राख्यं स्तोत्रं **शंस्यं** शंसनीयं । कीदृशं उक्थम् ? **वर्धनं** सामर्थ्यात् इन्द्रस्य, उपास्या स्तुता देवता उपासके वर्धते । कीदृशायेन्द्राय ? **पुरुनिष्षिधे** पुरूणां शत्रूणां निषेधकाय निवारकायेत्यर्थः (निरुपसर्गस्य निशब्दार्थः, षिध गत्याम् , क्विप्)। केन प्रकारेण शंस्यम् ? यथा पुत्रेषु पिता, सख्येषु विषये सखा वा रमते तथेत्याह । **शक्रः** शक्त इन्द्रः (शक्नोतेः) **नः** अस्मदर्थं **सुतेषु** पुत्रेषु, **सख्येषु च** सखित्वेषु च **यथा रारणत्** रमेत तथा शंस्यम् । (रारणत् , रमेर्द्विर्भावः मस्य णः छान्दसः लेट्) ॥ ५ ॥

### ऋक्संहिता पदपाठसहिता

**तमित्स॑खि॒त्व ई॑महे॒ तं रा॒ये तं सु॒वीर्ये॑ ।**
**स श॒क्र उ॒त नः॑ शक॒दिन्द्रो॒ वसु॒दय॑मानः ॥ ६ ॥**
**तम् । इत् । स॒खि॒ऽत्वे । ई॒म॒हे॒ । तम् । रा॒ये । तम् । सु॒ऽवीर्ये॑ ।**
**सः । श॒क्रः । उ॒त । न॒ः । श॒क॒त् । इन्द्रः॑ । वसु॑ । दय॑मानः ॥ ६ ॥**

### ऋग्भाष्यम्

**तमेव शरणं नित्यं सखित्वाद्यर्थमीमहे ।**
**शक्त्यानन्दस्वरूपत्वाच्छक्रः सर्वत्र चाशकत् ।**
**अस्माकं च सदा वित्तं ददेव प्रवर्तते ॥ ६ ॥**

**ऋग्भाष्यटीका–** **तमित्** ॥ तमेव । वयं **सखित्वे** सखित्वार्थं **तमित्** तमेवेन्द्रं नित्यं शरणमीमहे । **राये** वित्तार्थं च तमीमहे । **सुवीर्ये** साधुवीर्यार्थं च तमीमहे । सर्वस्य सङ्ग्रहणोक्तिः सखित्वाद्यर्थमिति । शरणं प्राप्तश्च स यस्मात् **शक्रः** शक्त्यानन्दस्वरूपत्वाच्छक्रशब्दार्थः । शक्लृशक्तौ रमुक्रीडायां द्वाभ्यां डः । **उत** तस्मात् **शकत्** सर्वत्र तत्तत्प्रार्थितसम्पादनेऽशकत् शक्तो भवत्येव । किञ्च । **स** इन्द्रो **नः** अस्मभ्यं **वसु** वित्तं **दयमानः** दयदानगतिरक्षणेषु । ददेव सदा प्रवर्तत इति शेषः । अतश्च तमीमहे ॥ ६ ॥

**मन्त्रार्थमञ्जरी–** तम्, इन्द्रम् । सखित्वे, निमित्तसप्तमी, सखित्वार्थम् । (नित्यं शरणम्) ईमहे, गताः 'ईङ् गतौ' राये, वित्तार्थम् । (च) तम् । (ईमहे) शरणं प्राप्नुमः । सुवीर्ये, साधुवीर्यार्थम् । (च) तम् । (ईमहे), शरणं प्राप्ताः । (च) सः शक्रः, शक्तिसुखरूपत्वेन शक्रशब्दवाच्यः, 'शक्लृ शक्तौ' 'रमु क्रीडायाम्' इत्याभ्यां धातुभ्यां डप्रत्यये टिलोपे 'शक्र' इति सिद्धेः । उत, तस्मात् । शकत्, अशकत्, अडभावश्छान्दसः, तत्तत्प्राप्तिसम्पादने शक्तो भवत्येव ।। किं च, (सः) इन्द्रः । नः, अस्मभ्यम् । वसु, वित्तम् । दयमानः इत्, 'दय दानगतिरक्षणहिंसादानेषु' दददेव । (सर्वदा वर्तते) इति शेषः । अतश्च तमीमहे इति भावः ।।६।।

**स्कन्द– यः** उक्तगुण इन्द्रः **तं इत्** इति पदपूरणः । **सखित्वे** द्वितीयार्थे सप्तमी । सखित्वं ईमहे याञ्चाकर्माऽयम् । याचामहे । सखा अस्माकं भवेत्येतत् प्रार्थयामह इत्यर्थः । तं एव **राये** इयमपि चतुर्थी द्वितीयार्थे । धनम् । **सुवीर्ये** इत्ययमपि द्वितीयार्थे । शोभनं वीर्यम् । **स शक्रः** उतशब्दः अप्यर्थे । सः शब्दाच्च परो द्रष्टव्यः । सोऽपि शक्रः शक्तः **नः** अस्मभ्यं **शकत्** 'शिक्षति तुञ्जति' (तु.निघ.३,१०) इति शकिर्दानकर्मा पठितः । अयं तु शुद्धोऽपि सामर्थ्याद् दानकर्मा । धनं ददात्वित्यर्थः । अथवा शकिः स्वार्थ एव । उतशब्दस्तु यस्मादर्थे । शकेश्च कर्मभूतेन धात्वन्तरेण नित्यसम्बन्धाद् योग्यस्य तस्याध्याहारः । स शक्रो यस्मादस्मभ्यं शक्नोति दातुं तस्माद् याचामह इति । यस्माद् दानसमर्थ इत्यर्थः । कः सः ? उच्यते । **इन्द्रः** । कदा ददातु शक्नोति वा दातुम् । उच्यते । **वसु दयमानः** दयतिर्विभागकर्मा (तु.या.४,१७) । 'लक्षणहेत्वोः क्रियायाः' (पा.३,२,१२६) इति लक्षणे शानच् । एवं चायं स्तोतृभ्यो धनं विभजन् । यदा स्तोतृभ्यो धनविभागः तदा । तस्मादस्मभ्यमेतद् ददातु इत्यर्थः ।। ६ ।।

**वेङ्कटमाधव–** तमेव सखित्वे अपेक्षिते सखा भव इति याचामहे । तमेव धनार्थम् । तमेव शोभनबलार्थम् । स शक्तः इन्द्रः धनं प्रयच्छन् अस्मान् शक्तान् करोतु ।। ६ ।।

**मुद्गल–** सखित्वे निमित्तभूते सति **तं इत्** तमेवेन्द्रं **ईमहे** प्राप्नुमः याचामहे । तथा **राये** धनार्थं तं ईमहे । तथा **सुवीर्ये** शोभनसामर्थ्यनिमित्तं तं ईमहे । **उत** अपि च शक्रः शक्तिमान् **सः** इन्द्रः **नः** अस्मभ्यं **वसु** धनं **दयमानः** प्रयच्छन् **शकत्** अस्मदीयरक्षणे शक्तोऽभूत् ।।६।।

**सायण– सखित्वे** निमित्तभूते सति **तमित्** तमेवेन्द्रं **ईमहे** प्राप्नुमः । तथा **राये** धनार्थं

**तं** ईमहे । तथा **सुवीर्ये** शोभनसामर्थ्यनिमित्तं तं ईमहे । **उत** अपि च **शक्रः** शक्तिमान् सः **इन्द्रः नः** अस्मभ्यं **वसु** धनं दयमानः प्रयच्छन् **शकत्** अस्मदीयरक्षणे शक्तोऽभूत् । सप्तदशयाश्चाकर्मसु 'ईमहे यामि' (नि.३,१९,१) इति पठितम् । तदनुसारेण इन्द्रं याचामहे इति व्याख्येयम् ।

सख्युर्भावः । सखित्वम् । 'तस्य भावस्त्वतलौ' (पा.सू.५,१,११९) इति त्वः । प्रत्ययस्वरेणोदात्तः । ईमहे । 'ईङ् गतौ' । ङित्वात् आत्मनेपदम् (पा.सू.१,३,१२) । 'दिवादिभ्यः श्यन्' । 'बहुलं छन्दसि' इति श्यनो लुक् । 'तिङ्ङतिङ' इति निघातः । राये । 'ऊडिदम्' इति विभक्तेरुदात्तत्वम् । सुवीर्ये । शोभनं वीर्यं यस्यासौ सुवीर्यः । भवितृवाचिनानेन भावो लक्ष्यते । सुवीर्यत्वे इत्यर्थः । 'बहुव्रीहौ' (पा.सू.६,२,१०६) इत्यनुवृत्तौ 'वीरवीर्यौ च' (पा.सू.६,२,१२०) इत्युत्तरपदाद्युदात्वम् । शक्नोतीति शक्रः । 'स्फायितञ्चिवञ्चिशकि' (उ.सू.२,१७०) इत्यादिना रक् । प्रत्ययस्वरः । शकत् । 'शक्लृ शक्तौ' । धातुसम्बन्धाधिकारे 'छन्दसि लुङ्लङ्लिटः' (पा.सू.३,४,६) इति लुङ् । यतः शक्नोति अतस्तमीमहे इति धातुसम्बन्धः । लुङस्तिप् । 'पुषादिद्युताद्य्लृदितः परस्मैपदेषु' (पा.सू.३,१,५५) इति च्लेरङादेशः । 'बहुलं छन्दसि' (पा.सू.६,४,७५) इत्यडागमाभावः । 'तिङ्ङतिङः' इति निघातः । वसु । 'नित्' इत्यनुवृत्तौ (उ.सू.१,९) वसेः उप्रत्ययः (उ.सू.१,१०) । नित्त्वादाद्युदात्तत्वम् । दयमानः । 'दय दानगतिरक्षणहिंसादानेषु' । अनुदात्तेत्त्वात् आत्मनेपदम् । लटः शानजादेशः (पा.सू.३,२,१२४) । शपः पित्त्वादनुदात्तत्वम् । शानचः 'चितः' इत्यन्तोदात्तत्त्वं बाधित्वा अदुपदेशात् शप उत्तरत्वेन परत्वात् लसार्वधातुकत्वानुदात्तत्वम् । धातुस्वर एव शिष्यते ।। ६ ।।

**सिद्धाञ्जनम्–** षष्ठीमृचमाह– **तमित्** तमेवेन्द्रं **सखित्वे** सख्ये । निमित्तसप्तमी । **ईमहे** प्रार्थयामहे । तं **राये** धनार्थं 'ईमहे'। तं **सुवीर्ये** शोभनाय सामर्थ्याय च । निमित्तसप्तमी । 'ईमहे'। **उत** अपि च **सः शक्रः** शक्त इन्द्रः **वसु** धनं दिव्यं श्रेष्ठं **नः** अस्मभ्यं **दयमानः** वितरन् **शकत्** शक्नोति शक्तो भवति ।। ६ ।।

।। इति प्रथमाष्टके प्रथमाध्याये एकोनविंशो वर्गः ।।

### ।। अथ विंशो वर्गः ।।

### ऋक्संहिता पदपाठसहिता

**सुविवृतं सुनिरजमिन्द्रत्वादातमिद्यशः ।**
**गवामपव्रजं वृधि कृणुष्व राधो अद्रिवः ।। ७ ।।**

सुऽविवृतम् । सुनिःऽअजम् । इन्द्र । त्वाऽदातम् । इत् । यशः ।
गवाम् । अप । व्रजम् । वृधि । कृणुष्व । राधः । अद्रिऽवः ।। ७ ।।

### ऋग्भाष्यम्

**विस्पष्टं सुष्ठ्वकाल्यं च यशस्त्वद्दत्तमेव हि ।**
**गूढं ज्ञानसमूहं त्वं विवृण्वृद्धिं च नः कुरु ।**
**अद्रिरादरणीयत्वात् प्राणस्तद्वर्तकोऽद्रिवाः ।**
**हरिः शक्रस्तथाद्रीणां छेदनाद्वारणादपि ।। ७ ।।**

**ऋग्भाष्यटीका–** **सुविवृतम्** । विस्पष्टम् । हे **इन्द्र त्वादातमित्** त्वद्दत्तमेव । सर्वे विधयश्छन्दसि विकल्प्यन्त इति दोदद्घोरित्येष विधिर्न भवति । यद्वा दापोदैपोवैतद्रूपम् । अनेकार्थत्वाद्धातूनां दत्तमित्युक्तम् । यशः **सुविवृतं** विस्पष्टं **सु** सुष्टु **निरजं** अजगतिक्षेपणयोः अकाल्यं अक्षेप्यं निरो निषेधार्थत्वात् अनपहार्यं च हि यस्मादेवं शुभं त्वदीयं दानं तस्मात्त्वं **गवां व्रजं** ज्ञानसमूहं स्वरूपभूतं **अपवृधि** विवृणु । विवरणप्रार्थनं चावृतस्यैव सम्भवतीति गूढमित्युक्तम् । नोऽस्माकं **राधः** ऋद्धिं च **कृणुष्व** कुरु । **अद्रिवः** इति सम्बुद्ध्यन्तं भगवति व्याख्याति– **अद्रिरिति** ।। आङ्पूर्वाद्दरतेः कर्मणि किः । आङश्च ह्रस्वत्वम् । अद्रिशब्दे कर्मण्युपपदेऽन्तर्णीतण्यर्थाद्वृतेरसुन् डिच्च । भाष्ये तु क्वचिदद्रिवेति पाठः । तत्र छान्दसस्सकार-लोपः । इन्द्रे व्याख्याति– **शक्र इति** ।। छेदनाद्वारणादपीत्यर्थद्वयम् । अद्रिशब्दोपपदा-द्वृश्चतेरन्तर्णीतण्यर्थाद्वञो वाऽसुन् डिच्चेति ।। ७ ।।

**मन्त्रार्थमञ्जरी–** अद्रिवः, प्राणप्रवर्तक (हे) इन्द्र, विष्णो । अद्रिवः, पर्वतच्छेदक । (हे) इन्द्र, पुरंदर । आङ्पूर्वाद्दृङ्धातोः किप्रत्ययः, 'वृतु वर्तने' इत्यतो डसुन्प्रत्ययः, द्वितीयेऽर्थे

तु अद्रिशब्दोपपदाद्वश्वतेः डसन्नलोपश्च, अद्रिवाः, तस्य सम्बुद्धिरद्रिवः । त्वादातम् इत्, त्वद्दत्तमेव 'त्वोतास' इत्यत्रेव युष्मद आत्वम्, 'दो दद्घोः' इति दत्वाभावश्छान्दसः । यशः । सुविवृतम्, विस्पष्टम्, जगद्विख्यातम् । सुनिरजम्, सु सुष्ठु, निरजम्, 'अज गतिक्षेपणयोः' इत्यतोऽकार-प्रत्ययः, निरत्र निषेधार्थः, अक्षय्यं केनाप्यनपहार्यं च ।। यस्मादेवंरूपं त्वदीयं दानं तस्मात् (त्वम्) गवाम्, ज्ञानानाम् । व्रजम्, समूहम्, स्वरूपभूतम् । अप वृधि, अपगतावरणं कुरु । (नः) अस्माकम् । राधः वृद्धिम् । (च) कृणुष्व, कुरु, कृञः व्यत्ययेन श्नुविकरणम् ।।७।।

**स्कन्द–** **सुविवृतं** सुष्ठु लोके प्रकाशम् । **सुनिरजं** निरित्येष नीत्येतस्य स्थाने । अज गतिक्षेपणयोः । सुनिक्षेपम् । यत्र यत्र विनियोक्तुमिष्यते, तत्र तत्र प्रभूतत्वात् सुविनियोज-मित्यर्थः । हे **इन्द्र! त्वादातं** त्वया दत्तम् । कस्मै ? सामर्थ्यात् अस्मभ्यं **इत् यशः** इच्छब्दः पदपूरणः । यश अन्नम् । इदानीं तु गवां **अप व्रजं वृधि** व्रजं गोष्ठमुच्यते । गवामात्मीयं गोष्ठं अप वृधि अपावृणु उद्घाटय । आत्मीयात् गोष्ठाद् गा आनीयास्मभ्यं देहीत्यर्थः । अथवा आपोऽत्र गाव उच्यन्ते । व्रजशब्दोऽपि मेघनाम (तु.निघ.१,१०) । वृष्टिलक्षणानामपां सम्बन्धिनं मेघमुद्घाटय वर्षयेत्यर्थः । **कृणुष्व राधः** धनं च कुरु । धनञ्च देहीत्यर्थः । हे **अद्रिवः!** अद्रिरिति पर्वतनाम । 'अथापि ताद्धितेन कृत्स्नवन्निगमा भवन्ति' (या.२,५) इत्येतेन न्यायेन पर्वतविकारो वज्रोऽप्यद्रिरुच्यते, आदरणाद्वा मेघानामसुराणाञ्च । वज्रिन् ।। ७ ।।

**वेङ्कटमाधव–** सुष्ठु अपावृतं दिगन्तेषु महत्तया सुष्ठु च निर्गच्छत् इन्द्र! त्वया दत्तं एव अन्नम् । स त्वं दानाय गोव्रजद्वारं अपवृधि । कुरु धनमस्मभ्यम् । **अद्रिवः!** अद्रिरादृणात्य-मित्रानिति वज्रः । तद्वन् ।। ७ ।।

**मुद्गल–** हे **इन्द्र! यशः** अन्नं कर्मफलभूतं **सुविवृतं** सुष्ठु सर्वत्र प्रसृतं **सुनिरजं** सुखेन निःशेषं प्राप्तुं शक्यं **त्वादातं इत्** त्वया शोधितञ्च । सम्पन्नमिति शेषः । इतः परं क्षीरादिरसलाभार्थं **गवां व्रजं** निवासस्थानं **अपवृधि** उद्घाटितद्वारं कुरु । हे **अद्रिवः** पर्वतोपलक्षितवज्रयुक्तेन्द्र! **राधः धनं कृणुष्व** सम्पादय ।। ७ ।।

**सायण–** हे **इन्द्र यशः** अन्नं कर्मफलभूतं **सुविवृतं** सुष्टु सर्वत्र प्रसृतं **सुनिरजं** सुखेन निःशेषं प्राप्तुं शक्यं **त्वादातमित्** त्वया शोधितं च सम्पन्नमिति शेषः । इतः परं क्षीरादिरसलाभार्थं

**गवां व्रजं** निवासस्थानं **अप वृधि** अपवृतमुद्घाटितद्वारं कुरु । हे **अद्रिवः** पर्वतोपलक्षित-वज्रयुक्तेन्द्र **राधः** धनं **कृणुष्व** सम्पादय ।

सुविवृतम् । 'वृञ् वरणे' । कर्मणि क्तप्रत्ययः । विशब्देन प्रादिसमासः । विवृतमित्यत्र कृदुत्तरपदप्रकृतिस्वरं बाधित्वा कर्मवाचिनि क्तान्ते परतः 'गतिरनन्तरः' (पा.सू.६,२,४९) इति पूर्वपदप्रकृतिस्वरे प्राप्ते 'परादिश्छन्दसि बहुलम्' (पा.सू.६,२,१९९) इति ऋकार उदात्तः । पुनः सुशब्देन समासे कृदुत्तरपदप्रकृतिस्वरेण स एव ऋकार उदात्तः । ननु वृतमित्येव कृदन्तं न तु विवृतमिति, 'प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम्' (परिभा.२३) इति वचनात् । सुविवृतमित्यत्र च समासे वृतमित्येतावन्मात्रं नोत्तरपदं किन्तु विवृतमिति । तत् कथं कृदुत्तरपदप्रकृतिस्वरत्वमिति चेत् उच्यते– प्रत्ययग्रहणपरिभाषापवादेन 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्' (परिभा.२८) इत्यनेन विवृतमित्यस्यापि कृदन्तव्यपदेशोपपत्तेः ।

ननु विवृतमित्यस्य यथा कृदन्तव्यपदेशः एवं क्तान्तव्यपदेशोऽप्यस्ति तयैव परिभाषया । तथा च कर्मणि क्तान्ते उत्तरपदे परतः 'गतिरनन्तरः' इति सुशब्दस्य प्रकृतिस्वरः प्राप्नोति । न चात्रापि ।

**सिद्धाञ्जनम्–** सप्तमीमृचमाह– हे **इन्द्र यशः** त्वदीयं वैभवं (प्रभावप्रसारशालिव्यापकत्वमेव यशः) **सुविवृतं** सुष्ठु अनावृतं, प्रकटमित्यर्थः । **सुनिरजं** सुखेनानायासेन निर्गन्तुं शक्यं, निष्प्रति-बन्धविसारक्षममित्यर्थः, सुनिष्पूर्वकस्य गत्यर्थस्य अजधातोः खलि रूपम्। **त्वादातं इत्** त्वया शोधितमेव (दैप् शोधने कर्मणि क्तः) वृत्रतद्विभूतिभूतास्त्वद्वैभवविघातका अपसारिताः । तेन शोधनेन निष्प्रतिरोधं त्वद्यशोऽस्मान् परितो विलसतीति भावः । अतः परं इन्द्रस्यैव कार्यमाह– हे **अद्रिवः!** पर्वतलक्षितवज्रोपेत अद्रिरस्येति मतुप् छान्दसम्, गावो यत्र गूढा आसन् स पर्वत अधुना तव वशं गतः, तस्मात् पर्वतवन् पर्वतस्वामिन् इति युक्तमामन्त्रणम् (पर्वतो जडस्य सङ्केतः स्मार्यः)। **गवां व्रजं** प्रज्ञानरश्मीनां आवासस्थानं अपवृधि उद्घाटितद्वारं कुरु। **राधः** वृद्धिरूपं सिद्धिरूपं वा धनं **कृणुष्व** कुरु सम्पादयेत्यर्थः। राध्यतेः राध्नोतेर्वा राधः । त्वद्वैभवं अस्मान् परितो लब्धप्रसरं ज्योतिः शत्रूणामपगमेन त्वयैव स्वच्छं कृतमधुना । तदस्मभ्यं दिव्यचिद्रश्मीन् तद्धाम्नः द्वारमुद्घाट्य विसर्जय, एवं सिद्धिं नः सम्पादयेति समस्तार्थः। स्थूलव्याख्यानेषु 'यशः अन्नं' इति कृत्वा कथमपि तात्पर्यमाविष्कृतम् ॥ ७ ॥

### ऋक्संहिता पदपाठसहिता

**नहि त्वा रोदसी उभे ऋघायमाणमिन्वतः ॥**
**जेषः स्वर्वतीरपः सङ्गा अस्मभ्यं धूनुहि ॥ ८ ॥**

नहि । त्वा । रोदसीइति । उभेइति । ऋघायमाणम् । इन्वतः ।
जेषः । स्वःऽवतीः । अपः । सम् । गाः । अस्मभ्यम् । धूनुहि ॥ ८ ॥

### ऋग्भाष्यम्

**नत्वामृघायमाणं हि वर्धमानं तु रोदसी ।**
**सम्प्राप्नुतः श्रीभूमी च सहिते वाऽप्रसादतः ।**
**अपः प्रजाः सुखवतीरजयस्त्वद्वशत्वतः ।**
**ज्ञानानि सन्धूनुहि च प्राप चोचा अपि स्वयम् ॥ ८ ॥**

**ऋग्भाष्यटीका– नहित्वा ॥** नत्वाम् । हे इन्द्र **ऋघायमाणं** कंड्वादिः वर्धमानं सर्वगतं **त्वा** त्वां **रोदसी** द्यावापृथिव्यौ तदभिमानिन्यौ श्रीभूमी अपि उभे सहिते वा **नहीन्वतः** नैव सम्प्राप्नुतो हि । व्याप्तिकर्मसु पाठात् । तयोरपि सर्वगतत्वात्कथमेतदित्यत आह– **अप्रसादत इति** ॥ त्वत्प्रसादेन विना । किञ्च । त्वं **स्वर्वतीः** सुखवतीः **अपः** प्रजाः स्वर्गिणो मुक्ताश्च **जेषः** अजयः । लङर्थे लेट् । कथं त्वद्वशत्वतस्तासाम् । एवंविधश्च त्वं स्वयं **अस्मभ्यं गाः** ज्ञानानि **सन्धूनुहि** कम्पय । गमय । अस्मान्प्रति प्रापय । चशब्दात्प्रसिद्धा गाश्च । समित्येतद्गवां विशेषणतया च व्याख्याति– **उच्चा अपीति** । गा इत्येतदपेक्षया स्त्रीलिङ्गत्वम् । यथायोगं भगवतीन्द्रेच व्याख्यानम् ॥ ८ ॥

**मन्त्रार्थमञ्जरी–** (हे इन्द्र) ऋघायमाणम्, वर्धमानम्, वृद्ध्यर्थादृघधातोः 'ताच्छील्य' इत्यादिना चानश्प्रत्यये 'आने मुक्' इति मुगागमे 'कण्ड्वादिभ्यो यक्' इति यगागमे 'अकृत्सार्वधातुकयोः' इति दीर्घे च रूपम्, सर्वगतमिति यावत् । त्वा त्वाम् । रोदसी, द्यावापृथिव्यौ, तदभिमानिन्यौ श्रीभूमी अपि । उभे, सहिते । नहि इन्वतः, नैव सम्प्राप्नुतो हि, 'इवि व्याप्तौ' इति धातोः, त्वत्प्रसादेन विना न प्राप्नुत इति भावः ॥ किं च (त्वम्) स्वर्वतीः, सुखवतीः । अपः प्रजाः, स्वर्गिणो मुक्ताँश्च । जेषः, अजयः, वशीकृतवानिति यावत्,

'जि जये' लडर्थे लेट्, मध्यमपुरुषे सिपि परतः 'लेटोऽडाटौ' इत्यडागमे 'सिब्बहुलं लेटि' इति सिपि तस्य षत्वे धातोर्गुणे लादेशसिपो रुत्वे विसर्गे च 'जेषः' इति रूपम् । एवं विधश्च (त्वं स्वयम्) अस्मभ्यम् । गाः, ज्ञानानि । सम् धूनुहि । यद्वा 'सम्' इति गोविशेषणम्, सम् गाः, प्रसिद्धागाः धूनुहि, कम्पय, 'धूञ् कम्पने' गमय, अस्मान्प्रति प्रापयेति यावत् ।।

**स्कन्द– न हि** इति निपातो नेत्यनेन समानार्थः । न त्वां **रोदसी** द्यावापृथिवी उभे अपि **ऋघायमाणं** 'ऋघायता अभियुजो भयन्ते (ऋ.४,८,८) इत्यादिप्रयोगदर्शनाद् ऋघायतिर्वधार्थः । घ्नन्तं शत्रून् । **इन्वतः** व्याप्तिकर्माऽयम् । व्याप्नुत । शत्रून् घ्नन् द्यावापृथिव्योः सकाशाच्छरीरेण वीर्येण वा त्वं महत्तरो भवसीत्यर्थः । किञ्च **जेषः** जयसि त्वं **अपः** । कीदृशः ? **स्वर्वतीः** स्वरादित्यः स्वरश्मिभिरादाय सामन्तिकानयनात् । स्वर्वत्यः । अथवा स्वर्शब्द सर्वपर्यायः । सर्वं साध्यं यासामस्ति ताः स्वर्वत्यः । ताः स्वर्वतीः । आदित्यरश्म्याहृताः सर्वस्य वा साधिका इत्यर्थः ।। ८ ।।

**वेङ्कटमाधव–** नहि त्वा द्यावापृथिव्यौ उभे अपि घ्नन्तं मेघं महत्तया व्याप्नुतः । तथा सति स त्वं जय दिवि स्थिता अपः । जित्वा चास्मभ्यं ता अप सं धूनुहि ।। ८ ।।

**मुद्गल–** हे इन्द्र **ऋघायमाणं** शत्रुवधं कुर्वाणं **त्वा** त्वां रोदसी उभे द्यावापृथिव्यावपि त्वदीयं महिमानं **नहि इन्वतः** व्याप्तुं न समर्थे इत्यर्थः । तादृशस्त्वं **स्वर्वतीः** स्वर्लोकयुक्ता अपः वृष्टिरूपाः जेषः जयेः । प्रेरयत्यर्थः । किं च वृष्टिप्रदानादन्नसम्पत्तेरूर्ध्वं **अस्मभ्यं** क्षीरादिरसप्रदा **गाः संधूनुहि** सम्यक् प्रेरय ।। ८ ।।

**सायण–** हे इन्द्र **ऋघायमाणं** शत्रुवधं कुर्वाणं त्वां **रोदसी उभे** द्यावापृथिव्यावपि त्वदीयं महिमानं **नहि इन्वतः** व्याप्तुं न समर्थे इत्यर्थः । तादृशस्त्वं **स्वर्वतीः** स्वर्लोकयुक्ता **अपः** वृष्टिरूपाः **जेषः** जयेः प्रेरय इत्यर्थः । अपां स्वर्गसम्बन्धश्चान्यत्र 'दिवो वृष्टिं च्यावयति' (तै.सं.३,३,४,१) इति श्रुतम् । किञ्च वृष्टिप्रदानात् अन्नसम्पत्तेरूर्ध्वं **अस्मभ्यं** क्षीरादिरसप्रदाः **गाः सं धूनुहि** सम्यक् प्रेरय ।

नहि । नञो हिशब्देन 'सह सुपा' (पा.सू.२,१,४) इति समासः । समासत्वादन्तोदात्त-

त्वम् । त्वा । 'अनुदात्तं सर्वम्' इत्यनुवृत्तौ 'त्वामौ द्वितीयायाः' (पा.सू.८,१,२३) इति त्वादेशः । रोदसी । रुदेः असुन् । नित्त्वादाद्युदात्तः । 'उगितश्च' (पा.सू.४,१,६) इति ङीप् । उभे । प्रातिपदिकस्वरेणान्तोदात्तः । श्या सहैकादेश उदात्तः । ऋघायमाणम् । नॄन् हन्तीति ऋघा । 'अन्येभ्योऽपि दृश्यन्ते' (पा.सू.३,२,७५) इति विच् । दृशिग्रहणस्य विध्यन्तरोपसङ्ग्रहणार्थत्वात् नकारलोपो हकारस्य च घकारः । अनृघा ऋघा भवतीत्यभूततद्भावे 'लोहितादिडाज्भ्यः क्यप्' (पा.सू.३,१,१३) इति क्यप्प्रत्ययो भवति । स ह्याकृतिगणः । 'लोपश्च हलः' (पा.३,१,१२) इत्यनुवृत्तेर्नकारलोपश्च । 'वा क्यषः' (पा.सू.१,३,९०) इत्यात्मनेपदम् । लटः शानच् । शपोऽदुपदेशात् परात् शानचो लसार्वधातुकानुदात्तत्वम् । शपः पित्त्वादनुदात्तत्वम् । लडादेशस्य तसश्च लसार्वधातुकस्वरेण धातुस्वर एव शिष्यते । 'हि च' (पा.सू.८,१,३४) इति निषेधात् 'तिङ्ङतिङः' इति निघातो न भवति । जेषः । जेः प्रार्थनायां लिङर्थे लेट् । तस्य मध्यमपुरुषैकवचनं सिप् । 'इतश्चलोपः परस्मैपदेषु' (पा.सू.३,४,९७) इति इकारलोपः । कर्तरि शपि प्राप्ते तदपवादः 'सिब्बहुलं लेटि' (पा.सू.३,१,३४) इति सिप् । अडागमस्य अनुदात्तत्वात् धातुस्वर एव शिष्यते । स्वरासामस्तीति स्वर्वत्यः । 'न्यङ्तायां 'स्वरितात्संहितायामनुदात्तानाम्' (पा.सू.१,२,३९) इत्येकश्रुतिः । स्वरित एव शिष्यते । अपः । 'ऊडिदम्' इत्यादिना विभक्तेरुदात्तत्वम् । धूनुहि । 'धूञ् कम्पने' । लोट् । 'सेर्ह्यपिच्च' । 'स्वादिभ्यः श्नुः' । 'उतश्च प्रत्ययादसंयोगपूर्वात्' (पा.सू.६,४,१०६) इति प्राप्तस्य लुकः छान्दसत्वादभावः ॥ ८ ॥

**सिद्धाञ्जनम्**– अष्टमीमृचमाह– हे इन्द्र! **रोदसी** द्यौः पृथिवी उभे अपि **ऋघायमाणं** उग्रतया अवतिष्ठमानं **त्वा** त्वां **न हि इन्वतः** न व्याप्नुतः, त्वां धर्तुं न शक्नुत इत्यर्थः । नेत्यर्थे 'नहि' इति निपातः । त्वं **स्वर्वतीः** स्वरादित्यः स्वर्लोको वा तद्वत्यः ज्योतिष्मत्यः ताः **अपः** अप्छब्दसङ्केतिताः ब्रह्माण्डधारणपोषणात्मिकाः ज्योतिर्वाहिनीः शक्तीः **जेषः** जयसि । जयतेः लेट् छान्दसं, जयेरित्याशासनम् । तात्त्विको सार्वकालिकजयक्रिया, अतो लङर्थे । चिज्ज्योतिरावरकवृत्ररूपतमोद्रिभेदनात् उक्तलक्षणानां अपां जयः बोध्यः। अत आह– **अस्मभ्यं गाः** प्रज्ञानमरीचीः सन्धूनुहि प्रेरय । 'ऋघायमाणं' अत्र शत्रुहिंसां कुर्वन्तमिति व्याख्यातारः। 'नॄन् हन्तीति नृहा, नकारलोपः, हकारस्य घकारः, एवं ऋघा ततः अभूततद्भावे लोहितादिडाज्भ्यः क्यप् । तस्मादात्मनेपदम् , लटः शानच् इति सायणीया व्युत्पत्तिः ॥ ८ ॥

### ऋक्संहिता पदपाठसहिता

**आश्रुत्कर्ण श्रुधी हवं नू चिद्दधिष्व मे गिरः ।**
**इन्द्र स्तोममिमं मम कृष्वा युजश्चिदन्तरम् ॥ ९ ॥**
आश्रुत्ऽकर्ण । श्रुधि । हवम् । नु । चित् । दधिष्व । मे । गिरः ।
इन्द्र । स्तोमम् । इमम् । मम । कृष्व । युजः । चित् । अन्तरम् ॥ ९ ॥

### ऋग्भाष्यम्

**बहुश्रवणकर्णास्मदाह्वानं शृणु चादरात् ।**
**अद्यैव च गिरो धेहि मयि स्तोमं च मत्कृतम् ।**
**प्रियं योगादपि कुरु ..................... ॥ ९ ॥**

**ऋग्भाष्यटीका–** आश्रुत् ॥ बहु ॥ हे **आश्रुत्कर्ण** आसमन्ताच्छृणुत इत्याश्रुतौ कर्णौ यस्य बहुश्रवणकर्णेति यावत् । **हवं** अस्मदाह्वानम् । **श्रुधि** शृणु । आश्रुत्कर्णश्चेत्स्वयमेव श्रोष्यति किं प्रार्थनेनेत्यत– **उक्तमादरादिति** ॥ **नुचित्** अद्यैव **मे** मयि **गिरः** वेदरूपाः **दधिष्व** धेहि वेदविदं मां कुरु । हे **इन्द्र इमं मम स्तोमं** मत्कृतं स्तुतिविशेषं **युजः चित्** योगादपि समाधिलक्षणात् **अन्तरं** सन्निकृष्टं प्रियमिति यावत् । **कृष्व** कुरु चशब्दा मिथः समुच्चयार्थाः ॥

**मन्त्रार्थमञ्जरी–** (हे) आश्रुत्कर्ण, आ समन्ताच्छृणुत इत्याश्रुतौ कर्णौ यस्य तस्य सम्बुद्धिः, बहुश्रवणकर्णेति यावत् । हवम्, अस्मदीयमाह्वानम् । श्रुधि, शृणु, 'श्रुशृणुपृकृवृभ्यश्छन्दसि' इति हेर्धिरादेशो विकरणलोपश्च । नु चित्, अद्यैव । मे, मयि । गिरः, वेदरूपा वाचः । दधिष्व, 'दध धारणे' धेहीत्यर्थः, वेदविदं मां कुर्विति यावत् । (हे इन्द्र) इमम् । मम स्तोमम्, मत्कृत-स्तुतिविशेषम् । युजः चित्, योगादपि समाधिलक्षणात् । अन्तरम्, संनिकृष्टम्, प्रियमिति यावत् । कृष्व, कुरुष्व, लुग्विकरणं छान्दसम्, संहितायां दैर्ध्यम् ॥ ९ ॥

**स्कन्द–** हे **आश्रुत्कर्ण! श्रुधी हवं** आह्वानम् । श्रुत्वा च **नू चित् दधिष्व** । 'नु' (निघं.२,१५) इति क्षिप्रनाम । चिच्छब्दः पदपूरणः । क्षिप्रं धारय मनसि स्थापय । शृण्वित्यर्थः । श्रवणार्थ एव वा सामर्थ्याद् दधातिः । किम् ? **गिरः** स्तुतीः लौकिकीर्याज्यानुवाक्यालक्षणा वा । न च गिर एव केवलाः । किन्तर्हि ? हे **इन्द्र! स्तोमं इमं मम** एवं स्वभूतं शस्त्रलक्षणम् ।

श्रुत्वा च **कृष्व** कुरुष्व । **युजः चित्** समनसः सन्निकृष्टतमः । कः पुनरन्द्रिस्य सहायः ? कुत्सो वा सखित्वात् सख्युश्च सहायताया अवश्यंभावित्वात् । विष्णुर्वा । तस्यापि 'सखे विष्णो वितरम्' (ऋ ४,१८,११) इति इन्द्रस्य सखित्वदर्शनात् । मरुद्गणो वा ।। ९ ।।

**वेङ्कटमाधव–** आभिमुख्येन निवेदितस्य श्रवणपरकर्ण । शृणु ह्वानम् । क्षिप्रमेव च हृदये धारय मदीया गिरः । इन्द्र! स्तोमं च इमं मदीय सहायाद् अपि तव सन्निकृष्टं कुरु ।। ९ ।।

**मुद्गल–** हे **आश्रुत्कर्ण** सर्वतः श्रोतारौ कर्णौ यस्य तादृश! इन्द्र! **हवं** अस्मदीयमाह्वानं **नु** क्षिप्रं **श्रुधि** शृणु । **मे** मम होतुः **गिरः चित्** स्तुतीरपि **दधिष्व** चित्ते धारय । किंच **मम** मदीयं **इमं स्तोमं** स्तोत्ररूपवाक्समूहं **युजः चित्** स्वकीयमसख्युरपि **अन्तरं कृष्व** आसन्नं कुरु । यथा तस्य वचनं त्वं प्रियं मन्यसे तद्वदस्मदीयस्तुतावपि प्रीतिं कुर्वित्यर्थः ।। ९ ।।

**सायण–** अभिप्लवषडहस्योक्थ्येषु तृतीयसवनेऽच्छावाकस्य षट्स्तोत्रियानुरूपयुगलेषु द्वितीयस्मिन् युगले 'आश्रुत्कर्ण' इति तृचोऽनुरूपः । 'एह्यु षु' इति खण्डे 'श्रुधी हवं तिरश्च्या आश्रुत्कर्ण श्रुधी हवम्' (आश्व.श्रौ.७,८) इति सूत्रितम् ।।

हे **आश्रुत्कर्ण** सर्वतः श्रोतारौ कर्णौ यस्य तादृक् **इन्द्र हवं** अस्मदीयमाह्वानं **नु** क्षिप्रं **श्रुधि** शृणु । **मे** मम होतुः गिरः **चित्** स्तुतीरपि **दधिष्व** चित्ते धारय । किञ्च **मम** मदीयं **इमं स्तोमं** स्तोत्ररूपं वाक्समूहं **युजश्चित्** स्वकीयसख्युरपि **अन्तरं कृष्व** आसन्नं कुरु । यथा वचनं तस्य प्रियं मन्यसे तद्वदस्मदीयस्तुतिष्वपि प्रीतिं कुरु इत्यर्थः ।

आश्रुत्कर्ण । आ समन्तात् शृणुत इति आश्रुत् । क्विप् । ह्रस्वस्य तुक् (पा.सू.६,१,७१) । तादृशौ कर्णौ यस्य । 'आमन्त्रितस्य च' (पा.सू. ६,१,१९८) इत्याद्युदात्तत्वम् । श्रुधी । 'श्रु श्रवणे' । लोटो हिः । 'श्रुवः शृ च' (पा.सू. ३,१,७४) इति विहितश्नोः 'बहुलं छन्दसि' (पा.सू.२,४,७३) इति लुक् । तत्सन्नियोगशिष्टत्वात् शृभावोऽपि निवर्तते । 'श्रुशृणुपृकृवृभ्यश्छन्दसि' (पा.सू.६,४,१०२) इति हेर्धिरादेशः । सति शिष्टत्वात् प्रत्ययस्वरः । 'आमन्त्रितं पूर्वमविद्यमानवत्' (पा.सू.८,१,७२) इत्यविद्यामानवत्त्वेन पदादपरत्वात् 'तिङ्ङतिङः' इति निघातो न भवति । संहितायां 'अन्येषामपि दृश्यते' (पा.सू.६,३,१३७) इति दीर्घः । हवम् । 'ह्वेञ् स्पर्धायां शब्दे च' । 'बहुलं छन्दसि' । (पा.सू.६,१,३४) इति

अनैमित्तिके सम्प्रसारणे कृते पश्चात् उकारान्तत्वेन 'ऋदोरप्' (पा.सू.३,३,५७) इति अप्प्रत्ययः । अपः पित्त्वात् धातुस्वरः । नु । संहितायां 'ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम्' (पा.सू.६,३,१३३) इति दीर्घः । चित् । चादिः अनुदात्तः । दधिष्व । दधातेर्लोट् । 'थासः से' । 'सवाभ्यां वामौ' (पा.सू.३,४,११७) शपः श्लुः इति । अभ्यासस्य ह्रस्वत्वादि । 'छन्दस्युभयथा' (पा.सु.३,४,११७) इति आर्धधातुकस्यापि स्वीकारात् इडागमः । आकारलोपः । निघातः । मम । 'तवममौ ङसि' (पा.सू.७,२,९६) इत्यनेन मपर्यन्तस्य ममादेशः । प्रातिपदिकस्वरेणान्तोदात्तत्वे प्राप्ते 'युष्मदस्मदोर्ङसि' (पा.सू.६,१,२११) इत्याद्युदात्तत्वम् । कृष्व । 'डुकृञ् करणे' । लोट् । 'थासः से' । 'सवाभ्यां वामौ' । शपो 'बहुलं छन्दसि' इति लुक् । सति शिष्टत्वात् प्रत्ययस्वरः । पादादित्वात् न निघातः । युजः । 'सावेकाचः' (पा.सू.६,१,१६८) इति विभक्तेरुदात्तत्वम् । अन्तरम् । वृषादित्वादाद्युदात्तः ॥

**सिद्धाञ्जनम्**– नवमीमृचमाह - **आश्रुत्कर्ण** आ सर्वतः शृणुत इति आश्रुतौ (क्विप्) तौ कर्णे यस्य तादृश, **इन्द्र मे** मम हवं आह्वानं **श्रुधि** शृणु **नु** क्षिप्रम् । शीघ्रश्रवणशालिनौ कर्णौ तीव्रौ, न मन्दौ, तस्मात् क्षिप्रमाकर्णनं प्रार्थ्यते । **गिरः चित्** स्तुतीरपि **दधिष्व** धत्स्व (दधातेः छान्दसम् ) चित्ते धारयेत्यर्थः । **युजः** युञ्जतः त्वयि युक्तस्य सख्युः **मम इमं स्तोमं** स्तोत्रं **अन्तरं चित्** अत्यासन्नमपि **कृष्व** कुरु अन्ततरं समीपम् । अत एव 'आसन्नं' इति सायणीयम् । अर्थात् प्रियं हृद्यमिति बोध्यम् । तरप्तमपोः तकारलोपः छान्दसः 'अन्तमानां' इति प्रयोगेऽपि द्रष्टव्यः आह्वानस्य श्रवणम् , गिरां चित्ते धारणम् , स्तोमस्य हृद्यत्वेन स्वीकरणम्, इति पदत्रयवान् क्रमः ऋषेः स्तवप्रकारगतः, तदनुरोधेन इन्द्रस्य तत्स्वीकारगतश्चेति लक्षणीयम् ॥

### ऋक्संहिता पदपाठसहिता

**विद्मा हि त्वा वृषन्तमं वाजेषु हवनश्रुतम् ।**
**वृषन्तमस्य हूमह ऊतिं सहस्रसातमाम् ॥ १० ॥**
विद्म । हि । त्वा । वृषन्ऽतमम् । वाजेषु । हवनऽश्रुतम् ।
वृषन्ऽतमस्य । हूमहे । ऊतिम् । सहस्रसातमाम् ॥ १० ॥

**ऋग्भाष्यम्**

**................. विद्म त्वां शक्तिमत्तमम् ।**
**श्रोतारं युत्सु चाह्वानमाह्वयामस्तवावनम् ।**
**बहुलाभोत्तममिति स्थानान्तरगते ऋचौ ।**
**दृष्ट्वेन्द्रं यज्ञगं याभ्यां मधुच्छन्दाः समस्तुवत् ।**
**आतून इति तेनैव न विरुद्धा शतर्चिता ।। १० ।।**

**ऋग्भाष्यटीका– विद्माहि** ।। विद्म त्वाम् । **हि** यस्मात् **वृषन्तमं** वृषः शक्तिमान् अतिशयेन वृषो वृषन्तमः । छान्दसो नकारागमः । नकारान्ताद्वा तमप् । तत्र नलोपाभावश्छान्दसः । तं वृषन्तमं शक्तिमत्तमम् । **वाजेषु** युद्धेषु **हवनश्रुतं** भक्ताह्वानस्य श्रोतारं च **त्वा** त्वां **विद्म** विद्मः । तस्मात् **वृषन्तमस्य** शक्तिमत्तमस्य तव **सहस्रसातमां ऊर्तिं** सहस्रं सनोतीति सहस्रसाः । अतिशयेन सहस्रसाः सहस्रसातमा । तां बहुलाभोत्तममवनमतिलाभयुक्तां रक्षां **हूमहे** आह्वयामः । प्रार्थयाम इति यावत् । श्रोतारमिति तृन् । तेन द्वितीयोपपत्तिः । ऋक्शतसमाप्त्यर्थ इतिशब्दः । नन्वित उत्तरे अपि ऋचौ मधुच्छन्दसा दृष्टे । ऋष्यन्तरे प्रमाणाभावात् । तत्कथं तस्य शतर्चित्वमित्यत आह– **स्थानान्तरेति** ।। येन कारणेनातून इत्यादिके ऋचौ स्थानान्तरगते आनुपूर्व्यंतरस्थे तेन कारणेन मधुच्छन्दसः शतर्चिता नैव विरुद्धा । एकानुपूर्वीनिमित्तत्वात्तस्याः । देशकालावस्थान्तरदृष्टत्वाच्च न विरुद्धे इत्याह– **दृष्ट्वेति** ।। याभ्यां ते स्थानान्तरगते इति सम्बन्धः ।। १० ।।

**मन्त्रार्थमञ्जरी–** हि, यस्मात् । वृषन्तमम्, वृषः शक्तिमान्, अतिशयेन वृषो वृषन्तमस्तम्, छान्दसो नकारागमः, शक्तिमत्तमम् । वाजेषु, युद्धेषु । हवनश्रुतम्, आह्वानस्य श्रोतारम् । (च) त्वा, त्वाम् । विद्म, विद्मः, जानीमः । (तस्मात्) । वृषन्तमस्य, शक्तिमत्तमस्य । (तव) सहस्रसातमाम्, सहस्रं सनोतीति सहस्रसा(:), 'षणु दाने' डः, स्त्रीत्वम्, यद्वा– डाप्रत्ययः, अथ वा– 'जनसनखन' इति विटि तस्य सर्वस्य लोपे 'विड्वनोरनुनासिकस्यात्' इति नकार-स्याकारः, अतिशयेन सहस्रसा(:) सहस्रसातमा ताम्, बहुलाभकृत्तमाम् । ऊतिम्, रक्षाम्, अवतेः औणादिके तिप्रत्यये 'तितुत्र' इतीडभावे 'क्ङिति' इत्यननुवर्तनपक्षे 'ज्वरत्वर' इत्यूठि 'ऊतिः'

इति सिद्धेः । हूमहे, आह्वयामः, प्रार्थयामह इति यावत्, 'ह्वेञ् शब्दे' इत्यतो लुग्विकरणादि च्छान्दसम् ।। १० ।।

**स्कन्द–** हिशब्दो यस्मादर्थे । यस्मात् **विद्म** जानीमः **त्वा** एव **वृषन्तमं** अतिशयेन वर्षितारम् । **वाजेषु** सङ्ग्रामेषु **हवनश्रुतं** आर्तानामाह्वानस्य श्रोतारम् । प्रार्थना लक्ष्यते । यस्माच्छब्दश्रुतेस्तस्माच्छब्दोऽध्याहर्तव्यः । तस्मात् **वृषन्तमस्य** अतिशयेन वर्षितुः तव स्वभूताः **हूमहे** आह्वानस्याहूयमानप्रार्थनाविनाभावित्वादाह्वानेनात्र प्रार्थना लक्ष्यते । प्रार्थनार्थ एव वा सामर्थ्याद् ह्वयतिः । प्रार्थयामहे । **ऊतिं** पालनं **सहस्रसातमां** स्तोमसहस्राणामतिशयेन संभक्ताम् । यथा बहूनि स्तोत्रसहस्राणि पठितानीत्यर्थः ।। १० ।।

**वेङ्कटमाधव–** जानीमः हि त्वां अतिशयेन वर्षितारं सङ्ग्रामेषु च योद्धृणामाह्वानस्य श्रोतारम् । अतः तवातिशयेन सहस्रस्य दात्रीं ऊतिं हवामहे अस्माकमियमस्तु इति ।। १० ।।

**मुद्गल–** हे इन्द्र **त्वा** त्वां **विद्मः** जानीमः । कीदृशः त्वाम् ? **वृषन्तमं** कामानामतिशयेन वर्षितारम् । **वाजेषु** सङ्ग्रामेषु **हवनश्रुतं** अस्मदीयस्याह्वानस्य श्रोतारम् । **वृषन्तमस्य** अतिशयेन कामानां वर्षितुस्तव **ऊतिं** रक्षामस्मद्विषयामुद्दिश्य **हूमहे** त्वामाह्वयामः । कीदृशीमूतिम् ? **सहस्रसातमां** अतिशयेन धनसहस्राणां दात्रीम् । **हि** पूरणः ।। १० ।।

**सायण–** हे इन्द्र त्वां **विद्म** जानीमः । कीदृशं त्वाम् ? **वृषन्तमं** कामानामतिशयेन वर्षितारं **वाजेषु** सङ्ग्रामेषु **हवनश्रुतं** अस्मदीयस्याह्वानस्य श्रोतरम् । **वृषन्तमस्य** अतिशयेन कामादीनां वर्षितुस्तव **ऊतिं** रक्षामस्मद्विषयामुद्दिश्य **हूमहे** त्वामाह्वयामः । कीदृशीमूतिम् ? **सहस्रसातमां** अतिशयेन धनसहस्राणां दात्रीम् ।

विद्म । 'विदो लटो वा' (पा.सू.३,४,८३) इति मसो मादेशः । प्रत्ययस्वरेणान्तोदात्तः । 'द्व्यचोऽतस्तिङः' (पा.सू.६,३,१३५) इति संहितायां दीर्घः । वृषन्तमम् । 'पृषु वृषु मृषु सेचने' । 'कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिवः' (उ.सू.१,१५४) इति कनिन् । नित्त्वादाद्युदात्तः । तमपः पित्त्वात् स एव शिष्यते । 'अयस्मयादीनि छन्दसि' (पा.सू.१,४,२०) इति भत्वेन पदत्वाभावात् नलोपाभावः (पा.सू.८,२,७) । वाजेषु । वाजशब्दो वृषादिः आद्युदात्तः । हवनश्रुतम् । 'ह्वः' इत्यनुवृत्तौ 'बहुलं छन्दसि' (पा.सू.६,१,३४) इति ल्युटि सम्प्रसारणम् ।

हवनं शृणोतीति क्विप् । तुगागमः । वृषन्तमस्य । उक्तम् । हूमहे । 'बहुलं छन्दसि' इति सम्प्रसारणम् । 'शपः' इत्यनुवृत्तौ 'बहुलं छन्दसि' (पा.सू.२,४,७३) इति शपो लुक् । ऊतिम् । 'ऊतियूति' (पा.सू.३,३,९७) इत्यादिना अन्तोदात्तो निपातितः । सहस्रसातमाम् । सहस्रं सनोतीति सहस्रसाः । 'षणु दाने' । 'जनसनखनक्रमगमो विट्' (पा.सू.३,२,६७) । 'विड्वनोरनुनासिकस्यात्' (पा.सू.६,४,४१) इति आकारादेशः । कृदुत्तरपदप्रकृतिस्वरत्वं तमपः पित्त्वादेव शिष्यते ।। १० ।।

**सिद्धाञ्जनम्–** दशमीमृचमाह– हे इन्द्र, **त्वा** त्वां **वृषन्तमं** अतिशयेन वर्षितारं दिव्यानामभीष्टानाम् । **वाजेषु** समृद्धिषु निमित्तभूतासु **हवनश्रुतं** आह्वानस्य श्रोतारं (निधेयविशेषणे द्वे अपि) **विद्म** विद्मः (मसो मादेशः)। **हि** यस्मादेवं जानीमः तस्मात् **वृषन्तमस्य** अतिशयेन वर्षितुस्तव **ऊतिं** त्वत्कर्तृकां वृद्धिं **हूमहे** आह्वयामः । कीदृशीमूतिम् ? **सहस्रसातमां** अतिशयेन सहस्रस्य दात्रीम्। सहस्रं बहुविधस्य ऐश्वर्यस्य द्योतकम् ।। १० ।।

### ऋक्संहिता पदपाठसहिता

**आतूनं इन्द्र कौशिक मन्दसानः सुतं पिब ।**
**नव्यमायुः प्र सूतिर कृधी सहस्रसामृषिम् ।। ११ ।।**

आ । तु । नः । इन्द्र । कौशिक । मन्दसानः । सुतम् । पिब ।
नव्यम् । आयुः । प्र। सु । तिर । कृधि । सहस्रऽसाम् । ऋषिम्।। ११ ।।

### ऋग्भाष्यम्

**मात्रा कुशैर्गृहीतत्वाजन्मन्यासीत्सकौशिकः ।**
**गाधित्वाद्वा हिरण्याण्डकोशस्थत्वाद्धरिस्तथा ।**
**मन्दसानो नित्यसुखी स्तुत्यमायुश्च नस्तिर ।**
**ऋषिं सहस्रलाभं मां कुरुच ........ ।। ११ ।।**

**ऋग्भाष्यटीका– आतूनः** । मात्रा । अदित्या जन्मनि जन्मसमये । स इन्द्रः गाधित्वाद्वा **कौशिकः** कुशिकापत्यत्वात् गाधिनः हरिस्तथा कौशिकः । हिरण्यग्रहणं ब्रह्माण्डद्योतनार्थं कुशशब्दात् गृहीतार्थे कोशशब्दाद्भवार्थे वा ठक् । मन्दो मदः आधिक्येऽधिकं नित्यसुखम् । तस्य सानो

लाभो यस्यासौ **मन्दसानः** नित्यसुखी । यद्वा सानः सम्भजनम् । संशब्देन नित्यत्वं लभ्यते । हे इन्द्र कौशिक मन्दसानस्त्वं नोऽस्माकं **सुतं** सोमं तु क्षिप्रमापिब । **नव्यं** णु स्तुतौ स्तुत्यं आयुश्च **नः प्रसूतिर** अतिप्रकर्षेण देहि । मां **सहस्रसां** सहस्रलाभयुक्तं **ऋषिं** ज्ञानिनं च **कृधि** कुरु ॥ ११ ॥

**मन्त्रार्थमञ्जरी**–(हे) कौशिक, ब्रह्माण्डकोशस्थ, कोशशब्दाद्भावार्थे ठक् (ठञ्) । इन्द्र, विष्णो ।

(हे) कौशिक, अदितिदेव्या जन्मसमये कुशैर्गृहीतत्वहेतुना गाधित्वहेतुना वा कौशिकशब्दोक्त, कुशशब्दाद्गृहीतार्थे ठक्, तस्यैकादेश आदिवृध्द्यन्त्याकारलोपौ, (गाधिनः कुशिकापत्यत्वात्कुशिक-शब्दादपत्यार्थे 'ऋष्यन्धक' इत्यादिनाण् वा) इन्द्र, पुरंदर । मन्दसानः, मन्दो मदः, 'आधिक्येऽधिकम्' (म.व्या.सू.) इति वचनान्नित्यसुखम्, तस्य सानो लाभो यस्यासौ मन्दसानो नित्यसुखी (त्वम्) । नः, अस्माकम् । सुतम्, सोमम् । तु, क्षिप्रम् । आ पिब । नव्यम्, 'णु स्तुतौ' 'अचो यत्' इति यत्प्रत्ययः, स्तुत्यम् । आयुः (च) (नः) अस्मभ्यम् । प्र सु तिर, अतिप्रकर्षेण देहि । (माम्) सहस्रसाम्, सहस्रलाभयुक्तम् । ऋषिम्, ज्ञानिनम् । (च) कृधि, कुरु ॥ ११ ॥

**स्कन्द**– आ इत्युपसर्गः पिब इत्याख्यातेन सम्बन्धयितव्यः । तु इति पदपूरणः । क्षिप्रार्थो वा क्षिप्रम् । **नः** अस्माकं स्वभूतम् । हे इन्द्र! **कौशिक!** कुशिकस्य पुत्र! अत्र चेतिहासमाचक्षते– इषीरथपुत्रः कुशिको नाम राजा पुत्रमिन्द्रतुल्यं कामयमानो ब्रह्मचर्यं चचार । तस्य गाथी नामेन्द्र एवः स्वयं पुत्रो जात इति । तदुक्तम्– 'पुत्रमिन्द्रसमं कुशिको ब्रह्मचर्यं चचार इच्छन् । तस्य त्वैषीरथेर्गाथी पुत्र इन्द्रः स्वय जज्ञे' (तु.ऋ.अनु.२,३,१) इति । अथवा कुशिभिर्बद्धं स्तनं द्रष्टा दोग्धा वा कौशिकः । तथाहि चरकाध्वर्यव इतिहासमधीयते– 'चत्वारो वै पृश्नेः स्तना आसंस्ततस्त्रिभिर्देवेभ्योऽदुहत् । कुशीभिरेकोऽनुनद्ध आसीत् । तं वा इन्द्र एवापश्यत् । तेनेन्द्रायैवादुहत् । तद्वा अस्य कौशिकत्वम् । (मै.४,५,७) इति । तस्य सम्बोधनं हि कौशिक । **मन्दसानः** मन्दतिः स्तुत्यर्थो वा मोदनार्थो वा । स्तूयमानो मोदमानो वा । **सुतं** सोमं आपिब । आपीय च **नव्यं** स्तुत्यं अत्युत्कृष्टं **आयुः** अन्नम् । अथवा नवं

**नव्यम्** । स्वार्थिको यत् प्रत्ययः । आयुरपि जीवितमुच्यते । अचिरप्रवृत्तमिदमस्माकं जीवितम् । **प्रसूतिर** प्रसुपूर्वस्तिरतिः सर्वत्र वृद्ध्यर्थः । सुष्ठु प्रवर्धय । **कृधि** कुरु च । मां **सहस्रसां** धनसहस्राणां संभक्तारं **ऋषिं** मधुच्छन्दोनामानम् ।। ११ ।।

**वेङ्कटमाधव–** 'पुत्रमिन्द्रसममिच्छत् कुशिको ब्रह्मचर्यं चचार । तस्येन्द्रः स्वयमेव पुत्रोऽभूत् । साऽस्य कौशिकता' । 'स सुवर्णरजताभ्यां कुशीभ्यां परिगृहीत आसीत् । साऽस्य कौशिकता' (तेजा १,५,१०,२) इति ब्राह्मणम् वा ।।

आभिमुख्येन क्षिप्रं पिब इन्द्र! कौशिक! अस्माकं प्रहृष्यन् सोमं नवतमं आयुश्च सुष्ठु प्रवर्धय । कुरु च सहस्रधनस्य संभक्तारं मधुच्छन्दसमृषिम् ।। ११ ।।

**मुद्गल–** हे **इन्द्र! तु** क्षिप्रं **नः** अस्मान् प्रति आ गच्छेति शेषः । हे **कौशिक!** कुशिकस्य पुत्रेन्द्र! **मन्दसानः** हृष्टो भूत्वा **सुतं** अभिषुत सोमं पिब । यद्यपि विश्वामित्रः कुशिकस्य पुत्रस्तथाऽपि तद्रूपेणेन्द्रस्यैवोत्पन्नत्वात् कुशिकस्य पुत्रत्वमविरुद्धम् । अनुक्रमणिकायाम्– 'कुशिकस्त्वैषीरथिरिन्द्रतुल्यं पुत्रमिच्छन् ब्रह्मचर्यं चचार । तस्येन्द्र एव गाधी पुत्रो जज्ञे'' (ऋ अनु.३,१) इति उक्तम् । **नव्यं** सर्वदेवस्तुत्यं कर्मानुष्ठानपरं **आयुः** जीवितं **प्रसूतिर** प्रकर्षेण सुष्ठु वर्धय । ततो मां **सहस्रसां** सहस्रसङ्ख्याकलाभोपेतं **ऋषिं** अतीन्द्रियद्रष्टारं कृधि कुरु ।।११।।

**सायण–** हे **इन्द्र तु** क्षिप्रं **नः** अस्मान् प्रति **आ** गच्छेति शेषः । हे **कौशिक** कुशिकस्य पुत्र इन्द्र **मन्दसानः** हृष्टो भूत्वा **सुतं** अभिषुतं सोमं पिब । यद्यपि विश्वामित्रः कुशिकस्य पुत्रस्तथापि तद्रूपेणेन्द्रस्यैवोत्पन्नत्वात् कुशिकपुत्रत्वमविरुद्धम् । अयं वृत्तान्तोऽनुक्रमणिकाया-मुक्तः– 'कुशिकस्त्वैषीरथिरिन्द्रतुल्यं पुत्रमिच्छन् ब्रह्मचर्यं चचार । तस्येन्द्र एव गाथी पुत्रो जज्ञे' (अनु.इ.सं.३,१) इति । हे इन्द्र **नव्यं** सर्वैर्देवैः स्तुत्यं कर्मानुष्ठानपरं **आयुः** जीवितं **प्र सू तिर** प्रकर्षेण सुष्ठु वर्धय । ततो मां **सहस्रसां** सहस्रसङ्ख्याकलाभोपेतं ऋषिं अतीन्द्रियद्रष्टारं **कृधि** कुरु ।

तु । संहितायाम् 'ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम्' (पा.सू.६,३,१३३) इति दीर्घः । नः । संहितायाम् 'उदात्तादनुदात्तस्य स्वरितः' । इन्द्र । आमन्त्रितनिघातः । कौशिक । निघातः । मन्दसानः हृष्यन् । 'मदिस्तुतिमोदमदस्वप्नकान्तिगतिषु' । 'असानच्' (उ.सू.२,

२४३) इत्यनुवृत्तौ 'ऋञ्जिवृधिमन्दिसहिभ्यः कित्' (उ.सू.२,२४४) इति असानच् प्रत्ययः । चित्त्वादन्तोदात्तः । सुतम् । प्रत्ययस्वरः । नव्यम् । 'णु स्तुतौ' । 'अचो यत्' (पा.सू. ३,१,९७) । गुणः । 'वान्तो यि प्रत्यये' (प्रा.सू.६,१,७९) इति अवादेशः । 'यतोऽनाव:' इत्याद्युदात्तत्वम् । आयुः । 'उसि, नित्' इत्यनुवृत्तौ 'एतेर्णिच्च' (उ.सू.२,२७५) इति उसिप्रत्ययः । णित्वात् वृद्ध्यायादेशौ । नित्त्वादाद्युदात्तत्वम् । सु । 'निपातस्य च' इति संहितायां दीर्घत्वम् । तिर । तरतेर्व्यत्ययेन शः । 'ऋत इद्धातोः' (पा.सू.७.१.१००) इति इत्वम् । 'अतो हेः' (पा.सू.६,४,१०५) इति हेर्लुक् । कृधि । 'डुकृञ् करणे' । 'बहुलं छन्दसि' इति शपो लुक् । 'शुश्रृणुपृकृवृभ्यश्छन्दसि' इति हेर्धिरादेशः । सहस्रसाम् । उक्तम् । ऋषिम् । 'ऋषी गतौ' । 'इन्' इत्यनुवृत्तौ 'इगुपधात्किश्च' (उ.सू.४,५५९) । किंत्त्वाद्गुणाभावः । नित्त्वादाद्युदात्तत्वम् ।। ११ ।।

**सिद्धाञ्जनम्–** एकादशीमृचमाह– ऐषिरथेः कुशिकस्य प्रार्थनानुरोधेन इन्द्र एव तत्पुत्रो विश्वामित्रो जात इति वृत्तान्तमुदाहृत्य 'कौशिक' इति अस्यामृचि इन्द्रस्य सम्बोधनमुपपादयन्ति व्याख्यातारः । ऋग्वेदे बहुषु सूक्तेषु उपासक ऋषिरुपास्यमानं देवं स्वनाम्नाऽभिधत्ते। अत्र कारणमिदं भवति । उपासके मानुषे उपास्यस्य दैवतस्य जन्मलाभात् स्वनाम्मा ऋषिर्व्यवहरति साक्षात्कृतं तद्दैवतम् । स्वात्मरूपतया दैवतं पश्यतीत्युक्तम् भवति । अन्यच्च, ऋषेः स्वनाम्ना गोत्रनाम्ना वा देवतायां अभिहितायां, ऋषौ देवतायां च अवयवार्थ उपपद्यते । गोतम-जमदग्नि-भरद्वाजादयोऽत्र निदर्शनम् । अस्मिन् , कुशिकस्य गोत्रापत्यं कौशिको मधुच्छन्दाः। कोशादृषेः शारीरकोशाद्भवति, ब्रह्माण्डकोशे वा भवतीति कौशिकः । भवार्थे ठक् । अथ ऋगर्थः स्पष्टो भवति । हे **इन्द्र कौशिक नः** अस्मदर्थं **आ** आगच्छ। तु पादपूरणः । कीदृशः सन् ? **मन्दसानः,** मन्दतेः असानच्; मोदमानः । आगत्य **सुतं** अभिषुतं सोमं पिब । नव्यं स्तुत्यं उत्कृष्टं नवं नूतनं वा **आयुः** जीवितं अस्मदीयमिति शेषः । **प्रसुतिर** प्रकर्षेण सुष्ठु वर्धय । तरतेर्व्यत्यय इति सायणीयम् । अपि च **सहस्रसां** सहस्रस्य संभक्तारं **ऋषिं** अतीन्द्रियार्थदर्शिनं **कृधि** कुरु । अतीन्द्रियदर्शने सिद्धे विभवसहस्रप्राप्तेः सम्भव इति तथाविधमृषित्वं मे सम्पादयेत्युक्तम् ।। ११ ।।

## ऋक्संहिता पदपाठसहिता

**परि॑त्वा गिर्वणो॒ गिर॑ इ॒मा भ॑वन्तु वि॒श्वतः॑ ।**
**वृ॒द्धायु॒मनु॒वृद्ध॑यो॒ जुष्टा॑ भवन्तु॒ जुष्ट॑यः ॥ १२ ॥**
**परि॑ । त्वा॒ । गि॒र्व॒णः॒ । गिरः॑ । इ॒माः । भ॒व॒न्तु॒ । वि॒श्वतः॑ ।**
**वृ॒द्धऽआ॑युम् । अनु॑ । वृद्ध॑यः । जुष्टाः॑ । भ॒व॒न्तु॒ । जुष्ट॑यः ॥ १२ ॥**

## ऋग्भाष्यम्

**........................... त्वा इमा गिरः ।**
**सर्वदा परितः सन्तु मदीयाः सर्वलाभिनम् ।**
**वृद्धिरूपा गिरो जुष्टाः सेवारूपाश्च सन्तु नः ॥ १२ ॥**

**ऋग्भाष्यटीका– परित्वा** ॥ त्वा इमाः । हे **गिर्वणः इमाः** मदीया **गिरः** स्तुतिरूपा वाचो **विश्वतः** सर्वदा वृद्धः पूर्ण आयो लाभो यस्यासौ **वृद्धायुः** तं सर्वलाभिनं **त्वा** त्वां **परि** परितो **भवन्तु** अतिशयेन त्वद्विषया भवन्तु । किञ्च । **वृद्धयः** वृद्धिरूपास्त्वद्वृद्धिप्रकाशिन्यो **जुष्टाः** सेव्याः नो गिरो **जुष्टयः** अनुभवन्तु त्वत्सेवानुरूपाश्च सन्तु ॥ १२ ॥

**मन्त्रार्थमञ्जरी–** (हे) गिर्वणः, गीर्भिर्वननीय, व्याख्यातं पदमेतत्पुरस्तात् 'आ त्वा॑ विशन्त्वि॒' इत्यत्र । इमाः, मदीयाः । गिरः, स्तुतिरूपा वाचः । विश्वतः, विश्वस्मिन्काले, सर्वदेति यावत् । वृद्धायुम्, वृद्धः पूर्ण आयो लाभो यस्यासौ वृद्धायुस्तम्, व्यत्ययेनोकारः । सर्वलाभिनम् । त्वा, त्वाम् । परि भवन्तु, परिवृता भवन्तु, अतिशयेन त्वद्विषया भवन्तु । किं च, वृद्धयः, वृद्धिरूपाः, त्वद्वृद्धिप्रकाशिन्यः । जुष्टाः, सेव्याः । (नः) (गिरः) जुष्टयः अनु भवन्तु, त्वत्सेवानुरूपाश्च सन्तु ॥ १२ ॥

**स्कन्द–** परि इत्युपसर्गो भवन्तु इत्याख्यातेन सम्बन्धयितव्यः । हे **गिर्वणः** स्तुतिभिः सम्भजनीय । स्तुतिभिर्वा सभक्त! **गिरः इमाः** अस्मदीया **परि भवन्तु** परिपूर्वो भवति सर्वत्र परिग्रहे । परिगृह्णन्तु । **विश्वतः** सर्वतः । कीदृशम् ? **वृद्धायुं** एतिर्गत्यर्थः । वृद्धान् शत्रून् वधाय प्रति गन्तारम् । कीदृशः? **अनुवृद्धयः** अनु इत्येष पदपूरणः । सुशब्दस्य वाऽर्थे । सुष्ठु वृद्धाः । ताश्च ते **जुष्टाः** प्रिया भवन्तु **जुष्टयः** प्रीणयित्र्यः ॥ १२ ॥

**वेङ्कटमाधव–** 'सुरूपकृत्नुमूतये' (ऋ १,४,१) इत्याद्या गिरः त्वां गीर्भिर्वननीय! सर्वतः **परि भवन्तु** परितो भवन्तु । तथा वर्धितान्नं त्वां अनु अस्माकं **वृद्धयः भवंतु** पर्याप्ताश्च भवन्तु अस्माकं श्रियः ।। १२ ।।

**मुद्गल–** हे **गिर्वणः!** अस्मदीत्यस्तुतिभागिन्द्र । **विश्वतः** सर्वेषु कर्मसु प्रयुज्यमानाः **इमाः गिरः** अस्मदीयस्तुतयः **त्वा** त्वां **परि भवन्तु** सर्वतः प्राप्नुवन्तु । कीदृश्यो गिरः ? **वृद्धायुं अनु** प्रवृद्धेनायुष्येणोपेतं त्वामनुसृत्य **वृद्धयः** वर्धमानाः । किञ्च एता गिरः **जुष्टाः** त्वया सेविताः सत्यः **जुष्टयः** अस्माकं प्रीतिहेतवः भवन्तु ।। १२ ।।

**सायण–** प्रवर्ग्ये 'परि त्वा' इत्यभिष्टुयात् । 'स्पृष्ट्वोदकं' इति खण्डे 'परि त्वा गिर्वणो गिरोऽधि द्वयोरदधा उक्थ्यं वचः' (आश्व.श्रौ.४,६) इति सूत्रितम् । तथा हविर्धानप्रवर्तने सेयं परिधानीया । 'हविर्धाने प्रवर्तयन्ति' इति खण्डे 'परि त्वा गिर्वणो गिर इति परिदध्यात्' (आश्व.श्रौ.४,९) इति सूत्रितम् । तथा ब्राह्मणं च– 'परि त्वा गिर्वणो गिर इत्युत्तमया परिदधाति' (ऐ.ब्रा.१,२९) इति ।।

हे **गिर्वणः!** अस्मदीयस्तुतिभागिन्द्र **विश्वतः** सर्वेषु कर्मसु प्रयुज्यमानाः **इमाः गिरः** अस्मदीयाः स्तुतयः **त्वा** त्वां **परि भवन्तु** सर्वतः प्राप्नुवन्तु । कीदृश्यो गिरः ? **वृद्धायुमनु** प्रवृद्धेनायुष्येणोपेतं त्वामनुसृत्य **वृद्धयः** वर्धमानाः । किं च एता गिरः **जुष्टाः** त्वया सेविताः सत्यः **जुष्टयः** अस्माकं प्रीतिहेतवः भवन्तु ।

गिर्वणः । गीर्भिवन्यत इति गिर्वणाः । 'वन षण सम्भक्तौ' । 'सर्वधातुभ्योऽसुन्' । गिरः । उपधाया दीर्घाभावश्छान्दसः । आमन्त्रितनिघातः । विश्वतः । 'लिति' (पा.सू.६,१,१९३) इति प्रत्ययात्पूर्वस्योदात्तत्वम् । वृद्धायुम् । 'वृधु वृद्धौ' । क्तप्रत्ययः । 'उदितो वा' (पा.सू. ७,२,५६) इति इटः त्क्वाप्रत्यये विकल्पितत्वात् 'यस्य विभाषा' (पा.सू.७,२,१५) इति निष्ठायां इडभावः । प्रत्ययस्वरः । 'इण् गतौ' । 'छन्दसीणः' (उ.सू.१,२) इति उण् । णित्त्वात् वृद्धिः आयादेशश्च । वृद्धमायुर्यस्य । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । वृद्धयः । वृधेः क्तिनि 'तितुत्रतथसिसुसरकसेषु च' (पा.सू.७,२,१४) इति इढभावः । 'जुष्टार्पिते' इत्यनुवृत्तौ 'नित्यं मन्त्रे' (पा.सू.६,१,२१०) इत्याद्युदात्तत्वम् । जुष्टयः । 'जुषी प्रीतिसेवनयोः' (क्तिन् । 'तितुत्र' इति इडभावः । नित्त्वादाद्युदात्तः ।। २० ।।

**सिद्धाञ्जनम्–** द्वादशीमृचमाह– हे **गिर्वणः!** गीर्भिर्वननीय स्तोत्रभागित्यर्थः । **विश्वतः** सर्वथा, सर्वासु अवस्थासु सर्वेष्वाराधनेषु, **इमाः** मदीयाः **गिरः** स्तुतयः **त्वा परि** त्वां परितः **भवन्तु** प्राप्नुवन्तु। कीदृश्यो गिरः ? **वृद्धायुं अनु** ,अस्मासु प्रवृद्धजीवितं त्वां अनुसृत्य **वृद्धयः** वर्धमानाः, **जुष्टाः** सेविताः, त्वया प्रीत्या स्वीकृता इत्यर्थः, **जुष्टयः** प्रीतिहेतवः भवन्तु । त्वत्प्रीतिरेवास्माकं प्रीतिहेतुरिति हृदयम् ।। १२ ।।

**।। इति प्रथमाष्टके प्रथमाध्याये विंशो वर्गः ।।**

## ।। अथ एकविंशो वर्गः ।।

## (सूक्तम् ११)

## ऋक्संहिता पदपाठसहिता

८ मधुच्छन्दा वैश्वामित्रः । इन्द्रः । अनुष्टुप् ।

**इन्द्रं विश्वा अवीवृधन्त्समुद्रव्यचसं गिरः ।**
**रथीतमं रथीनां वाजानां सत्पतिं पतिम् ।। १ ।।**
इन्द्रम् । विश्वाः । अवीवृधन् । समुद्रऽव्यचसम् । गिरः ।
रथिऽतमम् । रथिनाम् । वाजानाम् । सत्ऽपतिम् । पतिम् ।। १ ।।

### ऋग्भाष्यम्

**अष्टावृचः पुनस्तेन दृष्टा अन्यत्रगास्तपः ।**
**कुर्वता सम्यगुद्रिक्तगुणव्यक्तिस्तथाभिधः ।। १ ।।**

**ऋग्भाष्यटीका–** अष्टावृच इत्यस्यापि पूर्ववच्छंकापरिहारौ । अन्यत्रगा आनुपूर्व्यंतरगाः । अनेनेन्द्रमष्टौ जेता माधुच्छंदस इति जेतानाम मधुच्छन्दसः पुत्रोऽष्टाविन्द्रं विश्वा इत्याद्या ऋचोऽपश्यदित्येतदपि निरस्तं भवति । उपपत्तिं तूत्तरत्र वक्ष्यति ।

**इन्द्रं विश्वा** । सम्यक् । सम्यगुद्रिक्तानां गुणानां व्यक्तिर्यस्य स तथाभिधः । समुद्रव्यचाः समुत्पूर्वाद्रिचेर्डः । गुणानां योग्यतया सम्बन्धः । व्यचःशब्दो व्याप्तिवद्व्यक्तेरपि वाचकः । समुद्रव्यचसम् । रथिनां रथितमं **वाजानां** अन्नानां पतिं **सत्पतिं** सतां पतिं इन्द्रं **विश्वागिरः** सर्वा वेदवाचः **अवीवृधन्** प्रकाशितवत्यः ।। १ ।।

**मन्त्रार्थमञ्जरी–** अथ 'इन्द्रं विश्वा' इत्यष्टर्चमेकवर्गात्मकमैन्द्रमेकादशं सूक्तम् । जेतृषिकत्वमस्यानुक्रमणिकोक्तं नास्ति, भाष्यविरोधात् । ऋषिः प्रागेवोक्तः । एतदप्यनुष्टुप्छन्दस्कम्' तद्देवता तूक्तैव । समुदस्रव्यचसम्, सम्यगुद्रिक्तानां गुणानां व्यचो व्यक्तिर्यस्यासौ समुद्रव्यचास्तम्, समुत्पूर्वाद्रिचेः डः, गुणानां योग्यतयान्वयः, व्यचसृशब्दो व्याप्तेरिव व्यक्तेरपि वाचकः । रथिनाम् रथितमम् । वाजानाम्, अन्नानाम् । पतिम् । सत्पतिम्, सतां पतिम् । इन्द्रम् । विश्वाः गिरः, सर्वा वेदवाचः । अवीवृधन्, प्रकाशितवत्य इत्यर्थः, नित्याभिवृद्धस्य वृद्धिकृतेरयोगात्प्रकाशार्थोऽत्र व्याख्येयः ।। १ ।।

**स्कन्द–** जेता नामोत्तमं सूक्तं माधुच्छन्दस उक्तवान् । इन्द्रं विश्वा **सर्वाः** अवीवृधन् वर्धितवत्यः वर्धयन्तु वा । **समुद्रव्यचसं** व्यचो व्याप्तिरुच्यते । 'न ते विव्यक्' (ऋ.७,२१,६) 'समी विव्याच' (ऋ.३,३६,८) इत्यादौ सर्वत्र व्याप्त्यर्थः । समुद्रस्येव व्याप्तिर्यस्य स समुद्रव्यचाः तं समुद्रव्यचसम् । सर्वव्यापिनमित्यर्थः । **गिरः** स्तुतयः । कीदृशम् ? **रथीतमं** रथं यो नयति, तत्रस्थो वा युध्यते, स रथी । अन्येषां रथानां सकाशादतिशयेन रथिनम् । **वाजानां** इति षष्ठी पतिं इत्येतेन सम्बध्यते । अन्नानां स्वामिनं सतां च पालयितारम् ।। १ ।।

**वेङ्कटमाधव–** जेता माधुच्छन्दसः । इन्द्रं विश्वा स्तोतॄणां गिरः अवर्धयन् । अन्तरिक्षस्येव यस्य व्याप्तिः । अतिशयेन रथिनं रथीनां, अन्नानां सतां च पतिम् ।। १ ।।

**मुद्गल–** 'इन्द्रं विश्वा' इत्यष्टर्चं चतुर्थं सूक्तम् । मधुच्छन्दसः पुत्रो जेतृनामकः । अनुष्टुप् । इन्द्रः । **विश्वाः** सर्वा **गिरः** अस्मदीयाः स्तुतयः **इन्द्रं अवीवृधन्** वर्धितवत्यः । कीदृशमिन्द्रम् ? **समुद्रव्यचसं** समुद्रवद् व्याप्तवन्तम् । **रथीनां** रथयुक्तानां योद्धॄणां मध्ये **रथीतमं** अतिशयेन रथयुक्तम् । **वाजानां** अन्नानां **पतिं** स्वामिनं **सत्पतिं** सतां सन्मार्गवर्तिनां पालकम् ।। १ ।।

**सायण–** 'इन्द्रं विश्वा' इत्यष्टर्चस्य सूक्तस्य मधुच्छन्दसः पुत्रो जेतृनामकऋषिः । तथा चानुक्रान्तम्– 'इन्द्रमष्टौ जेता माधुच्छन्दसः' इति । छन्दस्त्वानुष्टुभमिति पूर्वसूक्तोक्तम् । इन्द्रो देवताऽनुवर्तते । विनियोगस्तु– महाव्रते निष्केवल्ये कृत्स्नसूक्तं शंसनीयम् । 'ऊरू' इति खण्डे शौनकेन सूत्रितम्– 'इन्द्रं विश्वा अवीवृधन्नित्यानुष्टुभं तस्य प्रथमायाः पूर्वमर्धर्चं शस्त्वोत्तरेणार्धर्चेनोत्तरस्याः पूर्वमर्धर्चं व्यतिषजति पादैः पादाननुष्टुप्कारं प्रागुत्तमायाः' (ऐ.आ.५,३,१)

इति । ब्राह्मणं च प्रथमारण्यके पठ्यते 'प्र वो महे' इति खण्डे– 'इन्द्रं विश्वा अवीवृधन्निति पदानुषङ्गाः' (ऐ.आ.१,५,२) इति । तथा पृष्ट्यस्य पञ्चमेऽहनि निष्केवल्ये शस्त्रे 'इन्द्रं विश्वा अवीवृधन्' इत्यनुरूपस्तृचः । 'स्तोमे वर्धमाने इति खण्डे सूत्रितम्– 'उप नो हरिभिः सुतमिन्द्रं विश्वा अवीवृधन्' (आश्व.श्रौ.७,१२) इति ।

**विश्वाः** सर्वाः **गिरः** अस्मदीयाः स्तुतयः **इन्द्रं अवीवृधन्** वर्धितवत्यः । कीदृशमिन्द्रम् ? **समुद्रव्यचसं** समुद्रवत् व्याप्तवन्तं **रथीनां** रथयुक्तानां योद्धृणां मध्ये **रथीतमं** अतिशयेन रथयुक्तं **वाजानां** अन्नानां **पतिं** स्वामिनं **सत्पतिं** सतां सन्मार्गवर्तिनां पालकम् ।

विश्वाः । विशेः क्वन् । नित्स्वरः । अवीवृधन् । वृधेर्णिचि चङि 'उर्ऋत्' (पा.सू.७,४,७) इत्यनुवृत्तौ 'नित्यं छन्दसि' (पा.सू.७,४,८) इति ऋकारस्य ऋकारविधानात् लघूपधगुणाभावः । निघातस्वरः । समुद्रव्यचसम् । व्यचेः असुन् । 'गाङ्कुटादिभ्योऽञ्णिन्ङित्'( पा.सू.१,२,१) इति ङित्वस्य प्राप्तस्य 'व्यचेः कुटादित्वान्मसि' (का.१,२,१,१) इति असिनिषेधात् 'ग्रहिज्या' (पा.सू.६,१,१६) इत्यादिना ङिति विधीयमानं संप्रसारणं न भवति । समुद्रव्यच इव व्यचो यस्य । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । रथीतमं रथीनाम् । रथशब्दादुत्पन्नस्य इनः छान्दसं दीर्घत्वम् । प्रत्ययस्वरेणोदात्तत्वं च । वाजानाम् । वृषादित्वादाद्युदात्तत्वम् । सत्पतिम् । 'पत्यावश्वर्ये' (पा.सू.६,२,१८) इति पूर्वपदप्रकृतिस्वरत्वम् ।। १ ।।

**सिद्धाञ्जनम्**–अथ 'इन्द्रं विश्वा' इत्यनुष्टप्छन्दस्कं अष्टर्चं सूक्तम् । अस्य जेता मधुच्छन्दसः पुत्र ऋषिः, इन्द्र एव देवता । तत्र प्रथमामृचमाह–

**विश्वाः** समस्ताः **गिरः** स्तुतयः **इन्द्रं अवीवृधन्** वर्धितवत्यः, स्तूयमानो देवः स्तोतरि आधारे वर्धते । कीदृशम् ? समुद्रव्यचसं समुद्रवद् व्याप्तवन्तम्, अन्तरिक्षवत् सर्वव्यापिनं इति साधीयानर्थः, अन्तरिक्षपर्यायत्वात् समुद्रस्य (व्याप्त्यर्थाद्व्यचेरसुन्)। पुन **रथिनां** रथयुक्तानां मध्ये **रथितमं** अतिशयेन रथिनं वेगार्थाद्रंहतेः रथः प्रागुक्तः, इदं च विशेषणं सर्वव्यापक आकाश इव न केवलं निश्चलः, सर्वत्र शीघ्रगामीति प्रतिपादनार्थम् । पुनश्च **वाजानां पतिं** बहुविधानां समृद्धीनां पालकं ईश्वरम् , अपि च **सत्पतिं** सतां प्राप्तसत्ताकानां सर्वेषामपि सृष्टानां पालकं, ईश्वरम् ।। १ ।।

ऋक्संहिता पदपाठसहिता

**सख्ये त इन्द्र वाजिनो मा भेम शवसस्पते ।**
**त्वामभि प्रणोनुमो जेतारमपराजितम् ॥ २ ॥**
सख्ये । ते । इन्द्र । वाजिनः । मा । भेम । शवसः । पते ।
त्वाम् । अभि । प्र । नोनुमः । जेतारम् । अपराऽजितम् ॥ २ ॥

**ऋग्भाष्यटीका– सख्ये ते ॥** हे **शवसस्पते** सुखस्य बलस्य वा पते **इन्द्र ते सख्ये सति** त्वदनुग्रहे सति **वाजिनः** युद्धवन्तो वयं **मा भेम** मा भैष्म तदर्थं च परेषां **जेतारं** स्वयं **अपराजितं त्वां अभिप्रणोनुमः** प्रकर्षेण पुनः पुनः स्तुमः ॥ २ ॥

**मन्त्रार्थमञ्जरी–** (हे) शवसः पते, शवसः सुखस्य बलस्य वा पते । इन्द्र । ते सख्ये (सति), त्वदनुग्रहे सति । वाजिनः, युद्धवन्तो वयम् । मा भेम, मा भैष्म, 'ञिभी भये' व्यत्ययेन लुग्विकरणम् । (तदर्थं परेषाम्) जेतारम् (स्वयम्) अपराजितम् त्वाम् । अभि प्र णो (नो) नुमः, प्रकर्षेण पुनः पुनः स्तुमः 'णु स्तुतौ' 'धातोरेकाचो हलादेः क्रियासमभिहारे यङ्' इति यङ्, 'यङोऽचि च' इति तस्य लुकि रूपम् ॥ २ ॥

**स्कन्द–** सख्ये इति सप्तमीनिर्देशाद् वर्तमाना इति वाक्यशेषः । **सख्ये** तव वर्तमानाः वयं हे **इन्द्र! वाजिनः** हविर्लक्षणेनान्नेन स्तुवन्तः । त्वां हविषा यजन्त इत्यर्थः । **मा भेम** त्वत्प्रसादात् कुतश्चिदपि मा भैष्म । हे **शवसम्पते!** बलस्य स्वामिन्! पालयितः वा । न च मुधैवाभयं प्रार्थयामहे । किं तर्हि । **त्वां अभि प्रणोनुमः** नु स्तुतौ । पौनः पुन्ये चात्र यङो लुक् । प्रशब्दः प्रकर्षे । प्रकर्षे पुनः पुनरभिष्टुमः । कीदृशम् । **जेतारं** शत्रूणां अपराजितं च शत्रुभिः ॥ २ ॥

**वेङ्कटमाधव–** इन्द्र! त्वया सख्ये सति बलिनो वयं न कुतश्चित् अबिभिम । बलस्य पते! त्वां च प्रकर्षेण अभिष्टुमो जेतारं अपराजितम् ॥ २ ॥

**मुद्गल–** हे **शवसस्पते!** बलस्य पालक! इन्द्र! **ते** तव **सख्ये** अनुग्रहप्रयुक्ते सखित्वे वर्तमाना वयं **वाजिनः** अन्नवन्तो भूत्वा **मा भेम** शत्रुभ्यो भीतिं प्राप्ताः मा भूम । अतः त्वां अभयहेतुं **अभिप्रणोनुमः** सर्वतः प्रकर्षेण स्तुमः । कीदृशं त्वाम् । **जेतारं** युद्धेषु जयशीलम् । **अपराजितं** क्वापि पराजयरहितम् ॥ २ ॥

**सायण–** हे **शवसस्पते** बलस्य पालक **इन्द्र ते** तव **सख्ये** अनुग्रहप्रयुक्ते सखित्वे वर्तमाना वयं **वाजिनः** अन्नवन्तो भूत्वा **मा भेम** शत्रुभ्यो भीतिं प्राप्ता मा भूम । अतः **त्वां** अभयहेतुं **अभि प्रणोनुमः** सर्वतः प्रकर्षेण स्तुमः । कीदृशं त्वाम् ? **जेतारं** युद्धेषु जयशीलं **अपराजितं** क्वापि पराजयरहितम् ।

सख्ये । सख्युः कर्म सख्यम् । 'सख्युर्यः' (पा.सू.५,१,१२६) । प्रत्ययस्वरः । वाजिनः । वाजोऽन्नमेषामस्तीति वाजिनः । प्रत्ययस्वरः । भेम । 'ञिभी भये' । लुङुत्तमबहुवचनं मस् । 'नित्यं ङितः' (पा.सू.३,४,९९) इति सलोपः । 'बहुलं छन्दसि' इति च्लेर्लुक् । 'छन्दस्युभयथा' (पा.सू.३,४,११७) इति तिङः आर्धधातुकत्वेन ङित्त्वाभावाद्गुणः । 'न माङ्योगे' (पा.सू.६,४,७४) इति अडागमप्रतिषेधः । शवसस्पते । शवसः 'षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु' (पा.सू.८,३,५३) इति विसर्जनीयस्य संहितायां सत्वम् । सुबामन्त्रितपराङ्गवद्भावेन (पा.सू.२,१,२) पदद्वयनिघातः । नोनुमः । 'णु स्तुतौ' । 'णो नः' (पा.सू.६.१,६५) इति नत्वम् । यङो लुक् । प्रत्ययलक्षणेन 'सन्यङोः' (पा.सू.६,१,९) इति द्विर्भावः । 'गुणो यङ्लुकोः' (पा.सू.७,४,८२) इत्यभ्यासस्य गुणः । प्रत्ययलक्षणेन धातुसंज्ञायां लटो मस् । अदादिवद्भावात् शपो लुक् । 'उपसर्गादसमासेऽपि णोपदेशस्य' (पा.सू.८,४,१४) इति संहितायां णत्वम् । जेतारम् । 'जि जये' । ताच्छील्यादिषु तृन् । 'ञ्नित्यादिर्नित्यम्' (पा.सू.६,१,१९७) इत्याद्युदात्तत्वम् । अपराजितम् । अव्ययपूर्वपदप्रकृतिस्वरत्वेन नञ उदात्तत्वम् ।। २ ।।

**सिद्धाञ्जनम्–** द्वितीयामृचमाह– हे शवसः पते दीप्तिमद्बलस्य स्वामिन् **इन्द्र! ते** तव **सख्ये** सखित्वे वर्तमानाः **वाजिनः** समृद्धिमन्तः वयं **मा भेम** मा भैष्म (च्लेर्लोपादि छान्दसम्) शत्रुभ्यो भीता मा भूमेत्यर्थः । **त्वां अभिप्रणोनुमः** सर्वतः प्रकर्षेण स्तुमः । कीदृशं त्वाम् ? **जेतारं** सर्वत्र जयशीलम् । **अपराजितं** पराजयरहितम् । अत्र ऋषिर्भक्तः स्वनाम्ना भगवन्तं स्तौति । तत्र युक्तिः प्रागुक्ता अवधेया ।। २ ।।

### ऋक्संहिता पदपाठसहिता

**पूर्वीरिन्द्रस्य रातयो न वि दस्यन्त्यूतयः ।**
**यदी वाजस्य गोमतः स्तोतृभ्यो मंहते मघम् ।। ३ ।।**

पूर्वीः । इन्द्रस्य । रातयः । न । वि । दस्यन्ति । ऊतयः ।
यदि । वाजस्य । गोऽमतः । स्तोतृऽभ्यः । मंहते । मघम् ।। ३ ।।

## ऋग्भाष्यम्

**प्रथमानि महत्त्वेन ते दानान्यवनानि च ।**
**न भिद्यन्ते न नश्यन्ति गोमदन्नं यशस्तथा ।**
**यदि मंहते ददातीशः .............. ।। ३ ।।**

**ऋग्भाष्यटीका– पूर्वीरिन्द्रस्य** । प्रथमानि । **इन्द्रस्य** ते तव रातय ऊतयश्च **पूर्वीः** पूर्वाः । दानान्यवनानिच प्रथमानि । कथम् । महत्त्वेन कारणेन । किञ्च । **न विदस्यन्ति** न विदस्यन्ते । दसिर्विभेदनार्थः । न भिद्यन्ते क्षयार्थो वा न नश्यन्ति । स इन्द्र ईशो यदि **गोमतो वाजस्य** गोमदन्नं **मघं** यशश्चेत्यादिकं स्तोतृभ्यो **मंहते** मंहतिर्दानार्थः । ददाति तर्हि तानि दानानि प्रथमानीत्यादि सम्बन्धः ।। ३ ।।

**मन्त्रार्थमञ्जरी–** यदि (इन्द्रः) गोमतः वाजस्य, व्यत्ययेन षष्ठी, गोमदन्नम् । मघम्, यशः । (च) स्तोतृभ्यः । मंहते, 'मंहति, 'मंह दाने' ददाति । (तर्हि) इन्द्रस्य । (ते), तव । रातयः, दानानि । ऊतयः (च) अवनानि च । पूर्वीः पूर्व्यः, प्रथमानि, महत्त्वेन कारणेन श्रेष्ठानीत्यर्थः । किं च, न विदस्यन्ति, न विदस्यन्ते, 'दसु विभेदने' न भिद्यन्ते, न नश्यन्तीति वार्थः 'दसु(उप)क्षये' इति धातोः ।। ३ ।।

**स्कन्द– पूर्वीः** इन्द्रस्य पूर्वकाले प्रवृत्ताः चिरन्तन्यः । **इन्द्रस्य रातयः** दानानि न विदस्यन्ति वीत्ययमुपेत्यस्य स्थाने । दस्यतिः क्षयार्थः । नोपक्षीयन्ते । **ऊतयः** पालनानि च । यदि शुद्धोऽप्ययं यदिः अपिसहितस्यार्थे द्रष्टव्यः । यद्यपि **वाजस्य गोमतः** द्वितीयार्थे षष्ठी । वाजं गोमदन्नं गोभिः सहितम् । **स्तोतृभ्यः मंहते** दानकर्माऽयं मंहतिः । ददाति **मघं** धनं च । एतदुक्तं भवति । यद्यप्यन्येभ्योऽपि स्तोतृभ्योऽन्नं गां धनं चेन्द्रो ददाति । तथापि प्रभूतधनत्वान्नैवास्य पूर्वदानानि पालनानि च क्षीयन्ते । अत्यन्तप्रभूतधन इत्यर्थः ।। ३ ।।

**वेङ्कटमाधव–** बहूनि इन्द्रस्य दानानि रक्षणानि च न शुयान्त्युपर्युपरि वर्धन्ते । यदि अयं अन्नस्य गोयुक्तस्य स्तोतृभ्यः मंहनीयं सङ्घं प्रयच्छति । तदानीं तेन दत्तानि धनानि तन्मुखानि रक्षणानि च न शुष्यन्ति बहुत्वादिति ।। ३ ।।

**मुद्गल– इन्द्रस्य** सम्बन्धिन्यः **रातयः** धनदानानि **पूर्वीः** अनादिकालसिद्धाः । अस्येन्द्रस्य सर्वदा यष्टृभ्यो धनदानमेव स्वभाव इत्यर्थः । एवं सति इदानीन्तनोऽपि यजमानः **स्तोतृभ्यः** ऋत्विग्भ्यः **गोमतः** गोसहितस्य **वाजस्य** अन्नस्य पर्याप्तं **मघं** धनम् यदि **मंहते** दक्षिणारूपेण ददाति तदानीं **ऊतयः** बहुधनदानपूर्वकाणि इन्द्रस्य अस्मद्विषयाणि रक्षणानि **न वि दस्यन्ति** विशेषेण नोपक्षीयन्ते ।। ३ ।।

**सायण– इन्द्रस्य** सम्बन्धिन्यः **रातयः** धनदानानि **पूर्वीः** अनादिकालसिद्धाः प्रभूता वा । अस्येन्द्रस्य सर्वदा यष्टृभ्यो धनदानमेव स्वभाव इत्यर्थः । एवं सति इदानींतनोऽपि यजमानः **स्तोतृभ्यः** ऋत्विग्भ्यः **गोमतः** गोसहितस्य **वाजस्य** अन्नस्य पर्याप्तं **मघं** धनं यदि **मंहते** दक्षिणारूपेण ददाति तदानीं **ऊतयः** बहुधनदानपूर्वकाणि इन्द्रस्य अस्मद्विषयाणि रक्षणानि न **वि दस्यन्ति** विशेषेण नोपक्षीयन्ते । 'मघं रेक्णः' इत्यादिष्वष्टाविंशतिसङ्ख्याकेषु धननामसु मघशब्दः (नि.२,१०.१) पठितः । 'दाति दाशति' इत्यादिषु दशसु दानकर्मसु 'मंहते' (नि. ३,२०,१०) इति पठितम् ।

पूर्वीः । पुरुशब्दस्य 'वोतो गुणवचनात्' (पा.सू४,१,४४) इति ङीष् । आद्यस्य उकारस्य दीर्घश्छान्दसः । जसि 'दीर्घाज्जसि च' (पा.सू.६,१,१०५) इति निषेधं बाधित्वा 'वा छन्दसि' (पा.सू.६,१,१०६) इति पूर्वसवर्णदीर्घत्वम् । ङीपः प्रत्ययस्वरेणोदात्तत्वम् । रातयः । 'मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः' इति क्तिन उदात्तत्वम् । दस्यन्ति । 'दसु उपक्षये' । 'दिवादिभ्यः श्यन्' । निघातः । ऊतयः । 'ऊदियूति' (पा.सू.३,३,९७) इत्यादिना क्तिन् उदात्तः । यदि । निपातत्वादाद्युदात्तः । संहितायां 'निपातस्य च' (पा.सू.६,३,१३६) इति दीर्घत्वम् । स्तोतृभ्यः । 'ष्टुञ् स्तुतौ' । 'धात्वादेः षः सः' (पा.सू.३,१,६४) । तृचश्चित्त्वादन्तोदात्तत्वम् । मंहते । शपः पित्त्वादनुदात्तत्वम् । तिङश्च लसार्वधातुकस्वरेण 'तिङ्ङतिङः' इति निघातो न भवति, 'निपातैर्यद्यदिहन्त' (पा.सू.८,१,३०) इति निषेधात् ।। ३ ।।

**सिद्धाञ्जनम्**–तृतीयामृचमाह– **इन्द्रस्य रातयः** दानानि रातिर्दानकर्मा, **पूर्वीः** बह्व्यः बहूनि तस्यानुग्रहकार्याणि दानानीत्यर्थः । अथवा पूर्वीः चिरन्तन्यो रातयः, स्वभावसिद्धास्तस्येत्यर्थः। तस्मात् स इन्द्रः **स्तोतृभ्यः** भक्तेभ्यः **गोमतः** प्रज्ञानकिरणसम्पन्नस्य वाजस्य समृद्धिवाचिनो घनस्य सम्बन्धिनं अंशभूतं **मघं** धनं **मंहते** ददाति यदि, **ऊतयः** तस्य वृद्धयो नित्याः **न**

**विदस्यन्ति** नोपक्षीयन्ते । इन्द्रस्य अगण्यानां ऐश्वर्याणां नित्यवर्धनानां नित्यदानैरपि नास्ति क्षयः । ऐश्वर्यस्य घनस्य स्वरूपं गोमद्वाजशब्दप्रयोगेणोक्तम् ॥ ३ ॥

## ऋक्संहिता पदपाठसहिता

**पुरां भिन्दुर्युवा कविरमितौजा अजायत ।**
**इन्द्रो विश्वस्य कर्मणो धर्ता वज्री पुरुष्टुतः ॥ ४ ॥**
**पुराम् । भिन्दुः । युवा । कविः । अमितऽओजाः । अजायत ।**
**इन्द्रः । विश्वस्य । कर्मणः । धर्ता । वज्री । पुरुऽस्तुतः ॥ ४ ॥**

**ऋग्भाष्यटीका– पुरां भिन्दुः** शरीरपुराणां शंबरस्य पुराणां च भेत्ता **युवा कविः** सर्वज्ञोऽमितमोजो यस्यासौ **अमितौजाः विश्वस्य कर्मणो धर्ता** सर्वकर्मणां प्रेरको **वज्री** पुरुभिः स्तुतः **पुरुष्टुतः इन्द्रः अजायत** यज्ञे अभिव्यक्तोऽभवत् ॥ ४ ॥

**मन्त्रार्थमञ्जरी–** पुराम्, शरीराख्यपुराणाम्, शम्बरस्य पुराणां च । भिन्दुः भेत्ता । युवा, तरुणः । कविः, सर्वज्ञः । अमितौजाः, अमितमोजो यस्यासावमितौजाः । विश्वस्य कर्मणः धर्ता, सर्वकर्मणां प्रेरकः । वज्री, ज्ञानानन्दवान्, वज्रायुधवान्वा । पुरुष्टुतः, पुरुभिर्बहुभिः स्तुतः । इन्द्रः । अजायत, यज्ञेऽभिव्यक्तोऽभवत् ॥ ४ ॥

**स्कन्द– पुरां भिन्दुः** असुरपुराणां भेत्ता । **युवा** तरुणः । **कविः** मेधावी । अमितौजाः अपरिमितबलः अजायत । जन्मन एव प्रभृतीदृश इत्यर्थः । कः ? इन्द्रः । कीदृशः । **विश्वस्य** कर्मणः **धर्ता** सर्वस्य कर्मणो धारयिता । यावद्धि किञ्चित् कर्मास्य साधारणं तद् वृष्ट्यायत्तम् । वृष्टिश्चेन्द्रायत्ता । अतो वृष्टिद्वारेण सर्वस्य कर्मणो धारयितेन्द्रः । **वज्री** वज्रवान् । **पुरुष्टुतः** बहुभिः स्तुतः ॥ ४ ॥

**वेङ्कटमाधव–** पुरां भेत्ता युवा क्रान्तकर्मा अमितबलः आसीत् इन्द्रः विश्वस्य कर्मणः धर्ता वज्री बहुभि स्तुतः ॥ ४ ॥

**मुद्गल–** अयं **इन्द्रः** उच्यमानगुणयुक्तः **अजायत** सम्पन्नः । कीदृशगुणकः इति । तदुच्यते । पुरां असुरपुराणां **भिन्दुः** भेत्ता **युवा** वलीपलितादिवार्धकरहितः **कविः** मेधावी **अमितौजाः**

प्रभूतबलः **विश्वस्य कर्मणः** कृत्स्नस्य ज्योतिष्टोमादेः **धर्ता** पोषक **वज्री** यजमानरक्षणार्थं सर्वदा वज्रयुक्तः **पुरुष्टुतः** बहुविधे तत्तत्कर्मणि स्तुतः ।। ४ ।।

**सायण–** अभिप्लवषडहस्य उक्थ्येषु तृतीयसवनेऽच्छावाकस्य 'पुरां भिन्दुर्युवा कविः' इति स्तोत्रियस्तृचः । तथा च सूत्रितम्– 'एह्यू षु' इत्युपक्रम्य 'पुरां भिन्दुर्युवा कविर्वृषा ह्यसि राधसे' (आश्व.श्रौ.७,८) इति ।।

अयं **इन्द्रः** उच्यमानगुणयुक्तः **अजायत** सम्पन्नः । कीदृग्गुणक इति तदुच्यते । **पुरां** असुरपुराणां **भिन्दुः** भेत्ता **युवा** कदाचिदपि वलीपलितादिवार्धकरहितः **कविः** मेधावी **अमितौजाः** प्रभूतबलः **विश्वस्य कर्मणः** कृत्स्नस्य ज्योतिष्टोमादेः **धर्ता** पोषकः **वज्री** यजमानरक्षणार्थं सर्वदा वज्रयुक्तः **पुरुष्टुतः** बहुविधे तत्तत्कर्मणि स्तुतः ।

भिन्दुः । 'भिदिर् विदारणे' । 'कुः' इत्यनुवृत्तौ 'पृभिदिव्यधिगृधिधृषिदृशिभ्यः' (उ.सू.१, २३) इति कुप्रत्ययः । तस्य 'छन्दस्युभयथा' (पा.सू.३,४,११७) इति सार्वधातुकसंज्ञायां 'रुधादिभ्यः श्नम्' (पा.सू.३,१,७८) मित्त्वात् अन्त्यात् अचः परो भवति (पा.सू.१,१,४७) । 'श्नसोरल्लोपः' । अनुस्वारपरसवर्णौ (पा.सू.८,३,२४; ८,४,५८) । 'अचः परस्मिन्पूर्वविधौ' (पा.सू.१,१,५७) इति प्राप्तस्य स्थानिवद्भावस्य 'न पदान्त' (पा.सू.१,१,५८) इत्यादिना निषेधः । युवा । 'यु मिश्रणामिश्रणयोः' । 'कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिवः' (उ.सू.१, १५४) इति कनिन् । नित्त्वादाद्युदात्तः । कविः । 'कु शब्दे' । 'अच इः' (उ.सू.४,५७८) इति इः । प्रत्ययस्वरः । अमितौजाः । अमितशब्दस्य अव्ययपूर्वपदप्रकृतिस्वरत्वम् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वेन तदेव शिष्यते । विश्वस्य । 'अशिप्रुषि' (उ.सू.१,१४९) इत्यादिना कन् । नित्त्वादाद्युदात्तः । कर्मणः । 'अन्येभ्योऽपि दृश्यन्ते' (पा.सू.३,२,७५) इति मनिन् । नित्स्वरः । धर्ता । तृच् । चित्त्वादन्तोदात्तः । वज्री । मत्वर्थीय इनिः । प्रत्ययस्वरः । पुरुष्टुतः । 'स्तुतस्तोमयोश्छन्दसि' (पा.सू.८,३,१०५) इति षत्वम् । बहुषु प्रदेशेषु स्तुतः । 'थाथघञ्क्ताजबित्रकाणाम्' (पा.सू.६,२,१४४) इत्यन्तोदात्तत्वम् । तृतीयासमासे हि थाथादिस्वरापवादः 'तृतीया कर्मणि' (पा.सू.६,२,४८) इति पूर्वपदप्रकृतिस्वरः स्यात् ।।

**सिद्धाञ्जनम्–** चतुर्थीमृचमाह– अयं **इन्द्रः अजायत** समपद्यत । किंप्रभावः, किंगुणविशिष्टः ?

**पुरां भिन्दुः** असुरवासपुराणां भेदकः । भिदेर्भेदनार्थाद्धातोर्भिन्दुः तेन दुर्भेद्यानि दुर्गवन्ति पुराणि, तेषां भेदनीयत्वाक्षेपात् तानि देवद्विषां सम्बन्धीनीति च द्योतितम् । **युवा** यौवनसम्पन्नः औद्धत्यं असुरपुरध्वंसायावश्यम् , यौवनेन तल्लक्षितम् । **कविः** द्रष्टा सर्वान्तरदर्शी, गूढानामसुरदुर्गवास-स्थानानां दर्शने समर्थः। **अमितौजाः** अमितं प्रभूतं ओजो बलमस्य । **विश्वस्य कर्मणः धर्ता** धारयिता, तेनैव धार्यन्ते सर्वाणि अस्मदन्तर्यजनानि । **वज्री** वज्रयुक्तः तमोवृत्रादिशत्रुभेदनाय । **पुरुष्टुतः** बहुभिः बहुषु कार्येषु वा स्तुतः स्तुत्या आश्रितः ।। ४ ।।

ऋक्संहिता पदपाठसहिता

**त्वं वलस्य गोमतोऽपावरद्रिवो बिलम् ।**
**त्वां देवा अबिभ्युषस्तुज्यमानास आविषुः ।। ५ ।।**
त्वम् । वलस्य । गोऽमतः । अप । अवः । अद्रिऽवः । बिलम् ।
त्वाम् । देवाः । अबिभ्युषः । तुज्यमानासः । आविषुः ।। ५ ।।

ऋग्भाष्यम्

**............... वलस्तिर्यग्गतिर्धियः ।**
**वाचामन्यार्थबुद्धेस्तु बिलं मूलं तमो हि यत् ।**
**तदपावृतवांस्त्वं च प्रदर्श्य विनिवार्य च ।**
**त्वां हि देवाभयापेताः प्रेर्यमाणास्त्वयैव च ।**
**छाद्यमानं गिरा दैत्यैररक्षन्निव सद्गिरा ।**
**इन्द्रस्य गोसवार्थे च समुत्सृष्टा जगत्यपि ।**
**चर्तुं गावो हृता दैत्यैः सरमारक्षिताः पुरा ।**
**तस्याः स्वसृत्वमुक्त्वैव तयोच्छिष्टं च गोपयः ।**
**तदर्थं पणयो नाम ते दैत्या बलपूर्वकाः ।**
**इन्द्रेण निहताः पश्चाज्ज्ञात्वा च सरमाकृतम् ।**
**ताडयित्वा पदा वक्त्रात्सृते पयसि तां भयात् ।**
**शरणागतां प्रेषयित्वा दूत्येन पणिनां पुनः ।**
**भित्वा गिरिव्रजं तं च गावो यत्र प्रतिष्ठिताः ।**

**निःसारिताः पुनस्ताश्च गोसवेनेष्टमेव च ।**
**तदा देवा अभीत्यैव परितो जुगुपुः पतिम् ॥ ५ ॥**

**ऋग्भाष्यटीका– त्वं वलस्य ।** ऋचं परमेश्वरे योजयितुं वलशब्दार्थं तावदाह– **वल इति ॥** वलतिः परिवर्तनार्थः । अतो वलस्तिर्यग्गतिः धिय इति शेषः । धियो मनसो यदर्थ-वैपरीत्येन विषयीकरणं स वल इत्यर्थः । धियो ज्ञानस्य वा । विपरीतज्ञानमिति यावत् । इदानी-मृचं व्याचष्टे– **वाचामिति । हे अद्रिवस्त्वं गोमतः** गोसम्बन्धिनो **वलस्य** मिथ्याज्ञानस्य वेदवाचामन्यार्थबुद्धेरिति यावत् । यद् **बिलं** मूलं कारणं तमोऽज्ञानं तत् **अपावः** अपावृतवानसि । छान्दसो विकरणलोपः । उत्सारितवानसि । कथम् ? प्रदर्श्य विनिवार्य च । तत्वप्रदर्शनेन निराकृत्येत्यर्थः । ततश्चाज्ञानमिथ्याज्ञानयोर्नष्टयोः **देवाः** सत्त्वप्रकृतयः पुरुषा **अबिभ्युषः** प्रथमार्थे द्वितीया । अबिभीवांसः संसारभयापेताः **तुज्यमानाः** त्वयैव प्रेर्यमाणाश्च **त्वामाविषुः** दैत्यैर्दुष्टगिरा छाद्यमानं सद्गिरा अरक्षन्निवहि । प्रकाशितवन्त इति यावत् । एतामृचमिन्द्रपरतया व्याकुर्व-न्नितिहासगर्भत्वात्तमाह– **इन्द्रस्येति ॥** इन्द्रस्य गावः गोसवो यज्ञविशेषः । जगति चर्तुं चरितुं समुत्सृष्टाः । इन्द्रस्यापीति सम्बन्धः । सरमा देवशुनी तस्याः स्वसृत्वमुक्त्वैव स्वसृत्वादिमृषोक्त्या तां प्रलोभ्य हृताः तदर्थं तन्निमित्तम् । सरमाकृतं व्यापारं कथं ज्ञात्वा पदा ताडयित्वा । ततोऽपि कथम् । वक्त्रात्पयसि सृते सति । पणिनां सकाशम् । गिरिव्रजं गिरिकूटम् । ज्ञात्वेत्यादीनां भित्वेत्यन्तानां इन्द्रेण दैत्या निहता इत्यन्वयः । इष्टमेव चेत्यन्तेन पूर्वार्धो व्याख्यातः । हे **अद्रिवस्त्वं गोमतो** गोभिर्युक्तस्य **वलस्य** दैत्यस्य **बिलं** गिरिकूटाधस्तनं विवरं **अपावः** अपावृतवानसीति । तदा **देवाः तुज्यमानाः** त्वयैव प्रेर्यमाणा **अबिभ्युषः त्वामाविषुः** अभीत्यैव स्वपतिं त्वां परितो जुगुपुः ॥ ५ ॥

**मन्त्रार्थमञ्जरी–** (हे) अद्रिवः, प्राणप्रवर्तक विष्णो । त्वम् । गोमतः, मतुपः सम्बन्धोऽर्थोऽत्राभिमतः, गोसम्बन्धिनः । बलस्य, मिथ्याज्ञानस्य, वेदवाचामन्यार्थबुद्धेरिति यावत् । (यत्) बिलम्, मूलकारणमज्ञानम् । (तत्) अप अवः, अपावृतवानसि, तत्त्वप्रदर्शनेनोत्सारितवानसीत्यर्थः, अपपूर्वात् 'वृञ् वरणे' इत्यतो लङ्मध्यमपुरुषैकवचने सिपि श्नुप्रत्यये धातोर्गुणेऽडागमे छान्दसे विकरणलोपे संयोगान्तसकारस्य लोपे रेफस्य विसर्गे च 'अप अवः' इति सिद्धेः । ततश्चाज्ञानमिथ्याज्ञानयोर्नाशे सति– देवाः, सत्त्वप्रकृतयः पुरुषाः । अबिभ्युषः, प्रथमार्थे द्वितीया,

अबिभीवांसः, संसारभयापेताः । तुज्यमानासः, त्वयैव प्रेर्यमाणाश्च । त्वाम् । आविषुः, दैत्यैर्दुष्टगिराः छाद्यमानं सद्गिराऽरक्षन्निव हि, प्रकाशितवन्त इति यावत् । वलतेः विपरिवर्तनार्थत्वात् 'मनसोऽर्थवैपरीत्येन विषयीकरणं वलम्' इति वलशब्दो विपरीतज्ञानवाची ध्येयः । यद्वा– 'वलस्य' इत्यस्य 'अर्थं वैपरीत्येन विषयीकुर्वतः' इत्येवार्थः । 'ज्ञानस्य' इति शेषो ध्येयः । पुरंदरपक्षे तु (हे) अद्रिवः, पर्वतच्छेदक पुरंदर । त्वम् । गोमतः, गोभिर्युक्तस्य । वलस्य, बलस्य दैत्यस्य (बवयोरभेदात्) बिलम्, गिरिकूटाधस्तनविवरम् । अपअवः । अपावृतवानसि । तदा देवाः । तुज्यमानासः, त्वया प्रेर्यमाणाः । अबिभ्युषः, अबिभीवांसः, त्वाम् आविषुः, अभीत्यैव त्वां परितो जुगुपुरित्यर्थः, 'अव रक्षणे', 'लुङ्' । इन्द्रेण गोसवाख्ययज्ञे क्लृप्तासु जगति चरितुं निसृष्टासु गोषु पणयो नाम दैत्या गोरक्षार्थं नियुक्तां सरमाख्यां देवशुनीं स्वसृत्वादिकं मृषाभूतमेवोक्त्वा प्रलोभ्य तां हित्वा गा अपहृत्य गिरेरधस्तनबिले स्थापितवन्तः । इन्द्रस्तु तत्रागत्य पदा ताडनेन सरमामुखात्पयसि निःसृते सति तत्कृतं पयःपानादिव्यापारं ज्ञात्वा भयेन शरणागतं तामेव दूत्येन पणि(णी)नां सकाशं प्रेष्य गोस्थानं ज्ञात्वा दैत्यान्संहृत्य गा निःसार्य गोसवाख्ययज्ञमकरोत् । तदा देवाः दैत्यभयापेतास्त्वां परिवार्यारक्षन्निति भावः । 'ञिभी भये' इत्यस्य क्वसुप्रत्यये तस्य लिड्वद्भावे द्विर्वचने 'बिभीवांसः' इति रूपम् ।। ५ ।।

**स्कन्द–** वलः (निघ १,१०) इति मेघनाम । **त्वं** मेघस्य **गोमतः** उदकवतः । **अपावः** अपावृतवान् अपावृणोषि वा हे इन्द्र! **अद्रिवः** वज्रिन् **बिलं** उदकनिर्गमनच्छिद्रम् । किञ्च **त्वां देवा अबिभ्युषः** । अत्रैतरेयिण इतिहासमाचक्षते– 'इन्द्रो वै वृत्रं हनिष्यन् सर्वा देवता अब्रवीदनु मोपतिष्ठध्वमुपमा ह्वयध्वमिति । तथेति तं हनिष्यन्त आद्रवन् । सोऽवन्मां वै हनिष्यन्त आद्रवन्ति हन्तेमान् भीषया इति तानभि प्राश्वसीत् । तस्य श्वसथादीषमाणा विश्वे देवा अद्रवन् । मरुतो हैनं नाबहुः । प्रहर भगवो जहि वीरयस्वेत्येवैनमेतां वाचं वदन्त उपातिष्ठन्त (ऐब्रा ३,२०) इति । एतदुच्यते । त्वां देवा मरुतः । अबिभ्युषः । प्रथमार्थे द्वितीयैषा । अबिभीवांसः वृत्रश्वासादभीताः **तुज्यमानासः** क्षिप्रनामैतत् (त.निष. २,१५) । त्वरमाणा **आविषुः** अविरत्र गत्यर्थः । शुद्धोऽपि सोपसर्गार्थो द्रष्टव्यः । अनुगतवन्तः ।। ५ ।।

**वेङ्कटमाधव–** त्वं वलासुरस्य गृहीतपशोः अपावृतवानसि वज्रिन् बिलम् । 'इन्द्रो वलस्य बिलमपौर्णोत् स य उत्तमः पशुरासीत्' (त.२,१,५,१) इति ब्राह्मणम् । त्वां अग्रे गच्छन्तं देवाः अबिभीवांसः त्वत्सन्निधानात् पणिभिर्हिंस्यमानाः तव जयार्थं आगताः ।। ५ ।।

**सायण–** वलनामकः कश्चिदसुरो देवसम्बन्धिनीर्गा अपहृत्य कस्मिंश्चिद्बिले गोपितवान् । तदानीमिन्द्रः तद्बिलं स्वसैन्येन समावृत्य तस्माद्बिलात् गा निःसारयामास । तदिदमुपाख्यानं 'इन्द्रो वलस्य बिलमपौर्णोत्' (तै.सं.२,१,५,१) इत्यादिब्राह्मणेषु मन्त्रान्तरेषु च प्रसिद्धम् । तदेतत् हृदि निधाय अयं मन्त्रः प्रवर्तते । हे **अद्रिवः** वज्रयुक्तेन्द्र **त्वं गोमतः** वलस्य गोभिर्युक्तस्य वलनामकस्यासुरस्य सम्बन्धि **बिलं अपावः** स्वसैन्यमुखेन अपावृतवानसि । तदानीं **तुज्यमानासः** वलेन हिंस्यमानाः **देवाः अबिभ्युषः** त्वदीयरक्षया वलादभीताः सन्तः **त्वां आविषुः** प्राप्तवन्तः ।

अप । निपातत्वादाद्युदात्तः । अवः । 'वृञ् वरणे' । लङ् । सिप् । 'इतश्च लोपः' (पा.सू.३,४,९७) । 'स्वादिभ्यः श्नुः' (पा.सू.३,१,७३) । तस्य 'बहुलं छन्दसि' (पा.सू. २,४,७३) इति लुक् । गुणो रपरत्वं हल्ङ्यादिलोपः । विसर्जनीयः । अडागमः । अद्रिवः । अद्रिरस्यासीति मतुप् । 'छन्दसीरः' (पा.सू.८,२,१५) इति वत्वम् । सम्बोधने 'उगिदचां' (पा.सू.७,१,७०) इति नुम् । हल्ङ्यादिसंयोगान्तलोपौ । 'मतुवसो रुः सम्बुद्धौ छन्दसि' (पा.सू.८,३,१) इति रुत्वम् । बिलम् । 'नब्विषयस्यानिसन्तस्य' (फि.सू.२६) इत्याद्युदात्तत्वम् । अबिभ्युषः । 'ञिभी भये' । लिट् । द्विर्भावः । अभ्यासस्य ह्रस्वजश्त्वे । 'क्वसुश्च' (पा.सू.३,२,१०७) इति लिटः क्वसुरादेशः । क्रादिनियमात् प्राप्त इट् 'वस्वेकाजाद्घसाम्' (पा.सू. ७,२,६७) इति नियमात् निवर्तते । जसि सर्वनामस्थानेऽपि व्यत्ययेन भत्वात् वसोः सम्प्रसारणम् । परपूर्वत्वम् । 'शासिवसिघसीनां च' (पा.सू.८,३,६०) इति षत्वम् । 'अचि श्नुधातु' (पा.सू.६,४,७७) इत्यादिना प्राप्तं इयङादेशं बाधित्वा 'एरनेकाचः' (पा.सू.६,३,८२) इति यणादेशः । नञ्समासः । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । तुज्यमानासः । तुजेर्हिंसार्थात् परस्य कर्मणि लटः स्थाने शानच् । 'सार्वधातुके यक्' (पा.सू.३,१,६७) इति यक् । तस्मात् अदुपदेशादुत्तरस्य लसार्वधातुकस्यानुदात्तत्वम् । यक एव प्रत्ययस्वरः शिष्यते । आविषुः । अव रक्षणादिषु । अस्माद्गत्यर्थात् लुङो झिः । तस्य 'सिजभ्यस्तविदिभ्यश्च' (पा.सू.३,४,१०९) इति जुस् । सिच इडागमः । 'आडजादीनाम्' (पा.सू.६,४,७२) इति आडागमः । 'आदेशप्रत्यययोः' (पा.सू.८,३,५९) इति षत्वम् ॥ ५ ॥

**सिद्धाञ्जनम्–** पञ्चमीमृचमाह– स्वर्वतीर्गाः अपहृत्य पर्वतगुहायां क्वापि अन्धतमसे

जडोपलक्षणे निहितवान् असुरो वलो वृत्रबन्धुः। पिहितद्वारं तद्बिलं अभियां देवानां साहाय्येन उद्घाट्य, तास्सौरी ऐन्द्रीर्वा गा विमोच्य पुनर्लब्धवान् । जडांशभूयिष्ठे देहे तामसेषु छिद्रेषु चिज्ज्योतिर्मरीचयो गोपिताः दिव्यज्योतिश्शत्रूणां एकेनासुरेण वलयित्रा शक्तिविशेषेण । ऋतचित्तेजो-बलभासिना चेतसा साधनेन तदध्यक्षेण स्वधाम्ना इन्द्रेण गूढं घनं छिद्रं प्रविश्य उक्तस्वरूपाः गावो निस्सारिताः । इदं च वृत्तान्तान्वाख्यानस्य तत्त्वं संक्षेपत उक्तम् । सुरूपकृत्नुमिति सूक्तस्य व्याख्याऽप्यत्रावधेया । **अद्रिवः** हे वाजिन् ! **त्वं गोमतः** गोयुक्तस्य **वलस्य** उक्तलक्षणस्य **बिलं** छिद्रं **अपावः** अपावृणोः वृञ्-वरणे लङ् छान्दसम् । **देवाः** त्वत्सहायाः मरुत इति व्याख्यातारः ब्राह्मणमुदाहरन्ति, **अबिभ्युषः** अबिभिवांसः प्रथमार्थे द्वितीया, अभीताः शत्रोरित्यर्थः, **तुज्यमानासः** क्षिप्रनामैतत् , त्वरमाणा इति स्कन्दस्वामी । त्वां **आविषुः** आविविशुः लिट् विशेः, अभ्यासाभावः छान्दसः शकारस्य षश्च ।

**नीतिमञ्जरी–** निन्दावादचौर्यान्निवृत्तिः कार्येत्यर्थ आह–

> **निन्दावादरतो न स्यात्परेषां नैव तस्करः ।**
> **निन्दावादाद्धि गोहर्ता शक्रेणाभिहतो बलः ।। ७ ।।**

कोविदो जनः परेषां निन्दावादरतो न स्यात् । नैव च तस्करः स्यात् । तदृगर्थेन दृढयति । यस्मात् पूर्वं निन्दावादाद्बलासुरः गोहर्त्ता गवां चोरः शक्रेणाभिहतः तस्मादेतद्द्वयं न कुर्यादित्यर्थः ।

अत्रार्थे ऋक्–

> **त्वं वलस्य गोमतोपावरद्रिवो बिलम् ।**
> **त्वां देवा अबिभ्युषस्तुज्यमानास आविषुः ।** ( ऋ० १. १०.२ )

त्वम् । वलस्य । गोऽमतः । अप । अवः । अद्रिऽवः बिलम् । त्वाम् । देवाः । अबिभ्युषः । तुज्यमानासः । आविषुः ।। ६ ।।

मधुच्छन्दा गायत्र्येन्द्रं तुष्टाव । स्वरसाम्नि निष्केवल्ये विनियुक्तम् । इन्द्रो विश्वा अवीवृधन् ( ऋ०१.११.१) इत्यानुष्टभम् निष्केवल्यमित्युक्तम् ।

अयमर्थः । पुरा वलनामकः कश्चिदसुरः परनिन्दापवादनिरतः देवसम्बन्धिनीः गाः अपहृत्य

कस्मिंश्चित्पर्वतबिले गोपितवान् । तदानीमिन्द्रः तद्बिलं स्वसैन्येन समावृत्य बृहस्पतिना सह तस्माद्बिलान्निःसारयामास । इन्द्रो वलस्य बिलमपौर्णोदिति ब्राह्मणे (तै.सं.२.५.१) प्रसिद्धम् । अद्रिरस्यास्तीत्यद्रिवः । हे वज्रयुक्त इन्द्र । त्वं वलस्य वलनामकस्यासुरस्य सम्बन्धि गोमतः गोभियुक्तस्य पर्वतस्य बिलं अपावः स्वसैन्यमुखेनापावृतवानसि । तदानीं देवास्त्वामाविषुः त्वां प्राप्तवन्तः । तुज्यमानासः बलेन हिंस्यमानाः । तुजि हिंसार्थः । पुनः कीदृशाः अबिभ्युषः त्वया रक्षिता वलादभीताः । तथेन्द्रेषु बार्हस्पत्येषु निगमाः ।

इन्द्रो यदभिनद्वलम् । (ऋ.८.१४.७)

इन्द्रो वलं रक्षितारम् (ऋ.१०.६७.६) ।

यो गा उदात् (ऋ.२.१२.३) । इत्येवमादयः । अवः वरवरावरिति (ऋ.प्रा.१.१३) । रेफः ।। अमुना प्रकारेण निन्दावादाद्वलो हत इति ।। ५ ।।

### ऋक्संहिता पदपाठसहिता

**तवाहं शूर रातिभिः प्रत्यायं सिन्धुमावदन् ।**
**उपातिष्ठन्त गिर्वणो विदुष्टे तस्य कारवः ।। ६ ।।**

**तव । अहम् । शूर । रातिऽभिः । प्रति । आयम् । सिन्धुम् । आऽवदन् ।**
**उप । अतिष्ठन्त । गिर्वणः । विदुः । ते । तस्य । कारवः ।। ६ ।।**

### ऋग्भाष्यम्

**तव दानैरहं सिन्धुं नदीं प्रत्यागमं पुनः ।**
**त्वामावदन्स्तुतिपदैर्यज्ञदीक्षार्थमुद्यताः ।**
**उपातिष्ठन्त कर्तारो विदुस्त्वां ये गिरोदित ।। ६ ।।**

**ऋग्भाष्यटीका– तवाहम्** ।। तवदानैः । हे **शूर** इन्द्र **अहं तव रातिभिः** दानैर्निमित्तैः **सिन्धुं** नदीं **प्रत्यायं** प्रत्यागमम् । यज्ञदीक्षार्थमुद्यत इति शेषः । आगत्य पुनः **आवदन्** स्तुतिरूपैर्वेदपदैस्त्वामावदन् सम्यक् स्तुवंश्च जातोऽस्मि । यद्वा । सर्वदा त्वामावदन्नहं पुनः सिन्धुं प्रत्यायमिति योज्यम् । हे **गिर्वणः** गिरा सम्भजनीय वेदगिरोदित तस्य ते तं त्वां ये विदुस्ते **कारवः** कर्तारः ऋत्विजस्तत्र **उपातिष्ठन्त** मन्त्रैस्त्वामपूजयन् ।। ६ ।।

**मन्त्रार्थमञ्जरी–** (हे) शूर, इन्द्र । अहम् तव । रातिभिः, दानैर्निमित्तैः । (यज्ञदीक्षार्थमुद्यतः सन्) इति शेषः । सिन्धुम् नदीम् । प्रति आयम्, प्रत्यागमम् । आगत्य पुनः आवदन् स्तुतिरूपैर्वेदपदैस्त्वां सम्यक्स्तुवँश्च जातोऽस्मि । यद्वा (सर्वदा त्वाम्) आवदन् अहम् सिन्धुम् प्रति आयम्' इति योजना । (हे) गिर्वणः, गिरा सम्भजनीय, वेदगिरोदित । तस्य ते, षष्ठ्यौ द्वितीयार्थे, तं त्वाम् । (ये) विदुः (ते) कारवः, कर्तारः, ऋत्विजः । (तं त्वाम्) उप अतिष्ठन्त, मन्त्रैस्त्वामपूजयन्, 'उपान्मन्त्रकरणे' इत्युपपूर्वस्य तिष्ठतेः आत्मनेपदम् । सुषामादित्वात् 'विदुष्टे' इति षत्वम् ।। ६ ।।

**स्कन्द– तव अहं शूर! रातिभिः** हेतावियं तृतीया । स्तोतृभ्यो यानि महान्ति दानानि तैर्हेतुभूतैः । तैरुत्साहित इत्यर्थः । अथवा प्रयोजनस्यात्र हेतुत्वेन विवक्षा । तव सोमदानैर्हेतुभूतैः । तुभ्यं सोमं दातुमित्यर्थः । **प्रत्यायं** प्रत्यागमम् । **सिन्धुं** स्यन्दू प्रस्रवणे इत्यस्यैतद्रूपम् । स्यन्दितारं सोमम् । यज्ञोत्तरसमाप्तौ यद् गमनं तदपेक्षोऽत्र प्रत्यागमनव्यपदेशः । धात्वर्थानुवादी वा प्रतिशब्दः आगममित्यर्थः । **आवदन्** आभिमुख्येन वदन् । किम् ? सामर्थ्यात् स्तुतीः । न च केवलोऽहम् । किन्तर्हि ? अन्येऽप्यृत्विज ऋषयो वा । **उपातिष्ठन्त** उपस्थितवन्तः त्वां स्तुतिभिः । **गिर्वणः** स्तुतिभिः सम्भजनीय । स्तुतीनां वा सम्भक्तः । किञ्च **विदुष्टे तस्य कारवः** ते तस्येत्युभयत्र द्वितीयार्थे षष्ठी । तच्छब्दश्रुतेश्च योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः । य उक्तगुणः । विदुः जानन्ति त्वां तं **कारवः** स्तोतृनामैतत् (तु.निघ २,१६) अन्येऽपि स्तोतारः ।। ६ ।।

**वेङ्कटमाधव–** तव अहं शूर! रातिभिः त्वत्तः अहं शूर! धनानि गृहीत्वा प्रतिगतवानस्मि । कुतस्त्वयेमानि धनानि लब्धानीति प्रगृह्य तव धवानां स्यन्दनमाभिमुख्येन वदन् 'इन्द्रादिमानि लब्धानि' इति मां उपातिष्ठन्त अध्वगाः । गीर्भिर्वननीय! तव तत् कर्म प्राज्ञा जानन्ति । तेषामस्माकं वर्धयान्नानीति ।। ६ ।।

**मुद्गल– हे शूर! इन्द्र! तव रातिभिः** त्वदीयैर्धनदानैर्निमित्तभूतैः **अहं** होता **प्रत्यायं** त्वां पुनरागतोऽस्मि । पुरा बहुषु कर्मसु त्वत्तो धनस्य लब्धत्वादस्मिन् कर्मणि प्रत्यागमन-मित्युच्यते । किं कुर्वन् ? **सिन्धुं** स्यन्दमानं सोमम् । **आवदन्** अस्मिन् सोमयागे त्वदीयां धनदानकीर्तिं प्रकटयन्नित्यर्थः । हे **गिर्वणः** गीर्भिर्वननीयेन्द्र! **कारवः** कर्तारः ऋत्विग्यजमानाः

**उपातिष्ठन्त** पुरा धनलाभार्थं त्वामुपस्थितवन्तः । उपस्थाय च तस्य तादृशस्यौदार्योपेतस्य **ते** तव धनदानं **विदुः** जानन्ति ।। ६ ।।

**सायण– हे शूर** सङ्ग्रामे शौर्ययुक्तेन्द्र **तव रातिभिः** कर्मसु त्वदीयैर्धनदानैर्निमित्तभूतैः **अहं** होता **प्रत्यायं** त्वां पुनरागतोऽस्मि । पुरा बहुषु कर्मसु त्वत्तो धनस्य लब्धत्वादस्मिन् कर्मणि प्रत्यागमनमित्युच्यते । किं कुर्वन् ? **सिन्धुं** स्यन्दमानं सोमं **आवदन्** सर्वतः कथयन् । अस्मिन् सोमयागे त्वदीयां धनदानकीर्तिं प्रकटयन्नित्यर्थः । **हे गिर्वणः** गीर्भिर्वननीयेन्द्र**! कारवः** ऋत्विग्यजमानाः **उपातिष्ठन्त** पुरा धनलाभार्थं त्वामुपस्थितवन्तः । उपस्थाय च तस्य तादृशस्यौदार्योपेतस्य **ते** तव धनदानं **विदुः** जानन्ति । गिवर्णस्शब्दं यास्क इत्थं निर्ब्रूते– 'गिर्वणा देवो भवति गीर्भिरेनं वनयन्ति' (नि.६,९४) इति । 'रेभो जरिता' इत्यादिषु त्रयोदशसु स्तोतृनामसु कारुशब्दः (नि.३,१६,३) पठितः ।

तव । 'युष्मदस्मदोर्ङसि' (पा.सू.६,१,२११) इत्याद्युदात्तत्वम् । रातिभिः । 'मन्त्रे वृष' इत्यादिना क्तिन् उदात्तः । आयम् । इणो लङ् । 'तस्थस्थमिपां तांतंतामः' (पा.सू.३,४,१०१) इति अमादेशः । 'अदिप्रभृतिभ्यः शपः' (पा.सू.२,४,७२) इति शपो लुक् । आडागमः । वृद्ध्यायादेशौ । 'तिङ्ङतिङः' इति निघातः । सिन्धुम् । 'स्यन्दू प्रस्रवणे' । 'नित्' (उ.सू.१,९) इत्यनुवृत्तौ 'स्यन्देः सम्प्रसारणं धश्च' (उ.सू.१,११) इति उप्रत्ययो धकारश्च अन्तादेशः । नित्त्वादाद्युदात्तः । आवदन् । 'वद व्यक्तायां वाचि' । लटः शतृ । शपः पित्त्वादनुदात्तत्वम् । शतुश्च लसार्वधातुकस्वरेण धातुस्वर एव शिष्यते । आङा सह 'कुगति-प्रादयः' (पा.सू.२,२,१८) इति समासः । कृदुत्तरपदप्रकृतिस्वरत्वम् । अतिष्ठन्त । 'उपान्मन्त्रकरणे' (पा.सू.१,३,२५) इत्यात्मनेपदम् । गिर्वणः । 'वन षण सम्भक्तौ' । असुन् । 'आमन्त्रितस्य च' इति निघातः । विदुः । 'विद ज्ञाने' । लट् । 'अदिप्रभृतिभ्यः शपः' इति शपो लुक् । 'विदो लटो वा' (पा.सू.३,४,८३) इति झेः उस् । पादादित्वात् न निघातः । संहितायां 'युष्मत्तत्ततक्षुःष्वन्तःपादम्' (पा.सू.८,३,१०३) इति षत्वम् । 'ष्टुना ष्टुः' (पा.सू. ८,४,४१) इत्युत्तरस्य तकारस्य ष्टुत्वम् । तस्य 'सावेकाचः' (पा.सू.६,१,१६८) इति विभक्तेरुदात्तत्वं प्राप्तं 'न गोश्वन्साववर्ण' (पा.सू.६,१,१८२) इति निषिध्यते । कारवः । 'कृवापाजि' (उ.सू.१,१) इत्यादिना उण् । प्रत्ययस्वरः ।। ६ ।।

**सिद्धाञ्जनम्–** षष्ठीमृचमाह– **गिर्वणः** स्तुतिभिः सम्भजनीय! **शूर** शौर्योपेत इन्द्र तव **रातिभिः** अनुग्रहलक्षणैः दानैः **सिन्धुं** स्यन्दमानं सिन्धुवत् प्रवहन्तं त्वां, सोममित्येके व्याख्यातारः **अहं प्रत्यायं** प्रत्यागमं त्वत्सन्निधिमहमागतवानस्मीत्यर्थः । आयम् , इण गतौ लङ् । किं कुर्वन् ? **आ वदन्** सर्वत उच्चारयन् ख्यापयन्नित्यर्थः, तव महिमानमिति शेषः । शूरस्य तव प्रसादाल्लब्धैः तेजो-बल-पराक्रमैरेव सर्वत्र कृतवानस्मि योगयात्राम् । अस्मदीयान्न-प्राण-मनोगतसोमरसशोषणैर-सुरैरशोषितः सन् सिन्धुवन्नित्यरसप्रवाहं त्वां प्राप्तवानस्मीति भावः । 'शूर' 'सिन्धुम्' इति प्रयोगस्य प्रयोजनं बोध्यम् । 'मायाभिः' इत्युत्तरर्चा सम्बन्धोऽस्या ग्राह्यः। तदिदं ते माहात्म्यं यद् विशुद्ध-बुद्धयो यज्ञशालिनो वा त्वामुपतिष्ठन्ते। मन्त्रकृतामृषीणां तत्ते विदितमिति चेत्युत्तरार्धेनाह। **गिर्वणः** गीर्भिर्वननीय हे इन्द्र, मेधाविनो यज्ञवन्तो वा **उपातिष्ठन्त** उपतिष्ठन्ते स्तुतिभिस्त्वामिति शेषः । **तस्य** तादृशस्य **ते** तव महिमानं **कारवः** कर्तारः स्तोत्राणां विदुः जानन्ति ।। ६ ।।

## ऋक्संहिता पदपाठसहिता

**मायाभिरिन्द्र मायिनं त्वं शुष्णमवातिरः ।**
**विदुष्टे तस्य मेधिरास्तेषां श्रवांस्युत्तिर ।। ७ ।।**
मायाभिः । इन्द्र । मायिनम् । त्वम् । शुष्णम् । अव । अतिरः ।
विदुः । ते । तस्य । मेधिराः । तेषाम् । श्रवांसि । उत् । तिर ।। ७ ।।

## ऋग्भाष्यम्

**शक्तिभिः शक्तिमन्तं त्वां शोषकं वृत्रमातिरः ।**
**तमोवा त्वां विदुर्मेधारतास्तेषां श्रवांसिच ।**
**विद्या उच्चैस्तरां देहि ............... ।। ७ ।।**

**ऋग्भाष्यटीका– मायाभिः ।** शक्तिभिः । हे इन्द्र त्वं **मायिनं** शक्तिमन्तं व्रीह्यादि-त्वात्साधुः । **शुष्णं** शोषकं शुषेर्नङ् । वृत्रमिति यावत् । **मायाभिः** शक्तिभिः **अवातिरः** तिरति-र्वधकर्मा, हतवानसि । तमो वेत्यध्यात्मं मायिनं शुष्णमिति तमोऽज्ञानमुच्यते । शेषं समानमिति । किञ्च । ये **मेधिराः** मेधारताः । तृतीयस्यातिशयार्थत्वात् । **तस्य ते** तं त्वां विदुः । तेषां श्रूयन्त इति **श्रवांसि** विद्याः **उत्तिर** उच्चैस्तरां देहि ।। ७ ।।

**मन्त्रार्थमञ्जरी–** (हे) इन्द्र त्वम् । मायिनम्, शक्तिमन्तम्, 'व्रीह्यादिभ्यश्च' इति मायाशब्दादिनिप्रत्ययः । शुष्णम्, शोषकम्, 'शुष शोषणे' इत्यतो नङ् (क्) णत्वम्, वृत्रमिति यावत्, अध्यात्मं तु तमो ज्ञेयम् । मायाभिः, शक्तिभिः । अव अतिरः, 'तिर वेधे' इत्यतो लङ्, हतवानसि । किं च (ये) मेधिराः, अतिशयेन मेधारताः, तृतीयो वर्णोऽतिशयार्थः, 'अ, आ, इ' इत्येवं ह्रस्वापेक्षयोकारस्य तृतीयत्वात् । तस्य ते, तं त्वाम् । विदुः तेषाम् । श्रवांसि, 'श्रूयन्ते' इति कर्मव्युत्पत्त्या विद्याः । उत् तिर, उच्चैस्तरां देहि ।। ७ ।।

**स्कन्द–** 'माया' (निघ.३,९) इति प्रज्ञानाम । प्रज्ञाभिः । हे **इन्द्र! मायिनं** अतिसन्धान-प्रज्ञायुक्तम् । **शुष्णं** शुष्णनामानमसुरम् । **अवातिरः** अवतिरतिर्वधकर्मा । हतवान् । यश्चेन्द्रः असि, **विदुष्टे तस्य** जानन्ति त्वां **मेधिराः** यज्ञवन्तः यज्ञकारिणः । कतमे ? सामर्थ्यादस्मदीया ऋत्विजः पुत्रपौत्रादिका वा । एतज्ज्ञात्वा भक्ततया त्वन्माहात्म्यज्ञानाभियुक्तानां **तेषां श्रवांसि** अन्नानि **उत्तिर** तिरतिर्वृद्ध्यर्थः । ऊर्ध्वं वर्धय । उत्तरोत्तरवृद्ध्या वर्धयेत्यर्थः ।। ७ ।।

**वेङ्कटमाधव–** मायाभिः एव इन्द्र! त्वं मायाविनं शुष्णासुरं व्यनाशयः । तव तत् कर्म प्राज्ञा जानन्ति । तेषां अस्माकं वर्धय अन्नानि ।। ७ ।।

**मुद्गल–** हे इन्द्र! **त्वं मायिनं** नानाविधकपटोपेतं **शुष्णं** भूतानां शोषणहेतुं एतन्नामकमसुरं **मायाभिः** तत्प्रतिकूलैः कपटविशेषैः **अवातिरः** हिंसितवानसि । **मेधिराः** मेधावन्तः **तस्य** तादृशस्य **ते** तव महिमानं **विदुः** जानन्ति । तेषां जानतामनुष्ठातॄणां **श्रवांसि** अन्नानि **उत्तिर** वर्धय ।। ७ ।।

**सायण–** हे **इन्द्र त्वं मायिनं** नानाविधकपटोपेतं **शुष्णं** भूतानां शोषणहेतुं एतन्नामकमसुरं **मायाभिः** तत्प्रतिकूलैः कपटविशेषैः । यद्वा । तद्वधोपायगोचरप्रज्ञाभिः **अवातिरः** हिंसितवानसि । एतच्च यास्केनोक्तम् – 'इन्द्रः शुष्णं जघान' (निरु.३,११) इति । 'शुष्णं पिप्रुम्' (ऋ.सं.१, १०३,८) इत्यादिमन्त्रे चायमर्थो विस्पष्टः । **मेधिराः** मेधावन्तोऽनुष्ठातारः **तस्य** तादृशस्य **ते** तव महिमानं **विदुः** जानन्ति । तेषां जानतामनुष्ठातॄणां **श्रवांसि** अन्नानि **उत्तिर** वर्धय । 'केतः केतुः' इत्यादिष्वेकादशसु प्रज्ञानामसु 'माया वयुनम्' (नि.३,९,९) इति पठितम् । श्रवःशब्दं यास्को निर्वक्ति– 'श्रव इत्यन्ननाम श्रूयत इति सतः' (निरु.१०,३) इति ।

मायाभिः । 'माङ् माने' । 'माच्छाससिसूभ्यो यः' (उ.सू.४,५४९) इति यप्रत्ययः । प्रत्ययस्वरः । मायिनम् । मायाऽस्यास्तीति मायी । व्रीह्यादित्वात् इनिप्रत्ययः (पा.सू.५,२,११६) । प्रत्ययस्वरः । शुष्णम् । 'शुष शोषणे' । अस्मादन्तर्भावितण्यर्थात् 'नित्' इत्यनुवृत्तौ 'तृषिशुषिरसिभ्यः किश्च' (उ.सू.३,२९२) इति नप्रत्ययः । नित्त्वादाद्युदात्तः । अतिरः । तरतेर्लङि व्यत्ययेन शः । तस्य ङित्त्वेन गुणाभावात् 'ऋत इद्धातोः' इति इत्वम् । रपरत्वम् । विदुष्टे तस्य । गतमन्त्रे गतम् । मेधिराः । 'मिधृ मेधृ मेधाहिंसनयोः' । औणादिक इरन् । नित्त्वादाद्युदात्तः । श्रवांसि । नब्विषयत्वादाद्युदात्तः ।। ७ ।।

**सिद्धाञ्जनम्–** सप्तमीमृचमाह– हे **इन्द्र त्वं मायाभिः** तव प्रज्ञाभिः कापट्यगवेषणदर्शन-विध्वंसनकुशलाभिः विविधाभिरित्यर्थः **मायिनं** विविधकपटप्रज्ञोपेतं **शुष्णं** एतन्नामकं असुरं **अवातिरः** हतवानसि अवतिरतिर्वधकर्मेति स्कन्दस्वामी, अधस्तात् कृतवान् इत्युपपन्नः पदार्थः। **मेधिराः** मेधाविन ऋषयः **तस्य ते** तादृशस्तव महिमानं **विदुः** जानन्ति । **तेषां** ऋषीणां **श्रवांसि** श्रवणानि दिव्यानि **उत्तिर** वर्धय, उत्कृष्टानि कुरु। वृत्रबन्धुर्वल इव तज्जातीयकोऽसुरः शुष्णः शोषयिता रसानां भूतानां इत्येके । अन्यत्प्राग्व्याख्यातं 'सिन्धुम्' इति प्रसक्तौ । 'विदुष्टे तस्य' इति आवृत्तिः 'मेधिराः' 'कारवः' इति श्रवणं च उभयोर्ऋचोः सम्बन्धं द्योतयेताम् ।। ८ ।।

### ऋक्संहिता पदपाठसहिता

**इन्द्रमीशानमोजसाभि स्तोमा अनूषत ।**
**सहस्रं यस्य रातय उतवा सन्ति भूयसीः ।। ८ ।।**
इन्द्रम् । ईशानम् । ओजसा । अभि । स्तोमाः । अनूषत ।
सहस्रम् । यस्य । रातयः । उत । वा । सन्ति । भूयसीः ।। ८ ।।

### ऋग्भाष्यम्

**................ स्तुवन्ति त्वां सहौजसा ।। ८ ।।**
**ऋक्संहितायाः स्वाध्यायात्प्रबन्धाद् व्यासनिर्मितात् ।**
**ब्राह्मणेभ्यस्तथामानात् प्रोक्ताः स्युर्मुनयोत्र ये ।**
**श्रुत्यभावादलिङ्गाच्च मुनिर्नान्यः प्रतीयते ।**
**श्रुतिलिङ्गान्यता यावत्तावत्पूर्वा प्रमा भवेत् ।**

**शतर्चिभिरुत्तराभिस्तु वह्निनामानमच्युतम् ।**
**अस्तौन्मेधातिथिस्ताभ्य उत्तरा अपि तद्दृशः ।**
**अन्यत्र गास्तपस्यन्स ता ददर्श कदाचन ।**
**कालस्थानान्तरत्वं चेत्सङ्ख्यातोऽभ्यधिकं भवेत् ।**
**अन्यस्थानगता अन्यदृष्टा अप्यत्रगा यदि ।**
**सङ्ख्यान्तर्भावमेष्यन्ति ता इतोपगता यतः ।**

**ऋग्भाष्यटीका– इन्द्रमीशानम्** । स्तुवन्ति । **यस्य** इन्द्रस्य सहस्रमुतवाऽतोपि **भूयसीः** भूयस्यः **रातयः** दानानि सन्ति तमीशानमिन्द्रं त्वां **ओजसा** ओजःप्रभृतिभिर्गुणैः सह **स्तोमाः** स्तुतिविशेषा **अनूषत** अभ्यनूषत सदा स्तुवन्ति ।

नन्वेवं शतर्चित्वस्य गतिमुक्त्वाऽप्येतासामृचां मधुच्छन्दाः कस्मादृषिरुच्यते माधुच्छन्दसो जेता कस्मान्न स्यादित्यत आह– **ऋक्संहिताया इति** ।। तथाशब्दः समुच्चये । **मानादिति** प्रत्येकमभिसम्बध्यते । तथा मानान्मानान्तरादिति वा । येऽत्र ग्रन्थेऽस्माभिर्मुनयः प्रोक्तास्ते ऋक्संहिताद्यनुसारेणैव अतस्त एव स्युः । यद्वा ऋक्संहितादिना मानेन येऽत्र मुनयः प्रोक्तास्त एव स्वीकार्याः स्युः । न मानुषरचितग्रन्थोक्ता इति । युक्त्यन्तरमाह– **श्रुत्यभावादिति** ।। शुनःशेपो ह्यह्वदित्यादिवत् श्रुत्यभावात् मधुच्छन्दसोऽन्यस्य मुनेर्नामाभावात् । त्रिष्वादित्यं द्रुपदेषु बद्ध इत्यादिवदलिङ्गादृष्यन्तरलिङ्गाभावाच्च । उपलक्षणं चैतत् । ऋष्यन्तरज्ञापकप्रमाणाभावा-दित्यर्थः । अन्यो मधुच्छन्दसः । किञ्च तदु माधुच्छन्दसमित्यादिना वायवायाहीत्यादिसूक्तानां मधुच्छन्दसा दृष्टत्वमुच्यते । ततोऽपि स एवात्र द्रष्टाऽभ्युपगन्तव्यः । एवं तर्ह्यतिप्रसङ्ग इत्यत आह– **श्रुतीति** ।। श्रुतिलिङ्गयोरन्यता । अन्यज्ञापकं श्रुतिलिङ्गादि यावद्भवेत्तावदेव पूर्वा प्रमा सामान्यप्रमाणं ज्ञापकं भवेत् । एतदुक्तं भवति । तदु माधुच्छन्दसमित्यादिसामान्यवचनम् । तच्चापवादाभावे प्रमाणम् । अपवादेतु संकोचमर्हति । नचात्रापवादकं श्रुत्यादिकमस्तीति ।

अथ व्याचिख्यासितानामृचामृषिमाह– **शतर्चिभिरिति** ।। विशेषणसमासोयम् । न द्विगुः । समासान्तो विधिरनित्यः । वह्निनामानमित्युपलक्षणम् । एवं चेत्कस्य नूनमित्यतः प्राक्त-नीनामृष्यन्तरं वक्तव्यं प्रसज्येतेत्यत आह– **ताभ्य इति** ।। शतसङ्ख्याभ्य उत्तरा एकोन-चत्वारिंशदपि स मेधातिथिर्दृक् द्रष्टा यासां तास्तद्दृशः । तर्हि कथं तस्य शतर्चित्वमित्यत आह–

**अन्यत्रेति** ।। अन्यत्र गा इत्यानुपूर्व्यन्तरत्वमुक्तम् । तपस्यन्नित्यवस्थान्तरत्वम् । कदाचनेति कालान्तरत्वम् । स मेधातिथिः । किमतो यद्येवमित्यत आह– **कालेति** ।। कालान्तरत्वं स्थानान्तरत्वं च दर्शनस्य चेत्तर्हि शतसङ्ख्यातोऽभ्यधिकमपि तदन्तर्भूतमेव भवेत् । कालस्थानान्तरत्वमित्युपलक्षणम् । अन्यस्थानगतत्वमन्यदृष्टत्वं च ग्राह्यम् । अत्र युक्तिमाह– **अन्येति** ।। अत्रापि कालान्तरत्वादिकमुपादेयम् । ताः कालान्तरे देशान्तरेऽवस्थान्तरे च दृष्टा ऋष्यन्तरेण वा दृष्टा आनुपूर्व्यन्तरस्थाश्च इतोपगताः अत्र विद्यमाना अप्यविद्यमानकल्पा यतः अतः सङ्ख्यान्तर्भावमेष्यन्ति । तासु विद्यमानास्वपि शतमित्येवोच्यत इति यावत् । एकदेशकालावस्थासु तेनैव ऋषिणा दृष्टा मूलवेदे चैकानुपूर्वीस्थाहि शतर्चित्वे विवक्षिता इति ।। ८ ।।

**मन्त्रार्थमञ्जरी–** यस्य, इन्द्रस्य । सहस्रम् । उत वा, ततोऽपि । भूयसीः, भूयस्यः । रातयः, दानानि । सन्ति (तम्) ईशानम् इन्द्रम् (त्वाम्) ओजसा । ओजःप्रभृतिभिर्गुणैः सह । स्तोमाः, स्तुतिविशेषाः । अभि अनूषत, सदा स्तुवन्ति, 'णु स्तुतौ' लुङ् आत्मनेपदम् ।।८।।

**स्कन्द– इन्द्रं ईशानं** सर्वस्य प्रभवन्तम् । केन हेतुना? **ओजसा** बलेन हेतुना । **अभि स्तोमा अनूषत** अस्मदीयाः स्तोमा अभिष्टुतवन्तः । **यस्य** इन्द्रस्य । किम् ? उंच्यते– **सहस्रं यस्य रातयः** स्तोतृभ्यो दानानि । उत वा उतेत्यप्यर्थे । अपि वा **सन्ति भूयसीः** सहस्रादपि बहुतराः । यः स्तोतृभ्योऽत्यन्तं बहूनि दानानि ददातीत्यर्थः ।। ८ ।।

**वेङ्कटमाधव–** इन्द्रं ईश्वरं बलेन सर्वस्य अस्मदीयाः स्तोमाः अभ्यस्तुवन् । सहस्रसङ्ख्यायुक्तानि यस्य दानानि । अपि वा विद्यन्ते भूयांसीति ।। ८ ।।

**मुद्गल– स्तोमाः** स्तोतारः ऋत्विजः **ओजसा** बलेन **ईशानं** जगतो नियामकं **इन्द्रं अभ्यनूषत** सर्वत्र स्तुतवन्तः । **यस्य** इन्द्रस्य **रातयः** धनदानानि **सहस्रं** सहस्रसंख्योपेतानि सन्ति । उत वा अथवा **भूयसीः** बह्व्यः ।। ८ ।।

**सायण– स्तोमाः** स्तोतार ऋत्विजः **ओजसा** बलेन **ईशानं** जगतो नियामकं **इन्द्रं अभि अनूषत** सर्वत्र स्तुतवन्तः । **यस्य** इन्द्रस्य **रातयः** धनदानानि **सहस्रं** सहस्रसङ्ख्योपेतानि सन्ति । **उत वा** अथवा **भूयसीः** सहस्रसङ्ख्याया अप्यधिकाः सन्ति । तमिन्द्रमिति पूर्वत्रान्वयः ।

इन्द्रम् । 'ऋज्रेन्द्र' (उ.सू.२,१८६) इत्यादिना रन् । नित्त्वादाद्युदात्तः । ईशानम् । लटः शानच् । 'अदिप्रभृतिभ्यः शपः' इति शपो लुक् । धातोरनुदात्तेत्त्वात् 'तास्यनुदात्त' (पा.सू. ६,१,१८६) इत्यादिना शानचोऽनुदात्तत्वम् । ओजसा । नब्विषयत्वादाद्युदात्तः । स्तोमाः । 'अर्तिस्तुसु' (उ.सू.१,१३७) इत्यादिना मन्प्रत्ययः । नित्त्वादाद्युदात्तः । अनूषत । 'णु स्तुतौ' 'णो नः' । लुङ् । व्यत्ययेन झः । तस्य अदादेशः (पा.सू.७,१,५) । च्लेः सिच् । अस्य धातोः कुटादित्वेन सिचो ङित्त्वाद्गुणाभावः । इडभावश्छान्दसः दीर्घत्वं च । अडागमः । सहस्रम् । 'कर्दमादीनां च' (फि.सू.५९) इति द्वितीयाक्षरमुदात्तम् । रातयः । 'मन्त्रे वृषः' इत्यादिना क्तिन् उदात्तः । उत । प्रातिपदिकस्वरः । वा । चादिरनुदात्तः । सन्ति । प्रत्ययाद्युदात्तत्वम् । 'तिङ्ङतिङः' इति निघातो न भवति 'यद्वृत्तान्नित्यम्' (पा.सू.८,१,६६) इति प्रतिषेधात् । स हि व्यवहितेऽपि भवतीत्युक्तम् । भूयसीः । सहस्रादतिशयेन बह्व्यो भूयस्यः । अत्र विभक्तव्यस्य सहस्रस्य सन्निधिबलादुपपदत्वप्रतीतेः 'द्विवचनविभज्योपपदे तरबीयसुनौ'(पा.सू.५,३,५७) इति बहुशब्दात् ईयसुन् । 'बहोर्लोपो भू च बहोः' (पा.सू.६,४,१५८) इति ईकारलोपः प्रकृतेः भू इति आदेशश्च । ईयसुनो नित्त्वादाद्युदात्तत्वम् । 'उगितश्च' (पा.सू.४,१,६) इति ङीप् ॥

**सिद्धाञ्जनम्–** अष्टमीमृचमाह– **ओजसा** बलेन ईशानं विश्वस्य नियामकं ईश्वरं, ईष्टे इत्यस्मात् शानच् । **इन्द्रं स्तोमाः** स्तोतारः अभ्यनूषत अभिमुखं स्तुवन्ति, लडर्थे लुङ् । **यस्य** इन्द्रस्य **रातयः** दानानि **सहस्रं** बहुसङ्ख्योपलक्षणमिदम् । **सन्ति, उत वा** अपि वा **भूयसीः** भूयस्यः विभक्तिव्यत्ययः, बहुतराः सन्ति भवन्ति ।

सूक्तेऽस्मिन् ऋचां पदार्थकथन एव सामान्यतस्तत्र तत्र तात्पर्यमाविष्कृतमिति नेह विस्तर इष्यते। मधुच्छन्दस एवेदमपि सूक्तं न तत्पुत्रस्येति प्राहुरेके। तथा आनन्दतीर्थ आचार्यो मन्यते । ऋषिर्जेतैव भवतु मा वा । तात्पर्यावगतौ ऋषेर्निर्णयं अधिकृत्य मतभेदोऽकिञ्चित्करः, विशेषतो गतिसामान्यात् । माधुच्छन्दसानि सूक्तानि एकादश दाशतय्यामाद्यानि व्याख्यातानि । अग्नीन्द्रादिदेवतानां तत्त्वं भूमिकायां प्रतिपादितमवधृत्य एषां सूक्तानां अवलोकने गूढार्थपद्धतिर्विशदा भवेदित्यसंशयम् ।

॥ इति प्रथमाष्टके प्रथमाध्याये एकविंशो वर्गः ॥

॥ इति प्रथमे मण्डले तृतीयोऽनुवाकः ॥

## ।। अथ द्वाविंशो वर्गः ।।

### (सूक्तम् १२)

### ऋक्संहिता पदपाठसहिता

१२ मेधातिथिः काण्वः । अग्निः,६ प्रथमपादस्य निर्मथ्याहवनीयौ अग्नी । गायत्री ।

**अग्निं दूतं वृणीमहे होतारं विश्ववेदसम् । अस्य यज्ञस्य सुक्रतुम् ।। १ ।।**

अग्निम् । दूतम् । वृणीमहे । होतारम् । विश्वऽवेदसम्। अस्य । यज्ञस्य । सुऽक्रतुम् ।।१।।

### ऋग्भाष्यम्

**यज्ञभागार्थमत्रस्थो देवैः सम्प्रेषितो यतः ।**
**दूतोऽग्निर्वासुदेवश्च तत्तत्प्रार्थितकृद्यतः ।**
**विश्ववेदाः ससर्वज्ञो यज्ञज्ञो यज्ञसुक्रतुः ।। १ ।।**

**ऋग्भाष्यटीका– अग्निं दूतम्** ।। द्वादशर्चमेतदाग्नेयं सूक्तम् । अत्राग्नाविष्णवोर्दूतशब्दं घटयति– **यज्ञेति** ।। यतोऽग्निर्यज्ञभागार्थं देवैः सम्प्रेषितस्ततो दूतः । सन्देशेन यः प्रेष्यते सहि दूत उच्यते । अत्रस्थोऽग्निस्थो वासुदेवश्च तत्तत्प्रार्थितकृद्यतोऽतो दूत इव दूतः । विश्वं वेत्तीति **विश्ववेदाः** । विदेः कर्तर्यसुन् । स विष्णुः । अग्नौ तूपचारत इति भावः । यज्ञस्य सुक्रतुमित्यस्य व्याख्यानं– **यज्ञज्ञ इति** । क्रतुशब्दस्य ज्ञानवाचित्वात् । एवं योजना । वयं दूतं होतारं विश्ववेदसं **अस्य** प्रमाणप्रमितस्य यज्ञजातस्य **सुक्रतुं** सम्यक् ज्ञानिनं **अग्निं वृणीमहे** प्रार्थयामह इति यावत् ।। १ ।।

**मन्त्रार्थमञ्जरी–** इतः परम् 'अग्निं दूतम्' इत्यारभ्य 'कस्य नूनम्' इत्यतः प्राक् एतदृक्चतुष्टयं विना एकोनचत्वारिंशदुत्तरऋक्शतस्य (केवल) मेधातिथिर्ऋषिर्ज्ञेयः । तत्र अग्निं दूतम् इति द्वादशं द्वादशर्चं वर्गद्वयात्मकमाग्नेयं सूक्तम् । (तत्र 'अग्निनाग्निः' इति पादो निर्मथ्याहवनीयरूप-द्व्यग्निदैवतः' इति विशेषः) एतत्तु गायत्रीछन्दस्कम्, तद्देवतास्तूक्ताः अत्राग्निस्थोऽग्निनामा परशुरामो ज्ञेयः । विश्ववेदसम्, विश्वं वेत्तीति विश्ववेदाः, विदेः असुन्, तं विश्ववेदसम्, विष्णावग्नौ च यथायोगं विश्ववेदनं ध्येयम् । अस्य, प्रमाणप्रमितस्य । यज्ञस्य सुक्रतुम्, यज्ञजातस्य सम्यग्ज्ञानि-नम् । दूतम्, देवप्रार्थितकारित्वादुपचारेण दूतं विष्णुम्, हविर्भागार्थं देवप्रैष्यत्वहेतुना दूतं

प्रसिद्धदेवम् । होतारम्, 'अग्निमीळे' इत्यत्रोक्तदिशा होतृस्थतया होतृनामकम् । अग्निम् (वयम्) वृणीमहे, प्रार्थयामह इति यावत् ।। १ ।।

**स्कन्द–** अग्निं मेधातिथिः काण्वः (तु.ऋ.अ.१,१२) । 'अग्निं दूतम्' इत्यादि मेधातिथिर्नाम कण्वपुत्रोऽपश्यत् । 'अग्निं दूतम् इत्याग्नेयम्' (तु.ऋ.अ.१,१२) । 'अग्निं दूतम् इत्येतत् सूक्तमग्निदेवतम् । सन्देशेन यः प्रेष्यते स दूत उच्यते । **अग्निं दूतं** देवान् प्रति सन्देशेन गन्तारं **वृणीमहे** वयमभ्यर्थयामहे । न केवलं दूतमेव । किन्तर्हि ? **होतारं** च तेन ह्यधिष्ठितो मानुषो होता हौत्रं कर्तुं शक्नोति नानधिष्ठितः । क्रियाशब्दो वा होतृशब्दः । होतारं च देवानाम् । कीदृशम्? **विश्ववेदसं** 'वेदः' (निघ.२,१०) इति धननाम । सर्वधनं सर्वप्रज्ञं वा । कं होतारम्? **अस्य** प्रकृतस्य **यज्ञस्य सुक्रतुं** सुकर्माणं सुप्रज्ञं वा ।। १ ।।

**वेङ्कटमाधव–** मेधातिथिः काण्वः । अग्निं दूतं वृणीमहे होतारं सर्वधनिनं अस्य यज्ञस्य सुप्रज्ञम् ।। १ ।।

**मुद्गल–** चतुर्थेऽनुवाके षट् सूक्तानि । तत्र 'अग्निं दूतं' इति द्वादशर्चं प्रथमं सूक्तम् । कण्वपुत्रो मेधातिथिः ऋषिः । गायत्रम् । अग्निर्देवता ।

अग्निं कीदृशम् ? **दूतं** देवदूतं अस्मिन् कर्मणि **वृणीमहे** सम्भजामः । पुनः कीदृशम् ? **होतारं** देवानामाह्वातारं **विश्ववेदसं** सर्वधनोपेतं **अस्य** प्रवर्तमानस्य **यज्ञस्य** निष्पादकत्वेन **सुक्रतुं** शोभनकर्माणम् ।। १ ।।

**सायण–** चतुर्थानुवाके षट्सूक्तानि । तत्र 'अग्निं दूतम्' इत्यादिकस्य द्वादशर्चस्य प्रथमस्य सूक्तस्य कण्वपुत्रो मेधातिथिर्ऋषिः । अपवादाभावादनुवर्तमानं 'प्राग्घिरण्यस्तूपात्' (अनु. १२,१४) इत्युक्तं गायत्रमेव छन्दः । अग्निदेवताकत्वं विस्पष्टम् । अत एवानुक्रम्यते– 'अग्निं द्वादश मेधातिथिः काण्व आग्नेयमग्निनेति पादो द्व्यग्निदैवतो निर्मथ्य आहवनीयश्च' इति । विनियोगस्तु प्रातरनुवाके आग्नेये क्रतौ गायत्रे छन्दसि 'अग्निं दूतम्' इति सूक्तम् । 'अथैतस्या रात्रेर्विवासकाले' इति खण्डे 'अग्निमीळेऽग्निं दूतम्' (आश्व.श्रौ.४,१३) इति सूत्रितम् । तथा पृष्ठ्यषडहस्य द्वितीयेऽहनि इदमेव सूक्तमाज्यशस्त्रम् । 'पृष्ठ्यस्याभिप्लवेनोक्ते अहनी' इति खण्डे सूत्रितम्– 'अग्निं दूतमिति द्वितीये' (आश्व.श्रौ.७,१०) इति । दर्शपूर्णमासयोः सामिधेनीषु

'अग्निं दूतम्' इत्येका । 'नमः प्रवक्त्रे' इति खण्डे सूत्रितम्– 'ईळेन्यो नमस्यस्तिरोऽग्निं दूतं वृणीमहे' (आश्व.श्रौ.१,२) इति ।

अग्नेर्दूतत्वमेतन्मन्त्रव्याख्याने तैत्तिरीयब्राह्मणे समाम्नायते– 'अग्निर्देवानां दूत आसीदुशनाः काव्योऽसुराणाम्' (तै.सं.२,५,८,५) इति । तादृशं देवदूतं **अग्निं** अस्मिन् कर्मणि **वृणीमहे** सम्भजामः । कीदृशम् ? **होतारं** देवानामाह्वातारं **विश्ववेदसं** सर्वधनोपेतं **अस्य** प्रवर्तमानस्य **यज्ञस्य** निष्पादकत्वेन **सुक्रतुं** शोभनकर्माणं शोभनप्रज्ञं वा । 'मघम्' इत्यादिष्वष्टाविंशतिसङ्ख्याकेषु धननामसु वेदस्शब्दः (नि.२,१०,४) पठितः । होतारम् । 'ह्वेञ् स्पर्धायां शब्दे च' । ताच्छील्यादिषु तृन् । 'बहुलं छन्दसि' (पा.सू.६,१,३४) इति सम्प्रसारणे परपूर्वत्वे गुणः । नित्त्वादाद्युदात्तः । विश्ववेदसम् । 'बहुव्रीहौ विश्वं संज्ञायाम्' (पा.सू.६,२,१०६) इति पूर्वपदान्तोदात्तत्वम् । अस्य । 'ऊडिदम्' (पा.सू.६,१,१७१) इत्यादिना विभक्तेरुदात्तत्वम् । सुक्रतुम् । 'क्रत्वादयश्च' (पा.सू.६,२,११८) इत्याद्युदात्तत्वम् ॥ १ ॥

**सिद्धाञ्जनम्–** अथ चतुर्थोऽनुवाकः । तत्र षट्सूक्तानि । ऋषिर्मेधातिथिः कण्वपुत्रः । आद्यं अग्निं दूतमिति द्वादशर्चं आग्नेयं गायत्रं सूक्तम् । तत्र प्रथमामृचमाह–

**अग्निं वृणीमहे** अभ्यर्थयामहे इति स्कन्दस्वामी । अस्मदर्थं देवान् प्रति दूतत्वे अध्येषामहे इत्युपपन्नतरम् । कीदृशम् ? **दूतं** सामर्थ्याद्विधेयविशेषणं ग्राह्यम् । पुनः कीदृशम् ? **होतारं** आह्वातारम् । पुनश्च **विश्ववेदसं** विश्वस्य वेत्तारम् । **अस्य** प्रवर्तमानस्य **यज्ञस्य सुक्रतुं** शोभनकर्माणम् । कर्मणि प्रज्ञायां च वर्तते क्रतुशब्दः । अत्र विश्वज्ञानसम्पन्नमिति विशेषणमन्यत् प्रयुक्तमवधेयम् । तस्मात् कर्मेति ग्रहणमुपपद्यते ॥ १ ॥

### ऋक्संहिता पदपाठसहिता

**अग्निमग्निं हवीमभिः सदा हवन्त विश्पतिम् । हव्यवाहं पुरुप्रियम् ॥ २ ॥**

अग्निम्ऽअग्निम् । हवीमऽभिः । सदा । हवन्त । विश्पतिम् । हव्यऽवाहम् । पुरुऽप्रियम् ॥

### ऋग्भाष्यम्

**अग्निनामा जामदग्न्यो भगवान्संप्रकीर्तितः ।**
**तस्य रूपबहुत्वे वीप्सा चैवोपपद्यते ।**
**हवीमभिर्ऋगाह्वानैराह्वयंतः प्रजापतिम् ॥ २ ॥**

**ऋग्भाष्यटीका– अग्निम्** । अत्राग्नीनामनेकत्वादग्निमग्निमिति वीप्सायां द्विरुक्तिर्युज्यते परमेश्वरे तु कथमित्याशङ्कां परिहरन् कंचिद्विशेषं चाह– **अग्निनामेति** ।। तन्मूला द्विरुक्तिश्चोपपद्यत एव । ऋत्विजो विशां प्रजानां पतिं **विश्पतिम्** । हव्यं वहतीति हव्यवाट् तं **हव्यवाहं पुरुप्रियं** पूर्णसुखं अग्निमग्निं **हवीमभिः** ऋग्रूपैराह्वानैः ऋचां योग्यतया सम्बन्धः । **सदा हवंत** आह्वयन्त आहूतवन्तः ।।

**मन्त्रार्थमञ्जरी–** (ऋत्विजः) विश्पतिम्, विशां प्रजानां पतिम् । हव्यं वहतीति हव्यवाट् तं हव्यवाहम् । पुरुप्रियम्, पूर्णसुखम् । अग्निमग्निम्, प्रत्यग्निम्, हरे रूपबाहुल्यादग्नीनां चानेकत्वा-द्वीप्सोपपत्तिः । हवीमभिः, ऋग्रूपैराह्वानैः । सदा । हवन्त, आह्वयन्तः, आहूतवन्त इति ।।

**स्कन्द– अग्निमग्निं** यावान् कश्चिदग्निः सर्वम् । **हवीमभिः** आह्वानकरणैर्मन्त्रैः **सदा** सर्वदा **हवन्त** आह्वयन्ति यष्टारः । **विश्पतिं** मनुष्याणां स्वामिनं **हव्यवाहं** हविषां वोढारं **पुरुप्रियं** बहूनाभिष्टम् ।। २ ।।

**वेङ्कटमाधव–** अग्निं एव ह्वानैः सदा आह्वयन्ति नराः विशां पतिं हविषां वोढारं बहूनां प्रियं ।। २ ।।

**मुद्गल– अग्निमग्निं** आहवनीयादिभेदेन वीप्सा । तं **हवीमभिः** आह्वानकरणैर्मन्त्रैः **सदा हवन्त** निरन्तरमनुष्ठातार आह्वयन्ति । कीदृशम् ? **विश्पतिं** विशां प्रज्ञानां होत्रादीनां पालकं **हव्यवाहं** यजमानसमर्पितस्य हविषो देवान् प्रति वोढारं अत एव **पुरुप्रियं** बहूनां प्रीत्यास्पदम् ।।

**सायण–** यद्यप्यग्निः स्वरूपेणैक एव तथापि प्रयोगभेदात् आहवनीयादिस्थानभेदात् पावकादि-विशेषणभेदाद्वा बहुविधत्वमभिप्रेत्य 'अग्निमग्निम्' इति वीप्सा तम् । **हवीमभिः** आह्वानकरणैर्मन्त्रैः **सदा हवन्त** निरन्तरमनुष्ठातार आह्वयन्ति । कीदृशम् ? **विश्पतिं** विशां प्रजानां होत्रादीनां पालकं **हव्यवाहं** यजमानसमर्पितस्य हविषो देवान् प्रति वोढारम् । अत एव **पुरुप्रियं** बहूनां प्रीत्यास्पदम् ।

अग्निमग्निम् । 'नित्यवीप्सयोः' (पा.सू.८,१,४) इति वीप्सायां द्विर्भावः । 'तस्य परमा-म्रेडितम्' (पा.सू.८,१,२) इत्युत्तरस्य आम्रेडितसंज्ञायाम् 'अनुदात्तं च' (पा.सू.८,१,३) इत्यनु-दात्तत्वम् । हवीमभिः । 'ह्वेञ् स्पर्धायां शब्दे च' । आह्वानकरणभूतेषु मन्त्रेषु स्वव्यापार-

स्वातन्त्र्यात् कर्तृत्वविवक्षया 'अन्येभ्योऽपि दृश्यन्ते' (पा.सू.३,२,७५) इति कर्तरि मनिन्। तस्य छान्दस ईडागमः। 'बहुलं छन्दसि' (पा.सू.६,१,३४) इति धातोः सम्प्रसारणं परपूर्वत्वं गुणावादेशौ। नित्त्वादाद्युदात्तत्वम्। सदा। 'सर्वैकान्य' (पा.सू.५,३,१५) इत्यादिना सर्वशब्दात् दाप्रत्ययः। 'सर्वस्य सोऽन्यतरस्यां दि' (पा.सू.५,३,६) इति सभावः। व्यत्ययेनाद्युदात्तत्वम्। हवन्त। ह्वेञो लट्। झस्य अन्तादेशः। टेः एत्वाभावश्छान्दसः। शपि 'बहुलं छन्दसि' इति सम्प्रसारणम्। 'तिङ्ङतिङः' इति निघातः। विश्पतिम्। 'पत्यावैश्वर्ये' (पा.सू.६,२,१८) इति पूर्वपदप्रकृतिस्वरे प्राप्ते 'परादिश्छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वम्। हव्यवाहम्। 'वह प्रापणे'। 'वहश्च' (पा.सू.३,२,६४) इति ण्विप्रत्ययः। कृदुत्तरपदप्रकृतिस्वरत्वम्। पुरुप्रियम्। पुरूणां प्रियम्। समासान्तोदात्तत्वम्॥

**सिद्धाञ्जनम्–** द्वितीयामृचमाह– **अग्निमग्निं** वीप्सायां द्विर्भावः, अग्निमेव सर्वत्र यजमाना ऋषयः **हवीमभिः** आह्वानमन्त्रैः, ह्वेञ्धातोः मनिन् छान्दसम्। **सदा हवन्त** आह्वयन्ति, लडर्थे लङ् छान्दसम्। कीदृशम्? **विश्पतिं** प्रजानां पालकम्। **हव्यवाहं** यजमानेन समर्प्यमाणानां हव्यानां देवान् प्रति वोढारं प्रापकमित्यर्थः। **पुरुप्रियं** पुरूणां बहूनां प्रियम्। अन्तर्यजने हविरादीनि घनद्रव्याणि शरीरसम्बन्धीनि अंशतः साकल्येन च अर्पणीयानि ग्राह्याणि। येनार्पणेन देवाधीनं क्रियते शरीरम्। अन्यत् सर्वं सुगमं अन्तरर्थे॥ २॥

### ऋक्संहिता पदपाठसहिता

**अग्ने॑ दे॒वाँ इ॒हा व॑ह जज्ञा॒नो वृ॒क्तब॑र्हिषे। असि॒ होता॑ न॒ ईड्यः॑॥ ३॥**

अग्ने॑। दे॒वान्। इ॒ह। आ। व॒ह॒। ज॒ज्ञा॒नः। वृ॒क्तऽब॑र्हिषे। असि॑। होता॑। न॒ः। ईड्यः॑॥

### ऋग्भाष्यम्

**जज्ञानो व्यज्यमानस्तु वृक्तं प्रस्तृतमुच्यते।**
**यजमानो वृक्तबर्हिः .................. ॥ ३॥**

**मध्वभाष्यटीका–** **अग्नेदेवान्**। जज्ञानः। हे **अग्ने जज्ञानः** जायमानोऽस्मद्यज्ञे व्यज्यमानस्त्वं **वृक्तबर्हिषे** वृक्तं प्रस्तृतमुच्यते। वृक्तं प्रस्तृतं बर्हिर्येनासौ वृक्तबर्हिर्यजमानस्तस्मै तत्प्रयोजनाय। **देवानिह** यज्ञे आवह यतस्त्वं होताऽसि नोस्माकमीड्यश्चासि॥ ३॥

**मन्त्रार्थमञ्जरी–** (हे) अग्ने । जज्ञानः, यजमानः, अस्मद्यज्ञे व्यज्यमानः । (त्वम्) वृक्तबर्हिषे, वृक्तं विस्तृतं बर्हिर्येन तस्मै वृक्तबर्हिषे यजमानाय, तत्प्रयोजनाय । देवान् । इह, यज्ञे । आ वह । (यतस्त्वम्) होता असि (अतः) नः, अस्माकम् । ईड्यः (च) (असि) (ततः) इत्यर्थः ।। ३ ।।

**स्कन्द– अग्ने!** देवान् **इह** यज्ञे **आवह** आनय । **जज्ञानः** जनेर्जानातेर्वा रूपमेतत् । जायमानः जन्मानन्तरमेवेत्यर्थः । जानानः सामर्थ्यादस्मद्भक्तताम् । **वृक्तबर्हिषे** तादर्थ्ये एषा चतुर्थी । वृक्तमास्तीर्णं बर्हिर्येन यजमानेन तस्यार्थाय । किं कारणम् ? उच्यते- **असि होता** यस्माद्धोता त्वमसि । नः अस्माकम् ईड्यः ।। ३ ।।

**वेङ्कटमाधव–** अग्ने देवान् इह आवह जानन् यजमानाय । असि हि अस्माकं होता स्तोतव्यः ।

**मुद्गल–** हे अग्ने! **जज्ञानः** अरण्योरुत्पन्नस्त्वं **वृक्तबर्हिषे** आस्तरणार्थं छिन्नेन बर्हिषा युक्ताय । तं यजमामनुग्रहीतुं **इह** कर्मणि हविर्भुजो देवान् आवह । **नः** अस्मदर्थं **होता** देवानामाह्वाता त्वं **ईड्यः** स्तुत्यः असि ।। ३ ।।

**सायण–** हे **अग्ने जज्ञानः** अरण्योरुत्पन्नस्त्वं **वृक्तबर्हिषे** आस्तरणार्थं छिन्नेन बर्हिषा युक्ताय तं यजमानमनुग्रहीतुं **इह** कर्मणि हविर्भुजः **देवान् आ वह** । **नः** अस्मदर्थं **होता** देवानामाह्वाता त्वं **ईड्यः** स्तुत्यः असि ।

देवान् इत्यत्र संहितायां 'दीर्घादटि समानपादे' (पा.सू.८,३,९) इति रुत्वम् । 'आतोऽटि नित्यम्' (पा.सू.८,३,३) इत्यनुनासिकभावः । जज्ञानः । 'जनी प्रादुर्भावे' । लिटः कानच् । 'गमहन' (पा.सू.६,४,९८) इत्युपधालोपः । 'द्विर्वचनेऽचि' (पा.सू.१,१,५९) इति तस्य स्थानिवद्भावात् द्विर्वचनम् । चित्त्वादन्तोदात्तः । वृक्तबर्हिषे । 'ओव्रश्चू छेदने' । 'निष्ठा' (पा.सू. ३,२,१०२) इति क्तप्रत्ययः । 'यस्य विभाषा' (पा.सू.७,२,१५) इति इट्प्रतिषेधः । वृक्तं बर्हिर्यस्मै यजमानाय येन वा ऋत्विजा । बहुव्रीहौ पूर्वपदप्रकृतिस्वरः । असि । अस्तेः सिप् । 'अदिप्रभृतिभ्यः शपः' इति शपो लुक् । 'तासस्त्योर्लोपः' (पा.सू.७,४,५०) इति सकारस्य लोपः । पादादित्वात् न निघातः । होता ह्वयतेस्ताच्छील्यादिषु तृन् । 'बहुलं छन्दसि' (पा.सू. ६,१,३४) इति सम्प्रसारणम् । नित्त्वादाद्युदात्तः । ईड्यः । 'ईड स्तुतौ' । 'ऋहलोर्ण्यत्'

(पा.सू.३,१,१२४) । तित्स्वरिते प्राप्ते 'ईडवन्द वृशंसदुहां ण्यतः' (पा.सू.६,१,२१४) इत्याद्युदात्तत्वम् ।। ३ ।।

**सिद्धाञ्जनम्–** हे **अग्ने** त्वं **जज्ञानः** जायमानः, अन्तर्यजमाने मयि प्रादुर्भवन्नित्यर्थः, जनेः लिटि कानच् , जानातेर्वा इति स्कन्दस्वामी । **वृक्तबर्हिषे** वृक्तं आस्तीर्णं बर्हिर्येन तस्मै यजमानाय **देवान् इह** अत्रेदं मम यजनं **आवह** आनय । **नः** अस्माकं **ईड्यः** अध्येषणीयत्वेन स्तुत्यः त्वं **होता** आह्वाता देवानां असि ।

वृक्तबर्हिषे– व्याख्यातम् , अन्तर्यजने देवानामागमने आसनसन्नाह इत्यादि प्रागुक्तम् 'दस्रा युवाकवः' इति मन्त्रस्य विचारे ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**ताँ उ॒श॒तो वि बो॑धय॒ यद॑ग्ने॒ यासि॑ दू॒त्य॑म् । दे॒वैरा स॑त्सि ब॒र्हिषि॑ ।। ४ ।।**

**तान् । उ॒श॒तः । वि । बो॒ध॒य॒ । यत् । अ॒ग्ने॒ । यासि॑ । दू॒त्य॑म् । दे॒वैः । आ । स॒त्सि॒ । ब॒र्हिषि॑ ।। ४ ।।**

## ऋग्भाष्यम्

**.............. बोधयेशेच्छतः सुरान् ।**
**देवैः सहोपविशसि .......... ।। ४ ।।**

**ऋग्भाष्यटीका–** तान् । बोधय । हे **अग्ने** ईश **यत्** यस्मात् **दूत्यं** दूतस्य भावं कर्म वा **यासि** प्रतिपद्यसे । देवानां दूतो यतस्तस्मात् **उशतः** आगन्तुमिच्छतः **तान्** सुरान् **विबोधय** विज्ञापय । अमुष्य यज्ञो युष्माभिर्गन्तव्य इति । ततश्च देवैः सह बर्हिषि **आसत्सि** आसीदसि उपविशसि उपवेक्ष्यसि ।। ४ ।।

**मन्त्रार्थमञ्जरी–** (हे) अग्ने, ईश । यम्, यस्मात् । दूत्यम्, दूतस्य भावं कर्म वा । यासि, प्रतिपद्यसे, देवानां प्रार्थितकृत्त्वेन दूतो यतः । (तस्मात्) उशतः, आगन्तुमिच्छतः । तान्, सुरान् । वि बोधय, 'अमुष्य यज्ञे युष्माभिरागन्तव्यम्' इति विज्ञापय ।। ततश्च देवैः (सह) बर्हिषि । आ सत्सि । आसीदसि, उपवेक्ष्यसि, सीदतेः विकरणसीदादेशयोरभावश्छान्दसः ।।४।।

**मन्त्रार्थमञ्जरी–** (हे) अग्ने । जज्ञानः, यजमानः, अस्मद्यज्ञे व्यज्यमानः । (त्वम्) वृक्तबर्हिषे, वृक्तं विस्तृतं बर्हिर्येन तस्मै वृक्तबर्हिषे यजमानाय, तत्प्रयोजनाय । देवान् । इह, यज्ञे । आ वह । (यतस्त्वम्) होता असि (अतः) नः, अस्माकम् । ईड्यः (च) (असि) (ततः) इत्यर्थः ।। ३ ।।

**स्कन्द– अग्ने!** देवान् **इह** यज्ञे **आवह** आनय । **जज्ञानः** जनेर्जानातेर्वा रूपमेतत् । जायमानः जन्मानन्तरमेवेत्यर्थः । जानानः सामर्थ्यादस्मद्भक्तताम् । **वृक्तबर्हिषे** तादर्थ्ये एषा चतुर्थी । वृक्तमास्तीर्णं बर्हिर्येन यजमानेन तस्यार्थाय । किं कारणम् ? उच्यते- **असि होता** यस्माद्धोता त्वमसि । नः अस्माकम् ईड्यः ।। ३ ।।

**वेङ्कटमाधव–** अग्ने देवान् इह आवह जानन् यजमानाय । असि हि अस्माकं होता स्तोतव्यः ।

**मुद्गल–** हे अग्ने! **जज्ञानः** अरण्योरुत्पन्नस्त्वं **वृक्तबर्हिषे** आस्तरणार्थं छिन्नेन बर्हिषा युक्ताय । तं यजमामनुग्रहीतुं **इह** कर्मणि हविर्भुजो देवान् आवह । **नः** अस्मदर्थं **होता** देवानामाह्वाता त्वं **ईड्यः** स्तुत्यः असि ।। ३ ।।

**सायण–** हे **अग्ने जज्ञानः** अरण्योरुत्पन्नस्त्वं **वृक्तबर्हिषे** आस्तरणार्थं छिन्नेन बर्हिषा युक्ताय तं यजमानमनुग्रहीतुं **इह** कर्मणि हविर्भुजः **देवान् आ वह** । **नः** अस्मदर्थं **होता** देवानामाह्वाता त्वं **ईड्यः** स्तुत्यः असि ।

देवान् इत्यत्र संहितायां 'दीर्घादटि समानपादे' (पा.सू.८,३,९) इति रुत्वम् । 'आतोऽटि नित्यम्' (पा.सू.८,३,३) इत्यनुनासिकभावः । जज्ञानः । 'जनी प्रादुर्भावे' । लिटः कानच् । 'गमहन' (पा.सू.६,४,९८) इत्युपधालोपः । 'द्विर्वचनेऽचि' (पा.सू.१,१,५९) इति तस्य स्थानिवद्भावात् द्विर्वचनम् । चित्त्वादन्तोदात्तः । वृक्तबर्हिषे । 'ओव्रश्चू छेदने' । 'निष्ठा' (पा.सू. ३,२,१०२) इति क्तप्रत्ययः । 'यस्य विभाषा' (पा.सू.७,२,१५) इति इट्प्रतिषेधः । वृक्तं बर्हिर्यस्मै यजमानाय येन वा ऋत्विजा । बहुव्रीहौ पूर्वपदप्रकृतिस्वरः । असि । अस्तेः सिप् । 'अदिप्रभृतिभ्यः शपः' इति शपो लुक् । 'तासस्त्योर्लोपः' (पा.सू.७,४,५०) इति सकारस्य लोपः । पादादित्वात् न निघातः । होता ह्वयतेस्ताच्छील्यादिषु तृन् । 'बहुलं छन्दसि' (पा.सू. ६,१,३४) इति सम्प्रसारणम् । नित्त्वादाद्युदात्तः । ईड्यः । 'ईड स्तुतौ' । 'ऋहलोर्ण्यत्'

(पा.सू.३,१,१२४) । तित्स्वरिते प्राप्ते 'ईडवन्द वृशंसदुहां ण्यतः' (पा.सू.६,१,२१४) इत्याद्युदात्तत्वम् ।। ३ ।।

**सिद्धाञ्जनम्–** हे **अग्ने** त्वं **जज्ञानः** जायमानः, अन्तर्यजमाने मयि प्रादुर्भवन्नित्यर्थः, जनेः लिटि कानच् , जानातेर्वा इति स्कन्दस्वामी । **वृक्तबर्हिषे** वृक्तं आस्तीर्णं बर्हिर्येन तस्मै यजमानाय **देवान्** **इह** अत्रेदं मम यजनं **आवह** आनय । **नः** अस्माकं **ईड्यः** अध्येषणीयत्वेन स्तुत्यः त्वं **होता** आह्वाता देवानां असि ।

वृक्तबर्हिषे– व्याख्यातम् , अन्तर्यजने देवानामागमने आसनसन्नाह इत्यादि प्रागुक्तम् 'दस्रा युवाकवः' इति मन्त्रस्य विचारे ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**ताँ उ॒श॒तो वि बो॑धय॒ यद॑ग्ने॒ यासि॑ दू॒त्य॑म् । दे॒वैरा स॑त्सि ब॒र्हिषि॑ ।। ४ ।।**

**तान् । उ॒श॒तः । वि । बो॒ध॒य॒ । यत् । अ॒ग्ने॒ । यासि॑ । दू॒त्य॑म् । दे॒वैः । आ । स॒त्सि॒ । ब॒र्हिषि॑ ।। ४ ।।**

## ऋग्भाष्यम्

**.............. बोधयेशेच्छतः सुरान् ।**
**देवैः सहोपविशसि .......... ।। ४ ।।**

**ऋग्भाष्यटीका–** तान् । बोधय । हे **अग्ने** ईश **यत्** यस्मात् दूत्यं दूतस्य भावं कर्म वा **यासि** प्रतिपद्यसे । देवानां दूतो यतस्तस्मात् **उशतः** आगन्तुमिच्छतः **तान्** सुरान् **विबोधय** विज्ञापय । अमुष्य यज्ञो युष्माभिर्गन्तव्य इति । ततश्च देवैः सह बर्हिषि **आसत्सि** आसीदसि उपविशसि उपवेक्ष्यसि ।। ४ ।।

**मन्त्रार्थमञ्जरी–** (हे) अग्ने, ईश । यम्, यस्मात् । दूत्यम्, दूतस्य भावं कर्म वा । यासि, प्रतिपद्यसे, देवानां प्रार्थितकृत्त्वेन दूतो यतः । (तस्मात्) उशतः, आगन्तुमिच्छतः । तान्, सुरान् । वि बोधय, 'अमुष्य यज्ञे युष्माभिरागन्तव्यम्' इति विज्ञापय ।। ततश्च देवैः (सह) बर्हिषि । आ सत्सि । आसीदसि, उपवेक्ष्यसि, सीदतेः विकरणसीदादेशयोरभावश्छान्दसः ।।४।।

**स्कन्द– तान् उशतः** यज्ञगमनं कामयमानान् **विबोधय** अस्य यजमानस्य यज्ञे गन्तव्यमित्येतदपेक्षया । कांस्तान् ? उच्यते– **यत्** षष्ठ्या द्वितीयाया वा अत्र लुक् । येषां यान् वा प्रति । हे **अग्ने! यासि** प्रतिपद्यसे **दूत्यं** दूतकर्म । देवानित्यर्थः । आगतैः देवैः सह **आ सत्सि** आसीद उपविश **बर्हिषि** अस्मिन् ।। ४ ।।

**वेङ्कटमाधव–** तान् देवान् कामयमानान् त्वं विबोधय,यदा त्वं अग्ने! गच्छसि दूत्यम् । त्वमपि तैः सह आसीद बर्हिषि ।। ४ ।।

**मुद्गल–** हे **अग्ने! यत्** यस्मात् कारणात् **दूत्यं यासि** देवानां दूतकर्म प्राप्नोषि तस्मात् कारणात् **उशतः** हविः कामयमानान् **तान्** देवान् हविःस्वीकरणार्थं **विबोधय** विबोध्य च **बर्हिषि** अस्मिन् कर्मणि तैः देवैः सह **आ सत्सि** आसीद आगत्योपविश ।। ४ ।।

**सायण–** हे **अग्ने यत्** यस्मात् कारणात् दूत्यं **यासि** देवानां दूतकर्म प्राप्नोषि तस्मात् कारणात् **उशतः** हविः कामयमानान् **तान्** देवान् हविः स्वीकारार्थं **विबोधय** । विबोध्य च **बर्हिषि** अस्मिन् कर्मणि तैः देवैः सह **आ सत्सि** आसीद आगत्योपविश ।

तान् । 'दीर्घादटि समानपादे' इति संहितायां रुत्वम् । 'आतोऽटि नित्यम्' इत्यनुनासिकभावः । उशतः । 'वश कान्तौ' । लटः शतृ । 'अदिप्रभृतिभ्यः शपः' इति शपो लुक् । 'ग्रहिज्या' (पा.सू.६,१,१६) इत्यादिना सम्प्रसारणम् । 'शतुरनुमो नद्यजादी' (पा.सू.६,१, १७३) इति विभक्तेरुदात्तत्वम् । यासि । 'यद्वृत्तान्नित्यम्' (पा.सू.८,१,६६) इति निघातप्रतिषेधः । दूतस्य भागः कर्म वा दूत्यम्' (पा.सू.४,४,१२०) इति यत् । तस्य तित्स्वरितापवादत्वेन 'यतोऽनावः' इति प्राप्तमाद्युदात्तत्वं 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति निवर्तते । अतः 'तित्स्वरितम्' (पा.सू.६,१,१८५) इत्येव भवति । शेषनिघातः । सत्सि सीदसि । 'षद्लृ विशरणगत्यवसादनेषु' । लटः सिपि शपो 'बहुलं छन्दसि' इति लुक् । 'न लुमताङ्गस्य' (पा.सू.१,१,६३) इति प्रत्ययलक्षणप्रतिषेधात् 'पाघ्रा' (पा.सू.७,३,७८) इत्यादिना सीदादेशो न भवति । बर्हिषि । 'बृह बृहि वृद्धौ' । 'बृंहेर्नलोपश्च' (उ.सू.२,२६६) इति इसिप्रत्ययः । प्रत्ययस्वरेण इकार उदात्तः ।। ४ ।।

**सिद्धाञ्जनम्–** चतुर्थीमृचमाह– हे **अग्ने यत्** यस्मात्कारणात् , येषां यान् प्रति वा **दूत्यं**

दूतकर्म **यासि** गच्छसि वहसीत्यर्थः, तस्मात् , **तान् उशतः** कामयमानान् यज्ञमिति शेषः । देवान् **विबोधय** प्रबुद्धान् कुरु । विबोध्य च तैः **देवैः** सह **बर्हिषि** उचिते सिद्धे च अस्मिन्नासने **आसत्सि** आसीदसि, आसीदेत्यर्थः, सीदतेर्लट् छान्दसम् ॥ ४ ॥

### ऋक्संहिता पदपाठसहिता

**घृताहवन दीदिवः प्रति॑ष्म रिष॑तो दह । अग्ने त्वं र॒क्षस्विनः॑ ॥ ५ ॥**

घृत॑ऽआहवन । दी॒दि॒ऽवः॒ । प्रति॑ । स्म॒ । रिष॑तः । द॒ह॒ । अग्ने॑ । त्वम् । र॒क्षस्विनः॑ ।

### ऋग्भाष्यम्

**.................... यस्य ते सुघृतं हविः ।**
**रिषतो नाशकारक्षो जनान्प्रतिदहैव च ॥ ५ ॥**

**ऋग्भाष्यटीका– घृताहवन** । यस्यते । घृतं सुघृतं यज्ञयोग्यं हवनं हविर्यस्य ते तव स त्वं घृताहवनः । हे **घृताहवन** । **दीदिवः** यङ्लुगन्ताद्दीव्यतेरसुन् । देदीप्यमानाग्ने त्वं **रिषतः** अन्तर्णीतण्यर्थोऽयं नाशकान् । **रक्षस्विनः** रक्षांसि येषां सन्ति तान्रक्षसां सम्बन्धिनो जनान्यज्ञघ्नान् **प्रतिदहस्म** प्रतिदहैव ॥ ५ ॥

**मन्त्रार्थमञ्जरी–** (आ) घृतं सुघृतं शुद्धं यज्ञयोग्यं हवनं हविर्यस्य तस्य सम्बुद्धिः (हे) घृताहवन । दीदिवः, देदीप्यमान, यङ्लुगन्तात् द्युत्यर्थाद्दीव्यतेः असुन्, अग्ने त्वम् । रिषतः, 'रिष हिंसायाम्' अन्तर्णीतण्यर्थोऽयम्, नाशकान् । रक्षस्विनः, रक्षांस्येषां सन्तीति तान्, रक्षसां सम्बन्धिनो जनान्, यज्ञघ्नान् । प्रति दह स्म, प्रतिदहैव, 'दह भस्मीकरणे' नाशयेत्यर्थः ॥५॥

**स्कन्द–** आहुतिलक्षणं घृतमाहूयते यस्मिन् स घृताहवनः । **हे घृताहवन ! दीदिवः!** दीप्तिमन् प्रतिष्म रिषतः दह स्म इति पदपूरणः । प्रतिदह । कान् ? **रिषतः** हिंसतो माम् । हे अग्ने त्वम् । कीदृशान्? **रक्षस्विनः** रक्षःशब्देनात्र रक्षस्सम्बन्धि क्रौर्यं लक्ष्यते । तद्वतः रक्षोवतः अत्यन्तक्रूरानित्यर्थः ॥ ५ ॥

**वेङ्कटमाधव–** घृतं यस्मिन्नाहूयते प्रियतमं स घृताहवनः । दीप्यमानः प्रति दह हिंसकान् राक्षसान् अग्ने त्वं बलवतः ॥ ५ ॥

**मुद्गल–** हे **घृताहवन** घृतेनाहूयमान ! **दीदिवः** दीप्यमान अग्ने त्वं **रक्षस्विनः** रक्षोयुक्तान् **रिषतः** हिंसकान् शत्रून् **प्रति** अस्माकं प्रतिकूलान् **दह स्म** सर्वथा भस्मीकुरु ॥ ५ ॥

**सायण–** हे **घृताहवन** घृतेनाहूयमान **दीदिवः** दीप्यमान अग्ने त्वं **रक्षस्विनः** रक्षोयुक्तान् **रिषतः** हिंसकान् शत्रून् **प्रति** अस्माकं प्रतिकूलान् **दह स्म** सर्वथा भस्मीकुरु ।

घृतेनाहूयतेऽस्मिन्निति 'करणाधिकरणयोश्च' (पा.सू.३,३,११७) इत्यधिकरणे ल्युट् । अत्र जुहोतेः अविवक्षितकर्मत्वेन अकर्मकत्वात् घृतस्य करणत्वमेव न तु कर्मत्वम् । अतो नैषा 'तृतीया च होश्छन्दसि' (पा.सू.२,३,३) इति कर्मणि तृतीया । किन्तु 'कर्तृकरणयोस्तृतीया' (पा.सू.२,३,१८) इति करणवाचिन्येव । अतः 'कर्तृकरणे कृता बहुलम्' (पा.सू.२,१,३२) इति समासः । तत्र पूर्वपदप्रकृतिस्वरापवादे कृदुत्तरपदप्रकृतिस्वरे प्रातिपदिकावस्थायामेव कृते सति पश्चात् विभक्तावुत्पन्नायां 'आमन्त्रितस्य च' (पा.सू.६,१,१९८) इत्याद्युदात्तत्वम् । दीदिवः । दीव्यतेर्लिटः क्वसुः । तस्य 'वस्वेकाजाद्घसाम्' (पा.सू.७,२,६७) इति नियमात् इडभावः । द्विर्वचनम् । हलादिशेषः । उत्तरवकारस्य 'लोपो व्योर्वलि' (पा.सू.६,१,६६) इति लोपः । क्वसुः । कित्त्वात् गुणाभावः । 'तुजादीनां दीर्घोऽभ्यासस्य' (पा.सू.६,१,७) इति दीर्घत्वमभ्यासस्य सम्बुद्धौ 'उगिदचाम्' (पा.सू.७,१,७०) इति नुम् । 'संयोगान्तस्य लोपः' (पा.सू.८,२,२३) इति सकारलोपे नकारस्य 'मतुवसो रुः सम्बुद्धौ छन्दसि' (पा.सू.८,३,१) इति रुत्वम् । विसर्गः । पदात् परत्वात् आमन्त्रितनिघातः ।

ननु पूर्वामन्त्रितस्य अविद्यमानवत्त्वात् पादादित्वेन न निघातोपपत्तिः । न च 'नामन्त्रिते समानाधिकरणे सामान्यवचनम्' (पा.सू.८,१,७३) इत्यविद्यमानवत्त्वप्रतिषेधः; उभयोरग्निपद-विशेषणत्वेन विशेषवचनत्वात् । अत एव परस्परमनन्वयेन असामर्थ्यात् 'समर्थः पदविधिः' (पा.सू.२,१,१) इति च नियमात् पूर्वस्य न पराङ्गवद्भावो येन ऐकपद्येन निघातः स्यात् । अत एव हि 'इडे रन्तेऽदिते सरस्वति' (तै.सं.७,१,६,८) इत्यादौ पृथक् पृथक् आद्युदात्तत्वमिति । उच्यते– अत्र 'दीदिवः' इति नाग्निपदस्य विशेषणं किन्तु घृताहवनपदस्यैव द्योतनार्थम्; घृताहवन इति विशेष्यत्वेन विवक्षितत्वात् । विशिष्टस्य तु पश्चादग्निविशेषणता । तत्र दीदिवःपदं प्रति घृताहवनपदस्य विशेष्यत्वात् 'नामन्त्रिते समानाधिकरणे' (पा.सू.८,१,

७३) इत्यविद्यमानवत्त्वप्रतिषेधात् निघातोपपत्तिः । अत एव परस्परविशेषणविशेष्यभावेन सामर्थ्यात् 'सुबामन्त्रिते' (पा.सू.२,१,२) इति पराङ्गवद्भावे शेषनिघातेनापि स्वरोपपत्तिरिति । 'इडे रन्ते' इत्यादौ तु नैवं परस्परान्वय इति वैषम्यम् । रिषतः । 'रुष रिष हिंसार्थाः' इति । भौवादिकस्य लटः शत्रादेशे शपि छान्दसो गुणाभावः । तौदादिकस्य वा 'रुश रिश हिंसायाम्' इत्यस्य छान्दसं षत्वम् । विकरणस्य शस्य ङित्त्वाद्गुणाभावः । रक्षस्शब्दात् 'अस्मायामेधास्रजो विनिः' (पा.सू.५,२,१२१) इति मत्वर्थीयो विनिः । तस्य प्रत्ययाद्युदात्तत्वम् ॥ ५ ॥

**सिद्धाञ्जनम्–** पञ्चमीमृचमाह– हे **अग्ने घृताहवन** घृतेनाहूयमान, दीप्तया धिया आहूयतेऽग्निरन्तर्यजने, 'धियं घृताचीम्' इत्यत्र घृतं व्याख्यातम् । **दीदिवः** द्योतमान, द्योतनार्थात् दीव्यतेः लिटः वसुन्, अन्यत् छान्दसम् । **प्रति** प्रतिकूलमाचरतो **रिषतः** शत्रून् हिंसार्थात् रिषतेः शतृ। त्वं **दह स्म** भस्मीकुरु । स्मेति पादपूरणो वा । कीदृशान् रिषतः ? **रक्षस्विनः** रक्षोयुक्तान्, रक्षश्शब्दान्मतुबर्थे विनिः ॥ ५ ॥

### ऋक्संहिता पदपाठसहिता

**अग्निनाग्निः समिध्यते कविर्गृहपतिर्युवा । हव्यवाड् जुह्वास्यः ॥ ६ ॥**

अग्निना । अग्निः । सम् । इध्यते । कविः । गृहऽपतिः । युवा । हव्यऽवाट् । जुहुऽआस्यः ॥

### ऋग्भाष्यम्

**यस्यास्ये हूयते सोऽग्निः परेशेन समिध्यते ।**
**अथवाऽऽहवनीयोऽग्निर्मथितेन समिध्यते ॥ ६ ॥**

**ऋग्भाष्यटीका– अग्निनाग्निः** । यस्यास्ये हविर्हूयते स **जुह्वास्यः** । जुहु हवनाधिकरणमास्यं यस्येति । **कविः** सर्वज्ञो गृहाणां पतिः **गृहपतिः** । **युवा** तरुणो हव्यवाट् **अग्निना** परेशेन त्वया **समिध्यते** सन्दीप्तो भवति । अग्न्यादीनां दीप्त्यादिगुणप्रदस्त्वमिति यावत् । अथवा प्रसिद्धाग्निविषये जुह्वास्यः आहवनीयोऽग्निर्मथितेन गार्हपत्येनाग्निना सह समिध्यते । अन्यत्समानम् ।

**मन्त्रार्थमञ्जरी–** यस्यास्ये हविर्हूयते स जुह्वास्यः । जुहु हवनाधिकरणमास्यं यस्येति, व्युत्पत्त्या जुह्वास्यः । कविः, सर्वज्ञः । गृहाणां पतिः गृहपतिः । युवा, तरुणः । हव्यवाट् अग्निः । अग्निना, परेशेन त्वया । सम् इध्यते, संदीप्तो भवति, अग्न्यादीनां दीप्त्यादिप्रदस्त्वमिति

यावत् । प्रसिद्धाग्निविषये तु– जुह्वास्यः अग्निः, होमाधारत्वादाहवनीयोऽग्निः । अग्निना, मथितेन गार्हपत्याग्निना । सम् इध्यते । इत्यर्थो ध्येयः । अन्यत्समानम् ।। ६ ।।

**स्कन्द–** पादस्त्वत्र द्विदेवतः । निर्मथ्याहवनीयार्थः । अग्निनाग्निः समिध्यते (तु.ऋ.अ. १,१२) अत्र सूक्ते पाद एको द्विदैवतः निर्मथ्यार्थ आहवनीयार्थश्च । कतमः । अग्निना अग्निः समिध्यते इत्ययम् । **अग्निना** निर्मथ्येन **अग्निः** आहवनीयः **समिध्यते** दीप्यते । **कविः** मेधावी **गृहपतिः** यजमानस्य यज्ञगृहस्य वा स्वामी । **युवा** तरुणः । अग्निरुपशान्तोऽपीन्धनं प्राप्य पुनस्तरुणीभवति । तेनास्योपपन्नं सदा तरुणत्वम् । **हव्यवाट्** हविषां वोढा । **जुह्वास्यः** जुहूरास्यस्थानीया यस्य स जुह्वास्यः । यथा हि मनुष्या आस्येनान्नमदन्ति तद्वत् जुह्वा अग्निः ।।

**वेङ्कट.– निर्मथ्येन** अग्निना आहवनीयाग्निः समिध्यते कविः गृहपतिः युवा हविषां वोढा । जुह्वास्यः जुहूर्यस्यास्यस्थानीया ।। ६ ।।

**मुद्गल– अग्निः** आहवनीयाख्यः स्वस्मिन् प्रक्षिप्यमाणेन **अग्निना** सह **समिध्यते** सम्यग् दीप्यते । कीदृशोऽग्निः ? **कविः** मेधावी । **गृहपतिः** यजमानगृहस्य पालकः । **युवा** नित्यतरुणः । **हव्यवाट्** हविषो वोढा । **जुह्वास्यः** जुहूरूपेण मुखेन युक्तः ।। ६ ।।

**सायण–** अग्निमन्थने 'अग्निनाग्निः समिध्यते' इत्येषानुवचनीया । 'प्रातर्वैश्वदेव्यां प्रेषितः' इति खण्डे सूत्रितम्– 'अग्निनाग्निः समिध्यते त्वं ह्यग्ने अग्निना' (आश्व.श्रौ.२,१६) इति । एषैव अग्निमत इत्यस्य अनुवाक्या । 'अथाग्नेय्यः' इति खण्डे 'अग्नावग्निप्रणयने' इत्युपक्रम्य सूत्रितं– 'यद्वो वयं प्रमिनाम व्रतान्यग्निनाग्निः समिध्यते' (आश्व.श्रौ.३,१३) इति ।।

**अग्निः** आहवनीयाख्यः तस्मिन् प्रक्षिप्यमाणेन **अग्निना** निर्मथ्येन प्रणीतेन वा सह **समिध्यते** सम्यक् दीप्यते । कीदृशोऽग्निः ? **कविः** मेधावी **गृहपतिः** यजमानगृहस्य पालकः **युवा** नित्यतरुणः **हव्यवाट्** हविषो वोढा **जुह्वास्यः** जुहुरूपेण मुखेन युक्तः ।

गृहपतिः । 'पत्यावैश्वर्ये' (पा.सू.६,२,१८) इति पूर्वपदप्रकृतिस्वरत्वम् । युवा । 'यु मिश्रणे' । 'कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिवः' (उ.सू.१,१५४) इति कनिन् । नित्वादाद्युदात्तः । हव्यं वहतीति हव्यवाट् । 'वहश्च' (पा.सू.३,२,६४) इति ण्विप्रत्ययः । णित्त्वादुपधावृद्धिः । गतिकारकोपपदात् कृदुत्तरपदप्रकृतिस्वरत्वम् । जुह्वास्यः । हूयतेऽनयेति जुहूः । 'हुवः श्लुवच्च' (उ.सू.२,२१८) इति क्विप् । तत्सन्नियोगात् दीर्घः । श्लुवद्भावात् द्विर्भावः ।

चुत्वजश्त्वे । प्रातिपदिकस्वरेणान्तोदात्तः । जुहूः आस्यं यस्येति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वेन स एव शिष्यते । शेषनिघातः । यणादेशे 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' (पा.सू. ८,२,४) इति आकारः स्वरितः ।। ६ ।।

**सिद्धाञ्जनम्–** षष्ठीमृचमाह– **अग्निः** आहवनीयः, अन्तर्यजननिर्वाहार्थ आदातव्यः ऋत-चिद्धामा दिव्यः । **अग्निना** यजमानतपोबलादन्तर्निर्मथ्येनाग्निना **समिध्यते** सम्यग्दीप्यते तपो ब्रह्म, तपसा विजिज्ञासस्वेतिवत् अग्निना अग्निः सम्पाद्यः । अलसस्य स दुर्लभः, ऋषेरार्यस्य कृष्टेरग्निहोत्रं स्वभावसिद्धं सहजं कर्म । कीदृशोऽग्निः ? **कविः** अतीन्द्रियदर्शी । **गृहपतिः** अग्नये भगवते सर्वथा यजमानेन आत्मसमर्पणे क्रियमाणे, तस्य गृहस्य वासस्थानस्य स्वामी भवत्यग्निः, गृहस्य पालकः । **युवा** स नित्ययौवनः, **हव्यवाट्** हव्यानां वोढा व्याख्यातम् , **जुह्वास्यः** जुहूरास्यं मुखमस्य, जिह्वा ज्वाला भवति । अग्नेः सैव मुखम् (जुहोतेर्जुहूः) 'जुहूभिर्जिह्वाभिः' सायणीयम् (१-५८-४) 'उत्तानं ऊर्ध्वः अवयत् जुहूभिः' (५-१-३) ।

।। इति प्रथमाष्टके प्रथमाध्याये द्वाविंशो वर्गः ।।

।। अथ त्रयोविंशो वर्गः ।।

ऋक्संहिता पदपाठसहिता

**कविमग्निमुपस्तुहि सत्यधर्माणमध्वरे । देवममीवचातनम् ।। ७ ।।**

कविम् । अग्निम् । उप । स्तुहि । सत्यऽधर्माणम् । अध्वरे । देवम् । अमीवऽचातनम् ।।

ऋग्भाष्यम्

**सत्यधर्मा सद्गुणभृद्दुःखघ्नोऽमीवचातनः ।**
**चातनं कालनं वा स्यात् ।। ७, ८ ।।**

**ऋग्भाष्यटीका– कविमग्निम्** । सत्यधर्मामीवचातनपदे व्याख्याति– **सत्यधर्मेति** ।। सत्याः साधवो धर्मा गुणा यस्यासौ **सत्यधर्मा** सद्गुणभृत् इत्यर्थः । अमीवं दुःखम् । तच्चातयति नाशयतीति **अमीवचातनः** दुःखघ्नः । यद्वा चातनं कालनमपसारणं स्यात् । ततश्चामीवचातनो दुःखस्यापसारयिता । फलतस्त्वेक एवार्थः । **कविं** सर्वज्ञम् । सत्यधर्माणममीवचातनमग्निं देवमध्वरे उपस्तुहीति स्वात्मानं स्वान्तर्यामिणं होतृगं प्रति वोच्यते ।। ७ ।।

**मन्त्रार्थमञ्जरी–** कविम्, सर्वज्ञम् । सत्याः साधवो धर्मा गुणा यस्यासौ तथा तं सत्यधर्माणम् । अमीवं दुःखं चातयति नाशयति, अपसारयति वा अमीवचातनम्, दुःखघ्नम् । अग्निम् देवम् । अध्वरे यज्ञे । उप स्तुहि ।। इति स्वात्मानं प्रति, स्वान्तर्यामिणं प्रति वा, होतृगं प्रति वोच्यते ।।

**स्कन्द–** कविं अग्निं उप स्तुहि आत्मन एवायमन्तरात्मनः प्रैषः । सत्यधर्माणं **अध्वरे** यज्ञे **देवं अमीवचातनं** अमीवा हिंसिता तस्य चातनं निर्णाशनम् । स्तोतृहिंसितृणां नाशयितारमित्यर्थः ।। ७ ।।

**वेङ्कटमाधव–** कविं अग्निं उप स्तुहि सत्यधर्माणं यज्ञे द्युस्थानं रक्षसां चातयितारम् ।।७।।

**मुद्गल–** हे स्तोतृसङ्घ **अध्वरे** क्रतौ **अग्निं उप स्तुहि** उपेत्य स्तुतिं कुरु । कीदृशम् ? **कविं** मेधाविनं **सत्यधर्माणं** सत्यवदनरूपेण धर्मेणोपेतं **देवं** द्योतमानं **अमीवचातनं** अमीवानां शत्रूणां घातकम् ।। ७ ।।

**सायण–** हे स्तोतृसङ्घ **अध्वरे** क्रतौ **अग्निं उप स्तुहि** उपेत्य स्तुतिं कुरु । कीदृशम् ? **कविं** मेधाविनं **सत्यधर्माणं** सत्यवदनरूपेण धर्मेणोपेतं **देवं** द्योतमानं **अमीवचातनं** अमीवानां हिंसकानां शत्रूणां रोगाणां वा घातकम् ।

सत्यं धर्मो यस्येति सत्यधर्मा । 'धर्मादनिच् केवलात्' (पा.सू.५,४,१२४) इति अनिच् समासान्तः । अन्तःपदेन तस्य समासत्वाभिधानात् बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वे शेषनिघातेनानुदात्तत्वम् । अमीवशब्दः 'अम रोगे' इत्यस्मात् 'शेवयह्वजिह्वाग्रीवाप्वामीवाः' (उ.सू.१, १५२) इति वन्प्रत्यये ईडागमे च निपातितः । नित्त्वादाद्युदात्तः । 'चते चदे याचने च' इत्यस्मात् हिंसार्थात् णिजन्तात् नद्यादित्वात् ल्युः (पा.सू.३,१,१३४) । योरनादेशः (पा.सू.७, १,१) 'णेरनिटि' (पा.६,४,५१) इति णेर्लोपः । 'लिति' (पा.सू.६,१,१९३) इति धातोः अकारस्योदात्तत्वम् । न च स्वरे कर्तव्ये णिलोपस्य स्थानिवद्भावः; 'न पदान्तद्विर्वचन' (पा.सू.१,१,५८) इत्यादिना प्रतिषेधात् । अमीवानां चातनः इति समासे कृदुत्तरपदप्रकृतिस्वरेण स एव शिष्यते ।। ७ ।।

**सिद्धाञ्जनम्–** अथास्मिन् सप्तमीमृचमाह– **अग्निं उप** उपेत्य **स्तुहि** स्तुतिं कुरु ।

सखायमन्तर्याजिनं अन्तरात्मानमेव वा आमन्त्र्य ऋषेर्वचनम्। कीदृशम् ? **कविं** द्रष्टारमतीन्द्रियार्थानां **अध्वरे** अनुष्ठात्रे दिव्यपथस्य दातरि यज्ञे, **सत्यधर्माणं** सत्यं ऋतमेव धर्मो यस्य तम् । विस्तरभिया न व्याख्यायते, इदं त्ववधेयम् । सत्यधर्म एव परमं श्रेयः यदर्थमेव ऋषीणां सर्वाण्यनुष्ठानानि प्रवर्तन्ते । उपनिषदि 'सत्यधर्माय दृष्टये' इत्युक्तिश्चानुसन्धेया। **देवं** दीप्तिमन्तम् । **अमीवचातनं** अमीवानां हिंसकानां रोगाणां वा चातनं नाशयितारं, अम रोगे इत्यस्मात् ईडागमो वनुप्रत्ययश्च । चते याचने इत्यस्य णिचि रूपमित्याहुः । किं तु 'चातयते नाशयति' इति सायणीयम् । 'अयं वृतः चातयते' (४-१७-९) अन्यत्रापि एवमेव ।

## ऋक्संहिता पदपाठसहिता

**यस्त्वामग्ने हविष्पतिर्दूतं देव सपर्यति । तस्य स्म प्राविता भव ।। ८ ।।**
**यः । त्वाम् । अग्ने । हविःऽपतिः । दूतम् । देव । सपर्यति । तस्य । स्म । प्रऽअविता । भव ।। ८ ।।**

**ऋग्भाष्यटीका– यस्त्वामग्ने** ।। हे अग्ने देव यो **हविष्पतिः** यजमानो **दूतं** त्वां **सपर्यति** पूजयतिस्म । तस्य यजमानस्य **प्राविता** प्रकर्षेण रक्षिता भव ।। ८ ।।

**मन्त्रार्थमञ्जरी–** (हे) अग्ने देव यः । हविष्पतिः, यजमानः । दूतम् त्वाम् । सपर्यति, पूजयति । स्म । तस्य, यजमानस्य । प्राविता, प्रकर्षेण रक्षिता । भव ।। ८ ।।

**स्कन्द–** यस्त्वाम् हे अग्ने । **हविष्पतिः** हविषः स्वामी अस्मदादिर्यजमानः दूतं हे देव । **सपर्यति** परिचरति तस्य स्म **प्राविता** प्रकर्षेण रक्षिता भव ।। ८ ।।

**वेङ्कटमाधव–** य त्वाम् अग्ने! यजमानः दूतम् देवः परिचरति, तस्य त्व प्रकर्षेण रक्षकः भवः । स्म इति पूरणम् ।। ८ ।।

**मुद्गल–** हे अग्ने! देव यः **हविष्पतिः** यजमानः देवदूतं त्वाम् सपर्यति परिचरति तस्य यजमानस्य प्राविता भव स्म अवश्यं रक्षको भव ।। ८ ।।

**सायण–** हे **अग्ने देव यः हविष्पतिः** यजमानः **दूतं** त्वां सपर्यति तस्य यजमानस्य **प्राविता भव स्म** अवश्यं रक्षको भव ।

हूयते इति हविः । 'अर्चिशुचि' (उ.सू.२,२६५) इत्यादिना इसिः । प्रत्ययस्वरेणइकार उदात्तः । हविषः पतिर्हविष्पतिः । 'नित्यं समासेऽनुत्तरपदस्थस्य' (पा.सू.८,३,४५) इति षत्वम् । 'पत्यावैश्वर्ये' (पा.सू.६,२,१८) इति पूर्वपदप्रकृतिस्वरत्वम् । सवरशब्दात् 'कण्ड्वादिभ्यो यक्' (पा.सू.३,१,२७) इति यक् । धातुप्रकरणात् गुणप्रतिषेधाद्युर्थात् यकः कित्त्वाच्च सपरशब्दस्य धातुत्वात् ततो विहितस्य यकः आर्धधातीकत्वे सति 'अतो लोपः' (पा.सू. ६,४,४८) इति लोपः । 'सनाद्यन्ता धातवः' (पा.सू.३,१,३२) इति धातुसंज्ञायां तिप् । कर्तरि शप् । तस्मिन् पूर्वस्य 'अतो गुणे' (पा.सू.६,१,९७) इति परपूर्वत्वम् । यकःप्रत्ययस्वरेणोदात्तत्वम् । शपा सह एकादेशस्य 'एकादेश उदात्तेनोदात्तः' (पा.सू.८,२,५) इत्युदात्तत्वम् । 'तिङ्ङतिङः' इति निघातो न भवति 'यद्वृत्तान्नित्यम्' (पा.सू.८,१,६६) इति प्रतिषेधात् ।। ७ ।।

**सिद्धाञ्जनम्–** अष्टमीमृचमाह– हे **अग्ने देव यः हविष्पतिः** हविषः स्वामी यजमानः। हविरग्नये अर्पणयोग्यं द्रव्यम् । सङ्केतः प्राग्विवृतः। **दूतं** देवानां अस्मदर्थमिति शेषः । **त्वां सपर्यति** परिचरति तस्य हविरर्पणं कुर्वतो यजमानस्य त्वं **प्राविता** प्रकर्षेण वर्धयिता **भव स्म** असीत्यर्थः । 'स्म' पादपूरणो वा ।। ७ ।।

## ऋक्संहिता पदपाठसहिता

**यो अ॒ग्निं दे॒ववी॑तये ह॒विष्माँ॒ आ॒विवा॑सति । तस्मै॑ पावक मृळय ।। ९ ।।**

यः । अ॒ग्निम् । दे॒वऽवी॑तये । ह॒विष्मा॑न् । आ॒ऽविवा॑सति । तस्मै॑ । पा॒व॒क॒ । मृ॒ळ॒य॒ ।।

## ऋग्भाष्यम्

**.......................... देववीतिस्तु तद्गतिः ।**
**आवासयति यस्त्वां च तं त्वं मृळय सर्वदा ।। ९ ।।**

**ऋग्भाष्यटीका– यो अग्निम्** । देववीतिपदं व्याख्याति– **देववीतिस्त्विति** ।। तद्गतिर्देवानां गतिः । यज्ञं प्रति देवानामागमनम् । देवताप्राप्तिरूपं फलं वा । वीगतिव्याप्तिप्रजनकांत्यसनखादनेषु तस्यै **देववीतये** । **यो हविष्मान्** यजमानः **अग्निं** त्वां **आविवासति** आवासयत्याधत्ते । पूजयति च । **हे पावक** त्वं **तस्मै** तं यजमानं सर्वदा **मृळय** सुखय ।। ९ ।।

**मन्त्रार्थमञ्जरी–** देववीतये, देवानां वीतय आगमनाय, तत्प्राप्तिरूपफलाय वा, 'वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु' इत्यतः क्तिन् । यः । हविष्मान्, यजमानः । अग्निम् (त्वाम्) आविवासति, आवासयत्याधत्ते पूजयति च । (हे) पावक (त्वम्) तस्मै, तं यजमानम् । (सर्वदा) मृळय, सुखय ।। ९ ।।

**स्कन्द– यः** भवन्तं **अग्निं देववीतये** वीतिर्गत्यर्थः नशनार्थो वा । देवान् प्रति गमनाय देवानां वा हविर्भक्षणाय **हविष्मान्** हविस्संयुक्तो यजमानः **आविवासाति** विवासा परिचर्यायाम् (तु. निघ.३,५) आभिमुख्येन परिचरति । **तस्मै** द्वितीयार्थे चतुर्थ्येषा । तं हे **पावक** शोधयितः **मृळय** सुखय ।। ९ ।।

**वेङ्कटमाधव–** यः अग्निं यज्ञार्थं हविष्मान् परिचरति तस्मै पावक सुखमुत्पादय ।।९।।

**मुद्गल– हविष्मान्** हविर्युक्तः **यः** यजमानः **देववीतये** देवानां हविर्भक्षणहेतुयागार्थं । **अग्निं आविवसति** अग्नेः समीपे विशेषेणागत्य परिचर्यां करोति । हे **पावक!** अग्ने **तस्मै मृळय** तं यजमानं सुखय ।। ९ ।।

**सायण–** गार्हपत्याहवनीययोः परस्परसंसर्गे विहितस्य हविषो याज्या 'यो अग्निं देववीतये' इत्येषा । 'अथाग्नेय्य इष्टयः' इति खण्डे सूत्रितं– 'यो अग्निं देववीतये कुवित्सु नो गविष्टये' (आश्व.श्रौ.३,१३) इति ।

**हविष्मान्** हविर्युक्तः **यः** यजमानः **देववीतये** देवानां हविर्भक्षणहेतुयागार्थं **अग्निं आविवासति** अग्नेः समीपे विशेषेणागत्य परिचर्यां करोति । हे **पावक** अग्ने **तस्मै मृळय** तं यजमानं सुखय ।

देववीतये । 'वी गतिप्रजनकान्त्यशनखादनेषु' इत्यस्मात् अशनार्थात् क्तिन् । देवनां वीतिर्यस्मिन् यागे स देववीतिः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । हविष्मान् । 'नब्विषयस्यानिसन्तस्य' (फि.सू.२६) इति पर्युदासात् हविःशब्दोऽन्तोदात्तः । मतुपः सर्वानुदात्तत्वात् स एव शिष्यते । आविवासति । 'वा गतिगन्धनयोः' अस्मात् अन्तर्भावितण्यर्थात् आगमयितुमिच्छतीत्यर्थे सन् । आह्वानेच्छा परिचर्यायां पर्यवस्यतीति विवासतिशब्दः परिचर्यार्थे निघण्टौ (नि.३,५,१०) पठितः । द्विर्भावः । अभ्यासस्य ह्रस्वः । 'सन्यतः' (पा.सू.७,४,

७९) इति इत्वम् । 'ञ्नित्यादिर्नित्यम्' (पा.सू.६,१,१९७) इत्याद्युदात्तत्वम् । 'तिङ्ङतिङः' इति निघातो न भवति 'यद्वृत्तान्नित्यम्' (पा.सू.८,१,६६) इति प्रतिषेधात् । 'तिङि चोदात्तवति' (पा.सू.८,१,७१) इति आङो निघातः । 'सह सुपा' (पा.सू.२,१,४) इत्यत्र सहेति योगविभागात् आङस्तिङा सह समासे समासान्तोदात्तत्वे प्राप्ते 'परादिश्छन्दसि बहुलम्' (पा.सू.६,२,१९९) इत्युत्तरपदाद्युदात्तत्वम् । तस्मै । 'क्रियाग्रहणं कर्तव्यम्' (पा.म.१,४,३२, १) इति सम्प्रदाने चतुर्थी ॥

**सिद्धाञ्जनम्–** नवमीमृचमाह– **यः हविष्मान्** हविर्युक्तः यजमानः **देववीतये** देवानां वीतिरागमनं यस्मिन् यज्ञे तस्मै बहुव्रीहिः, तस्माद्विशेषणमध्याहार्यस्य यज्ञस्य । **अग्निं आविवासति** परिचरति । अन्तर्भावितण्यर्थः, गत्यर्थो वातिर्धातुः तस्मात् सन्, आगमयितुं इच्छतीति धात्वर्थः, तादृशीच्छैव परिचर्यायां पर्यवस्यतीति हेतोः निघण्टौ तथा पठितम् । **तस्मै** यजमानाय हे **पावक** शोधक अग्ने **मृळय** सुखं कुरु । यज्ञं प्रति देवानां 'वीतिः' यजमाने तेषां प्रादुर्भाव एव भवति । पुनातेः पावको रूढिरग्नौ। अर्पणद्रव्यस्य हविषः स्वरूपं प्रागुक्तम् ॥

### ऋक्संहिता पदपाठसहिता

**सनः पावक दीदिवोऽग्ने देवाँ इहावह । उपयज्ञं हविश्च नः ॥ १० ॥**

**सः । नः । पावक । दीदिऽवः । अग्ने । देवान् । इह । आ । वह । उप । यज्ञम् । हविः । च । नः ॥ १० ॥**

### ऋग्भाष्यम्

**त्वत्पूजाविषये देवानावहेन्द्रियमानिनः ॥ १० ॥**

**ऋग्भाष्यटीका– सनः पावक ।** अस्य बाह्ये स्फुटत्वादध्यात्मं व्याख्याति– **त्वत्पूजेति ।** पुनातीति पावकः । हे **पावक अग्ने दीदिवः सः** त्वं **नः** अस्मदीयं **यज्ञं हविश्च** प्रति त्वत्पूजारूपयज्ञादिविषये तत्सिध्यर्थमिति यावत् । **इह** शरीरे **देवान्** इन्द्रियाभिमानिन **उपावह** विशेषतः सन्निहितान् कुरु ॥ १० ॥

**मन्त्रार्थमञ्जरी–** (हे) पावक, पुनाति पवित्रयतीति पावक । दीदिवः, देदीप्यमान । (हे) अग्ने सः (त्वम्) इह नः यज्ञम् नः हविः च (प्रति) । देवान् उप आ वह । अध्यात्मं तु–

इह, शरीरे । देवान्, तत्त्वाभिमानिनः । नः यज्ञम् नः हविः च (प्रति), त्वत्पूजारूपयज्ञादि-सिद्ध्यर्थम् । उप आ वह । इत्यर्थः । अन्यत्समानम् ।। १० ।।

**स्कन्द–** यं त्वामस्तौष्म **सः नः** तादर्थ्ये एषा चतुर्थी, अस्माकमर्थे । हे **पावक! दीदिवः!** दीप्तिमन्! **अग्ने!** देवान् इह आ वह । केह । उच्यते । **उप यज्ञं हविः च** यज्ञस्य हविषश्च समीपे **नः** अस्माकं स्वभूतस्य ।। १० ।।

**वेङ्कटमाधव–** सः अस्माकम् पावक! दीप्त! अग्ने! देवान् इह आ वह । हविः च अस्माकं शृतम् यज्ञम् । उप प्राप्तम् ।। १० ।।

**मुद्गल– हे दीदिवः!** दीप्यमान! **पावक!** अग्ने! **सः** त्वम् **नः** अस्मदर्थं **इह** देवयजनदेशे देवान् आ वह । ततः **नः** अस्मदीयं **यज्ञं** तत्रत्यम् **हविश्च उप** देवसमीपे प्रापयेति शेषः ।।

**सायण–** पवमानेष्टौ अग्नेः पावकस्यानुवाक्या 'स नः पावक दीदिवः' इति । 'पौर्णमासेनेष्टि-पशुसोमा उपदिष्टाः' इति खण्डे सूत्रितं– 'स नः पावक दीदिवोऽग्ने पावक रोचिषा' (आश्व.श्रौ. २.१) इति ।।

हे **दीदिवः** दीप्यमान **पावक** शोधक **अग्ने सः** त्वं **नः** अस्मदर्थं **इह** देवयजनदेशे **देवान् आ वह** । ततः **नः** अस्मदीयं **यज्ञं** तत्रत्यं **हविश्च उप** देवसमीपे प्रापयेति शेषः ।

दीदिवः । 'दिवु क्रीडादौ' । 'छन्दसि लुङ्लङ्लिटः' (पा.सू.३,४,६) इति वर्तमाने लिट् । क्वसुः । द्विर्भावो हलादिशेषः । 'तुजादीनां दीर्घोऽभ्यासस्य' (पा.सू.६,१,७) इत्यभ्यासस्य दीर्घत्वम् । 'वस्वेकाजाद्धसाम्' (पा.सू.७,२,६७) इति नियमात् वसोः इट्प्रतिषेधः । 'लोपो व्योर्वलि' (पा.सू.६,१,६६) इति वकारलोपः । सम्बुद्धौ 'उगिदचां' (पा.सू.७,१,७०) इत्यादिना नुम् । हल्ङ्यादिलोपः संयोगान्तलोपः । 'मतुवसोः' इति रुत्वम् । विसर्गः । अग्ने । पादादित्वात् न निघातः । देवाँ इहेत्यत्र 'दीर्घादटि समानपादे' (पा.सू.८,३,९) इति रुत्वम् । 'आतोऽटि नित्यम्' इति आकारस्यानुनासिकः । 'भोभगोअघोअपूर्वस्य योऽशि' (पा.सू.८,३, १७) इति रोर्यकारः । 'लोपः शाकल्यस्य' (पा.सू.८,३,१९) इति यकारलोपः । तस्यासिद्ध-त्वात् आद्गुणो न भवति । इह । 'इदमो हः' (पा.सू.५,३,११) इति सप्तम्यन्तात् हप्रत्ययः ।

'इदम इश्' (पा.सू.५,३,३) । तद्धितान्तत्वात् प्रातिपदिकत्वे 'सुपो धातुप्रातिपदिकयोः' (पा.सू.२,४,७१) इति सप्तम्या लुक् । 'तद्धितश्चासर्वविभक्तिः' पा.सू.१,१,३८) इत्यव्यय-संज्ञायाम् 'अव्ययादाप्सुपः' (पा.सू.२,४,८२) इत्युत्तरस्याः सप्तम्या लुक् । अकारः प्रत्यय-स्वरेणोदात्तः ।। १० ।।

**सिद्धाञ्जनम्–** दशमीमृचमाह– हे **पावक** शोधयितः, **दीदिवः** दीप्तिमन् , **अग्ने सः** त्वं **नः** अस्मभ्यं तादर्थ्ये चतुर्थी, **देवान् इह** अत्र अस्मदीययजनस्थाने **आवह** आहर। **नः** अस्माकं **यज्ञं** यजनं **हविश्च उप** समीपं तेषां, प्रापयेत्यर्थः ।। ११ ।।

### ऋक्संहिता पदपाठसहिता

**सनः स्तवान आभर गायत्रेण नवीयसा । रयिं वीरवतीमिषम् ।। ११ ।।**

सः । नः । स्तवानः । आ । भर । गायत्रेण । नवीयसा । रयिम् । वीरऽवतीम् । इषम् ।।

### ऋग्भाष्यम्

**गायत्रेण स्तूयमानो दृश्यमानेन नो रयिम् ।**
**पुत्रयुक्तामिषं चैव वीर्ययुक्तामथावह ।। ११ ।।**

**ऋग्भाष्यटीका– सनस्तवानः** । गायत्रेण । हे अग्ने **नवीयसा** अतिनूतनेन **गायत्रेण** साम्ना अपौरुषेयत्वाद्वेदस्य इदानीमेव दृश्यमानेन व्यज्यमानेन **स्तवानः** स्तूयमानः **सः** त्वं **नः** अस्मभ्यं **रयिं** वित्तं **वीरवतीं** पुत्रयुक्ताम् अथवा वीरं वीर्यं तद्युक्तामिषमन्नं च **आभर** आवह देहीति यावत् ।। ११ ।।

**मन्त्रार्थमञ्जरी–** (हे अग्ने) नवीयसा, अतिनूतनेन, इदानीमेव व्यज्यमानेन । गायत्रेण, साम्ना । स्तवानः, स्तूयमानः । सः (त्वम्) नः, अस्मभ्यम् । रयिम्, वित्तम् । वीरवतीम्, पुत्रयुक्ताम्, भावप्रधानेन वीर्ययुक्तां वा । इषम्, अन्नम् । (च) आ भर, देहीत्यर्थः, 'भृञ् भरणे' शब्विकरणम् ।। ११ ।।

**स्कन्द–** सः **नः** अस्मदर्थं **स्तवानः** स्तूयमानः अस्माभिः **आ भर** आहर आनय । केन स्तवानः **गायत्रेण** गायतेरर्चतिकर्मण एतद्रूपम् । स्तवेन **नवीयसा** नवतरेण अन्यैरकृतपूर्वेण । किमाहराणि ? उच्यते । **रयिं** धनं **वीरवतीं** पुत्रसंयुक्तां **इषं** अन्नं च ।। ११ ।।

**वेङ्कटमाधव–** सः अस्मभ्यं स्तूयमानः गायत्रेण साम्ना नवतरेण रयिं वीरयुक्तम् अन्नं च आहर ॥ ११ ॥

**मुद्गल–** हे अग्ने! **नवीयसा** नवतरेण अद्य सम्पादितेन **गायत्रेण** गायत्रीछन्दस्केनानेन सूक्तेन **स्तवानः** स्तूयमानः **सः** त्वं **नः** अस्मदर्थं **रयिं** धनं **वीरवतीं** शूरपुत्रप्रभृत्यपत्ययुक्ताम् **इषं** अन्नञ्च **आभर** सम्पादय ॥ ११ ॥

**सायण–** हे अग्ने **नवीयसा** नवतरेण पूर्वैरप्यसम्पादितेन **गायत्रेण** गायत्रीच्छन्दस्केनानेन सूक्तेन **स्तवानः** स्तूयमानः **सः** त्वं **नः** अस्मदर्थं **रयिं** धनं **वीरवतीं** शूरपुत्रप्रभृत्यपत्ययुक्तां **इषं** अन्नं च **आभर** सम्पादय ।

स्तवानः । 'ष्टुञ् स्तुतौ' । 'धात्वादेः षः सः' । 'स्वरितञितः' (पा.सू.१,३,७२) इत्यात्मनेपदम् । लटः शानच् । कर्तरि शप् । 'बहुलं छन्दसि' (पा.सू.२,४,७३) इति लुगभावः । गुणावादेशौ । 'आने मुक्' (पा.सू.७,२,८२) इति मुक् न भवति, 'अनित्यमागमशासनम्' (परिभा.९६) इत्यागमानुशासनस्य अनित्यत्वात् । शपः पित्त्वादनुदात्तत्वम् । शानचश्चित्त्वादन्तोत्तस्य अदुपदेशात् शपः । परत्वात् लसार्वधातुकानुदात्तत्वम् । धातुस्वर एव शिष्यते । भर । 'हृग्रहोर्भश्छन्दसि' (पा.सू.८,२,३२,१) इति भत्वम् । गायत्रेण । गायत्र्याः सम्बन्धि गायत्रम् । 'तस्येदम्' (पा.सू.४,३,१२०) इति अण्प्रत्ययः । प्रत्ययस्वरः । नवीयसा । नवशब्दात् आतिशायनिकः ईयसुन्प्रत्ययः । नित्त्वादाद्युदात्तः । वीरवतीम् । मतुब्ङीपोः पित्त्वादनुदात्तत्वम् । अकारः प्रातिपदिकस्वरेणोदात्तः ॥ ११ ॥

**सिद्धाञ्जनम्–** एकादशीमृचमाह– **सः** त्व **नवीयसा** नवतरेण **गायत्रेण** स्तोत्रेण गायत्र्या इदं गायत्रं तेन **स्तवानः** स्तूयमानः **नः** अस्मदर्थं **आभर** आहर सम्पादयेत्यर्थः । आहरणीयं आह– **रयिं** धनं **वीरवतीं** वीर्योपेतां **इषं** प्रेरयित्रीं शक्तिं च । 'इषं अन्नं' इति स्थूलः पक्षः। सूक्ष्मे तु सर्वत्र प्रेरणवलं, एषणाशक्तिरिति वा बोध्यम् । केवलं प्रेरणा निर्बलाऽपि स्यात् , अत एव वीरवतीति विशेषणम् । वीरशब्देन वीर्यं लक्षितं ग्राह्यम् । रयिर्धनं अन्तर्यामिनः प्राधान्येन दिव्यं धनमेव भवति । स्तवानः ष्टु स्तुतौ कर्मणि शानच् छान्दसं रूपम् । 'नवीयसा गायत्रेण' पूर्वैरप्यसम्पादितमिदं गायत्रं सूक्तमिति सायणः । अन्यैरकृतपूर्वेण इति स्कन्दस्वामी ॥

## ऋक्संहिता पदपाठसहिता

**अग्ने॑ शु॒क्रेण॑ शो॒चिषा॒ विश्वा॑भिर्दे॒वहू॑तिभिः । इ॒मं स्तोमं॑ जुषस्व नः ॥ १२ ॥**

अग्ने॑ । शु॒क्रेण॑ । शो॒चिषा॑ । विश्वा॑भिः । दे॒वहू॑तिऽभिः । इ॒मम् । स्तोम॑म् । जु॒ष॒स्व॒ । न॒ः ॥

## ऋग्भाष्यम्

**ज्वलता तेजसा विश्वदेवाह्वानैर्वृणु स्तुतिम् ॥ १२ ॥**

**ऋग्भाष्यटीका– अग्ने शुक्रेण** । ज्वलता । हे अग्ने **शुक्रेण** ज्वलतेति यावत् । **शोचिषा** तेजसा युक्तस्त्वं **विश्वाभिः** सर्वाभिः **देवहूतिभिः** देवाह्वानैः सह **नः** अस्माकं **इमं स्तोमं** स्तुतिं **जुषस्व** वृणु ॥ १२ ॥

**मन्त्रार्थमञ्जरी–** (हे) अग्ने । शुक्रेण शुभ्रेण, ज्वलतेति यावत् । शोचिषा, तेजसा । (युक्तस्त्वम्) । विश्वाभिः, सर्वाभिः । देवहूतिभिः, देवाह्वानैः सह । नः, अस्माकम् । इमम् । स्तोमम्, स्तुतिम् । जुषस्व, 'जुषी प्रीतिसेवनयोः' वृण्वित्यर्थः ॥ १२ ॥

**स्कन्द–** अग्ने! **शुक्रेण** शुक्लवर्णेन **शोचिषा** ज्वालानामैतत् (तु.निघ १,१६) । ज्वलता । केन ? सामर्थ्यादात्मना । **विश्वाभिः** सर्वाभिश्च **देवहूतिभिः** देवह्वानैः **इमं स्तोमं जुषस्व** सेवस्व **नः** अस्माकं स्वभूतम् । स्वयं च शृणु देवांश्च सर्वान् श्रावकानाह्वय इत्यर्थः ॥१२॥

**वेङ्कटमाधव–** अग्ने! ज्वलता तेजसा सर्वैश्च देवाह्वानैः युक्तस्त्वं इमं स्तोमं सेवस्व नः ॥ १२ ॥

**मुद्गल–** हे अग्ने! **शुक्रेण शोचिषा** त्वदीयश्वेतवर्णदीप्त्या **विश्वाभिः देवहूतिभिः** त्वत्कृतसर्वदेवताह्वानसाधनस्तोत्रैश्च युक्तस्त्वं **नः** अस्मदीयं **इमं स्तोमं** स्तोत्रविशेषं **जुषस्व** सेवस्व ॥ १२ ॥

**सायण–** हे अग्ने **शुक्रेण शोचिषा** त्वदीयश्वेतवर्णदीप्त्या **विश्वाभिर्देवहूतिभिः** त्वत्कृत-सर्वदेवताह्वानसाधनस्तोत्रैश्च युक्तस्त्वं **नः** अस्मदीयं **इमं स्तोमं** स्तोत्रविशेषं **जुषस्व** सेवस्व ।

विश्वशब्दो विशेः क्वनन्तो नित्त्वादाद्युदात्तः । देवहूतिभिः । देवशब्दः पचाद्यजन्तः ।

चित्त्वादन्तोदात्तः । देवानां हूतय आह्वानान्यासु स्तुतिष्विति देवहूतयः स्तुतयः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । स्तूयतेऽनेनेति स्तोमः । 'अर्तिस्तुसु' (उ.सू.१,१३७) इत्यादिना मन् । नित्त्वादाद्युदात्तः ।। २३ ।।

**सिद्धाञ्जनम्–** द्वादशीमृचमाह– हे अग्ने **शुक्रेण** शुभ्रेण **शोचिषा** रोचिषा **विश्वाभिः** सर्वाभिः **देवहूतिभिः** देवाह्वानसाधनभूताभिः स्तुतिभिश्च युक्तः, बहुव्रीहिः, देवानां हूतयः यासु ताः स्तुतयः । **नः** अस्माकं **इमं स्तोमं जुषस्व** सेवस्व ।

।। इति प्रथमाष्टके प्रथमाध्याये त्रयोविंशो वर्गः ।।

## ।। अथ चतुर्विंशो वर्गः ।।

## (सूक्तम् १३)

## ऋक्संहिता पदपाठसहिता

**१२ मेधातिथिः काण्वः । ( आप्रीसूक्तं, अग्निरूपा देवताः=) १ इध्मः समिद्धोऽग्निर्वा, २ तनूनपात्, ३ नराशंसः, ४ इळः, ५ बर्हिः, ६ देवीर्द्वारः, ७ उषासनक्ता, ८ दैव्यौ होतारौ प्रचेतसौ, ९ तिस्रो देव्यः सरस्वतीळाभारत्यः, १० त्वष्टा, ११ वनस्पतिः, १२ स्वाहाकृतयः । गायत्री ।**

**सुसमिद्धो न आवह देवाँ अग्ने हविष्मते । होतः पावक यक्षि च ।। १ ।।**
सुऽसमिद्धः । नः । आ । वह । देवान् । अग्ने । हविष्मते । होतरिति । पावक । यक्षि । च ।। १ ।।

### ऋग्भाष्यम्

**अस्मद्धविष्मते देवानाहूय यज चादरात् ।। १ ।।**

**ऋग्भाष्यटीका– सुसमिद्धः ।** द्वादशर्चमेतदाप्रीसूक्तम् । प्रत्यृचं भिन्नदेवताकम् । अस्मत् । हे होतः पावक अग्ने **सुसमिद्धः** अतिसुदीप्तः त्वं **नः हविष्मते** अस्मद्धविष्मते अस्मद्यजमानाय तादर्थ्ये चतुर्थी । देवानावह आहूय **यक्षिच** यजच । देवानावहेति बहुवारमुच्यते । तस्य तात्पर्यमाह– **आदरादिति** ।। १ ।।

**मन्त्रार्थमञ्जरी–** अथ 'सुसमिद्धो न' इति त्रयोदशं द्वादशर्चं वर्गद्वयात्मकमाप्रीसूक्तं

गायत्रीछन्दस्कं प्रत्यृचं भिन्नदेवताकम् । ताश्च देवता अग्निविशेषादयः । तत्र (आद्यायास्तावदिध्मः समिद्धो वाग्निर्देवता) (हे) होतः पावक अग्ने व्याख्यातानि पदानि । सुसमिद्धः, अतिसुदीप्तः । (त्वम्) नः हविष्मते, अस्मद्यजमानाय, तादर्थ्ये चतुर्थी । देवान् आ वह । आहूय यक्षि च, यज च, यजतेः व्यत्ययेन लुग्विकरणम्, सिप्, षत्वम्, कत्वं च । 'देवान्, आ, वह' इति बहुवारोक्तिरादरार्था ।। १ ।।

**स्कन्द–** सुसमिद्धः द्वादशर्चमाप्रीसूक्तम् । सर्वत्र चाप्रीसूक्ते यथाक्रममेकैकस्यामृचि आसां देवतानामेकैका देवता । इध्मः, तनूनपात्, नराशंस, इळः, बर्हिः, देवीर्द्वारः, उषासा नक्ता, दैव्या होतारः, तिस्रो देवीः, त्वष्टा वनस्पतिः, स्वाहाकृतय इति । इध्यतेऽसावितीध्मः समिन्धन-सम्बद्धोऽग्निरुच्यते । **सुसमिद्धः** सुष्ठुः दीप्तः **नः** अस्माकं स्वभूताय आ वह देवान् हे अग्ने! **हविष्मते** यजमानाय । मा च वाक्षीरेव केवलं हे होतः! पावक! **यक्षि च** यज च ।।१।।

**वेङ्कटमाधव–** आप्रीणामग्न्यादयो देवताः । समिदादीनां यज्ञाह्वानामुक्तिमात्रमिति । सुसमिद्धः त्वम् अग्ने! अस्माकं अस्मै यजमानाय देवान् आ वह । होतः! शोधयितः! तान् यज च ।।

**मुद्गल–** 'सुसमिद्धः' इति द्वादशर्चं द्वितीयं सूक्तम् । काण्वो मेधातिथिः ऋषिः । गायत्रम् । इध्मोऽग्निः समिद्धोऽग्निर्वा तनूनपात् नराशंसः इळो बर्हिर्देवीर्द्वार उषासा नक्ता दैव्यौ होतारौ प्रचेतसौ तिस्रो देव्यः सरस्वतीळाभारत्यः त्वष्टा वनस्पतिः स्वाहाकृतिरिति क्रमेण प्रत्यृचं देवताः । आप्रीसूक्तम् ।

**सायण–** 'सुसमिद्धः' इत्यादिकं द्वादशर्चं द्वितीयमाप्रीसूक्तम् । तस्य काण्वो मेधातिथिर्ऋषिः । गायत्रं छन्दः । प्रत्यृचं प्रतीयमानाः समिद्धतनूनपादादिका द्वादश देवताः । तथा च अनुक्रमणिकायां ऋक्सङ्ख्यामृषिं छन्दश्च अनुवृत्तिबलात् सिद्धवत्कृत्य देवता उदाहृताः– 'सुसमिद्ध इतीध्मः समिद्धो वाऽग्निस्तनूनपान्नराशंस इळो बर्हिर्देवीर्द्वार उषासा नक्ता दैव्यौ होतारौ प्रचेतसौ तिस्रो देव्यः सरस्वतीळाभारत्यस्त्वष्टा वनस्पतिः स्वाहाकृतय इति प्रत्यृचं देवता एतदाप्रीसूक्तम्' इति । विनियोगस्तु– पशौ 'सुसमिद्धो न आ वह' इति काण्वमाप्रीसूक्तम् । 'एकादश प्रयाजाः' इति खण्डे सूत्रितम्– 'समिद्धो अद्येति सर्वेषां यथर्षि वा' (आश्व.श्रौ.३,२) इति ।।

हे अग्ने! **सुसमिद्धः** एतन्नामकस्त्वं **नः** अस्मदीयाय **हविष्मते** यजमानाय तदनुग्रहार्थं देवान् आ वह । हे **पावक!** शोधक! **होतः!** होमनिष्पादक **अग्ने! यक्षि च** यज च ॥

सुसमिद्धः । समः क्रियाविशेषणत्वेन गतिसंज्ञकत्वात् प्रादिसमासः । शोभनवाचिनः सुशब्दस्य तु 'विशेषणं विशेष्येण बहुलम्' (पा.सू.२,१,५७) इति समिद्धपदेन कर्मधारयसमासः । सुशब्दः प्रातिपदिकस्वरेणोदात्तः । 'कर्मधारयेऽनिष्ठा' (पा.सू.६,२,४६) इति पूर्वपदप्रकृतिस्वरत्वम् । क्रियाविशेषणत्वे हि सुशब्दस्य गतित्वात् प्रादिसमासे 'गतिरनन्तरः' (पा.सू.६,२,४९) इति समो यदुदात्तत्वं तदेव कृदुत्तरपदप्रकृतिस्वरत्वेन स्थास्यतीति सुशब्दोऽनुदात्तः स्यात् । देवाँ अग्ने । पूर्ववत् रुत्वानुनासिके ।

हविष्मते । हविरस्यास्तीति मतुप् । 'तसौ मत्वर्थे । (पा.सू.१,४,१९) इति भत्वेन पदत्वस्य बाधितत्वात् न रुत्वम् । होतःपावकशब्दयोः आमन्त्रितयोः पृथक्पृथगेव क्रियान्वये परस्परमसामर्थ्यात् पराङ्गवद्भावाभावात् न तन्निबन्धनम् ऐकस्वर्यम् । न च द्वितीयस्य आमन्त्रितस्य आष्टमिकनिघातेन ऐकस्वर्यम्; 'आमन्त्रितं पूर्वमविद्यमानवत्' (पा.सू.८,१,७२) इति पूर्वस्य अविद्यमानवत्त्वेन पदात् परत्वाभावात् पादादित्वाच्च । परस्परसामानाधिकरण्येऽपि होतरित्यस्य विशेषणत्वे समानमेव अविद्यमानवत्त्वम् । अत एव अविद्यमानवत्त्वात् सामर्थ्येऽपि न पराङ्गवद्भावः इति नैकस्वर्यसिद्धिः । अतो होतरिति विशेष्यम् । अतः पुनातीति पावक इत्यवयप्रसिद्धिस्वीकारेण विशेषणत्वात् होतरिति विशेष्यम् । तच्च सामान्यवचनमिति 'नामन्त्रिते समानाधिकरणे' (पा.सू.८,१,७३) इत्यविद्यमानवत्त्वप्रतिषेधात् पदात्परत्वात् अपादादित्वाच्च द्वितीयामन्त्रितस्य आष्टमिकनिघातेन वा पराङ्गवद्भावे सति शेषनिघातेन वा सर्वानुदात्तत्वसिद्धिः । यक्षि । यजेर्लोटः सिपि 'बहुलं छन्दसि' इति शपो लुक् । व्रश्चादिना षत्वम् । 'षढोः कः सि' (पा.सू.८,२,४१) इति कत्वम् । सेर्हिरादेशः छान्दसत्वात् न भवति । सिपः पित्त्वेन अनुदात्तत्वात् धातुस्वर एव शिष्यते । न च 'तिङ्ङतिङः' इति निघातः, पूर्वस्य पावक इति आमन्त्रितस्य अविद्यमानवत्त्वेन पदादपरत्वात् । अत एव तस्य अव्यवधायकत्वेन होतरित्यपेक्ष्य निघातः स्यात् इति चेत्, न । यक्षिपदापेक्षया होतरित्यस्यापि पूर्वत्वेन अविद्यमानवत्त्वात् । ननु 'नामन्त्रिते समानाधिकरणे' इति तस्य निषिद्धम् अविद्यमानवत्त्वम् । न च पावकपदस्य अविद्यमानवत्त्वेन समानाधिकरणपरत्वाभावः । यक्षिपदस्यैव हि कार्यं प्रति

पावकपदं पूर्वत्वात् अविद्यमानवत् स्यात् । होतःपदकार्यं अविद्यमानवत्त्वप्रतिषेधं प्रति तु परत्वात् विद्यमानवदेव इति भवत्येव होतरित्यस्य अविद्यमानवत्त्वप्रतिषेधः । अतस्तस्य विद्यमानवत्त्वात् तदपेक्षया यक्षीत्यस्य निघातः प्राप्नोत्येव । सत्यम् । अत्र यक्षीत्यस्य चशब्दपरत्वात् 'चादिषु च' (पा.सू.८,१,५८) इति निघातप्रतिषेधो भविष्यतीत्यदोषः ।।१।।

**सिद्धाञ्जनम्–** व्याख्यातं काण्वस्य मेधातिथेराद्यं आग्नेयं सूक्तम् । अथ तस्यैव द्वितीयं गायत्रं द्वादशर्चं आप्रीसंज्ञकं सूक्तमारभ्यते । तत्र प्रत्यृचं प्रतिपाद्यमाना द्वादश देवता इति अनुक्रमणिका । अग्निरेक एव द्वादशविभागभूतदेवतात्मकतया स्तूयत इति हेतोराग्नेयेषु सूक्तेषु मध्ये पट्यत इदमाप्रीसूक्तम् । अग्नीषोमीयं पशुं विधाय तत्र एकादश प्रयाजान् विधत्ते 'आप्रीभिराप्रीणाति' इति ऐतरेयिणः समामनन्ति । प्रयाजदेवतानां याज्याः (स्तुतयः) प्रीतिहेतुत्वात् आप्रीशब्देनोच्यन्ते । एवं कर्मसु विनियोगः स्पष्टः स्थूलपक्षे । तथा मन्त्राणामर्थोऽपि सुखेन योजनीयतां लभते । सूक्ष्मार्थ एव विचारणीयः । कथं अग्निराधातव्यो यजमाने? कीदृशं यजमानस्वरूपम् ? कीदृशोऽग्नेर्व्यापारः? इतीमानि अधिकृत्य तत्त्वे दृढं गृहीते आप्रीमन्त्रार्थानां रहस्यं अनायासेन स्पष्टं भवेदित्यसंशयम्। मनः-प्राण-शरीरात्मकस्य त्रिकस्योपयोक्ता उपभोक्ता अधिष्ठाता योऽन्तरे स्फुरन्नात्मा भवति स जीवो यजमानः पुरुष उच्यते । परिपाकवशात्तस्य दिव्यसम्पदे दिव्यजन्मने देवतानुग्रहसम्पादनाय प्रवृत्तौ जातायां, तस्य हृद्गता काङ्क्षा तीव्रा भवति । सा च भक्तिपरवशया धिया तपोबलेन वा उभयथाऽपि वा विशेषतो ज्वलिता भवति । एवं देवकामस्य जीवस्य ज्वलितापां काङ्क्षायां, स्वयमेवेश्वरो द्रष्टा दर्शयिता च सर्वस्य, 'कविः' कर्ता कारयिता च कर्तव्यस्य 'क्रतुः' प्रादुर्भवति । अत एव 'अग्निनाग्निः समिध्यते' इति मन्त्रदृष्टिः । तथा तस्याग्नेर्यजमाने जन्मनः परं क्रमेण स एव यजमानस्य सर्व भारं वहन् कार्यं साधयति । स होता पुरोहितः सत्यः सत्यवर्मा गृहपतिः इत्यादीनां विशेषणानां प्रयोजनमधुना सुगमं भवेत् । स जातो वर्धयितव्यः, ज्वलयितव्यः अस्मदीयैः स्तोत्रैर्ध्यानैः कर्मभिश्च । स एव नः कर्तव्येषु अध्येषणीयः । सर्वथा स प्रीणनीयः । प्रीते तस्मिन्, तस्योद्योगे सति तद्विभूतिभूतानि देवतान्यन्यानि आविर्भूय स्वीयाः सम्पदो यजमानं प्रापयन्ति । ता एव देवताः आप्रियः अस्मिन् सूक्ते प्रतिपादिताः । सर्वाश्च ता अग्निसम्पद एवेति ग्राह्याः। प्रीञ् प्रीणने इति धातोः आप्रीशब्दनिर्वचनं प्राहुः । तर्हि आप्रिय स्तुतय इति युक्तम् । पृ-पालनपूरणयोरिति

धातोश्च निष्पाद्यः शब्दः, तर्हि देवता आप्रियः आपूरयित्र्यः यजमानस्येति शेषः । यजमानं इमाः स्वात्मना पूरयन्ति अग्निविभूतय इत्यर्थः । 'स विद्वाँ आ च पिप्रयः' (२-६-८) स त्वं विद्वान् विशेषाभिज्ञः सन् आ च सर्वतोऽस्मान् 'पूरय' कामैः इति सायणव्याख्या लक्षणीया ।

तदस्मिन् सूक्ते इध्मापरनामकसमिधाद्याः आप्रियः यजमाने लब्धजन्मनोऽग्नेः वर्धमानस्य दशाविशेषान् प्राप्नुवतः पूर्णाविष्कारायोपकरणभूताः काश्चन विभूतिविशेषाः मूर्तिविशेषाश्च प्रतिपादिता भवन्ति । अथ च इदमवधातव्यम् । आप्रीसूक्तेषु सर्वत्र सर्वाश्च प्रधानदेवताः यज्ञे सान्निध्यं कर्तुं स्तूयन्ते । अग्निमुखेन ता आहूयन्ते । अतोऽग्निमुखा देवा भवन्तीति अग्निदेवत्य-माप्रीसूक्तमित्याहुः । यद्यपि परदैवतस्य मूर्तय एव सर्वाश्च देवताः, तथाऽपि व्यापारभेदो व्यक्तिभेदश्च बोध्यौ । ऋचां व्याख्याने तत्सर्वं यावदपेक्षितं प्रदर्शयिष्यामः ।

तत्र प्रथमामृचमाह– हे **अग्ने सुसमिद्धः** शोभनत्वविशिष्टः सम्यग्दीप्तः त्वं **नः** मह्यम्, वचनव्यत्ययेन बहुवचनमुक्तम् । **हविष्मते** हविर्युक्ताय यजमानाय **देवान् आवह** आनय । हे **होतः** आह्वातः, **पावक** शोधक, **यक्षि च** यज च । सुसमिद्धः-सम् इति सम्यगर्थे इन्धन-क्रियाविशेषणम्, तस्मात् समिद्धः गतिसमासः, सुशब्दः शोभनवाची तस्मात् कर्मधारयः । यक्षि-यजेति लोटि मध्यमपुरुषैकवचनम् । सुसमिद्धशब्देन इध्मनामकोऽग्निः सूचित इत्याहुः । प्रादुर्भूतस्य प्रथमं अल्पाकारस्य ज्वालावर्धनं स्तोत्रध्यानकर्मानुष्ठानैः समित्सङ्केतितैः सम्पद्यते । अत्र 'अग्ने' इति तत्संवर्धनोपकरणभूतसमिधः सम्बोधनं अवधेयम् । अन्यत् प्रागुक्तम् ।

### ऋक्संहिता पदपाठसहिता

**मधुमन्तं तनूनपाद्यज्ञं देवेषु नः कवे । अद्या कृणुहि वीतये ॥ २ ॥**
**मधुऽमन्तम् । तनूऽनपात् । यज्ञम् । देवेषु । नः । कवे । अद्य । कृणुहि । वीतये ॥**

### ऋग्भाष्यम्

**तनूभ्यो वाक्ततो देवो व्यक्तस्तेन तनूनपात् ॥ २ ॥**

**ऋग्भाष्यटीका– मधुमन्तम्** । तनूनपादित्यग्निविशेषस्य प्रसिद्धं नाम । तद्विष्णौ योजयति– **तनूभ्य इति** ॥ वाक् जाता तदाश्रयत्वात् ततो वाचो देवः परमेश्वरो व्यक्तो यज्ञ इति तत्पुत्र उच्यते, तेन तनूनपात् । नपाच्छब्दस्य पौत्रपर्यायत्वात् । हे **कवे तनूनपात्** त्वं **वीतये**

यजमानस्य देवताप्राप्त्यै **नः** अस्मदीयं **मधुमन्तं** मधु स्वादु हविरादि तद्वन्तं यज्ञं अद्यैव **देवेषु कृणुहि** कुरु । देवान्प्रापय ।। २ ।।

**मन्त्रार्थमञ्जरी–** (द्वितीयस्यामृचि तनूनपाद्देवता) 'तनूनपात्' इत्यग्निविशेषस्य नाम । विष्णोस्तु नपात् शब्दस्य पौत्रपर्यायत्वात्तनूभ्यो देहेभ्यो जातया वाचा व्यज्यमानत्वेन जातप्रायतया तनूपौत्रत्वेन 'तनूनपात्' इति नाम ज्ञेयम् । (हे) कवे तनूनपात् (त्वम्) वीतये, यजमानस्य देवताप्राप्त्यर्थम् । नः, अस्मदीयम् मधुमन्तम्, मधु स्वादु, तद्युक्तं हविरादि, तद्वन्तम् । यज्ञम् अद्य (एव) देवेषु । कृणुहि, कुरु, देवान्प्रापय ।। २ ।।

**स्कन्द– मधुमन्तं** मधुस्वादैर्मृष्टैर्हविर्भिः तद्वन्तम् । हे **तनूनपात्** आपोऽत्र तन्व उच्यन्ते अन्तरिक्षे ततत्वात् । तासां नपात् पौत्रः । कोऽसौ ? अग्निः । कथम् ? अद्भ्यः ओषधिवनस्पतयो जायन्ते । ओषधिवनस्पतिभ्य एष जायत इति तस्य सम्बोधनम् । हे तनूनपात् । **यज्ञं देवेषु** सामीपिकमिदमधिकरणम् । गङ्गायां गाव इति यथा । देवसमीपे अस्माकं स्वभूतम् **कवे!** मेधाविन् । **अद्य कृणुहि** कुरु । देवसमीपं नयेत्यर्थः । किमर्थम् ? **वीतये** कामाय भक्षणाय वा । यज्ञं कथं देवाः कामयेरन् हवींषि वा भक्षयेयुरित्येवमर्थम् ।। २ ।।

**वेङ्कटमाधव–** आज्यवन्तम् तनूनपात्! यज्ञं हविः देवेषु अस्माकम् कवे! अद्य कृणु अशनाय ।। २ ।।

**मुद्गल–** हे **कवे!** मेधाविन् । अग्ने! **तनूनपात्!** एतन्नामकस्त्वं **अद्य** अस्मिन् दिने **नः** अस्मदीयं **मधुमन्तं** रसवन्तं **यज्ञं** हविः **वीतये** भक्षणार्थं **देवेषु कृणुहि** कुरु, प्रापय इत्यर्थः ।।

**सायण–** हे **कवे** मेधाविन् अग्ने **तनूनपात्** एतन्नामकस्त्वं **अद्य** अस्मिन् दिने **नः** अस्मदीयं **मधुमन्तं** रसवन्तं **यज्ञं** हविः **वीतये** भक्षणार्थं **देवेषु कृणुहि** कुरु प्रापय इत्यर्थः ।

मधुमन्तम् । 'फलिपाटिनमिमनिजनां गुक्पटिनाकिधतश्च' (उ.सू.१,१८) इति मन्यतेः उप्रत्ययो धकारश्चान्तादेशः । 'नित्' इत्यनुवृत्तेः प्रत्ययस्य नित्त्वादाद्युदात्तो मधुशब्दः । तनूनपात् । आमन्त्रितनिघातः । अद्य । 'सद्यः परुत्' (पा.सू.५,३,२२) इत्यादिना अस्मिन् काले इत्यर्थे द्यप्रत्ययान्तो निपातितः । प्रत्ययस्वरेणान्तोदात्तः । 'तद्धितश्चासर्वविभक्तिः' (पा.सू. १,१,३८) इति अव्ययत्वात् 'अव्ययादाप्सुपः' (पा.सू.२,४,८२) इत्युपरि सप्तम्या लुक् ।

संहितायां 'अन्येषामपि दृश्यते' (पा.सू.६,३,१३७) इति दीर्घत्वम् । कृणुहि । 'कृवि हिंसाकरणयोश्च' । 'इदितो नुम् धातोः' (पा.सू.७,१,५८) इति नुम् । लोटः सेर्हिरादेशः । 'धिन्विकृण्व्योर च' (पा.सू.३.१,८०) इति शपोऽपवादो विकरण उप्रत्ययः, तत्संनियोगेन वकारस्य अकारः । तस्य 'अतो लोपः' (पा.सू.६,४,४८) इति लोपः । तस्य स्थानिवद्भावात् लघूपधगुणो न भवति । 'उतश्च प्रत्ययादसंयोगपूर्वात्' (पा.सू.६,४,१०६) इति हेर्लुक् न भवति 'उतश्च प्रत्ययाच्छन्दो वावचनम्' (पा.सू ६,४,१०६) वचनात् । 'तिङ्ङतिङः' इति निघातः । वीतये । 'मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः' (पा.सू.३,३,९६) इति क्तिन् उदात्तः ।। २ ।।

**सिद्धाञ्जनम्–** द्वितीयामृचमाह– हे अग्ने, **तनूनपात्** एतत्संज्ञक, **कवे** द्रष्टः, सर्वार्थदर्शिन्, **अद्य नः** अस्माकं अस्मदीयं **मधुमन्तं** रसवन्तमुपभोगक्षममित्यर्थः । **यज्ञं** इमं सवं **देवेषु** देवानां मध्ये तत्समीपमित्यर्थः **कृणुहि** कुरु, नय। किमर्थम् ? **वीतये** आगतये तेषामिति शेषः । इमं यज्ञं निवेदय देवानाम्, येन ते च आगताः स्युः । अत्र अग्निरेव तनूनपात् प्रोक्तः । शरीरे प्रादुर्भूतोऽग्निरस्माभिः प्राग्व्याख्यातलक्षणस्तनूनपात्। ऊर्जोनपात्, अपां नपात् इत्यादौ यथा शक्तेर्जातोऽग्निरुच्यते, तथा यजमानस्य तन्वां जातः पुत्रः ।। २ ।।

### ऋक्संहिता पदपाठसहिता

**न॒रा॒शंस॑मि॒ह प्रि॒यम॒स्मिन्य॒ज्ञ उप॑ ह्वये । मधु॑जिह्वं ह॒वि॒ष्कृत॑म् ।। ३ ।।**
न॒रा॒शंस॑म् । इ॒ह । प्रि॒यम् । अ॒स्मिन् । य॒ज्ञे । उप॑ । ह्व॒ये । मधु॑ऽजिह्वम् । ह॒विः॒ऽकृत॑म् ।।

### ऋग्भाष्यम्

## नरैः स्तुत्यो नराशंसो वह्नेरन्याऽथवा तनूः ।। ३ ।।

**ऋग्भाष्यटीका– नराशंसम्** । नराशंसपदं विष्णावग्नौ च व्याख्याति– **नरैरिति ।।** नरैरित्युपलक्षणम् । शंसु स्तुतौ । नरैराशंस्यत इति **नराशंसः** विष्णुः । अथवा वह्निरिति वक्तव्ये वह्नेरन्या तनूरिति वदताऽस्मिन् सूक्ते सुसमिद्धादयोऽपि पृथगग्निविशेषा इति सूचितम् । **इह** सर्वप्राणिनाम् । **प्रियं** मधुमती जिह्वा यस्य तं **मधुजिह्वं हविष्कृतं** हविषः कर्तारं नराशंसं अग्निमस्मिन्यज्ञेऽहं **उपह्वये** आह्वयामि ।। ३ ।।

**मन्त्रार्थमञ्जरी–** (तृतीयस्यामृचि नराशंसो देवता) इह, सर्वप्राणिनाम् । प्रियम् । मधुमती जिह्वा यस्य तं मधुजिह्वम् । हविष्कृतम्, हविषः कर्तारम् । नराशंसम्, 'शंसु स्तुतौ' नैरराशंस्यतया नराशंसनामकमग्निविशेषं हरिं च । अस्मिन् यज्ञे । उप ह्वये, अहमाह्वयामि ।। ३ ।।

**स्कन्द–** नराशंसं शंसिः स्तुत्यर्थः । नरैः प्रशस्यत इति **नराशंसः** अग्निः । तं नराशंसम् । **इह** मनुष्यलोके । **प्रियं** इष्टम् । मनुष्याणां प्रियमित्यर्थः । **अस्मिन् यज्ञे उपह्वये मधुजिह्वं** मधुस्वादेषु हविष्षु जिह्वा यस्य स मधुजिह्वः । नित्यं मृष्टानां हविषां भक्षयितेत्यर्थः । अथवा 'जिह्वा' (निघ १,११) इति वाङ्नाम । मध्वी जिह्वा यस्य स मधुजिह्वः । होतृत्वाद्ध्यग्नेर्देवतानां स्तावकत्वादस्ति मधुवाक्त्वम् । सुभगवचनमित्यर्थः । **हविष्कृतं** हविषां कर्तारम् ।। ३ ।।

**वेङ्कटमाधव–** नरैः शंसनीयमग्निं प्रियं इह उपह्वये । अस्मिन् यज्ञे इति विशदवचनम् । मादयितृजिह्वं हविषां कर्तारम् ।। ३ ।।

**मुद्गल–** इह देवयजनदेशे **अस्मिन्** प्रवर्तमाने **यज्ञे** एतन्नामकमग्निं **उपह्वये** आह्वयामि । कीदृशम् ? **प्रियं** देवानां प्रीतिहेतुम् । **मधुजिह्वं** मधुरभाषिजिह्वोपेतम् । **हविष्कृतं** हविषो निष्पादकम् ।। ३ ।।

**सायण–** इह देवयजनदेशे **अस्मिन्** प्रवर्तमाने **यज्ञे नराशंसं** एतन्नामकमग्निं **उपह्वये** आह्वयामि । कीदृश ? **प्रियं** देवानां प्रीतिहेतुं **मधुजिह्वं** मधुरभाषिजिह्वोपेतं माधुर्यरसास्वादक-जिह्वोपेतं वा । **हविष्कृतं** हविषो निष्पादकम् ।

नरशब्दो 'नॄ नये' इत्यस्मात् अबन्तः । प्रत्ययस्य पित्त्वात् धातुस्वर एव शिष्यते । शंसन्त्यस्मिन्निति शंसः । 'हलश्च' (पा.सू.३,३,१२१) इत्यधिकरणे घञ् । नराणां शंसः इति समासे कृदुत्तरपदप्रकृतिस्वरत्वे प्राप्ते 'उभे वनस्पत्यादिषु युगपत्' (पा.सू.६,२,१४०) इति पूर्वोत्तरपदे प्रकृतिस्वरे भवतः । अत एव वनस्पत्यादिषु पाठात् नरशब्दस्य दीर्घत्वम् । इह । 'इदमो हः' (पा.सू.५,३,११) इति हप्रत्ययः । 'इदम इश्' (पा.सू.५,३,३) इति इशादेशः । प्रत्ययस्वरः । प्रियम् । प्रीणातीति प्रियः । 'इगुपधज्ञाप्रीकिरः कः' (पा.सू.३,१,१३५) इति कः । प्रत्ययस्वरः । अस्मिन् । 'ऊडिदम्' इत्यादिना विभक्तेरुदात्तत्वम् । ह्वये । निघातः । मधुजिह्वम् । मधुशब्दस्याद्युदात्तत्वमुक्तम् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरेण स एव

शिष्यते । हविष्कृतम् । हविष्करोतीति हविष्कृत् । क्विपि ह्रस्वस्य तुक् । 'नित्यं समासेऽनुत्तर-पदस्थस्य' (पा.सू.८,३,४५) इति षत्वम् । कृदुत्तरपदप्रकृतिस्वरत्वम् ।। ३ ।।

**सिद्धाञ्जनम्–** तृतीयामृचमाह– **नराशंसं** एतन्नामकमग्निं **इह** अस्मिन् **यज्ञे** अस्मदीयेऽत्र प्रवर्तमाने यजने **उपह्वये** आह्वयामि। कीदृशम् ? **प्रियं** प्रीणनशीलं, देवानां प्रीतिं जनयति, यजमानस्यापि प्रीतिहेतुरग्निः । **मधुजिह्वं** मधुरवाचं , जिह्वया वाग्लक्ष्यते । **हविष्कृतं** हविषः कर्तारं, हविषि य आस्वाद्यो रसः तस्य ग्रहणे समर्था जिह्वा तस्याग्नेः, हविरन्नमपि अग्निनैव पक्वं भवति, तस्माद्विशेषणद्वयमिदं उपपद्यते स्थूले बाह्ये कर्मणि । अन्तरर्थे तु देवाह्वानसमर्था मधुरभाषिणीव ज्वाला दिव्यमध्वानमूर्ध्वं गत्वा देवानधिगम्य आकर्षति, यजमानेनार्पणीयं देवाह्वानसाधनं हविरपि कविक्रतुना अग्निनैव साधितं भवति, यजमानप्रयाससाध्यं हव्यं अग्निनैव भगवता सफलं क्रियते । एवमुपपद्यते विशेषणद्वयम् । नराशंस इत्यग्निरेवोक्तोऽस्यामृचि । नराणां देवानां शंस इति व्युत्पत्तिः । देवानां शंसनेन देवकामं यजमानमुत्तेजयत्यग्निः ।। ३ ।।

### ऋक्संहिता पदपाठसहिता

**अग्ने॑ सु॒खत॑मे॒ रथे॑ दे॒वाँ ई॑ळि॒त आ व॑ह । असि॒ होता॒ मनु॑र्हितः ।। ४ ।।**

अग्ने॑ । सु॒खऽत॑मे । रथे॑ । दे॒वान् । ई॒ळि॒तः । आ । व॒ह । असि॑ । होता॑ । मनुः॑ऽहितः ।।

### ऋग्भाष्यम्

**मनूनां च हितत्वेन मनुर्हित इतीरितः ।। ४ ।।**

**ऋग्भाष्यटीका– अग्ने सुखतमे** । अत्र मनुर्हितपदं व्याख्याति– **मनूनां चेति** । अनेन मनुशब्दपर्यायो मनुस्शब्दोऽयमित्युक्तं भवति । चतुर्थ्यर्थे षष्ठी । हे **अग्ने ईळितः** स्तुतस्त्वं **सुखतमे रथे** सुखतमेनातिशयेन सुखकारिणा रथेन **देवानावह** यस्मात्त्वं **होताऽसि** । मनुषां मनुभ्यो देवेभ्यो हितश्चासि । अध्यात्मं देहो रथः । तत्र यथाश्रुतैव सप्तमी ।। ४ ।।

**मन्त्रार्थमञ्जरी–** (चतुर्थ्या ऋच इळो देवता) (हे) अग्ने । ईळितः, स्तुतः । (त्वम्) सुखतमे रथे, सुखतमेन रथेन, अतिशयेन सुखकारिणा रथेन देवान् आ वह । (यस्मात्त्वम्) होता असि । मनुर्हितः, मनुशब्दपर्यायोऽत्र मनुश्शब्दः, मनुर्भ्यो मनुभ्यो देवभ्यो हितः । (च) (असि) अध्यात्मं तु– देवा इन्द्रियाभिमानिनः । रथो देहः तत्र यथाश्रुतैव सप्तमी । अन्यत्समानम् ।।

**स्कन्द–** ईडिः स्तुतिकर्मण एतद् रूपम् । धातूपात्तस्तुतिसम्बन्धोऽग्निः । हे **अग्ने! सुखतमे रथे** 'सुखै रथेभिरूतये' (ऋ.५,५,३) सुयुग्भिरश्वैः सुवृता रथेन' (ऋ.३,५८,३) इति तुल्यार्थेऽन्यत्र तृतीयानिदर्शनात् तृतीयार्थे सप्तम्येषा । **सुखतमे रथे** सुखतमेन रथेन **देवान्** **ईळितः** स्तुतः अस्माभिः **आवह** । किं कारणम् ? **असि होता मनुर्हितः** मनुना प्रजापतिना निहितः स्थापितः । मनुष्यपर्यायो वा मनुशब्दः । मनुष्येषु निहितः । उपकारक इत्यर्थः ॥

**वेङ्कटमाधव–** अग्ने! सुखतमे रथे स्थापयित्वा देवान् स्तुतस्त्वं आ वह । असि त्वं होता मनुष्यैः पुरो निहितः ॥ ४ ॥

**मुद्गल–** इट्शब्दाभिधेयत्वमत्र सूचयितुमीळित इति विशेषणम् । इट्शब्दाभिधेय । हे अग्ने ! **ईळितः** अस्माभिः स्तुतः सन् **सुखतमे** अतिशयेन सुखहेतौ कस्मिंश्चिद् **रथे देवान्** स्थापयित्वा कर्मभूमौ, **आवह मनुर्हितः** मनुना मन्त्रेण हितोऽत्र स्थापितस्त्वं **होता** देवानामाह्वाता असि ॥

**सायण–** इट्शब्दाभिधेय हे **अग्ने ईळितः** अस्माभिः स्तुतः सन् **सुखतमे** अतिशयेन सुखहेतौ कस्मिंश्चित् **रथे देवान्** स्थापयित्वा कर्मभूमौ आवह । इट्शब्दाभिधेयत्वमत्र सूचयितुम् ईळित इति विशेषणम् । **मनुर्हितः** मनुना मन्त्रेण मनुष्येण वा यजमानादिरूपेण हितोऽत्र स्थापितस्त्वं **होता** देवानामाह्वाता **असि** ।

सुखतमे । सुखमस्मिन्नस्तीति मतुप् । तस्य 'गुणवचनेभ्यो मतुपो लुक्वक्तव्यः' (पा.सू. ५,२,९४,३) इति लुक् । अतिशयेन सुखः सुखतमः । तमपोऽनुदात्तत्वात् प्रातिपदिकस्वरः । रथे । 'रमु क्रीडायाम्' रमन्तेऽस्मिन्निति रथः । 'हनिकुषिनीरमिकाशिभ्यः क्थन्' (उ.सू.२,१५९) इति कथन् । 'एकाच उपदेशेऽनुदात्तात्' (पा.सू.७,२,१०) इति इट्प्रतिषेधः । 'अनुदात्तोपदेश' (पा.सू.६,४,३७) इत्यादिना मकारलोपः । नित्त्वादाद्युदात्तत्वम् । ईळितः । 'ईड स्तुतौ' । 'निष्ठा' (पा.सू.३,२,१०२) इति क्तः । इडागमः । तस्य 'आगमा अनुदात्ताः' (पा.म.३, १,७) इत्यनुदात्तः । प्रत्ययस्वरः । देवान् इति नकारस्य संहितायां 'दीर्घादटि समानपादे' (पा.सू.८,३,९) इति रुत्वम् । 'आतोऽटि नित्यम्' (पा.सू.८,३,३) इति आकारस्य अनुनासिकभावः । 'भोभगो' (पा.सू.८,३,१७) इत्यादिना रोर्यत्वम् । तस्य 'लोपः शाकल्यस्य' (पा.सू.८,३,१९) इति लोपः । तस्यासिद्धत्वात् 'आद्गुणः' न भवति । आ । निपातत्वा-

दाद्युदात्तः । असि । 'अस भुवि' । लटः सिप् । 'अदिप्रभृतिभ्यः शपः' (पा.सू.२,४,७२) इति शपो लुक् । 'तासस्त्योर्लोपः' (पा.सू.७,४,५०) इति सकारस्य लोपः । होता । ताच्छील्ये तृन् । सौ 'ऋदुशन' (पा.सू.७,१,९४) इत्यादिना अनङ् । ङित्त्वादन्तादेशः । 'अप्तृन्' (पा.सू.६,४,११) इत्यादिना उपधादीर्घः । हल्ङ्यादिलोपनलोपौ । नित्त्वादाद्युदात्तः । मनुर्हितः । मन्यते इति मनुः । 'मन ज्ञाने' । शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च' (उ.सू.१,१०) इति उप्रत्ययः । तत्र 'नित्' इत्यनुवृत्तेः नित्त्वादाद्युदात्तः । हितः । दधातेः 'निष्ठा' इति कर्मणि क्तः । 'दधातेर्हिः' (पा.सू.७,४,४२) इति हिरादेशः । मनुना हितः इति समासे तृतीयायाः स्थाने 'सुपां सुलुक्' (पा.सू.७,१,३९) इत्यादिना सु इति आदेशः । तस्य रुत्वम् । लुगभावश्छान्दसः । 'तृतीया कर्मणि' (पा.सू.६,२,४८) इति पूर्वपदप्रकृतिस्वरत्वम् ॥४॥

**सिद्धाञ्जनम्**– चतुर्थीमृचमाह– हे अग्ने, **ईळितः** इट्शब्दाभिधेयोऽग्निः आप्रीषु प्रतिपादितानामेकः ईळितशब्देनोक्त इत्याहुः। यद्यपि अस्य शब्दस्य सामान्यार्थः स्तुतोऽस्माभिरिति भवति, तथाऽपि अस्माभिः काङ्क्षितः, कर्तव्ये देवकार्येऽस्मिन् यजने सत्कारपूर्वकं नियोजित इति भवति । अत एव अध्येषित इति प्राग्वद् ग्राह्यम् । तथाभूतस्त्वं **सुखतमे** अत्यन्तसुखहेतौ **रथे** शीघ्रगतिके याने देवान् उपवेश्य, **आवह** आनय। सुखतमेन रथेन आवहनसाधनेनेति, तृतीयार्थे सप्तमी । तथा देवानां आनयनं अग्ने कार्यम् । अतः आह– त्वं **होता** आह्वाता असि आह्वानं तव धर्मः। किं च **मनुर्हितः** मनुना मन्त्रेण अस्माभिः हितः इदं निहितः स्थापितः। 'मन ज्ञाने' मन्यत इति मनुः छान्दसः सु इत्यादेशः तस्य रुत्वम् । मन्त्रा ज्ञात्रा यजमानेन हित इति विग्रहः । मन्त्रेण ब्रह्मपदवाच्येन हार्दवागविभवेन स्थापितोऽग्निर्यजननिर्वाहायेत्यपि बोध्यम् । अद्यापि मनुशब्दः तन्त्रशास्त्रेषु मन्त्रपर्यातया प्रसिद्धः । अत्र ईळितः साक्षादग्निरेवेति स्पष्टम् ॥ ४ ॥

## ऋक्संहिता पदपाठसहिता

**स्तृणीत बर्हिरानुषग्घृतपृष्ठं मनीषिणः । यत्रामृतस्य चक्षणम् ॥ ५ ॥**

स्तृणीत । बर्हिः । आनुषक् । घृतऽपृष्ठम् । मनीषिणः । यत्र । अमृतस्य । चक्षणम् ॥

**ऋग्भाष्यम्**

**आनुषक्सर्वतो देवस्थानं बर्हिःस्तृणीत च ।**
**शुद्धस्य विष्णोर्यत्स्थानं घृतपृष्ठं हि तन्मनः ।**
**यत्र स्याद्दर्शनं विष्णोर्नित्या मरणधर्मिणः ।। ५ ।।**

**ऋग्भाष्यटीका– स्तृणीत** ।। आनुषक् । हे **मनीषिणः** बुद्धिमन्तः ऋत्विजो **यत्र** स्थाने **अमृतस्य** देवतासमुदायस्य **चक्षणं** दर्शनं भवति । चक्षिङः ख्याञभावश्छांदसः । छन्दस्युभयथेति वा प्रकृत्यन्तरं वा । तत् **घृतपृष्ठं** घृतस्थानात्पश्चिमतो वर्तमानं देवस्थानं देवस्थाने **आनुषक्** सर्वतो बर्हिः **स्तृणीत** विस्तारयत । अध्यात्मं व्याचष्टे– **शुद्धस्येति** ।। घृतः शुद्धो विष्णुः पृष्ठे यस्योपरि तद्धृतपृष्ठमित्यर्थः । यत्र मनसि । अत्र बृहत्त्वाद्बर्हिर्वेदवाक्यम् । तत् स्तृणीतेति तेन मनः संयोजयत । अत्र बर्हिर्देवता ।। ५ ।।

**मन्त्रार्थमञ्जरी–** (पञ्चमी तु बर्हिर्देवताका) (हे) मनीषिणः, बुद्धिमन्त ऋत्विजः । यत्र, स्थाने । अमृतस्य, देवतासमुदायस्य । चक्षणम्, दर्शनं भवति, चक्षिङः ख्याञादेशाभावश्छान्दसः, 'छन्दस्युभयथा' इति ल्युटः सार्वधातुकत्वेन वा, 'चक्ष दर्शने' इति धात्वन्तरं वा । (तत्) तत्र । घृतपृष्ठम्, घृतस्थानात्पश्चिमतो वर्तमानं देवस्थानम्, देवस्थाने । आनुषक्, सर्वतः । बर्हिः । स्तृणीत, विस्तारयत । अध्यात्मं तु घृतपृष्ठम्, घृतः शुद्धो विष्णुः पृष्ठे उपरिभागे यस्य तद्धृतपृष्ठमित्यर्थः । (हे) मनीषिणः, देवाः । यत्र, मनसि । अमृतस्य, मृतिहीनस्य विष्णोः । चक्षणम्, दर्शनं भवति । (तत्) घृतपृष्ठम्, तत्र घृतपृष्ठे मनसि । आनुषक्, वर्ततः । बर्हिः, बृहत्त्वाद्बर्हिस्शब्दितं वेदवाक्यम् । स्तृणीत, तेन मनः संयोजयत इति ।। ५ ।।

**स्कन्द–** स्तृणीत इति भूते काले व्यत्ययेनायं लोट् । स्तृतवन्तः स्थ **बर्हिः** दर्भान् । **आनुषक्** आनुषगिति नामानुपूर्व्यस्य आनुपूर्व्येण । **घृतपृष्ठं** घृतं पृष्ठे यस्य स घृतपृष्टः । बर्हिषो ह्युपरि हविर्लक्षण घृतं साद्यते । अथवा घृतम्' (निघ.१,१२) इत्युदकनाम । तेन स्पृष्टं घृतपृष्ठं प्रोक्षणीभिः प्रोक्षितमित्यर्थः । हे **मनीषिणः** मेधाविनोऽध्वर्यवः । **यत्र** बर्हिषि **अमृतस्य** अमृतसदृशस्यात्यन्तमृष्टस्य हविषः चक्षणं दर्शनं सादितस्य सतः । यत्र सादितं हविर्दृश्यत इत्यर्थः । अग्निर्वा अमरणधर्मत्वादमृतः । तस्य यत्र दर्शनम् । सामीपिकं त्विदमधिकरणम् । समीपेऽग्निर्दृश्यत इत्यर्थः ।। ५ ।।

**वेङ्कटमाधव–** स्तृणीत बर्हिः अनुषक्तं उपरिस्थितघृतं प्राज्ञाः! यत्र अमृतं हविः दृश्यते बर्हिषि ।। ५ ।।

**मुद्गल–** हे **मनीषिणः!** बद्धिमन्तः ऋत्विजः! **बर्हिः** दर्भं **स्तृणीत** वेदेरुपरि आच्छादयत। अत्रापि बर्हिर्नामकोऽग्निः सूच्यते । कीदृशं बर्हिरास्तरणीयम् ? **आनुषक्** अनुक्रमेण सक्तं परस्परं सम्बद्धम् । **घृतपृष्ठं** घृतपूर्णानां स्रुचां बर्हिष्यासादितत्वात् घृतं पृष्ठे उपरिभागे यस्य बर्हिषस्तद् घृतपृष्ठम् । **यत्र** यस्मिन् बर्हिषि **अमृतस्य** अमृतसमानस्य घृतस्य **चक्षणं** दर्शनं भवति ।।

**सायण–** हे **मनीषिणः** बुद्धिमन्त ऋत्विजः! **बर्हिः** दर्भं **स्तृणीत** वेदेरुपरि आच्छादयत। अत्रापि बर्हिर्नामकोऽग्निः सूच्यते । कीदृशं बर्हिरास्तरणीयम् ? **आनुषक्** अनुक्रमेण सक्तं परस्परं सम्बद्धं **घृतपृष्टं** घृतपूर्णानां स्रुचां बर्हिषि आसादितत्वात् घृतं पृष्ठे उपरिभागे यस्य बर्हिषः तत् घृतपृष्टम् । **यत्र** यस्मिन् बर्हिषि **अमृतस्य** अमृतसमानस्य घृतस्य **चक्षणं** दर्शनं भवति । यद्वा । मरणरहितस्य देवस्य बर्हिर्नामकस्य अग्रेर्दर्शनं भवति तद्बर्हिः स्तृणीत इति पूर्वत्रान्वयः ।

स्तृणीत । 'स्तृञ् आच्छादने' । लोण्मध्यमपुरुषस्य बहुवचनम् । 'लोटो लङ्वत्' (पा.सू. ३,४,८५ । 'तस्थस्थमिपाम्' (पा.सू.३,४,१०१) इति थस्य तादेशः । 'क्त्यादिभ्यः श्रा' । 'ई हल्यघोः' (पा.सू.६,११३) इति ईत्वम् । 'ऋवर्णाच्चेति वक्तव्यम्' (पा.सू.८,४,१,१) इति णत्वम् । 'प्वादीनां ह्रस्वः' (पा.सू.७,३,८०) इति धातोर्ह्रस्वत्वम् । सति शिष्टस्वर-बलीयस्त्वमन्यत्र विकरणेभ्यः । अतः तिङ एव प्रत्ययस्वरेणोदात्तत्वम् । बर्हिः । 'बृंहेर्नलोपश्च' (उ.सू.२,२६६) इति इस्प्रत्ययनलोपौ । प्रत्ययस्वरः । आनुषक् । आ समन्तात् अनुषजति इति आनुषक् । 'षञ्ज सङ्गे' । 'धात्वादेः षः सः' । 'क्विप् च' (पा.सू.३,२,७६) इति क्विप् । 'अनिदिताम्' (पा.सू.६,४,२४) इति लोपः । आङ्न्वोरुपसर्गयोः प्राक्प्रयोगः । गतिसमासः । 'उपसर्गात्सुनोति' इत्यादिना षत्वम् । घृतपृष्ठम् । 'घृ क्षरणदीप्त्योः' । 'निष्ठा' (पा.सू.३,२,१०२) इति क्तः । प्रत्ययस्वरेणोदात्तः । घृतयुक्तं पृष्ठम् अस्येति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । मनीषिणः । आमन्त्रितनिघातः । अमृतस्य । न विद्यते मृतं मरणं अस्मिन्निति अमृतम् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं बाधित्वा 'नञ्सुभ्याम्' (पा.सू.६,२,१७२) इत्युत्तरपदान्तोदात्तत्वे प्राप्ते 'नञो जरमरमित्रमृताः' (पा.सू.६,२,११६) इत्युत्तरपदाद्युदात्तत्वम् । चक्षणम् । 'चक्षिङ् व्यक्तायां वाचि' । वागभिव्यक्तिवाची धातुः इह अभिव्यक्तिमात्रं लक्षयति ।

'ल्युट् च' (पा.सू.३,३,११५) इति भावे ल्युट् । योरनादेशः । तस्य आर्धधातुकत्वात् 'चक्षिङः ख्याञ्' (पा.सू.२,४,५४) इति ख्याञादेशे प्राप्ते 'असनयोश्च' (पा.सू.२,४,५४,१०) इति प्रतिषेधः ।। ५ ।।

**सिद्धाञ्जनम्–** पञ्चमीमृचमाह– हे **मनीषिणः** बुद्धिमन्तः सखायः, **बर्हिः** दर्भं, अन्तरे देवानामासनं बर्हिषा सङ्केतितं बोध्यम् । **स्तृणीत** आस्तीर्णं कुरुत, वेदेरुपरिभागं आच्छादयत, अन्तर्वेद्यामासनं सुखं सिद्धं कुरुत । अन्यत्रापि वेद्यां बर्हिः सुखासनं भवतु देवानामिति द्योतयितुं ऊर्णाकम्बलवन्मृद्वित्युक्तं 'ऊर्णम्रदाः' (५-५-४)। कीदृशं बर्हिः ? **आनुषक्** आ समन्तादनुक्रमेण अनुषजति, परस्परसम्बद्धं सुसङ्गतमित्यर्थः । **घृतपृष्ठं** घृतशब्दवाच्यदीप्तियुक्तं पृष्ठं उपरिभागोऽस्य बर्हिर्वाच्यस्यासनस्य । **यत्र** बर्हिषि अमृतस्य मरणरहितस्य नित्यस्य देवानां आगतौ तदासनरूपतयाऽप्यवस्थितस्याग्नेः, **चक्षणं** दर्शनं भवति । अमृतचक्षुःस्थानं भवति अन्तर्वेद्यां आसनमित्युक्तम् ।। ५ ।।

### ऋक्संहिता पदपाठसहिता

**वि श्रयन्तामृतावृधो द्वारो देवीरसश्चतः । अद्या नूनं च यष्टवे ।। ६ ।।**

वि । श्रयन्ताम् । ऋतऽवृधः । द्वारः । देवीः । असश्चतः । अद्य । नूनम् । च । यष्टवे ।।

### ऋग्भाष्यम्

**ऋतरूपेण हरिणा समृद्धाया ऋतावृधः।**
**द्वारो देव्यः श्रियो दास्यः श्रयंतामिह नो मखे ।**
**मानसे बाह्ययज्ञे वा ह्यसंगत्वादसश्चतः ।**
**अद्याहनि तथा नूनमद्यैव यजनार्थतः ।**
**द्वारभूतः स भगवानपि साक्षान्मुमुक्षतः ।**
**स्त्रीरूपश्च सः .......................।। ६ ।।**

**ऋग्भाष्यटीका– विश्रयन्ताम्** ।। ऋत । ऋतरूपेण यथार्थज्ञानरूपेण हरिणा वृधो वृद्धाः समृद्धा यास्ता **ऋतवृधः** । असङ्गत्वात् **असश्चतः** सश्चतिः सङ्गार्थः । ततः क्विप् । **द्वारोदेवीः** द्वारो देव्यः श्रियो दास्यः **अद्य** अस्मिन्नहनि तथा **नूनं** निश्चितम् । अद्यैवेति यावत् । **यष्टवे**

यष्टुम् । यजनार्थतः यजनं चासावर्थः प्रयोजनं च तस्मै । **विश्रयन्तां** नो मानसे मखे बाह्ययज्ञे वा वर्तताम् । भगवद्विषये योजयति– **द्वारभूत इति ।।** मुमुक्षतः साक्षात् द्वारभूत इत्यनेन मोक्षस्य मुख्यसाधनमित्युक्तं भवति । देवशब्दः प्रागेव व्याख्यातः । तस्माद्भगवानपि द्वारो देव्यः । कथं स्त्रीलिङ्गादिप्रयोगः स्त्रीरूपश्च सः । चशब्दाद्बहुरूपश्च । ततो बहुवचनं च युज्यते । ऋतवृध इति नित्यवृद्ध इति प्रागेव व्याख्यातम् ।। ६ ।।

**मन्त्रार्थमञ्जरी–** (षष्ठ्यामृचि द्वारोदेवीर्देवताः) ऋतवृधः, ऋतरूपेण यथार्थज्ञानरूपेण हरिणा वृधो वृद्धाः । असश्चतः, सङ्गहीनाः, सश्चतेः (धा.वैदिकनिघण्टौ २।१४) सङ्गार्थात्क्विप्, 'ह्रस्वस्य' इति तुक् । द्वारः देवीः, द्वारो देव्यः, श्रियो दास्यः । अद्य, अस्मिन्नहनि । नूनम्, निश्चितम्, अद्यैवेति यावत् । यष्टवे, यष्टुम्, यजनरूपप्रयोजनाय । च । वि । श्रयन्ताम्, नो मानसे यज्ञे बाह्ययज्ञे च वर्तन्ताम् । यद्वा– ऋतवृधः, ज्ञानरूपा वृद्धाश्चेत्यृतवृधः । द्वारः, मुमुक्षूणां साक्षाद्द्वारभूताः । सर्वतः सङ्गहीनत्वेन असश्चतः । देवीः, देव्यः, क्रीडादिगुणोपेता भगवतः स्त्रीरूपविशेषाः । अद्य नूनम्, अद्यैव । यष्टवे च । विश्रयन्ताम्, नो बाह्याभ्यन्तरयज्ञे वर्तन्तामित्यर्थः । अत्र 'ॐ प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॐ' (१।४।२४) इत्यत्रोक्तदिशा अव्यवधानेन सूतिहेतुत्वरूपस्त्रीत्वस्य भावेन स्त्रीलिङ्गत्वम्, 'ॐ गुहां प्रविष्टावात्मानौ' (१।२। ११) इत्यादावुक्तदिशा रूपबाहुल्येन बहुवचनम्, 'ॐ फलमत उपपत्तेः ॐ' (३।२।३८) इत्यत्रोक्तन्यायेन भगवत एव मुख्यतो मोक्षसाधनत्वं चोपपादनीयम् ।। ६ ।।

**स्कन्द– विश्रयन्तां** विवृता भवन्तु **ऋतावृधः** यज्ञस्य वर्धयित्र्यः **द्वारः** यज्ञगृहद्वारो वो ज्वाला वा अग्नेः । ता हि तस्य द्वारभूताः, **देवीः** दात्र्यः दीप्ता वा । **असश्चतः** सश्चतिः सङ्गार्थः । असज्यमानाः । **अद्य नूनं च** नूनंशब्दोऽत्र समुच्चयार्थचशब्दश्रुतेः अद्य इत्येतेन च सहचरार्थस्य समुच्चयार्थस्य योग्यत्वात् पुराशब्दार्थे । अद्य च पुरा च । इदानीं पूर्वस्मिंश्च काल इत्यर्थः । **यष्टवे** यष्टुं यागार्थमित्यर्थः ।। ६ ।।

**वेङ्कटमाधव–** यज्ञगृहद्वारः विवृता भवन्तु । वर्धयित्र्यः असक्ताः अद्य च श्वश्च यागाय । नूनम् इति अनेकार्थम् ।। ६ ।।

**मुद्गल– द्वारः** यज्ञशालाद्वाराणि द्वाराभिमानिन्योऽग्निविशेषमूर्तयः **विश्रयन्तां** कवाटोद्घाटनेन विव्रियन्ताम् । कीदृश्यः ? ऋतस्य यज्ञस्य वर्धयित्र्यः **देवीः** द्योतमानाः **असश्चतः** असश्चन्त्यः, उद्घाटनेन हेतुना प्रवेष्टृपुरुषसङ्गरहिताः । किं प्रयोजनमिति ? तदुच्यते– **अद्य** अस्मिन् दिने **नूनं** अवश्यं **यष्टवे** यष्टुम् । चकारात् दिनान्तरेष्वपीति ॥ ६ ॥

**सायण– द्वारः** यज्ञशालाद्वाराणि **विश्रयन्तां** कपाटोद्घाटनेन विव्रियन्ताम् । कीदृश्यः ? **ऋतावृधः** ऋतस्य सत्यस्य यज्ञस्य वा वर्धयित्र्यः **देवीः** द्योतमानाः **असश्चतः** असश्चन्त्यः उद्घाटनेन प्रवेष्टृपुरुषसङ्गरहिताः । यद्वा । **असश्चतः** प्रवेष्टृपुरुषरहितान् यज्ञगृहान् तत्पुरुषप्रवेशाय द्वाराभिमानिन्य एतत्संज्ञिका अग्निविशेषमूर्तयः **विश्रयन्तां** विशेषेण सेवन्ताम् । द्वारसेवया तत्र पुरुषप्रवेशेन वा किं प्रयोजनमिति तदुच्यते । **अद्य** अस्मिन् दिने **नूनं** अवश्यं **यष्टवे** यष्टुम् । चकारात् दिनान्तरेष्वपि इति द्रष्टव्यम् ।

ऋतावृधः । ऋतं वर्धयन्तीत्यर्थे वृधेः अन्तर्भावितण्यर्थात् 'क्विप् च' इति क्विप् । उपपदसमासः । 'अन्येषामपि दृश्यते' (पा.सू.६,३,१३७) इति पूर्वपदस्य दीर्घत्वम् । वृधिः धातुस्वरेणोदात्तः । समासे कृदुत्तरपदप्रकृतिस्वरत्वेन स एव शिष्यते । देवीः । 'वा छन्दसि' (पा.सू.३,४,८८) इति पूर्वसवर्णदीर्घत्वम् । देवशब्दात् पचाद्यजन्तात् 'पुंयोगादाख्यायाम्' (पा.सू.४,१,४८) इति ङीप् । प्रत्ययस्वरेणोदात्तः । विभक्त्या सह 'एकादेश उदात्तेनोदात्तः' (पा.सू.८,२,५) इत्युदात्तः । असश्चतः । 'ग्लुश्चु षस्ज गतौ' । जकारस्य व्यत्ययेन चकारः । लटः शत्रादेशः । द्वाराभावे न विद्यन्ते सश्चन्तो गच्छन्तो येषु प्राग्वंशादिषु तान् असश्चतः । अद्य । 'सद्यः परुत्' (पा.सू.५,३,२२) इत्यादिना द्यप्रत्ययान्तो निपातितः । 'तद्धितश्चासर्वविभक्तिः' (पा.सू.१,१,३८) इति अव्ययसंज्ञकत्वात् परस्या विभक्तेर्लुक् । प्रत्ययस्वरेणान्तोदात्तः । संहितायाम् 'अन्येषामपि दृश्यते' इति दीर्घत्वम् । नूनम् । 'एवमादीनामन्तः' (फि.सू.८२) इत्यन्तोदात्तत्वम् । यष्टवे । यजेः 'तुमर्थे सेसेन्' (पा.सू.३,४,९) इत्यादिना तवेन्-प्रत्ययः । वश्चादिना षत्वम् । नित्त्वादाद्युदात्तः ॥ २४ ॥

**सिद्धाञ्जनम्–** षष्ठीमृचमाह– यज्ञ ऊर्ध्वं गच्छतीति प्रसिद्धिर्वेदे। अन्यत्रापि आप्रीसूक्तेषु यज्ञमूर्ध्वं कुरुतेति प्रार्थना श्रूयते । तेन यजमानस्यैवोर्ध्वगतिः । ऊर्ध्वगमनाय द्वाराणि विवृतानि

भवेयुः । अयज्वनः पुरुषस्य तानि पिहितानि भवन्ति । ततो यजमानस्तेषां ऊर्ध्वगतिद्वाराणां उद्घाटनाय दैवीः शक्तीः प्रार्थयते । **देवीः** द्योतमानाः **द्वारः** यज्ञगतिद्वाराणीत्यर्थः **विश्रयन्तां** विवृता भवन्तु । कीदृश्यो द्वारः ? **ऋतवृधः** ऋतस्य सत्यस्य वर्धयित्र्यः, **असश्चतः** सश्चतिः सङ्गकर्मा असक्ताः कवाटबन्धने, सुखोद्घाटना इत्यर्थः । किमर्थम् ? **अद्य** इदानीं **नूनञ्च** अवश्यं **यष्टवे** यष्टुम् यज्ञायेत्यर्थः ।। ६ ।।

।। इति प्रथमाष्टके प्रथमाध्याये चतुर्विंशो वर्गः ।।

### ।। अथ पञ्चविंशो वर्गः ।।

### ऋक्संहिता पदपाठसहिता

**नक्तोषासा सुपेशसास्मिन् यज्ञ उप ह्वये । इदं नो बर्हिरासदे ।। ७ ।।**

नक्तोषसा । सुऽपेशसा । अस्मिन् । यज्ञे । उप । ह्वये ।। इदम् । नः । बर्हिः । आऽसदे ।।

### ऋग्भाष्यम्

**........नक्ता स्यान्नाक्तो यस्मात्स सर्वतः ।**
**उषाः प्रकाशरूपत्वात्सुभद्रेते उपह्वये ।**
**अस्मिन्बर्हिषि संस्थित्यै ......... ।। ७ ।।**

**ऋग्भाष्यटीका– नक्तोषासा** । नक्तेति रात्रिदेवता उषा इत्यपररात्रिकृज्ज्योतिर्देवतेति प्रसिद्धम् । शब्दद्वयं विष्णौ योजयति– **नक्तेति** ।। यस्मात्सविष्णुः सर्वेण पापादिना नाक्तो न सङ्गतस्तस्मात् **नक्ता** स्यात् । अंजतेः क्तः । नसमासः (नञ्समासः) । शकंध्वादित्वा-त्पररूपम् । स्त्रीरूपत्वात्स्त्रीलिङ्गत्वमित्युक्तमेव । वशकान्तावित्यस्मात्कसुन् प्रकाशरूपत्वादुषाः अहं सुपेशसौ सुरूपे सुभद्रे नक्ताच उषाश्च ते नक्तोषसौ **नः** अस्माकं अस्मिन् यज्ञे इदं **बर्हिः** अस्मिन् बर्हिषि **आसदे** आसदनाय सम्पदादित्वात्क्विप् । संस्थित्यै **उपह्वये** उपाह्वयामि ।। ७ ।।

**मन्त्रार्थमञ्जरी–** (सप्तम्यामृचि नक्ता चोषासा च देवते) सुपेशसा, सुपेशसौ, शोभनरूपयुक्ते । नक्तोषसा, नक्तोषसौ, रात्र्युषःकालाभिमानिदेवते (दुगदिव्यश्विभार्या च), पापाद्यसङ्गत्वप्रकाश-रूपत्वनिमित्ताभ्यां नक्तोषसूशब्दितभगवदीयस्त्रीरूपविशेषौ वा । नः, अस्माकम् । अस्मिन् यज्ञे ।

इदम् बर्हिः, अस्मिन्बर्हिषि । आसदे, आसदनाय, सम्पदादित्वाद्भावे क्विप्, संस्थित्यै । उप ह्वये, उपह्वयामि । 'अन्जू व्यक्तिमर्षणकान्तिगतिषु' इत्यतः क्तप्रत्यये 'अनिदितां हल उपधायाः क्ङिति' इति नलोपे नसमासे शकन्ध्वादित्वेन पररूपे (टापि) 'नक्ता' इति विष्ण्वर्थत्वपक्षे व्युत्पत्तिर्ज्ञेया । तथा– 'वश कान्तौ' इत्यतः कसुन्प्रत्यये 'ग्रहिज्या' इति सम्प्रसारणे पूर्वरूपे षत्वे च 'उषस्' इति रूपम्, स्त्रीत्वं प्राग्वत् द्वित्वं च ।। ७ ।।

**स्कन्द–** ''नक्ता'' (निघ १,७) इति रात्रिनाम । उषा आपररात्रिकं ज्योतिः । नक्ता चोषाश्च नक्तोषसा **सुपेशसा** 'पेशः' (निघ.३,७) इति रूपनाम । सुरूपे अस्मिन् यज्ञे उपह्वये । किमर्थम् ? **इदं नः बर्हिः** इदं बर्हिः इति षष्ठ्यर्थे द्वितीया । अस्य अस्माकं स्वभूतस्य च बर्हिषः **आसदे** आसदनाय । अत्र बर्हिष्युपवेष्टुमित्यर्थः ।। ७ ।।

**वेङ्कटमाधव–** अहोरात्रे सुरूपे अस्मिन् यज्ञे उपह्वये । तयोरासदनाय इदं अस्माकं बर्हिः स्तीर्णम् ।। ७ ।।

**मुद्गल–** नक्तशब्दः उषःशब्दश्च लौकिककालविशेषवाचिनौ । इह तु तत्कालाभिमानिवह्निमूर्तिद्वये प्रयुज्येते । नक्तोषासा नक्तोषोनामिके वह्निमूर्ती **अस्मिन्** प्रवर्तमाने **यज्ञे** यज्ञकर्मणि **उपह्वये** आह्वयामि । किमर्थम् ? **नः** अस्मदीयं इदं वेद्यामास्तीर्णं **बर्हिः** दर्भं **आसदे** आसत्तुं प्राप्तुम् । कीदृश्यौ ? सुपेशसा शोभनरूपयुक्तेः ।। ७ ।।

**सायण–** नक्तशब्द उषःशब्दश्च लोके कालविशेषवाचिनौ । इह तु तत्कालाभिमानिवह्निमूर्तिद्वये प्रयुज्येते । **नक्तोषासा** नक्तोषोनामिके वह्निमूर्ती **अस्मिन्** प्रवर्तमाने **यज्ञे** यज्ञकर्मणि **उपह्वये** आह्वयामि । किमर्थम् ? **नः** अस्मदीयं इदं वेद्यामास्तीर्णं **बर्हिः** दर्भं **आसदे** आसत्तुं प्राप्तुम् । कीदृश्यौ । **सुपेशसा** शोभनरूपयुक्ते ।

नक्तं च उषाश्च नक्तोषसा । द्वितीयाद्विवचनस्य 'सुपां सुलुक्' (पा.सू.७,१,३९) इति आकारः । मलोप उपधादीर्घश्छान्दसौ । 'देवताद्वन्द्वे च' (पा.सू.६,२,१४१) इति पूर्वोत्तरपदयोः युगपत् प्रकृतिस्वरत्वम् । सुपेशसा । शोभनं पेशो रूपं ययोस्ते । पूर्ववत् आकारः । पेशःशब्दो नब्विषयत्वादाद्युदात्तः । बहुव्रीहौ 'नञ्सुभ्याम्' (पा.सू.६,२,१७२) इत्युत्तरपदान्तोदात्तत्वस्य अपवादत्वेन 'आद्युदात्तं द्व्यच्छन्दसि' (पा.सू.६,२,११९) इत्युत्तरपदाद्युदात्तत्वम् ।

अस्मिन् । 'ऊडिदम्' (पा.सू.६,१,१७१) इत्यादिना विभक्तिरुदात्ता । आसदे । 'षद्लृ विशरणगत्यवसादनेषु' । 'धात्वादेः षः सः' । आङ्पूर्वात् अस्मात् सम्पदादिभ्यो भावे क्विप् (पा.सू.३,३,१०८,९) । प्रादिसमासः । कृदुत्तरपदप्रकृतिस्वरत्वम् ॥ ७ ॥

**सिद्धाञ्जनम्**– सप्तमीमृचमाह– नक्तशब्द उषश्शब्दश्च रात्रिं प्रभातं च अभिदधाते । रात्रिशब्देन अस्माकं साधारणी मानुषी प्रज्ञा, उषोपलक्षितेन अह्ना दैवी प्रज्ञा च सङ्केतिते। दिने प्रकाशमानं सर्वं रात्रिगर्भे वर्तते । दैवप्रज्ञायां प्रकाशमानं सर्वं मानुषप्रज्ञागर्भे वर्तते। पर्यायेण वर्तमाने उभे अपि प्रज्ञे यज्ञेऽस्मिन् आह्वयामीति मन्त्रार्थः ।

**नक्तोषसा** नक्तं च उषाश्च नक्तोषसा, आकारश्छान्दसः (द्वितीयाद्विवचनम्) **अस्मिन् यज्ञे उपह्वये** आह्वयामि । कीदृश्यौ ? **सुपेशसा** शोभनरूपयुक्ते विविच्य ग्राह्ये शुभप्रदे च । किमर्थम् ? **नः** अस्माकं अस्माभिः आस्तीर्णं सादितं **इदं बर्हिः आसदे** आसत्तुं प्राप्तुमित्यर्थः। आङ्-पूर्वकात् सीदतेः भावे क्विप्, प्रादिसमासः, आसत् तस्मै आसदे । 'विद्यां चाविद्यां च यस्तद्वेदोभयं सह' इत्याद्युपनिषद्वाक्यानां ईदृशी मन्त्रदृष्टिर्मूलमिति धीमद्भिरूह्यम् ॥ ७ ॥

### ऋक्संहिता पदपाठसहिता

**ता सुजिह्वा उपह्वये होतारा दैव्या कवी । यज्ञं नो यक्षतामिमम् ॥ ८ ॥**
ता । सुऽजिह्वौ । उप । ह्वये । होतारा । दैव्या । कवीइति । यज्ञम् । नः । यक्षताम् । इमम् ॥ ८ ॥

### ऋग्भाष्यम्

**........ ......... होतारौ देवगावपि ।**
**मथ्यमानोऽपरश्चैव वह्नी तद्वोऽथ वा हरिः ।**
**आत्मान्तरात्मरूपेण द्विरूपो वा व्यवस्थितः ।**
**देवेषु यजतां यज्ञमस्मदीयमिमं सदा ॥ ८ ॥**

**ऋग्भाष्यटीका– तासुजिह्वा** । अत्र दैव्यौ होतारौ नाम कावित्यत आह– **होताराविति** ॥ अपिपदेनोपह्वय इत्यनेनान्वयं सूचयति । मथ्यमानो गार्हपत्यः । अपरः आहवनीयः । तद्वो वह्निद्वयगतः द्विरूपो व्यवस्थितः । अध्यात्मं शोभना जिह्वा ययोस्तौ **सुजिह्वौ** कवी **दैव्यौ**

देवगौ दूतत्वेन देवसम्बन्धिनौ **होतारौ** वह्नी उपह्वये । आगत्य च **नः इमं** अस्मदीयं **यज्ञं यक्षतां** देवेषु सदा यजतां प्रयच्छताम् ।। ८ ।।

**मन्त्रार्थमञ्जरी–** (अष्टम्यां तु प्रचेतसौ दैव्यौ होतारौ देवते ।) सुजिह्वौ, शोभना जिह्वा ययोस्तौ सुजिह्वौ । कवी, सर्वज्ञौ । दैव्या, दैव्यौ, दूतत्वेन देवसम्बन्धिनौ । होतारा, होतारौ गार्हपत्याहवनीयौ, तद्गतविष्णुरूपविशेषौ च । उप ह्वये । आगत्य च– ता, तौ । नः, अस्मदीयम् । इमम् यज्ञम् । यक्षताम्, देवेषु सदा यजताम्, प्रयच्छताम्, यजतेः लेट्यडागमसिप्ष्त्वकत्वानि ।।

**स्कन्द–** तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽत्राध्याहर्तव्यः । यौ सर्वमनुष्यैर्नित्यमाहूयेते तौ **सुजिह्वौ** 'जिह्वा' (निघ १,११) इति वाङ्नाम । सुवाचौ शोभनजिह्वाख्यावयवौ वा उपह्वये होतारा **दैव्या** देवानां स्वभूतौ । कतमौ ? इमं चाग्निममुं च मध्यमम् । कीदृशौ । **कवी** मेधाविनौ । तौ चाहूतौ सन्तावागत्य **यज्ञं नः** यक्षतां होतृत्वेनावस्थाय यजतामिमम् ।। ८ ।।

**वेङ्कटमाधव–** अयञ्चाग्निरसौ च मध्यमः तौ शोभनवाचौ उपह्वये । दैव्यौ होतारौ कवी यज्ञं नः यजताम् इमम् ।। ८ ।।

**मुद्गल– ता** तौ याज्ञिकानां प्रसिद्धौ द्वावग्नी **उपह्वये** आह्वयामि । **नः** अस्मदीयं इमं यज्ञं यक्षतां, तावुभौ यजतां अनुतिष्ठताम् । कीदृशौ ? **सुजिह्वा** शोभनजिह्वोपेतौ प्रियवचनौ **होतारा** होमनिष्पादकौ **दैव्या** देवसम्बन्धिनौ । अत एवेमावग्नी दैव्यहोतृनामकौ **कवी** मेधाविनौ ।।

**सायण– तच्छब्दोऽत्र** सर्वनामत्वात् प्रसिद्धार्थवाची । **ता** तौ याज्ञिकानां प्रसिद्धौ द्वावग्नी **उपह्वये** आह्वयामि । **नः** अस्मदीयं **इमं यज्ञं यक्षतां** तौ उभौ यजतां अनुतिष्ठताम् । कीदृशौ । **सुजिह्वौ** शोभनजिह्वोपेतौ प्रियवचनौ शोभनज्वालौ वा इत्यर्थः । **होतारा** होमनिष्पादकौ **दैव्या** दैव्यौ देवसम्बन्धिनौ । अत एव इमौ अग्नी दैव्यहोतृनामकौ **कवी** मेधाविनौ ।

ता तौ । द्वितीयाद्विवचनस्य 'सुपां सुलुक्' इति आकारः । 'एकादेश उदात्तेनोदात्तः' इत्युदात्तः । सुजिह्वौ । शोभना जिह्वा ययोस्तौ । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । पूर्ववत् एकादेशस्वरः । संहितायाम् आवादेशः । वस्य 'लोपः शाकल्यस्य' (पा.सू.८,३,१९) इति लोपः । होतारा । जुहोतेस्तृन् । द्विवचने 'ऋतो ङि' (पा.सू.७,३,११०) इति गुणः । अप्तृन् इति उपधादीर्घः । पूर्ववत् आकारः । नित्त्वादाद्युदात्तः । दैव्या । देवानामिमौ । 'देवाद्यञञौ'

(पा.सू.४,१,८५,३) इति यञ् । 'यस्येति च' (पा.सू.६,४,१४८) इति अकारलोपः । 'ञ्नित्यादिर्नित्यम्' (पा.सू.६,१,१९७) इत्याद्युदात्तः । पूर्ववत् आकारः । यक्षतां यजताम् । लोटि शपि परतः 'सिब्बहुलं लेटि' (पा.सू.३,१,३४) इति बहुलग्रहणात् सिप् । कुत्वचत्र्वषत्वानि ।

**सिद्धाञ्जनम्**– अष्टमीमृचमाह– **ता** तौ । आकारः छान्दसः । **सुजिह्वौ** शोभनवाचौ, जिह्वया आह्वात्री वाग् लक्ष्यते । दैव्या दैव्यौ देवसम्बन्धिनौ **होतारा** होतारौ आह्वातारौ, अत एव अग्निमूर्तिविशेषौ **कवी** अतीन्द्रियदर्शिनौ **उपह्वये** आह्वयामि । **नः** अस्माकं **इमं यज्ञं** तौ **यक्षतां** यजताम् । लोटि प्रथमपुरुषद्विवचनं छान्दसम् ॥ ८ ॥

ऋक्संहिता पदपाठसहिता

**इळा सरस्वती मही तिस्रो देवीर्मयोभुवः । बर्हिःसीदन्त्वस्रिधः ॥ ९ ॥**

**इळा । सरस्वती । मही । तिस्रः । देवीः । मयःऽभुवः । बर्हिः । सीदन्तु । अस्रिधः ॥**

ऋग्भाष्यम्

**इळेड्यत्वाद्धरिः श्रीर्वा भूरूपा सैव चापरा ।**
**महीतु भारतीनाम वायव्या ब्रह्मणोऽपरा ।**
**तद्गतस्तादृशै रूपैः पृथक्स्थो वा हरिस्तथा ॥ ९ ॥**

**ऋग्भाष्यटीका– इळा** । सरस्वतीशब्दस्य प्राक् भगवद्विषयतया व्याख्यातत्वान्मही चेति महीशब्दस्यापि व्याख्यास्यमानत्वादिळाशब्दं व्याचष्टे– **इळेति** । ईड स्तुतौ कर्मण्यकारप्रत्ययः धातोर्ह्रस्वताच । देवतान्तरविषयतया चेळादिशब्दत्रयं व्याख्याति– **श्रीर्वेति** ॥ श्रीर्वा इळा ईड्यत्वादेव अपरा चेळा सरस्वतीभ्यामन्या महीच सा श्रीरेव तत्कथम् । भूरूपा । महीशब्देन भारतीच विवक्षितेत्याह– **महीत्विति** ॥ भारतीच महीनामेति तुशब्दश्चशब्दार्थः । इळाव्यावृत्त्यर्थो वा । भारतीशब्दस्य ब्रह्माण्यामपि प्रसिद्धत्वाद्विवेकार्थमाह– **वायव्येति** ॥ वायुभार्या । ब्रह्मणो भार्याऽपरा इळामहीभ्यामन्या सरस्वतीत्यर्थः । स्त्रीलिङ्गं बहुवचनं च हरौ घटयति– **तद्गत इति** ॥ लक्ष्म्यादिगतः । तादृशैस्त्र्याकारैः तथा स्त्रीलिङ्गबहुवचनविषय इत्यर्थः । इळासरस्वतीमहीत्येता **मयोभुवः** सुखाश्रयभूता **अस्रिधः** अविनाशाः **तिस्रः देवीः** देव्यो **बर्हिः** बर्हिषि **सीदन्तु** उपविशन्तु ॥ ९ ॥

**मन्त्रार्थमञ्जरी–** (नवम्या ऋचः सरस्वतीळाभारत्यस्तिस्रो देव्यो देवताः) इळा ईड्यत्वेन हेतुना श्रीरिळा, 'ईड स्तुतौ' इत्यतोऽकारप्रत्ययटाप्प्रत्ययौ, ईकारस्य ह्रस्वता । सरस्वती, ब्रह्माणी, व्युत्पादितमेतत्पदं पुरस्तात् 'पावका नः सरस्वती' इत्यादौ । मही, महत्त्वेन हेतुना 'मही' इत्युक्ता श्रियोऽपररूपात्मिका भूदेवी, वायुभार्या भारती वा । एतन्निष्ठा इळादिनामानो भगवदीयस्त्रीरूपविशेषाश्च । मयोभुवः, सुखाश्रयभूताः । अस्रिधः, अविनाशाः । तिस्रः । देवीः, देव्यः, देवशब्दार्थ उक्तः 'अग्निमीळे' इत्यत्र । बर्हिः, बर्हिषि । सीदन्तु, उपविशन्तु ।।९।।

**स्कन्द–** महीशब्दोऽत्र महत्त्वगुणयोगाद् भारत्यां वर्तते । **इळा सरस्वती मही** च भारती एता तिस्रः देवीः **मयोभुवः** 'मयः' (निघ.३,६) इति सुखनाम । भुविश्च सामर्थ्यादन्तर्णीत-ण्यर्थः । सुखस्य भावयित्र्यः । **बर्हिः** अस्मदीयं **सीदन्तु** । **अस्रिधः** सेधतिः क्षयार्थः, क्षयवर्जिताः ।

**वेङ्कटमाधव–** इला सरस्वती महती च भारती इति तिस्र देव्यः सुखस्य भावयित्र्यः बर्हिः सीदन्तु अक्षयाः ।। ९ ।।

**मुद्गल–** इला सरस्वती मही महत्त्वगुणयुक्ता भारती । अन्येषु आप्रासूक्तेषु सदृशेष्विला सरस्वती भारतीत्याम्नातत्वात् । इळादिशब्दाभिधेया वह्निमूर्तयः **तिस्रः देवीः** दीप्यमानाः **बर्हिः** वेद्यामास्तीर्णं **सीदन्तु** प्राप्नुवन्तु । कीदृश्यः? **मयोभुवः** सुखोत्पादिकाः **अस्रिधः** शोषणरहिताः ।।

**सायण–** अत्र महीशब्दो महत्त्वगुणयुक्तां भारतीमाचष्टे; अन्येषु आप्रीसूक्तेषु सदृशेषु इळा सरस्वती भारती इति आम्नातत्वात् । इळादिशब्दाभिधेया वह्निमूर्तयः **तिस्रः देवीः** दीप्यमानाः **बर्हिः** वेद्यामास्तीर्णे **सीदन्तु** प्राप्नुवन्तु । कीदृश्यः? **मयोभुवः** सुखोत्पादिकाः **अस्रिधः** शोषेण क्षयेण वा रहिताः ।

इळा । 'ईड स्तुतौ' । छान्दसं ह्रस्वत्वम् । क्विप् । धातुस्वरः । 'टापं चापि हलन्तानां यथा वाचा दिशा निशा' (कौ.२,४,८२) इति टाप् । सरस्वती । सरः असुनन्तो नित्त्वादाद्युदात्तः । तदस्यास्तीति मतुप् । अदुपधत्वात् वत्वम् । 'तसौ मत्वर्थे' (पा.सू.१,४, १९) इति भत्वेन पदत्वस्य बाधितत्वात् रुत्वाद्यभावः । 'उगितश्च' (पा.सू.६,३,४५) इति ङीप् । मतुब्ङीपौ पित्त्वादनुदात्तौ । मही । महतीशब्दे तकारलोपः छान्दसः । 'यस्येति च' (पा.सू.६,४,१४८) इति अकारलोपः । उदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वम् । तिस्रः ।

त्रिशब्दात् जसि 'त्रिचतुरोः स्त्रियां तिसृचतसृ' (पा.सू.७,२,९९) इति तिस्रादेशः । 'अचि र ऋतः' (पा.सू.७,२,१००) इति रेफादेशः । 'तिसृभ्यो जसः' (पा.सू.६,१,१६६) इति जस उदात्तत्वम् । देवीः । देवानां पत्न्यो देव्यः । 'पुंयोगादाख्यायाम्' (पा.सू.४,१,४८) इति ङीष् । 'यस्येति च' इति अकारलोपः । प्रत्ययस्वरेण ङीप उदात्तत्वम् । जसि 'दीर्घाज्जसि च' (पा.सू.६,१,१०५) इति निषिद्धं दीर्घत्वं 'वा छन्दसि' (पा.सू.६,१,१०६) इति पक्षेऽभ्यनुज्ञायते । मयोभुवः । 'मीञ् हिंसायाम्' । हिनस्ति दुःखमिति सुखं मयः । तद्भावयन्तीति मयोभुवः । अन्तर्भावितण्यर्थात् भुवः क्विप् । कृदुत्तरपदप्रकृतिस्वरत्वम् । बर्हिः । 'बृंहेर्नलोपश्च' (उ.सू.२,२६६) इति इसिप्रत्ययः । प्रत्ययस्वरः । सीदन्तु । 'षद्लृ विशरणादौ' । 'पाघ्रा' (पा.सू.७,३,७८) इत्यादिना सीदादेशः । अस्रिधः । स्रिधेः हिंसार्थस्य शोषणार्थस्य वा सम्पदादिभ्यो भावे क्विपि नञा बहुव्रीहिः । पूर्वपदप्रकृतिस्वरं बाधित्वा 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् ॥

**सिद्धाञ्जनम्–** नवमीमृचमाह– 'तिस्रो देवीः' इति अन्यत्रापि आप्रीसूक्तेषु श्रूयमाणत्वात् तिसृणामासां साहचर्यश्रवणाच्च तासामेका भारतीति प्रसिद्धेश्च अत्र 'मही' भारतीति न सन्देहः । **इळा** एतदाख्या सरस्वती एतनाम्नो **मही** महती **भारती** इति **तिस्रः देवीः** दिव्याः शक्तिमूर्तयः । **बर्हिः** सिद्धमासनमिति बोध्यम् । **सीदन्तु** प्राप्नुवन्तु। कीदृश्यः? **मयोभुवः** मयः सुखनाम, तस्य सुखस्य अन्तर्भावितण्यर्थात् 'भुवः' भावयित्र्यः । पुनः कीदृश्यः? **अस्रिधः** अहिंसिताः अबाधिताः, अथवा शोषणरहिताः, सिधेः शोषणार्थो हिंसार्थश्च भवतः । इळा ज्ञानदृष्टिर्देवी शक्तिः, इति सारतोऽवगन्तव्यम् ।

इळा सरस्वती भारती इति तिस्रो देव्यः सर्वत्र दाशतय्यां दशस्वपि आप्रीसूक्तेषु प्रथिताः संलक्ष्यन्ते । प्रत्येकं चेमाः क्वचित् प्रस्तूयन्ते । तत्रासां स्वरूपाणि विविच्य वक्तव्यानि भवन्ति । पुराणानि भारतीसरस्वत्योः अभेदमाहुः । इळः पुमान् चन्द्रवंशमूलभूतः मनोः पुत्रः स्त्रीत्वं प्राप्य इळाऽभवदिति च पुराणकथा । वेदे तु इमास्तिस्रः सहचर्यः यजमानस्य ऋषेः दृष्टि श्रुति-महत्त्वान्यनुगृह्णन्त्यः स्वर्निवासा इति बोध्यम् । तत्र 'मही'पदवाच्या भारती बृहज्ज्योति-स्सम्बन्धिनी दैवी शक्तिः सौरधाम्नः प्रस्थिता कवेर्द्रष्टुः प्रथमं बृहत्वमाहरति, बृहत्वानुरूपां प्रज्ञामयीं दृष्टिमनुगृह्णाति 'इळा' ।

सरस्वती तु श्रुतिवाहिनी कविं दिव्यावेशश्रवणशालिनं सत्यश्रुतं विधत्ते । 'सूनृता विरप्शी गोमती मही' इत्यत्र व्याख्यायां भारती अनुसन्धेया । 'चोदयित्री सूनृतानाम्' इत्यादौ सरस्वतीमधिकृत्य प्रोक्तं अवधातव्यम् । यद्यपि तिसृणां देवीनामपि 'सूनृता, चोदयित्री' इत्यादि विशेषणानि प्रयुक्तानि भवन्ति, तथाऽपि प्रत्येकं तासां वैशिष्ट्यं ग्राह्यमिति क्रमशः दृष्टि-श्रुति-बृहत्त्वानां अनुग्रहीत्र्यः दिव्याः ऋतज्योतिरुद्भवाः इळा-सरस्वती-भारत्यः विश्वप्रचोदनाधुरन्धरस्य ऋतज्योतिषः सूर्यस्येव शक्तयो भवन्ति । यो नः धियः प्रचोदयात् तस्यैव प्रेरकस्य सम्बन्धिनी भारती इति बृहत्यास्तस्या 'विश्वमूर्तिः' इति विशेषणं प्रतिपादयति। एतास्तिस्रोऽपि परमस्य सुखस्य जनयित्र्यः 'मयोभुवः' । अस्पष्टा अरूपा वा काश्चन दिव्याः शक्तय इति न ग्राह्यम्, परस्परसाहचर्यसम्पन्नान्यपि विविक्तानि शोभनान्यासां रूपाणीति कवयः पश्यन्ति 'सुपेशसः' । ऋषौ मानुषे स्वीयानि उक्तलक्षणानि वैभवानि अविच्छिन्नं अच्छिद्रं च रक्षन्तीमा देव्य इति मन्त्रवर्णाः स्तुवन्ति 'अच्छिन्नं पान्तु शरणं निषद्य' (२-३-८)। वाजसनेयिनोऽपि 'अच्छिन्नं तन्तुं पयसा सरस्वती इळा देवी भारती विश्वतूर्तिः' इत्यामनन्ति ।

पाठकानां निरीक्षणायार्थानुसन्धानाय ऋक्संहितायां यत्र आसां श्रवणं भवति, तानि स्थलानि मण्डलानुक्रमेण इह दर्शितानि भवन्ति । (१-१३-८, १-१४२-९, १-१८८-८, २-३-८, ३-४-८, ५-५-८, ७-२-८, ९-५-८, १०-०-८, १०-११०-८) ॥

## ऋक्संहिता पदपाठसहिता

**इह त्वष्टारमग्रियं विश्वरूपमुपह्वये । अस्माकमस्तु केवलः ॥ १० ॥**

इह । त्वष्टारम् । अग्रियम् । विश्वऽरूपम् । उप । ह्वये । अस्माकम् । अस्तु । केवलः ॥

## ऋग्भाष्यम्

**त्वष्टा तेजस्त्वतो विष्णुर्बलत्वाद्वा समीरितः ।**
**विश्वरूपकरत्वाच्च विश्वरूपोऽथ पूर्तितः ॥ १० ॥**

**ऋग्भाष्यटीका–** इह । त्वष्टृविश्वरूपशब्दौ भगवति योजयति– **त्वष्टेति** ॥ त्विषधातोर्दीप्तिवद्बलमपि वाच्यं भवतीत्याशयेन बलत्वाद्वेत्युक्तम् । यद्वा त्विषदीप्तावित्यत्रैव दीप्तिपदेन तेजसो बलस्य च ग्रहणम् । त्विषेर्देवतायामकारश्चोपधाया अनिट्त्वं चेति तृन् । विश्वरूपकरत्वादित्यनेन

विश्वानि रूपाणि यस्मादिति निर्वक्ति– **अथ पूर्तित इति** ।। विश्वं पूर्णं रूपमस्येति । अहं **अग्रियं** अग्रे भवं प्रधानं **विश्वरूपं त्वष्टारं इह** यज्ञे उपह्वये स त्वष्टा **अस्माकं केवलोऽस्तु** अस्माकमेव पालयिताऽस्तु ।। १० ।।

**मन्त्रार्थमञ्जरी–** (दशम्यामृचि त्वष्टा देवता) त्वष्टारम्, तेजस्विनम्, बलवन्तं वा, 'त्विष दीप्तौ' इत्यतस्तृन्प्रत्यय उपधाया अकारोऽनिट्त्वं च । अग्रियम्, अग्रे भवं प्रधानम्, अग्रशब्दाद्घ-प्रत्ययः । विश्वरूपम्, विश्वानि रूपाणि वस्तूनि यस्मादिति व्युत्पत्त्या विश्वरूपकर्तारम्, विश्वं पूर्णं रूपं यस्येति वा विश्वरूपम् । इह, यज्ञे । उपह्वये । (स त्वष्टा) अस्माकं केवलः अस्तु, अस्माकमेव पालयितास्त्वित्यर्थः । प्रसिद्धत्वष्टर्यग्रियत्वादि यथा योग्यं ध्येयम् ।। १० ।।

**स्कन्द–** त्वष्टा नाम देवानां तक्षा अग्निर्वा । 'त्विषेर्देवतायामकारश्चोपधाया अनिट्त्वश्च' (पावा.३,२,१३५) इति । **इह** यज्ञे **त्वष्टारं अग्रियं** अग्रशब्दः प्राधान्यवचनः । अस्मिन् भवमग्रियं प्रधानभूतमित्यर्थः । **विश्वरूपं** 'विश्वम्' (निघ.३,१) इति बहुनाम । बहुरूपम् । अतिशयवन्महाभाग्ययोगादस्ति देवतानां बहुरूपत्वम् । उपह्वये उपहूतश्च सन् अस्माकं एव केवलः अस्तु । कः? सामर्थ्यात् स्तुत्यो यष्टव्यश्च ।। १० ।।

**वेङ्कटमाधव–** इह त्वष्टारं मुख्यं येन विश्वानि रूपाणि विक्रियन्ते तं उपह्वये । सः अस्माकं अस्तु केवलः 'यावच्छो वै रेतसः सिक्तस्य त्वष्टा रूपाणि विकरोति तावच्छो वै तत् प्रजायते' (तै.१,५,९,१०२) इति ब्राह्मणम् ।। १० ।।

**मुद्गल– त्वष्टारं** त्वष्टृनामकमग्निं **इह** कर्मणि उपह्वये । कीदृशम् ? **अग्रियं** श्रेष्ठं **विश्वरूपं** बहुविधरूपोपेतम् । सः **अस्माकं केवलः** असाधारणः अस्तु ।। १० ।।

**सायण–**पत्नीसंयाजे त्वष्टुः पुरोनुवाक्या 'इह त्वष्टारमग्रियम्' इति । 'शं युवाकाय सम्प्रेषितः' इति खण्डे सूत्रितं– 'सं ते पयांसि समु यन्तु वाजा इह त्वष्टारमग्रियम्' (आश्व.श्रौ.१,१०) इति ।

**त्वष्टारं** त्वष्टृनामकमग्निं इह कर्मणि **उपह्वये** । कीदृशम् ? **अग्रियं** श्रेष्ठं **विश्वरूपं** बहुविधरूपोपेतम् । सः **अस्माकं केवलः** असाधारणः **अस्तु** इतरयजमानेभ्योऽप्यधिकमनुग्रहं करोत्वित्यर्थः ।

त्वष्टारम् । 'तक्षू त्वक्षू तनूकरणे' । तृन् । 'स्वरतिसूतिसूयतिधूञूदितो वा' (पा.सू. ७,२,४४) इति इडभावपक्षे 'स्कोः संयोगाद्योरन्ते च' (पा.सू.७,३,११०) इति गुणे 'अप्तृन्' (पा.सू.६,४,११) इत्यादिना उपधाया दीर्घः । तृनो नित्त्वादाद्युदात्तत्वम् । अग्रियम् । 'अग्रात्' (पा.सू.४,४,११६) इत्यनुवृत्तौ 'घच्छौ च' (पा.सू.४,४,११७) इति घच् । 'आयनेयी' (पा.सू.७,१,२) इत्यादिना घकारस्य इयादेशः । 'यस्येति च' (पा.सू.६,४,१४८) इति लोपः । 'आयनादिषूपदेशिवद्वचनं स्वरसिद्ध्यर्थम्' (पा.सू.७,१,२,१) इति उपदेशिवद्भावात् प्रत्ययाद्युदात्तत्वात् घचश्चित्त्वादन्तोदात्तत्वम् । विश्वरूपम् । विश्वानि रूपाणि त्वष्टुत्पन्नत्वेन यस्य । 'त्वष्टा वै पशूनां मिथुनानां रूपकृत्' (तै.सं.६,१,८,५) इति श्रुतेः । विश्व-शब्दस्याद्युदात्तत्वात् पूर्वपदप्रकृतिस्वरत्वे प्राप्ते 'बहुव्रीहौ विश्वं संज्ञायाम्' (पा.सू.६,२,१०६) इति पूर्वपदान्तोदात्तत्वम् । अस्माकम् । 'असु क्षेपणे' । 'युष्यसिभ्यां मदिक्' (उ.सू.१,१३६) । प्रत्ययस्वरेणान्तोदात्तः । षष्ठीबहुवचनम् आम् । अत्र परमपि 'योऽचि' (पा.सू.७,२,८९) इति यत्वं बाधित्वा नित्यत्वात् प्रतिपदविधित्वाच्च आम आकमादेशे (पा.सू.७,१,३३) कृते 'अनादेशे' (पा.सू.७,२,८६) इति निषेधेन यत्वाभावात् 'शेषे लोपः' (पा.सू.७,२,९०) इति दकारलोपे अकारान्तत्वेन पश्चात् प्राप्तस्यापि सुटः (पा.सू.७,१,५२) साम इति निर्देशे स्थानिन्यन्तर्भावेन निवृत्तिः । एवमर्थ एव हि साम इति ससुट्कनिर्देशः । केवलः । वृषादेरा-कृतिगणत्वादाद्युदात्तः ।। १० ।।

**सिद्धाञ्जनम्–** दशमीमृचमाह– **इह** अत्र यजने **त्वष्टारं** एतन्नामकं सर्वेषां रूपाणां तक्षाणं देवं **उपह्वये** आह्वयामि । कीदृशम् ? **अग्रियं** श्रेष्ठं सर्वदेवात्मकस्य ईश्वरस्यैव त्वष्ट्रभूतत्वात् यजमाने नवनवदिव्यरूपाणां आविष्कारायेति बोध्यम् । **विश्वरूपं** विश्वानि सर्वाणि रूपाणि यस्य तम्, न केवलं स विश्वेषां रूपाणां साधु निष्पादकः स एव भवति विश्वरूपसामग्री। सः **अस्माकं केवलः** अनन्याराधनविषयभूतः **अस्तु** भवतु । अत्र त्वष्टा 'अस्माकमस्तु केवलः' इति मधुच्छन्दसा स्तुत इन्द्रः 'सुरूपकृत्नुः' इव लक्ष्यते । यद्यपि अग्नेरेव मूर्तिविशेष एष इति व्याख्यातारः प्राहुः, देवदेवस्यैकत्वेऽपि देवानां पृथगात्मकत्वाभ्युपगमात् द्युस्थानोऽयं ऐन्द्रो देवः, इन्द्रकार्यनिर्वाही, तदात्मकतयाऽवस्थितः सर्वेश्वर इति वक्तव्यम् ,विशेषतः केवलशब्दश्रवणात् ।।

## ऋक्संहिता पदपाठसहिता

**अव॑ सृजा वनस्पते॒ देव॑ दे॒वेभ्यो॑ ह॒विः । प्र॒दा॒तुर॑स्तु॒ चेत॑नम् ॥ ११ ॥**

अव॑ । सृ॒ज॒ । व॒न॒स्प॒ते॒ । देव॑ । दे॒वेभ्यः॑ । ह॒विः । प्र । दा॒तुः । अ॒स्तु॒ । चेत॑नम् ॥११॥

## ऋग्भाष्यम्

**वननीयपतित्वेन वनस्पतिरितीरितः ।**
**ज्ञानं तु चेतनम् .............. ॥ ११ ॥**

**ऋग्भाष्यटीका–** **अवसृज** ॥ वनस्पतिशब्दं हरौ योजयित्वा चेतनशब्दार्थमाह– **वननीयेति** ॥ वननीयाः सम्भजनीयाः वनतेः कर्मण्यसुन् । वनसां पतिः वनस्पतिः । यद्वा वनोऽकारः । पारस्करप्रभृतित्वात्समासे सुट् । तेन वनानां पतिर्वनस्पतिः । हे **वनस्पते देव** त्वं **देवेभ्यो हविरवसृज** देहि । तेन च **प्रदातुः** यजमानस्य **चेतनं** ज्ञानमस्तु । चिती संज्ञाने भावे ल्युट् ॥

**मन्त्रार्थमञ्जरी–** (एकादशी वनस्पतिदेवताका) (हे) वनस्पते, वनसां वनानां वा भजनीयानां पते, वनतेः कर्मण्यसुन्, अकारप्रत्ययो वा, तत्पक्षे पारस्करादित्वेन समासे सुडागमः । देव (त्वम्) देवेभ्यः हविः । अव सृज, देहि । तेन च प्रदातुः, यजमानस्य । चेतनम्, ज्ञानम् । अस्तु । 'चिती संज्ञाने' भावे ल्युट् ॥ ११ ॥

**स्कन्द–** वनान्युदकानि वृक्षा वा तेषां पाता वनस्पतिः अग्निः । कथमुदकानां वृक्षाणां वा पाताऽग्निः । सति सामर्थ्ये तेषामदाहकत्वात् हविर्नयनजन्यवृष्टिद्वारेण वा । यूपो वा वनस्पतिविकारत्वात् (तु.या. ८,१७) । **अवसृज** अवपूर्वः सृजतिर्दाने । हे **वनस्पते! देव! देवेभ्यः हविः** इदमस्मदीयम् । **प्रदातुः अस्तु** प्रकर्षेणास्तु दातुर्यजमानस्य चेतनं ज्ञानम् ॥

**वेङ्कटमाधव–** अवसृज वनस्पते! प्रयच्छ देव! देवेभ्यः हविः प्रकर्षेण अस्तु दातुः याजमानस्य प्रज्ञापनं देवेषु त्वया निवेदितस्य ॥ ११ ॥

**मुद्गल–** हे **वनस्पते!** एतन्नामकाग्ने । देव! हविर्भुग्भ्यः **देवेभ्यः** अस्मदीयं **हविः अवसृज** समर्पय इत्यर्थः । **प्रदातुः** यजमानस्य **चेतनं** परलोकविषयं विज्ञानं त्वत्प्रसादात् अस्तु ॥

**सायण–** हे **वनस्पते** एतन्नामकाग्ने देव हविर्भुग्भ्यः **देवेभ्यः** अस्मदीयं **हविः अव सृज** समर्पय इत्यर्थः । **प्रदातुः** यजमानस्य **चेतनं** परलोकविषयं विज्ञानं त्वत्प्रसादात् अस्तु ।

वनस्पते । आमन्त्रितनिघातः । देव । पादादित्वात् न निघातः । षाष्ठिकम् आमन्त्रिताद्युदात्तत्वम् । हविः । इसः प्रत्ययस्वरः । दातुः । ददातेः तृच् । 'चितः' इत्यन्तोदात्तः । ङसि 'ऋत उत्' (पा.सू.६,१,१११) इति उत्वम् एकादेशो रपरत्वं च । 'रात्सस्य' (पा.सू.८,२,२४) इति सलोपः । एकादेशस्वरेण उकार उदात्तः । चेतनम् । 'चिती संज्ञाने' । करणे ल्युट् । योरनादेशः लघूपधगुणः । 'लिति' (पा.सू.६,१,१९३) इति प्रत्ययात्पूर्वस्योदात्तत्वम् ।। ११ ।।

**सिद्धाञ्जनम्**– एकादशीमृचमाह– हे **वनस्पते** सोम, **देव!** त्वं देवोऽसि, तस्मात् **देवेभ्यः** इन्द्रादिभ्यः **हविः** अस्मदीयं रसवदर्पितं **अवसृज** समर्पय । **प्रदातुः** तथा देवेभ्यः स्वीयं सर्वानुभूतिसारात्मकं दैवतस्वीकरणक्षमं संस्कृतं हव्यं ददते यजमानाय, **चेतनं** अस्तु संज्ञानं भवतु । चिती संज्ञान इति धात्वर्थानुगमो बोध्यः। साक्षात्सम्पर्करूपं ज्ञानं संज्ञानं, दैवततदावासधामविषयकं ज्ञानं अस्माभिः सम्यक् स्पृष्टं लब्धश्च च भवत्विति भावः । सोमस्य ओषधीशत्वं रसमयत्वं, अत एव आनन्दमयत्वं च प्रसिद्धम् ।। ११ ।।

## ऋक्संहिता पदपाठसहिता

**स्वाहा॑ य॒ज्ञं कृ॑णोत॒नेन्द्रा॑य॒ यज्व॑नो गृ॒हे । तत्र॑ दे॒वाँ उप॑ह्वये ।। १२ ।।**
स्वाहा॑ । य॒ज्ञम् । कृ॒णो॒त॒न॒ । इन्द्रा॑य । यज्व॑नः । गृ॒हे । तत्र॑ । दे॒वान् । उप॑ । ह्व॒ये ।।

## ऋग्भाष्यम्

**............. स्वाहा स्वभागगतिमान्स्मृतः ।**
**अव्ययत्वादमोषश्च ................ ।। १२ ।।**

**ऋग्भाष्यटीका– स्वाहा** ।। स्वाहाशब्दं भगवति त्रेधा व्याचष्टे– **स्वाहेति** ।। स्वभागं प्रतिगतिमानित्यनेन स्वशब्दे कर्मण्युपपदे आङ्पूर्वादोहाग्गतावित्यस्मात्कर्तर्यकारः प्रत्ययः ततः स्त्रियां टाबित्युक्तं भवति । अव्ययत्वाच्च स्वाहेत्यनेन सुष्ठ्वासमन्तान्न हीयत इति व्युत्पादितं भवति । ओहाक्त्याग इत्यस्य कर्मणीदं रूपम् । अमोषश्च स्वाहेत्यनेन सुष्ठ्वासमंतान्न ह्रियत इति । हरतेः कर्मणि डः । **स्वाहा** देवी **यज्वनः** यजमानस्य गृहे वर्तमानं **यज्ञं इन्द्राय कृणोतन** करोतु । इन्द्रं प्रापयत्विति यावत् । उत्तमप्रयाजाख्ये यज्ञे स्वाहा यक्ष्यमाणा न

तत्रेन्द्रसम्बन्धोऽस्तीत्यस्मिन्मते **इन्द्राय** इन्द्रस्य सम्बन्धिनो यज्वनो गृहे यज्ञं कृणोतन प्रवर्तयतु इति योज्यम् । किञ्च तत्र यज्ञे देवानुपह्वये ।। १२ ।।

**मन्त्रार्थमञ्जरी–** (द्वादश्यामृचि तु स्वाहाकृतयो देवताः) स्वाहा, स्वं स्वीयं भागं प्रत्याजिहीते आगतिमानिति वा– सुष्ठ्वा समन्तान्नहीयत इति वा सुष्ठ्वा समन्तान्न ह्रियते केनापि नापह्रियत इति वा 'स्वाहा' इत्युक्तः स्त्रीरूपो हरिः । यज्वनः, यजमानस्य । गृहे (वर्तमानम्) यज्ञं इन्द्राय । कृणोतन, करोतु, इन्द्रं प्रापयत्विति यावत्, 'तप्तनप्तनथनाश्च' इति तस्य तनबादेशः । 'स्वाहाकारं यजति' इति वाक्योक्तोत्तमप्रयाजाख्ये यज्ञे स्वाहा यक्ष्यमाणा, न तत्रेन्द्रसम्बन्धोऽस्ति, इति मते इन्द्राय, इन्द्रस्य सम्बन्धिनः । यज्वनः गृहे (वर्तमानम्) यज्ञम् । कृणोतन, प्रवर्तयतु । इति योजना । किं च, तत्र, यज्ञे । देवान् उप ह्वये । 'स्वाहा' इत्यस्याद्येऽर्थे– स्वशब्दे कर्मण्युपपद आङ्पूर्वात् 'ओहाङ् गतौ' इत्यतः कर्तर्यकारप्रत्ययः, स्त्रियां टाप् । द्वितीये– 'सु, आङ्' इत्यतो उभयपूर्वात् 'ओहाक् त्यागे' कर्मण्यकारप्रत्यये टाप् । तृतीये च– स्वाङ्पूर्वात् 'हृञ् हरणे' इत्यतो डप्रत्यये टाप् । प्रसिद्धस्वाहायां यथायोगमवयवार्थोज्ञेयः ।। १२ ।।

**स्कन्द–** स्वाहाकारसम्बन्धादुत्तमप्रयाजदेवताः स्वाहाकृतय उच्यन्ते । याश्च यत्र यक्ष्यन्ते तास्तत्रोक्तप्रयाजस्य देवता । स्वाहाशब्दो होमप्रदाने वर्तते । सुहुतशब्दपर्यायो वा । **यज्ञं** इति सप्तम्यर्थे द्वितीया । यक्ष्यमाणाभ्यो देवताभ्यो हविःप्रदानं सुहुतं वा इति उत्तमप्रयाजाख्ये यज्ञे **कृणोतन** कुरुताध्वर्यवः! क ? **इन्द्राय यज्वनः गृहे** यक्ष्यमाणदेवतानां संस्कारार्थत्वादुत्तमस्य प्रयाजस्य, अनैन्द्रे च पशाविन्द्रस्यायक्ष्यमाणत्वात् इन्द्रायेत्येष तादर्थ्यचतुर्थ्यन्तपरो यज्वनो गृह इत्येतेन सम्बध्यते । न पूर्वेण । इन्द्रार्थं यष्टुः स्वभूते यज्ञगृहे । तत्र अहमपि यष्टव्यान् देवान् उपह्वये ।। १२ ।।

**वेङ्कटमाधव–** स्वाहा कृणुत हविः । इन्द्राय यजमानस्य गृहे तत्र अहं देवान् उपह्वये इन्द्रपुरोगमानिति ।। १२ ।।

**मुद्गल–** स्वाहाशब्दो हविःप्रदानवाची सन् एतन्नामकमग्निविशेषं लक्षयति । तदग्निसम्पादितं **यज्ञं इन्द्राय** इन्द्रतुष्ट्यर्थं **यज्वनः** यजमानस्य **गृहे** ऋत्विजः **कृणोतन** कुरुत । **तत्र** यज्ञे देवान् उपह्वये ।। १२ ।।

**सायण–** स्वाहाशब्दो हविष्प्रदानवाची सन् एतन्नामकमग्निविशेषं लक्षयति । तदग्निसम्पादितं **यज्ञं** इन्द्राय इन्द्रतुष्ट्यर्थं **यज्वनः** यजमानस्य **गृहे** ऋत्विजः **कृणोतन** कुरुत । तत्र यज्ञे देवान् उप ह्वये ।

कृणोतन । 'कृवि हिंसाकरणयोश्च' । इदित्त्वात् नुम् । लोण्मध्यमबहुवचनस्य 'तस्थस्थमिपाम्' (पा.सू.३,४,१०१) इति तादेशः । 'तप्तनप्तनथनाश्च' (पा.सू.७,१,४५) इति तनबादेशः । शपि प्राप्ते 'धिन्विकृण्व्योर च' (पा.सू.३,१,८०) इति उप्रत्ययः; तत्सन्नियोगेन वकारस्य च अकारः । तस्य 'अतो लोपः' (पा.सू.६,४,४८) इति लोपः । तस्य 'अचः परस्मिन्' (पा.सू.१,१,५७) इति स्थानिवद्भावात् ऋकारस्य लघूपधगुणो न भवति । तनपः पित्त्वेन अङित्त्वात् उकारस्य गुणः । इन्द्राय । 'ऋज्रेन्द्र' (उ.सू.२,१८६) इत्यादिना रन् । नित्त्वादाद्युदात्तः । यज्वनः । 'यज देवपूजासङ्गतिकरणदानेषु' । 'सुयजोर्ङ्वनिप्' (पा.सू.३,२,१०३) । ङसि भसंज्ञायां अल्लोपे प्राप्ते 'न संयोगाद्वमन्तात्' (पा.सू.६,४,१३७) इति निषेधः । वनिपः पित्त्वेन धातुस्वर एव शिष्यते । गृहे । 'ग्रह उपादाने' । 'गेहे कः' (पा.सू.३,१,१४४) इति कप्रत्ययः । 'ग्रहिज्या' (पा.सू.६,१,१६) इत्यादिना सम्प्रसारणम् । परपूर्वत्वम् । प्रत्ययस्वरः । तत्र । त्रल् । 'लिति' (पा.सू.६,१,१९३) इति प्रत्ययात्पूर्वस्योदात्तत्वम् । 'देवाँ उप' इत्यत्र संहितायां 'दीर्घादटि' (पा.सू.८,३,९) इति नकारस्य रुत्वम् । 'आतोऽटि नित्यम्' (पा.सू.८,३,३) इति आकारस्य अनुनासिकादेशः । 'भोभगो' (पा.सू.८,३,१७) इति यत्वम् । तस्य 'लोपः शाकल्यस्य' (पा.सू.८,३,१९) इति लोपः ॥ २५ ॥

**सिद्धाञ्जनम्–** द्वादशीमृचमाह– समानप्रवृत्तिकान् सखीनाह– हे यजमानाः, **इन्द्राय** इन्द्रार्थं **यज्ञं स्वाहा** सुहुतं **कृणोतन** कुरुत। हविःप्रदानवाची स्वाहाशब्दः देवतासन्तृप्तिकारिणः सुहुतस्य प्रतिपादको भवति । कुतः ? **यज्वनो गृहे** यजमानस्य निकेतने मनःप्राणशरीरात्मक इति ग्राह्यम् । **तत्र** पूर्वोक्ते गृहे **देवान्** यष्टव्यान् **उपह्वये** आह्वयामि ।

॥ इति प्रथमाष्टके प्रथमाध्याये पञ्चविंशो वर्गः ॥

## ।। अथ षड्विंशो वर्गः ।।

### (सूक्तम् १४)

### ऋक्संहिता पदपाठसहिता

१२ मेधातिथिः काण्वः । विश्वे देवाः (विश्वैर्देवैः सहितोऽग्निः) ३ इन्द्रवायुबृहस्पतिमित्राग्निपूष-भगादित्यमरुद्गणाः, १० विश्वदेवाग्नीन्द्रवायुमित्रधामानि, ११ अग्निः । गायत्री ।

**ऐभि॑र॒ग्ने दुवो॒ गिरो॒ विश्वे॑भिः॒ सोम॑पीतये । दे॒वेभि॑र्या॒हि यक्षि॑ च ।। १ ।।**

**आ । ए॒भिः॑ । अ॒ग्ने॒ । दुवः॑ । गिरः॑ । विश्वे॑भिः । सोम॑ऽपीतये । दे॒वेभिः॑ । या॒हि॒ । यक्षि॑ । च॒ ।। १ ।।**

### ऋग्भाष्यम्

### ................ कामदोहा दुवः स्मृताः ।। १,२ ।।

**ऋग्भाष्यटीका–** **ऐभिरग्ने** । द्वादशर्चमिदं वैश्वदेवसूक्तम् । दुव इति व्याख्याति– **कामेति** ।। दुहप्रपूरणे अस्माद्प्रत्ययो डिच्च । कामस्य योग्यतया सम्बन्धः । हे **अग्ने** दुहन्तीति **दुवः** कामदोहा अस्मदीयाः स्तुतिरूपा **गिरः** प्रति **सोमपीतये** च **एभिः** प्रसिद्धैः विश्वैर्देवैः सह **आयाहि** । आगत्य यक्षि च ।। १ ।।

**मन्त्रार्थमञ्जरी–** अथ 'ऐभि॑र॒ग्ने' इति चतुर्दशं द्वादशर्चं वर्गद्वयात्मकं गायत्रीछन्दस्कं वैश्वदेवं सूक्तम् । (हे) अग्ने । दुवः, सर्वकामदोग्धारः, 'दुहप्रपूरणे' इत्यतो डुप्रत्ययः । गिरः, अस्मदियाः स्तुतिरूपा गिरः प्रति । सोमपीतये । एभिः, प्रसिद्धैः । विश्वेभिः, विश्वैः । देवेभिः, देवैः सह । आ याहि । आगत्य च यक्षि च, यज च ।। १ ।।

**स्कन्द–** 'ऐभिरग्ने बहुदेवतम्' । ऐभिरित्येतद् बहुदेवतं सूक्तम् । आ इत्युपसर्गो याहि इत्याख्यातेन सम्बन्धयितव्यः । **एभिः विश्वेभिः देवेभिः** इति सहयोगलक्षणा तृतीया तानि समानाधिकरणानि । एतैः सर्वैर्देवैः सह **अग्ने! दुवः गिरः** परिचर्याः स्तुतीश्च प्रति **सोमपीतये** सोमपानार्थं आ याहि । **यक्षि च** यज चागतान् देवान् ।। १ ।।

**वेङ्कटमाधव–** आ याहि एभिः सर्वैः देवैः अस्माकं परिचर्याः स्तुतीश्च सोमपानाय । यज च तान् देवान् ।। १ ।।

**मुद्गल–** 'ऐभिरग्ने' इति द्वादशर्चं तृतीयं सूक्तम् । काण्वो मेधातिथिः ऋषिः । गायत्रं छन्दः । वैश्वदेवम् ।

**हे अग्ने! एभिः** अस्मिन् यज्ञे सम्भावितैः **विश्वेभिः देवेभिः** सर्वैर्देवैः सह **सोमपीतये** सोमपानोपेतयागार्थं **दुवः** अस्मदीयां परिचर्यां **गिरः** अस्मदीयाः स्तुतीश्च प्रति **आ याहि** आगच्छ । **यक्षि** आगत्य यज च ।। १ ।।

**सायण–**'ऐभिरग्ने' इत्यादिकस्य द्वादशर्चस्य तृतीयसूक्तस्य ऋषिच्छन्दसी पूर्ववत् । तच्च सूक्तं बहुदेवताकम् । अत एवानुक्रम्यते– 'ऐभिर्वैश्वदेवम्' इति विनियोगस्तु– व्यूढद्वादशाहस्य प्रथमे छन्दोमे तृतीयसवने वैश्वदेवशस्त्रे 'ऐभिरग्ने दुवो गिरः' इति सूक्तम् । तथा च सूत्रितम्– 'अथ छन्दोमाः समुद्रादूर्मिः' इत्युपक्रम्य 'ऐभिरग्ने दुवो गिर इति वैश्वदेवम्' (आश्व.श्रौ.८,९) इति ।।

हे **अग्ने एभिः** अस्मिन् यज्ञे सम्भावितैः **विश्वेभिः देवेभिः** सर्वैर्देवैः सह **सोमपीतये** सोमपानोपेतयागार्थं **दुवः** अस्मदीयां परिचर्यां **गिरः** अस्मदीयाः स्तुतीश्च प्रति **आ याहि** आगच्छ । **यक्षि च** आगत्य यज च ।

एभिः । पूर्वनिर्दिष्टानां देवानां इदमा परामर्शात् 'इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ' इति अश् अनुदात्तः । शित्त्वात् सर्वादेशः । 'नेदमदसोरकोः' (पा.सू.७,१,११) इति भिस ऐसादेशाभावः । विभक्तिरनुदात्तैव । न च 'ऊडिदम्' इत्यादिना विभक्तेरुदात्तत्वं तत्र 'अन्तोदात्तात्' (पा.सू.६,१,१६९) इत्यधिकारात् । दुवः । 'नब्विषयस्यानिसन्तस्य' (फि.सू.२६) इत्याद्युदात्तत्वम् । विश्वेभिः । विश्वशब्दो विशेः कनन्तः नित्त्वादाद्युदात्तः । 'बहुलं छन्दसि' (पा.सू.७,१,१०) इति भिस ऐस् न भवति । 'बहुवचने झल्येत्' (पा.सू.७,३,१०३) इति एत्वम् । सोमपीतये । सोमशब्दः 'अर्तिस्तुसु' (उ.सू.१,१३७) इत्यादिना मनन्तो नित्त्वादाद्युदात्तः । सोमस्य पीतिर्यस्मिन् यागे स सोमपीतिः । तस्मै । तादर्थ्ये चतुर्थी । देवेभिः । 'बहुलं छन्दसि' इति भिस ऐसादेशाभावः । 'बहुवचने झल्येत्' इति एत्वम् । यक्षि । यजेर्लोटः सिप् । 'बहुलं छन्दसि' (पा.सू.२,४,७३) इति शपो लुक् । व्रश्चादिना षत्वम् । 'षढोः कः सि' (पा.सू.८,२,४१) इति कत्वम् । सेर्हिरादेशश्छान्दसत्वात् न भवति । सिपः पित्त्वेनानुदात्तत्वात् धातुस्वर एव ।। १ ।।

**सिद्धाञ्जनम्–** अथ चतुर्थेऽनुवाके काण्वस्य मेधातिथेः तृतीयं द्वादशर्चं सूक्तं गायत्रम् । अग्न्यादिबहुदेवताकमिदं व्याख्याने स्पष्टं भवति ।

तत्र प्रथमामृचमाह– हे **अग्ने एभिः विश्वेभिः देवेभिः** सह, पूर्वनिर्दिष्टानां सर्वेषां देवानां परामर्शः 'एभिः' इत्यनेन बोध्यः । **आयाहि** आगच्छ, **यक्षि** यज च (यजतेर्लोटि, छान्दसः) किमर्थम् ? **सोमपीतये** सोमपानाय । **दुवः** अस्मदीयपरिश्रमरूपं कर्म प्रति **गिरः** स्तुतीश्च प्रति आयाहीति सम्बन्धयितव्यः। अस्मदीयस्तुतिषु परिश्रमेषु च यः सारांशो वर्तते तं रसभरितं सोमपदवाच्यं सम्मदं स्वीकर्तुं देवैः सहागत्य त्वमेव यजमानो भूत्वा यजेत्युक्तम् ।

### ऋक्संहिता पदपाठसहिता

**आत्वा कण्वा अहूषत गृणन्ति विप्र ते धियः । देवेभिरग्न आगहि ॥ २ ॥**
**आ । त्वा । कण्वाः । अहूषत । गृणन्ति । विप्र । ते । धियः । देवेभिः । अग्ने । आ । गहि ॥ २ ॥**

**ऋग्भाष्यटीका– आ त्वा** । हे **विप्र** मेधाविन्नग्ने **कण्वाः** वयमिति यावत् । **त्वामाहूषत** आहूतवन्तः । किञ्च **ते** तव **धियः** बुद्धीः **गृणंति** स्तुवन्ति अतिशयेन बुद्धिमानसीत्यादि । स त्वं देवैः सह **आगहि** आगच्छ ॥ २ ॥

**मन्त्रार्थमञ्जरी–** (हे) विप्र, मेधाविन्, 'विप्रासो वा धियायवः' इत्युक्तेः । अग्ने । कण्वाः, कण्वसम्बन्धिनो वयमिति यावत् । त्वा, त्वाम् । आ अहूषत, आहूतवन्तः, 'ह्वेञ् शब्दे' 'लुङ्' । किं च– ते, तव धियः, बुद्धीः । गृणन्ति, स्तुवन्ति । त्वाम् 'अतिशयितबुद्धिमानसि' इत्यादिरूपेण स्तुवन्तीत्यर्थः । (स त्वम्) देवेभिः, देवैः सह । आ गहि, आगच्छ, 'इषुगमियमां छः' इति गमेः छादेशाभावेऽनुनासिकलोपे च रूपम् । भाष्यकृदव्याकृतेयमृक् ॥ २ ॥

**स्कन्द– आ त्वा कण्वाः अहूषत** आह्वयन्ति त्वां कण्वाः । 'कण्वः' (निघ ३,१५) इति मेधाविनाम । मेधाविनः ऋत्विजः । अथवा कण्वा इति मेधातिथिरात्मानं प्रति सम्बन्धेनाह । एकस्मिन्नेव चात्मनीदं बहुवचनं पुत्रपौत्रापेक्षया वा । मत्प्रभृतयः कण्वपुत्रा इत्यर्थः । गृणन्ति च हे **विप्र!** मेधाविन्! **ते** तव **धियः** कर्माणि प्रज्ञां वा । एतज्ज्ञात्वा **देवेभिः** देवैः सह अग्ने । **आ गहि** आगच्छ ॥ २ ॥

**वेङ्कटमाधव–** आहूतवन्तः त्वां कण्वाः उच्चारयन्ति च मेधाविन्! तव कर्माणि । देवैः अग्ने! आगच्छ ॥ २ ॥

**मुद्गल–** हे **विप्र!** मेधाविन्! अग्ने! **कण्वाः** मेधाविनः ऋत्विजः **त्वा** त्वां यज्ञनिष्पादकं **आ अहूषत** आह्वयन्ति । तथा ते **धियः** स्वकीयानि कर्माणि **गृणन्ति** कथयन्ति । अतो हे अग्ने! **देवेभिः** देवैस्सह **आ गहि** आगच्छ ॥ २ ॥

**सायण–** हे **विप्र!** मेधाविन् **अग्ने कण्वाः** मेधाविन ऋत्विजः **त्वा** यज्ञनिष्पादकं त्वां **आ अहूषत** आह्वयन्ति । तथा ते **धियः** त्वदीयानि कर्माणि **गृणन्ति** कथयन्ति । ततो हे अग्ने **देवेभिः** देवैः सह **आगहि** आगच्छ । 'विप्रः' इत्यादिषु चतुर्विंशतिसङ्ख्याकेषु मेधाविनामसु 'कण्वः ऋभुः' (नि.३,१५,७) इति पठितम् ।

त्वा । 'त्वामौ द्वितीयायाः' (पा.सू.८,१,२३) इति त्वादेशः सर्वानुदात्तः । कण्वाः । कणशब्दार्थः । 'अशिप्रुषिलटिकणिखटि' (उ.सू.१४९) इत्यादिना कन् । नित्त्वादाद्युदात्तः । अहूषत । 'ह्वेञ् स्पर्धायां शब्दे च' । 'छन्दसि लुङ्लङ्लिटः' इति वर्तमाने लुङ् । ञित्त्वादात्मनेपदं झः । 'आत्मनेपदेष्वनतः' (पा.सू.७,१,५) इति अदादेशः । च्लेः सिच् । 'एकाचः' (पा.सू.७,२,१०) इति इट्प्रतिषेधः । 'बहुलं छन्दसि' इति सम्प्रसारणं परपूर्वत्वम् । 'हलः' (पा.सू.६,४,२) इति दीर्घत्वम् । 'आदेशप्रत्यययोः' (पा.सू.८,३,५९) इति षत्वम् । छान्दसत्वात् ऊकारस्य न गुणः । अडागमः । गृणन्ति । 'गॄ शब्दे' । लट् । झि । 'झोऽन्तः' । 'क्र्यादिभ्यः श्ना' । 'प्वादीनां ह्रस्वः' (पा.सू.७,३,८०) इति धातोर्ह्रस्वत्वम् । 'श्नाभ्यस्तयोरातः' (पा.सू.६,४,११२) इति आकारलोपः । 'ऋवर्णाच्चेति वक्तव्यम्' (का.८,४,१,१) इति णत्वम् । तिङः स्वर एव शिष्यते । विप्र । आमन्त्रितनिघातः । ते । 'अनुदात्तम्' इत्यनुवृत्तौ 'तेमयावेकवचनस्य' (पा.सू.८,१,२२) इति षष्ठ्याः ते इति आदेशः । देवेभिः । छान्दस ऐसभावः । गहि । 'गम्लृ सृप्लृ गतौ' । लोटः सिप् । 'सेर्ह्यपिच्च' । 'कर्तरि शप्' । तस्य 'बहुलं छन्दसि' इति लुक् । 'अनुदात्तोपदेश' (पा.सू.६,४,३७) इत्यादिना मकारलोपः । तस्य 'असिद्धवदत्रा भात्' (पा.सू.६,४,२२) इति असिद्धत्वात् 'अतो हेः' (पा.सू. ६,४,१०५) इति हेर्लुक् न भवति ॥ २ ॥

**सिद्धाञ्जनम्–** द्वितीयामृचमाह– आ अहूषतेति क्रियया सम्बन्धयितव्यः । हे **अग्ने त्वा** त्वां **कण्वाः** मेधाविनः (वयं कण्ववंशजा वा) **अहूषत** आह्वयन्ति । ह्वेञ् धातोर्लुङ्-छान्दसः, लडर्थे। हे **विप्र** विपश्चित् , किञ्च, **ते** तव **धियः** धारणात्मिकाः प्रज्ञावृत्तीः **गृणन्ति** स्तुवन्ति । **देवेभिः** देवैः सह **आगहि** आगच्छ । न साधारणाः किं तु विशिष्टाः प्राज्ञाः आह्वानसमर्थास्त्वा-माह्वयन्ति, तदागच्छ देवैः सह ।। २ ।।

## ऋक्संहिता पदपाठसहिता

**इन्द्रवायू बृहस्पतिं मित्राग्निं पूषणं भर्गम् । आदित्यान् मारुतं गणम् ।। ३ ।।**

इन्द्रवायू इति । बृहस्पतिम् । मित्रा । अग्निम् । पूषणम् । भगम् । आदित्यान् । मारुतम् । गणम् ।। ३ ।।

## ऋग्भाष्यम्

**बृहन्पतिर्बृहत्या वा वाच एव बृहस्पतिः ।**
**मित्रेति मित्रावरुणौ पूषानाम स पोषणात् ।**
**पूर्णत्वाद्वा भगः प्रोक्तः पूर्णैश्वर्यादिकत्वतः ।**
**आदिस्थत्वात्स आदित्य आददानः प्रयाति वा ।**
**बहुरूपत्वतश्चैव मानोक्तत्वात्तु मारुतः ।। ३ ।।**

**ऋग्भाष्यटीका– इन्द्रवायू** ।। प्रागव्याख्याततत्वाद्बृहस्पत्यादिशब्दान् भगवति व्याख्याति– **बृहन्निति** ।। बृहन्पतिरित्येकं व्याख्यानम् । बृहत्याः पतिर्वेति द्वितीयम् । बृहत्या इत्यनुवादेन वाच इति व्याख्यानम् । तथा च श्रुतिः एष उ एव बृहस्पतिर्वाग्घि बृहती तस्या एष पतिस्तेनेति । एवशब्दो विष्णुरेवेति सम्बध्यते । तथाचोक्तं तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्चेति । एकस्मिन् मित्रे मित्रेति द्विवचनं कथमित्यत आह– **मित्रेति** ।। साहचर्यात् द्वयोरेकं नाम दस्रेति यथा । पुषपुष्टावित्यस्मात्कनुप्रत्यय उपधादीर्घत्वं च । धातोश्च ण्यर्थान्त-र्भावानन्तर्भावाभ्यां पोषणात्पूर्णत्वाद्वा पूषेति व्याख्यानद्वयम् । भगः प्रोक्त इत्यैश्वर्यस्य समग्रस्येत्यादिवचनात् । अव्ययात्त्यबित्यत्र त्यबिति योगविभागेनादिस्थत्वादादित्यः । आददानः पृथिवीरसं गृह्णानः । आङ्पूर्वाद्दाञ इतङ्प्रत्ययः । यातेश्चाकारः । आदिश्चासौ यश्चेत्यादित्यः । तथा च श्रुतिः एते हीदं सर्वमाददाना यन्तीति । बहुरूपत्वतश्चशब्दात् द्विरूपत्वतश्चादित्या-

नित्यादि युक्तम् । मा मानं वेदः तेन रुतः शब्दितो मारुत इत्यर्थः । रुशब्दे मरुच्छब्दे तु पूर्वपदह्रस्वतोत्तरपदाकारलोपश्च वक्तव्यः । इन्द्रवायू इत्यादीनामाहूषतेति पूर्वेण सम्बन्धः ।।३।।

**मन्त्रार्थमञ्जरी–** इन्द्रवायू, भगवति कृतव्युत्पादनाविमौ शब्दौ 'वायवा याहि' 'इन्द्रवायू इमे' इत्यत्र । बृहँश्चासौ पतिश्चेति वा, बृहत्या वाचः पतिरिति वा, तं बृहस्पतिम्, 'तद्बृहतोः करपत्योश्चौरदेवतयोः सुट् तलोपश्च' इति तलोपसुडागमौ, तथा च कण्वश्रुतिः 'एष उ एव बृहस्पतिर्वाग्वै बृहती तस्या एष पतिस्तस्मादु बृहस्पतिः' (३।३।२०) मित्रा, मित्रौ, मित्र-साहचर्याद्वरुणोऽपि मित्रपदेन गृह्यते, 'दस्रा' इत्येकनाम्ना यथा द्वयोरुक्तिस्तद्वत्, 'मित्रं हुवे' इत्यत्र मित्रावरुणशब्दावपि निरुक्तौ । अग्निम् । पोषयति पूर्णत्वाद्वा पूषणम्, 'पुष पुष्टौ' इत्यतो ण्यर्थान्तर्भावानन्तर्भावाभ्यां क(नि)न्प्रत्यय उपधादीर्घत्वम् । भगम्, समग्रैश्वर्यादिरूपम् । आदिस्थत्वात्पृथिवीरसमाददाना यान्तीति हेतोर्वा आदित्यान्, रूपबहुत्वाद्बहुवचनम्, आद्येऽर्थे– 'अव्ययात्त्यप्' इत्यत्र योगविभागादादिपदात्त्यप्, द्वितीये– आङ्पूर्वात् 'दाण् दाने' इत्यत इतड्प्रत्यये टिलोपे 'आदित्' इति भवति, 'या प्रापणे' इत्यतोऽकारप्रत्यय आकारलोपे 'यः' इति रूपम्, 'आदिच्चासौ यश्चेत्यादित्यः' इति विग्रहः, (भत्वाज्जश्त्वाभावः) तथा च श्रुतिः 'एते हीदं सर्वमाददाना यन्ति' (बृ.उ. ५।९।५) इति । माभिर्वेदप्रमाणै रुतं प्रतिपादितमिति मारुतम्, 'रु शब्दे' इत्यतः क्तप्रत्ययः । गणम्, समूहम् । (आ अहूषत) इत्यनुवृत्त्यान्वयः ।।

**स्कन्द–** द्वितीयानिर्देशादत्र सोमपानार्थमाह्वयामि स्तौमि चेति वाक्यशेषः । इन्द्रवायू सोमपानार्थयाह्वयामि स्तौमि वा । **बृहस्पतिं मित्रा** एकवचनस्यायमाकारः । द्विवचननिर्देशाद्वा अन्यतरवचनेनापि मित्रशब्देन साहचर्यादिदं मित्रावरुणयोर्द्वयोरप्यभिधानं मित्रावरुणौ । अग्निं पूषणं भगं आदित्यान् मारुतं च गणं अथवा तृतीयार्थेऽत्र द्वितीया । पूर्वयर्चैकवाक्यता । देवैभिरग्ने! आगहि इन्द्रवाय्वाद्यैरिति ।। ३ ।।

**वेङ्कटमाधव–** एतान् देवान् अग्ने! आवह । अपि वा कण्वा एतानप्याहूषतेति । मित्रा इति मित्रावरुणयोर्ग्रहणं अपि वा मित्रस्यैवेति ।। ३ ।।

**मुद्गल–** इन्द्रादिदेवान् **मारुतं** मरुतां देवानां सम्बन्धि तं गणश्च हे अग्ने यक्षीति पदद्वय-मनुवर्तते ।। ३ ।।

**सायण–** इन्द्रादिदेवान् **मारुतं** मरुतां वायूनां सम्बन्धिनं गणं च हे अग्ने यक्षि इति पदद्वयमनुवर्तते ।

इन्द्रश्च वायुश्च इन्द्रवायू । 'देवताद्वन्द्वे च' (पा.सू.६,३,२६) इति प्राप्तस्य आनङः 'उभयत्र वायोःप्रतिषेधो वक्तव्यः' (पा.सू.६,३,२६,१) इति प्रतिषेधः । 'देवताद्वन्द्वे च' (पा.सू. ६,२,१४१) इति प्राप्तस्योभयपदप्रकृतिस्वरस्य 'नोत्तरपदेऽनुदात्तादौ' (पा.सू.६,२,१४१) इति निषेधः । समासान्तोदात्तत्वमेव । बृहस्पतिम् । 'तद्बृहतोः करपत्योश्चोरदेवतयोरभिधेययोः सुट् तलोपो वक्तव्यः' (पा.म.६,१,१५७) इति तलोपः सुडागमश्च । बृहच्छब्दमाद्युदात्तं केचित् वर्णयन्तीति वामनः । 'पा रक्षणे' । पातीति पतिः । 'पातेर्डतिः' (उ.सू.४,४९७) । प्रत्ययस्वरेणाद्युदात्तः । समासे 'उभे वनस्पत्यादिषु युगपत्' (पा.सू.६,२,१४०) इति उभयपदप्रकृतिस्वरत्वम् । मित्रा । द्वितीयायाः 'सुपां सुलुक्' (पा.सू.७,१,३९) इत्यादिना विभक्तेः आजादेशः । आदित्यान् । अदितेरपत्यानि आदित्याः । 'दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः' (पा.सू.४,१,८५) । प्रत्ययस्वरः । मारुतम् । मरुतां विकारः । 'अनुदात्तादेश्च' (पा.सू.४,३,१४०) इति अञ् । ञित्त्वादाद्युदात्तः ।। ३ ।।

**सिद्धाञ्जनम्–** तृतीयामृचमाह– अत्र द्वितीयानिर्देशात् तान् सर्वान् आह्वयामि सोमपीतये यैः सह अग्नेः आगमनं प्रार्थितवानहमिति बोध्यम् । अथ देवानां नाम्ना निर्देशः । **इन्द्रवायू** इन्द्रं च वायुं च **बृहस्पतिं** (पारस्करप्रभृतीनि च संज्ञायामिति सूत्रस्य वार्तिकानुसारेण बृहतः तलोपः सुडागमश्च)। **मित्रा** मित्रावरुणौ,द्विवचनश्रवणं साहचर्याद्वरुणग्रहणार्थम् । अग्निं पूषणं भगं आदित्यान् अदितिसम्भवान् **मारुतं गणं** मरुद्गणं इमान् आह्वयामीति शेषः ।। ३ ।।

### ऋक्संहिता पदपाठसहिता

**प्र वो॑ भ्रियन्त॒ इन्द॑वो मत्स॒रा मा॑दयि॒ष्णवः॑ । द्र॒प्सा मध्व॑श्चमू॒षदः॑ ।। ४ ।।**

प्र । वः॒ । भ्रि॒य॒न्ते॒ । इन्द॑वः । म॒त्स॒राः । मा॒द॒यि॒ष्णवः॑ । द्र॒प्साः । मध्वः॑ । च॒मू॒ऽसदः॑ ।।

### ऋग्भाष्यम्

**मत्सरा मदकारित्वात्ताच्छील्यादुत्तरं पदम् ।**
**द्रप्सास्ते द्रवणाच्चैव चमसस्थाश्चमूषदः ।**
**शिरश्च चमसं प्रोक्तमिष्टदानात्तथेन्दवः ।। ४ ।।**

**ऋग्भाष्यटीका– प्रवः** । मत्सरादिसोमविशेषणानि व्याख्याति– **मत्सरा इति** ।। मत् मदं सरन्ति सारयन्ति गमयन्तीति **मत्सरा** इत्यर्थः । तर्हि मादयिष्णव इति पुनरुक्तिरित्यत आह– **ताच्छील्यादिति** ।। मदकारित्वशीलत्वमधिकं वक्तुं मादयिष्णव इत्युत्तरं पदमुक्तम् । णेः छन्दसीति स्मरणात् । द्रवणात् द्रप्सा इत्यनेन द्रुगतावित्यस्येदं रूपमिति दर्शितम् । एवशब्देन द्रप्सा रसवन्त इति व्याख्यानमपाकरोति । चमूशब्दश्चमसस्य वाचकः तत्र सीदन्तीति **चमूषदः** इत्यर्थः । हे देवाः मत्सरा मादयिष्णवो द्रप्सा **मध्वः** मधवः स्वादवश्चमूषद इदं वः सोमा वोऽर्थे **प्रभ्रियन्ते** सम्पाद्यन्ते तान्पिबतेत्याशयः । मत्सरादिशब्दानामध्यात्मं मनोवृत्तिषु सुघटत्वाच्चमस-स्थानत्वं घटयति– **शिरश्चेति** ।। इदं तच्छिर इति हि श्रुतिः । मनश्च शिरसि तिष्ठति । ता एताः शीर्षन्निति श्रुतेः । इन्दुशब्दं सोमेषु मनोवृत्तिषु च व्याख्याति– **इष्टेति** ।। इकारः कामवाची इं कामं काम्यं ददतीतीन्दवः । अध्यात्मं प्रभ्रियंत इत्यस्य समाधीयन्त इत्यर्थः ।। ४ ।।

**मन्त्रार्थमञ्जरी–** (हे देवाः) मत्सराः, मदकारिणः, मत् मदं सरन्ति, अन्तर्णीतणिच्, सारयन्ति गमयन्तीति व्युत्पत्तेर्मत्पूर्वात् 'सृ गतौ' इत्यतोऽकारप्रत्ययः । मादयिष्णवः, मदकरणशीलाः, ण्यन्तात् 'मदी हर्षे' इत्यतः 'णेश्छन्दसि' इति शीलार्थ इष्णुच्प्रत्ययः, मदकारित्वशीलत्वमधिकं वक्तुमिदं पदम्, अतो न (मत्सराः इति) पूर्वपदेन पुनरुक्तिरिति ज्ञेयम् । द्रप्साः, द्रवणरूपाः, 'द्रु गतौ' इत्यतः प्सप्रत्यय उकारस्याकारः । मध्वः, मधवः, यणादेशः, स्वादवः । चमूषदः, चम्वां चमसे सीदन्तीति तथा चमसस्थाः । इंदवः, सोमाः । वः, युष्मदर्थे । प्रभ्रियन्ते, सम्पाद्यन्ते, 'तान्पिबत' इत्याशयः । अध्यात्मं तु (हे तत्त्वदेवाः) मत्सराः, मदकारिणः । मादयिष्णवः, मदकरण शीलाः । द्रप्साः, चञ्चलाः । मध्वः, स्वादवः । चमूषदः, शिरोलक्षणचमसस्थिताः, 'ता एताः शीर्षञ्छ्रियः श्रिताश्चक्षुः श्रोत्रं मनो वाक् प्राणः' (ऐ.उ. २।१।४) इति श्रुतेर्मनसः शिरःस्थानकत्वात्, इदं तच्छिर एष ह्यर्वाग्बिलश्चमसः' (बृ.उ.४।२।३) इति श्रुत्या चमूशब्दितचमसस्य शिरोवाचित्वं ज्ञेयम् । इंदवः, इकारस्य कामवाचित्वादिं काममिष्टं ददतीतीन्दवो मनोवृत्तयः, इदं च निर्वचनं सोमेऽपि समम् । वः, युष्मदर्थे । प्र भ्रियन्ते, समाधीयन्ते इत्यर्थः, 'ताः पिबत' इति तत्पानाभिप्रायश्च 'वायवा याहि' इत्यत्रोक्तः ।। ४ ।।

**स्कन्द–** वः इति तादर्थ्ये चतुर्थी । प्रकृतानां चेन्द्रवाय्वादीनां प्रतिनिर्देशः । युष्माकमर्थाय **प्रभ्रियन्ते** प्रेत्येष समित्येतस्य स्थाने । सम्भ्रियन्ते । उपकल्प्यन्त इत्यर्थः । अथवा प्रशब्दः

स्वार्थ एव । भ्रियन्त इति हरतेर्भत्वं 'हृग्रहोर्भश्छन्दसि हस्य' (पावा ८,२,३२) इति । प्रभ्रियन्ते आह्वनीयं प्रति प्राप्यन्त इत्यर्थः । के ? **इन्दवः** । कीदृशाः ? **मत्सराः** मन्दतेस्तृप्तिकर्मण एतद्रूपम् । तृप्तिकराः । **मादयिष्णवः** मदी हर्षग्लेपनयोः हर्षयितारः । **द्रप्साः** रसोऽत्र द्रप्स उच्यते । रसरूपाः । अन्तर्णीतमत्वर्थो वा सामर्थ्याद् द्रप्सशब्दः । रसवन्त इत्यर्थः । अथवा यद् द्रवं नातिकठिनं तद् द्रव्य उच्यते । नात्यल्पाः बहला इत्यर्थः । **मध्वः** मधुस्वादा मृष्टाः । **चमूषदः** चर्म चमूरुच्यते तत्सादिनः ॥ ४ ॥

**वेङ्कटमाधव–** हविर्धानाद् युष्मभ्यं प्र भ्रियन्ते इन्द्रादिभ्यः इन्दवः इन्दुरिन्धतेर्दीप्तिकर्मणः (तु.या.१०,४१) इत्युक्तम् । **मत्सराः** सोमा भवन्ति 'मन्दतेस्तृप्तिकर्मणः' (या.२,५) । तेषां विशेषणं मादयिष्णव इति । द्रप्साः मधुनः चमससादिन इत्यौपयिकमिति ॥ ४ ॥

**मुद्गल–** हे इन्द्रादिदेवाः **वः** युष्मदर्थं **इन्दवः** सोमाः **प्र भ्रियन्ते** प्रकर्षेण संपाद्यन्ते । कीदृशाः ? **मत्सराः** तृप्तिकराः । **मादयिष्णवः** हर्षहेतवः । **द्रप्साः** बिन्दुरूपाः । **मध्वः** मधुराः । **चमूषदः** चमूषु चमसादिपात्रेषु अवस्थिताः ॥ ४ ॥

**सायण–** हे इन्द्रादिदेवाः **वः** युष्मदर्थं **इन्दवः** सोमाः **प्र भ्रियन्ते** प्रकर्षेण सम्पाद्यन्ते । कीदृशाः ? **मत्सराः** तृप्तिकराः । 'मत्सरः सोमो मन्दतेस्तृप्तिकर्मणः' (निरु.२,५) इति यास्कः । **मादयिष्णवः** हर्षहेतवः **द्रप्साः** बिन्दुरूपाः **मध्वः** मधुराः **चमूषदः** चमूषु चमसादिपात्रेष्वव-स्थिताः ॥

प्र । 'व्यवहिताश्च' (पा.सू.१,४,८२) इति व्यवहितप्रयोगः । भ्रियन्ते । भृञो यकि 'रिङ्शयग्लिङ्क्षु' (पा.सू.७,४,२८) इति रिङादेशः । हृञो वा । 'हृग्रहोर्भश्छन्दसि' (पा.सू. ८,२,३२,१) इति हकारस्य भकारः । इन्दवः । 'उन्दी क्लेदने' । उन्दन्ति पात्राणीति । 'नित्' इत्यनुवृत्तौ 'उन्देरिच्चादेः' (उ.सू.१,१२) इति उप्रत्ययः आदेः इकारश्च । नित्त्वादाद्युदात्तः । मत्सराः । 'मद तृप्तियोगे' । 'चित्' इत्यनुवृत्तौ 'कृधूमदिभ्यः कित्' (उ.सू.३,३५६) इति सरप्रत्ययः । 'तितुत्रतथसिसुसरकसेषु च' (पा.सू.७,२,९) इति इट्प्रतिषेधः । चित्त्वा-दन्तोदात्तः । मादयिष्णवः । 'मदी हर्षग्लेपनयोः' । मदेर्ण्यन्तात् 'णेश्छन्दसि' (पा.सू.३,२, १३७) इति इष्णुच् । 'णेरनिटि' (पा.सू.६,४,५१) इति णिलोपे प्राप्ते 'अयामन्ताल्वाय्ये-

त्विष्णुषु' (पा.सू.६,४,५५) इति अयादेशः । चित्त्वादन्तोदात्तः । मध्वः । मधुशब्द आद्युदात्त उक्तः । मधुशब्दस्य व्यत्ययेन पुंलिङ्गत्वम् । 'संज्ञापूर्वको विधिरनित्यः' इति 'जसि च' (पा.सू. ७,३,१०९) इति गुणो न भवति । चमूषदः । 'चमु छमु जमु झमु अदने' । चम्यते भक्ष्यते येषु चमसेषु ते चम्वः । 'कृपिचमि' (उ.सू.१,८१) इत्यादिना ऊः । तत्र सीदन्तीति चमूषदः । 'सत्सूद्विष' (पा.सू.३,२,६१) इत्यादिना क्विप् । सुषामादेः आकृतिगणत्वात् षत्वम् । कृदुत्तरपदप्रकृतिस्वरत्वम् ।। ४ ।।

**सिद्धाञ्जनम्**– चतुर्थीमृचमाह– **वः** युष्माकमर्थाय तादर्थ्ये चतुर्थी, प्रकृतानामिन्द्रादीनामर्थाय प्रभ्रियन्ते प्रकर्षेण भृताः भवन्ति इत्यर्थः। के? **इन्दवः** क्लेदनशीलाः सोमाः। कीदृशाः ? **मत्सराः** तृप्तिकराः मन्दतेः तृप्तिकर्मणः सरपत्ययः, कृसर-घूसरवत् । **मादयिष्णवः** हर्षयितारः। पुनः के ते? **द्रप्साः** रसबिन्दवः । **मध्वः** मधुस्वादाः मधुरा इत्यर्थः । मध्व इति लिङ्गव्यत्ययः जसि गुणाभावश्च । **चमूषदः** शरीरात्मकपात्रे सीदन्ति गच्छन्ति । चमू-चमसादिशब्दोपलक्षित-यजमानशरीरात्मकपात्रगताः सोमा इति भावः । देवेभ्यः समर्पणाय मनःप्राणशरीरात्मके पात्रे कणशः कणशः द्रप्साः सम्पाद्य भूयांसो भूत्वा सम्भृताः (प्रभ्रियन्त) सुखार्द्रा 'इन्दवः' तृप्तिकारिणः हर्षहेतवः सुताः सिद्धा भवन्तीत्यर्थः । दुधातोर्निष्पन्नः द्रप्सशब्दः, ईरणचननादौ वर्तमानः ध्वजपर्यायो भवति क्वचित् , यथा 'ऊर्ध्वं भानुं सविता देवो अश्रेद्द्रप्सम्' (४-१३-२)। प्रायशः अत्यन्तमल्पांशद्योतक-बिन्दु-स्फुलिङ्गज्वालैकदेशाद्यर्थे प्रयुक्तो लक्ष्यते । अत्र द्रप्सशब्दः द्रवणशीलो द्रुतोत्पतनो वा बिन्दुरित्यर्थे गृहीतः । अत एव कणशः सम्भृता सोमा इत्युक्तम् । चमू चमसादिवाच्यं पात्रं अन्तर्यजने शरीरमिति पुरस्ताद् आर्भवसूक्तव्याख्यानावसरे प्रपञ्चयिष्यामः ।।

## ऋक्संहिता पदपाठसहिता

**ईळते त्वामवस्यवः कण्वासो वृक्तबर्हिषः । हविष्मन्तो अरंकृतः ।। ५ ।।**

ईळते । त्वाम् । अवस्यवः । कण्वासः । वृक्तऽबर्हिषः । हविष्मन्तः । अरम्ऽकृतः । ५ ।।

## ऋग्भाष्यम्

**अवस्युर्यजमानः स्यादवनार्थप्रवृत्तितः ।**
**आत्मस्थं वा बहुवचो बहवो मुनयोऽत्र वा ।**

**उत्तराणां वचस्त्वेन स्वयं वदति चेश्वरः ।**
**अरङ्कृतोतिऽकर्तारस्त्वलङ्कर्तार एव वा ।। ५ ।।**

**ऋग्भाष्यटीका–** ईळते त्वाम् । अत्रावस्युपदं व्याख्याति– **अवस्युरिति ।।** प्रवृत्तिरत्रेच्छा । अवः अवनमात्मन इच्छतीत्यवस्युरित्यर्थः । क्याच्छन्दसीति स्मरणात् । ननु मेधातिथावेकस्मिन् यजमाने कथं बहुवचनमित्यत आह– **आत्मस्थमिति ।।** अस्मदो द्वयोश्चेति वचनादिति भावः । बहवो मुनयोऽत्र वा । तेनापि बहुवचनं युक्तम् । वाशब्दावितरेतरसमुच्चये । तेच बहवः । **कण्वासः** कण्वप्रभृतय एव विवक्षिताः । नन्वस्य वाक्यस्य विष्ण्वादयोऽप्यृषयो भवन्ति तत्कथं कण्वा वयमित्याद्युपपद्यत इत्यत आह– **उत्तराणामिति ।।** उच्छब्दात्तर-बयं नत्वखण्डं प्रातिपदिकम् । तेन सर्वनामसंज्ञाभावादुत्तराणामिति युक्तम् । उत्तराणामूर्ध्वतराणां मेधातिथ्यादीना-मित्यर्थः । चशब्दाद् ब्रह्मादयश्च । तस्यां तस्यामवस्थाया-मित्युक्तस्योदाहरणप्रदर्शनार्थमिद-मुक्तमित्यदोषः । अरंकृत इति व्याख्याति– **अरंकृत इति ।।** अतिकर्तारोऽतिशयेन कर्मणां कर्तारः । अलङ्कर्तारो देवादीनां भूषयितार इति वा **अरंकृतः** । लस्य रेफादेशः । हे देव हविष्मन्तोऽवस्यवो वृक्तबर्हिषोऽरंकृतः कण्वासो वयमिति यावत् । त्वामीळते स्तुवन्ति ।।५।।

**मन्त्रार्थमञ्जरी–** (हे देव) हविष्मन्तः । अवस्यवः, अवोऽवनमात्मन इच्छन्तीत्यवस्यवः, 'क्याच्छन्दसि' इत्युप्रत्ययः । वृक्तबर्हिषः, विस्तृतबर्हिषः । अरंकृतः, अरमलम्, कृतः कर्तारः, अतिशयेन कर्मणां कर्तारः, भूषयितार इति वा, लकारस्य रेफादेशः । कण्वासः, कण्वाः, वयमिति यावत्, 'अस्मदो द्वयोश्च' इत्येकस्मिन्नपि मेधातिथौ बहुवचनम्, कण्वप्रभृतीनां बहूनामृषित्वा-त्कण्वप्रभृतय इति वार्थः । त्वाम् । ईळते, स्तुवन्ति, 'ईड स्तुतौ' डस्य ळश्छन्दसि ।।५।।

**स्कन्द– ईळते** स्तुवन्ति **त्वां** अग्निम् । **अवस्यवः** अवनमात्मनः तर्पणं वा सोमेन अग्नेस्तत्कामाः । **कण्वासः** मेधाविनः ऋत्विजः कण्वपुत्रा वा मत्प्रभृतयः **वृक्तबर्हिषः** स्तीर्णबर्हिषः **हविष्मन्तः** उपकल्पितहविष्काः **अरङ्कृतः** पर्याप्तकारिणः ।। ५ ।।

**वेङ्कटमाधव–** स्तुवन्ति त्वाम् अग्ने! पालनमिच्छन्त कण्वाः स्तीर्णबर्हिष हविष्मन्तः पर्याप्तकारिणः ।। ५ ।।

**मुद्गल–** हे अग्ने! **त्वां ईळते** ऋत्विजः स्तुवन्ति । कीदृशाः ? **अवस्यवः** अवनं रक्षणं

तद्धेतून् देवानिच्छन्तः । **कण्वासः** मेधाविन **वृक्तबर्हिषः** आस्तरणार्थं छिन्नदर्भाः **हविष्मन्तः** हविर्युक्ता **अरङ्कृतः** अलङ्कर्तारः ।। ५ ।।

**सायण–**हे अग्ने **त्वां ईळते** ऋत्विजः स्तुवन्ति । कीदृशाः ? **अवस्यवः** अवनं रक्षणं तद्धेतून् देवानिच्छन्तः । **कण्वासः** मेधाविनः **वृक्तबर्हिषः** आस्तरणार्थं छिन्नदर्भाः **हविष्मन्तः** हविर्युक्ताः **अरंकृतः** अलङ्कर्तारः ।

ईळते । 'ईड स्तुतौ' । अनुदात्तेत्त्वात् लटो झः । 'अदिप्रभृति शपः' इति शपो लुक् । झस्य अदादेशः । टेः एत्वम् । 'तास्यनुदात्तेत्' (पा.सू.६,१,१८३) इत्यादिना लसार्वधातुकस्यानुदात्तत्वात् धातुस्वर एव शिष्यते । अवस्यवः । अवन्तीत्यवा देवाः । तानतिशयेनेच्छन्ति । 'सुप आत्मनः क्यच्' । 'क्यचि च' (पा.सू.७,४,३३) इति ईत्वं न भवति । 'न च्छन्दस्यपुत्रस्य' (पा.सू.७,४,३५) इति निषेधात् । 'सर्वप्रातिपदिकेभ्यो लालसायां सुग्वक्तव्यः' (पा.म.७,१,५१,२) इति सुक् । 'क्याच्छन्दसि' (पा.सू.३,२,१७०) इति उप्रत्ययः । अतो लोपः । प्रत्ययस्वरेणान्तोदात्तत्वम् । कण्वासः । कण शब्दार्थः । कणन्ति ध्वनन्ति स्तोत्रादिपाठेनेति कण्वा ऋत्विजः । 'अशिप्रुषि' (उ.सू.१,१४९) इत्यादिना क्वन् । नित्त्वादाद्युदात्तः । 'आज्जसेरसुक्' (पा.सू.७,१,५०) इति असुक् । वृक्तबर्हिषः । वृक्तम् उक्तम् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । हविष्मन्तः । हविरेषामस्तीति हविष्मन्तः । 'तसौ मत्वर्थे' (पा.सू.१,४,१९) इति भत्वेन अपदत्वात् न स्त्वम् । अरङ्कृतः । अलङ्कुर्वन्तीत्यरङ्कृतः । 'क्विप् च' इति क्विप् । ह्रस्वस्य तुक् । 'कपिलकादीनां संज्ञाच्छन्दसोर्वा लो रत्वमापद्यते' (पा.म.८,२,१८) इति लकारस्य रेफादेशः ।। ५ए ।।

**सिद्धाञ्जनम्–** पञ्चमीमृचमाह– हे अग्ने **त्वां ईळते** अध्येषन्ते । के ? **अवस्यवः** वर्धनकामाः **कण्वासः** मेधाविनः, वयममी कण्वा इति वा । कीदृशाः? **वृक्तबर्हिषः** स्तीर्णासनाः, देवेभ्य इति शेषः । **हविष्मन्तः** देवार्थं उपकल्पितहव्याः । **अरंकृतः** अलं पर्याप्तं कुर्वन्तीति उपपदसमासः। अन्यूनकारिणः समृद्धकर्माण इत्यर्थः ।। ५ ।।

### ऋक्संहिता पदपाठसहिता

**घृतपृष्ठा मनोयुजो येत्वा वहन्ति वह्नयः । आ देवान्त्सोमपीतये ।। ६ ।।**

घृतऽपृष्ठाः । मनःऽयुजः । ये । त्वा । वहन्ति । वह्नयः । आ । देवान् । सोमऽपीतये ।।

### ऋग्भाष्यम्

**स्निग्धपृष्ठास्समारूढा हरिणा वा विदोषिणा ।**
**मनोमात्रेण योज्याश्च त्वां देवांश्च वहन्ति ये ।। ६ ।।**

**ऋग्भाष्यटीका– घृतपृष्ठाः** ।। स्निग्धपृष्ठाः । हे अग्ने ये **घृतपृष्ठाः** घृतमिव स्निग्धं पृष्ठं येषामिति । अथवा घृतः शुद्धो हरिः पृष्ठे येषां ते घृतपृष्ठाः । विदोषिणा हरिणा समारूढा इति यावत् । विशब्दो नञर्थे तस्मादिनिप्रत्ययस्यावैयर्थ्यम् । **मनोयुजः** सारथेर्मनोमात्रेण रथे योज्याः । वाहकत्वात् **वह्नयः** अश्वाः सोमपीतये त्वां देवांश्च यज्ञं प्रत्यावहन्ति । यच्छब्दस्योत्तरत्र सम्बन्धः ।। ६ ।।

**मन्त्रार्थमञ्जरी–** (हे अग्ने) ये । घृतपृष्ठाः, घृतमिव स्निग्धं पृष्ठं येषामिति वा घृतः शुद्धो हरिः पृष्ठे येषामिति वा, निर्दोषेण हरिणारूढा इति यावत् । मनोयुजः, सारथेर्मनोमात्रेण रथे योज्याः । वाहकत्वात् वह्नयः, वहतेः निः, अश्वाः । सोमपीतये । त्वा, त्वाम् । देवान् (च यज्ञं प्रति) आ व हन्ति । 'ये' इत्यस्योत्तरमन्त्रे अन्वयः ।। ६ ।।

**स्कन्द– घृतपृष्ठाः** घृ क्षरणदीप्त्योः । घृतं दीप्तं पृष्ठं येषां ते घृतपृष्ठाः । बलवतो ह्यश्वस्य दीप्तिमत् पृष्ठं भवति । **मनोयुजः** मनसा ध्यातमात्रा ये स्वयमेव युज्यन्ते ते मनोयुजः । **ये त्वा वहन्ति वह्नयः** अश्वाः । वह्निः (निघ १,१४) इत्यश्वनाम । आ देवान् यच्छब्द-श्रुतेस्तच्छब्दोऽत्राध्याहर्तव्यः । आ देवानिति चोपसर्गात् कर्मश्रुतेश्च योग्यं क्रियापदमध्याहर्तव्यम् । तैरावह देवान् सोमपीतये ।। ६ ।।

**वेङ्कटमाधव–** अग्ने पानायाश्वपृष्टे घृतमास्ते । मनसा युज्यमाना ये त्वां वहन्ति अश्वास्तैः । आवह देवान् सोमपानाय ।। ६ ।।

**मुद्गल–** हे अग्ने! **त्वा** त्वां **ये** अश्वा रथेन वहन्ति । कीदृशाः ? घृतपृष्ठाः पुष्टाङ्गत्वेन दीप्तपृष्ठाः **मनोयुज** मनःसकल्पमात्रेण रथे युज्यमाना **वह्नयः** वोढारः तैरश्वैः सोमपीतय सोमपानहेतुयागार्थं देवान् आ वहेति शेषः ।। ६ ।।

**सायण–** हे अग्ने **त्वा** त्वां ये अश्वाः रथेन **वहन्ति** । कीदृशाः ? **घृतपृष्ठाः** पुष्टाङ्गत्वेन दीप्तपृष्ठाः **मनोयुजः** मनःसङ्कल्पमात्रेण रथे युज्यमानाः **वह्नयः** वोढारः तैरश्वैः सोमपानहेतुयागार्थं देवान् आ वह इति शेषः ।

घृतपृष्ठाः । 'घृ क्षरणदीप्त्योः' । घृतं दीप्तं पृष्ठं येषां ते घृतपृष्ठाः । घृतशब्दः प्रत्ययस्वरेणान्तोदात्तः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । मनसा युज्यते इति मनोयुजः । 'ऋत्विग्दधृक्' (पा.सू.३,२,५९) इत्यादिना क्विन् । कृदुत्तरपदप्रकृतिस्वरत्वम् । त्वा । 'त्वामौ द्वितीयायाः' इत्यनुदात्तः त्वादेशः । वहन्ति । शप्तिङोरनुदात्तत्वात् धातुस्वरः । यद्वृत्तयोगात् निघाताभावः । वह्नयः । 'निः' (उ.सू.४,४८८) इत्यनुवृत्तौ 'वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित्' (उ.सू.४,४९१) इति निप्रत्ययः । तस्य नित्त्वादाद्युदात्तत्वम् । सोमपीतये । उक्तम् । सकारे परतो नकारस्य संहितायां 'नश्च' (पा.सू.६,३,३०) इति धुडागमः । 'खरि च' (पा.सू.८,४,५५) इति चर्त्वम् । 'चयो द्वितीयाः शरि पौष्करसादेः' (पा.सू.८,४,४८,३) इति द्वितीयस्थकारः ।। ६ ।।

**सिद्धाञ्जनम्–** षष्ठीमृचमाह– हे अग्ने **घृतपृष्ठाः** घृतं दीप्तं पृष्ठं बहिरङ्गं येषां ते दीप्तबाह्यशरीरभागा इत्यर्थः । **मनोयुजः** मनसा युज्यमानाश्च **ये वह्नयः** अश्वाः **त्वा** त्वां **वहन्ति**, तैः आनयनसाधनैर्वह्निः **देवान्** इन्द्रादीन् **सोमपीतये** सोमस्य पानाय आ **आवह**। यजमानमनोयुक्तत्वं एषां अग्निवाहानां उक्तम् । ब्रह्मयुजौ इन्द्राश्वौ प्राग्व्याख्यातौ । उभयं अपि सजातीयमभिप्रायं द्योतयति ।। ६ ।।

।। इति प्रथमाष्टके प्रथमाध्याये षड्विंशो वर्गः ।।

### ।। अथ सप्तविंशो वर्गः ।।

### ऋक्संहिता पदपाठसहिता

**तान्यजत्राँ ऋतावृधोऽग्ने पत्नीवतस्कृधि । मध्वः सुजिह्व पायय ।। ७ ।।**

तान् । यजत्रान् । ऋतऽवृधः । अग्ने । पत्नीऽवतः । कृधि ।। मध्वः । सुऽजिह्व । पायय ।।

## ऋग्भाष्यम्

**तैर्देवान्यजतः स्तोतॄन् ज्ञातेन ब्रह्मणैधितान् ।**
**पत्नीभिर्योजयागन्तुं सहमध्वश्च पायय ॥ ७ ॥**

**ऋग्भाष्यटीका– तान्यजत्रान्** । **तैर्देवान्** । हे अग्ने य एवंविधा अश्वास्तैः यजत्रान् विष्णुं यजतः । स्तुत्यर्थो वा यजिः । तस्य स्तोतॄन्वा **ऋतवृधः** ऋतेन सम्यग्ज्ञातेन ब्रह्मणैधितांस्तान्देवान् **पत्नीवतस्कृधि** कुरु । यज्ञं प्रत्यागन्तुं पत्नीभिः सह योजय । पत्नीसहितानुक्तलक्षणैरश्वैरिहानयेति भावः । आनीय च हे **सुजिह्व मध्वः** मधुं स्वादुं सोमं पायय । विष्णुपक्षे तु यजत्रानिज्यानिति व्याख्येयम् ॥ ७ ॥

**मन्त्रार्थमञ्जरी–** (हे) अग्ने । (ये) एवंविधा अश्वाः । (तान्) तैः (व्यत्ययात्) यजत्रान् विष्णुं यजतः, स्तोतॄनिति वा । ऋतवृधः, ऋतेन सम्यग्ज्ञानरूपेण हरिणैधितान् । तान्, देवान् । पत्नीवतः । कृधि, कुरु, यज्ञं प्रत्यागन्तुं पत्नीभिः सह योजय, पत्नीसहितानुक्तलक्षणैरश्वैरिहानयेति भावः । आनीय च (हे) सुजिह्व । मध्वः, मधु, स्वादु सोमम् । पायय । विष्णुपक्षे तु 'यजत्रान्' इति कर्मणि, 'इज्यान्' इति व्याख्येयम् ॥ ७ ॥

**स्कन्द–** तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः । ये देवा आवाहिता अस्माभिः **तान् यजत्रान्** यष्टव्यान् **ऋतावृधः** यज्ञस्योदकस्य सत्यस्य वा वर्धयितॄन् । हविषा हि स्तुत्या च देवता वर्धन्ते । हे अग्ने! **पत्नीवतस्कृधि** पत्नीसंयुक्तान् कुरु । पत्नीरप्येषामावहेत्यर्थः । ओह्य च **मध्वः** षष्ठीनिर्देशादत्रैकदेशमिति शेषः । द्वितीयार्थे वा षष्ठी । मधुस्वादस्यैकदेशं स्वांशलक्षणं मधुस्वादं वा सोमं हे **सुजिह्व!** सुवाक्! शोभनजिह्वाख्यावयवो वा **पायय** ॥७॥

**वेङ्कटमाधव–** तान् यष्टव्यान् यज्ञस्य वर्धयितॄन् अग्ने! पत्नीवतः च कुरु । कृत्वा च सोमं सुज्वाल । पायय ॥ ७ ॥

**मुद्गल–** हे अग्ने! **तान्** च इन्द्रादीन् देवान् यजत्रान् यजनीयान् **ऋतावृधः** यज्ञस्य वर्धकान् **पत्नीवतः** पत्नीयुक्तान् **कृधि** कुरु । हे **सुजिह्व** । शोभनजिह्वोपेत! **मध्वः** मधुरस्य सोमस्य भागं देवान् **पायय** ॥ ७ ॥

**सायण–** हे अग्ने **तान्** इन्द्रादीन् देवान् **यजत्रान्** यजनीयान् **ऋतावृधः** सत्यस्य यज्ञस्य वा वर्धकान् **पत्नीवतः** पत्नीयुक्तान् **कृधि** कुरु । हे **सुजिह्व** शोभनजिह्वोपेत **मध्वः** मधुरस्य सोमस्य भागं देवान् **पायय** ।

यजत्रान् । 'अमिनक्षियजिबन्धिपतिभ्योऽत्रन्' (उ.सू.३,३८५) इति यजेः अत्रन् प्रत्ययः । ऋतावृधः । 'वृधु वृद्धौ' । अन्तर्भावितण्यर्थात् 'क्विप् च' (पा.सू.३,२,७६) इति क्विप् । 'अन्येषामपि दृश्यते' (पा.सू.६,३,१३७) इति पूर्वपदस्य दीर्घत्वम् । वृधेर्धातुस्वरः । समासे कृदुत्तरपदप्रकृतिस्वरत्वम् । अग्ने । पादादित्वात् नामन्त्रितनिघातः । षाष्ठिकमाद्युदात्तत्वम् । पत्नीवतः । 'पत्युर्नो यज्ञसंयोगे' (पा.सू.४,१,३३) इति ङीप्; इकारस्य च नकार । ता एषां सन्तीति मतुप् । 'छन्दसीरः' (पा.सू.८,२,१५) इति वत्वम् । पतिशब्दो डतिप्रत्ययान्तत्वादाद्युदात्तः । ङीम्मतुपोरनुदात्तत्वात् स एव शिष्यते । कृधि । कृञो लोटः सिः । 'सेर्ह्यपिच्च' (पा.सू.३,४,८७) इति हिः । 'बहुलं छन्दसि' इति विकरणलुक् । 'श्रुशृणुपृकृवृभ्यश्छन्दसि' (पा.सू.६,४,१०२) इति हेर्धिरादेशः । ङित्त्वाद्गुणाभावः । मध्वः । उक्तम् । सुजिह्व । आमन्त्रितनिघातः । पायय । 'पा पाने' । पिबन्तं प्रयुङ्क्ते इति 'हेतुमति च' (पा.सू.३,१,२६) इति णिच् । 'शाच्छासाह्वाव्यावेपां युक्' (पा.सू.७,३,३७) इति युक् । पूर्वस्यामन्त्रितस्य अविद्यमानवत्त्वम् । अत एव अव्यवधायकत्वात् मध्व इत्यपेक्ष्य 'तिङ्ङतिङः' इति निघातः ॥

**सिद्धाञ्जनम्–** सप्तमीमृचमाह– हे अग्ने **तान्** इन्द्रादीन् **यजत्रान्** यजनीयान् **ऋतवृधः** ऋतस्य सत्यस्य वर्धयितॄन् देवान् **पत्नीवतः** पत्नीयुक्तान् **कृधि** कुरु । हे **सुजिह्व** शोभनवाग्युक्त, अग्ने, तान् देवान् **मध्वः** मधुरस्य सोमस्य भागं **पायय** पिबतेर्हेतुण्णिच् ।

अत्रेदमवधेयम् । पुमांस इन्द्रादयो देवाः, तच्छक्तय इन्द्राण्यादयो देव्यः । अयं विषयो भूमिकायां आवेदितः । पुंसो देवस्य महिमा शक्त्या देव्या प्रख्याप्यते देवप्रभावविसारो देव्या निरुह्यते । तस्मात् शक्तिं देवीं विना शक्तस्य देवस्याविष्कारो दुर्घटः। ऋतं यजमाने वर्धयतो यष्टव्यान् इन्द्रादीन् तत्कार्यनिर्वाहशक्तियुक्तान् विधेहीति तात्पर्यम् ॥ ७ ॥

## ऋक्संहिता पदपाठसहिता

**ये यजत्रा य ईड्यास्ते तै पिबन्तु जिह्वया । मधोरग्ने वषट्कृति ॥ ८ ॥**

ये । यजत्राः । ये । ईड्याः । ते । ते । पिबन्तु । जिह्वया । मधोः । अग्ने । वषट्ऽकृति ।।

## ऋग्भाष्यम्

**ते षष्ठ्यतोऽनुदात्तः स्यादुदात्तो बहुवाचकः ।**
**आवृत्तस्तु भवेदर्थस्ते पिबंतु वषट्कृतौ ।। ८ ।।**

**ऋग्भाष्यटीका– ये यजत्राः** । अत्र वीप्सया ये य इति द्विर्वचनं दृश्यते यजत्राणामीड्यानां चापृथक्त्वात् । तेन ते त इत्यपि द्विर्वचनमिति प्रतीतिः स्यात् तां निराकर्तुमाह– **ते षष्ठीति** ।। अत्र द्वितीयस्तेशब्दः षष्ठी । षष्ठ्येकवचनान्तस्य युष्मदः पदस्यादेशः । कुतः ? अत एव ह्यनुदात्तः स्वरः स्यात् । अनुदात्तं सर्वमपादादावित्यादेशस्यैवानुदात्तत्वस्मरणात् । आद्यस्तेशब्दो बहुवाचकः । प्रथमाबहुवचनान्तस्य तच्छब्दस्य रूपम् । कुतः ? यत उदात्तः । अन्यथा सोऽप्यनुदात्तः प्रसज्येतेति । तर्हि ये य इत्यनेनान्वयो न स्यादित्यत आह– **आवृत्तस्त्विति** ।। यो बहुवाचकस्तेशब्दः स द्विरावृत्तः करिष्यते । ततश्चार्थोन्वितो(भवति) भवेत् । हे **अग्ने यजत्रा** यजन्त इज्यावा **ईड्याः** स्तुत्याश्च **ये ये** देवाः सन्ति **ते ते** सर्वे **वषट्कृति** सम्पदादित्वात्क्विप् । वषट्कृतौ सत्यां **ते** त्वदीयया **जिह्वया मधोः** मधु पिबन्तु ।। ८ ।।

**मन्त्रार्थमञ्जरी–** (हे) अग्ने । यजत्राः, यजन्तः, पूर्ववत् इज्या इति वा । ईड्याः, स्तुत्याः । (च) ये ये (देवाः सन्ति) ते (ते) (सर्वे) वषट्कृति, सम्पदादित्वाद्भावे क्विप्, वषट्कृतौ सत्याम् । ते, तव, त्वदीयया । जिह्वया । मधोः, मधु । पिबन्तु । अत्र द्वितीयः, 'ते' इति शब्दः षष्ठ्यन्तः, अनुदात्तत्वात्, आद्यः ('ते' इति शब्दः) प्रथमान्तो द्विरावर्तत इति ज्ञेयम् ।। ८ ।।

**स्कन्द– ये** यष्टव्याः **ये** च ईड्याः स्तुत्या देवाः **ते, ते** तव स्वभूतया **जिह्वया पिबन्तु** । 'अग्निमुखाः हि देवाः' (तु.माश.७,१,२,४) । ते अग्नेरेव जिह्वया पिबन्ति न स्वया । वाङ्नाम वा जिह्वाशब्दः हेतौ च तृतीया । तव वाचा हेतुना त्वयोच्यमाना इत्यर्थः । किं पिबन्तु ? उच्यते– **मधोः** सोमस्यैकदेशं स्वांशलक्षणं मधु वा, सोमं वा हे अग्ने! **वषट्कृति** वषट्कारकाले ।।

**वेङ्कटमाधव–** ये यष्टव्याः ये च ईड्याः 'मनुष्या वा ईडेन्याः पितरो नमस्या देवा यज्ञियाः' (तै.२,५,९,६)इति ब्राह्मणम् । ते तव जिह्वया सोमस्य वषट्कृतं हुतम् पिबन्तु ।। ८ ।।

**मुद्गल– ये** देवाः **यजत्राः** यष्टव्याः तथा **ये** देवाः **ईड्याः** स्तुत्याः **ते** सर्वेऽपि **वषट्कृति** वषट्कारकाले हे **अग्ने! ते** त्वदीयया **जिह्वया मधोः** मधुरस्य सोमस्य भागं पिबन्तु ।।८।।

**सायण– ये** देवाः **यजत्राः** यष्टव्याः तथा **ये** देवाः **ईड्याः** स्तुत्याः **ते** सर्वेऽपि **वषट्कृति** वषट्कारकाले वषट्कारयुक्ते यागे वा हे **अग्ने ते** त्वदीयया **जिह्वया मधोः** मधुरस्य सोमस्य भागं **पिबन्तु** ।

यजत्राः । गतम् । ईड्याः । 'ईड स्तुतौ' । 'ऋहलोर्ण्यत्' । तित्स्वरिते प्राप्ते 'ईडवन्दवृशंसदुहां ण्यतः' (पा.सू.६,१,२१४) इत्याद्युदात्तत्वम् । द्वितीयस्य तेशब्दस्य युष्मदादेशस्य सर्वानुदात्तत्वम् । मधोः । उप्रत्ययस्य नित्वादाद्युदात्तत्वमुक्तम् । अग्ने । आमन्त्रितनिघातः । वषट्कृति । करोतेः सम्पदादिभ्यो भावे क्विप् । वषट् इत्यस्य करणं यस्मिन् यागे इति बहुव्रीहिः । वषट् इत्यस्य निपातत्वादाद्युदात्तत्वम् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ।। ८ ।।

**सिद्धाञ्जनम्–** अष्टमीमृचमाह– हे **अग्ने! ये यजत्राः** यजनीयाः **ये ईड्याः** स्तुत्याः अध्येषणार्थमिति शेषः, **ते** देवाः **ते** तव त्वदीयया **जिह्वया** ज्वालारूपया वाचा **मधोः** मधुरस्य सोमस्य भागं पिबन्तु **वषट्कृति** वषट्कारयुक्ते यज्ञे पिबन्त्विति सम्बन्धः । वषट्कृति-करोतेः भावे क्विप, वषडिति करणं यस्मिन् सः वषट्कृत् तस्मिन् वषट्कृति यज्ञे । स्वाहाकार इव वषट्कारः देवेभ्यः सम्प्रदाने प्रयुज्यते ।। ८ ।।

## ऋक्संहिता पदपाठसहिता

**आकीं सूर्यस्य रोचनाद्विश्वान्देवाँ उषर्बुधः । विप्रो होतेह वक्षति ।। ९ ।।**
आकीम् । सूर्यस्य । रोचनात् । विश्वान् । देवान् । उषःऽबुधः । विप्रः । होता । इह । वक्षति ।। ९ ।।

## ऋग्भाष्यम्

**सूर्यस्य रोचनात्स्वर्गादावक्षत्यग्निरिन्दुपान् ।**
**उषः प्रकाशनाद्ब्रह्म तद्विदस्त उषर्बुधः ।। ९ ।।**

**ऋग्भाष्यटीका– आकीम् ।।** सूर्यस्य । आकीमित्याङर्थे निपातः । होता विप्रोऽग्निः प्रकाशनादुषःशब्देन ब्रह्मोच्यते । तद्विदस्तद्बुध्यन्ति ते **उषर्बुधः** तान् **विश्वान् देवान्** इन्दुपान्

सोमपान् सूर्येणातिशयतः प्रकाश्यमानत्वात् **सूर्यस्य रोचनात्** स्वर्गात् **इह** यज्ञं प्रति **आवक्षति** आवहेत् ॥ ९ ॥

**मन्त्रार्थमञ्जरी–** होता विप्रः (अग्निः) उषर्बुधः, प्रकाशरूपत्वादुषर्ब्रह्म, तद्बुध्यन्त इत्युषर्बुधो ब्रह्मविदस्तान् । विश्वान् । देवान्, सोमपान् । सूर्यस्य रोचनात्, सूर्यस्य सम्बन्धेनातिप्रकाशमानत्वेन रोचनपदोक्तात्स्वर्गात् । इह, यज्ञं प्रति । आकीम् वक्षति, आवहेत्, 'आकीम्' इत्याङर्थे निपातः, वहतेः लेटि 'वक्षति' इति रूपम् ॥ ९ ॥

**स्कन्द–** आकीं इति निपात आङर्थे । वक्षति, इत्याख्यातेन सम्बन्धयितव्यः । सूर्यसम्बन्धिनो **रोचनात्** दीप्ताद् द्युलोकादादित्यमण्डलाद् वा **विश्वान् देवान् उषर्बुधः** उषःकाले यागगमनार्थं ये बुध्यन्ते त उषर्बुधः तान् । **विप्रः** मेधावी **होता** वा अग्निः **इह** यज्ञे **आवक्षति** । लोडर्थेऽयं पञ्चमो लकारः । आवहतु ॥ ९ ॥

**वेङ्कटमाधव–** सूर्यस्य दिवः आवहत्वग्निः सर्वान् देवान् प्रातः प्रबुद्धान् मेधावी अत्र ॥९॥

**मुद्गल– विप्रः** मेधावी होता होमनिष्पादकोऽग्निः **उषर्बुधः** उषःकाले यागगमनाय प्रबुध्यमानान् **विश्वान् देवान् सूर्यस्य** सम्बन्धिनः **रोचनात्** स्वर्गलोकात् **इह** कर्मणि **आकीं** आ **वक्षति** आवहतु ॥ ९ ॥

**सायण– विप्रः** मेधावी **होता** होमनिष्पादकोऽग्निः **उषर्बुधः** उषःकाले यागगमनाय प्रबुध्यमानान् **विश्वान् देवान् सूर्यस्य** सम्बन्धिनः **रोचनात्** स्वर्गलोकात् **इह** कर्मणि **आकीं वक्षति** आवहतु ।

आकीम् । निपात आद्युदात्तः । सूर्यस्य । सूर्यशब्दो 'राजसूयसूर्य' (पा.सू.३,१,११४) इत्यादिना क्यप्प्रत्ययान्तो निपातितः । क्यपः पित्त्वात् धातुस्वरेणाद्युदात्तः । रोचनात् रोचमानात् । 'रुचदीप्तौ' । 'अनुदात्तेतश्च हलादेः' (पा.सू.३,२,१४९) इति कर्तरि युच् । 'चितः' इत्यन्तोदात्तत्वम् । विश्वान् । विशेः क्वनन्तो नित्त्वादाद्युदात्तः । उषर्बुधः । उषर्बुध्यन्ते इत्युषर्बुधः । 'क्विप् च' (पा.सू.३,२,७६) इति क्विप् । धातुस्वरेण उकार उदात्तः । समासे कृदुत्तरपदप्रकृतिस्वरत्वम् । विप्रः । 'ऋज्रेन्द' (उ.सू.२,१८६) इत्यादिना रन् ।

नित्त्वादाद्युदात्तः । होता । ह्वयतेस्ताच्छील्ये तृन् । 'बहुलं छन्दसि' इति सम्प्रसारणम् । परपूर्वत्वम् । गुणः । नित्त्वादाद्युदात्तः । इह । 'इदमो....' (पा.सू.५,३,११) इति ह्प्रत्ययः । 'इदम इश्' (पा.सू.५,३,३) इति इश् । शित्वात् सर्वादेशः । प्रत्ययस्वरः । वक्षति । वहेः प्रार्थनायां लिङर्थे लेट् । तस्य तिप् । कर्तरि शप् । शपि परतः 'सिब्बहुलं लेटि' (पा.सू. ३,१,३४) इति सिप् । डत्वकत्वषत्वानि । 'तिङ्ङतिङः' इति निघातः ।। ९ ।।

**सिद्धाञ्जनम्–** नवमीमृचमाह– आकीं आ इत्यर्थे निपातः योग्यक्रियया सम्बन्धयितव्यः । **विप्रः** मेधावी **होता** आह्वाता अग्निः **सूर्यस्य** सर्वप्रेरकस्य सर्वोत्तमस्य देवस्य **रोचनात्** दीप्तात् स्वर्धाम्नः **उषर्बुधः** उषसि प्रबुध्यमानान् । सत्यज्योतिराविर्भावे आसन्ने देवाः यजमानस्य यजनमास्थातुं सिद्धा भवन्तीत्यर्थः। **विश्वान् देवान् इह आवक्षति** आवहतु । वहेः प्रार्थनायां लिङर्थे लेट् ।। ९ ।।

### ऋक्संहिता पदपाठसहिता

**विश्वेभिः सोम्यं मध्वग्न इन्द्रेण वायुना । पिबा मित्रस्य धामभिः ।। १० ।।**
**विश्वेभिः । सोम्यम् । मधु । अग्ने । इन्द्रेण । वायुना । पिब । मित्रस्य । धामऽभिः ।।**

### ऋग्भाष्यम्

**देवास्ते विष्णुधामत्वान्मित्रधामान ईरिताः ।। १० ।।**

**ऋग्भाष्यटीका– विश्वेभिः ।** अत्र मित्रस्य धामभिरित्येतद्व्याचष्टे– **देवा इति ।।** विष्णुधामत्वात् मित्रस्य विष्णोरधिष्ठानत्वात् । धामशब्दं पुल्लिङ्गमाश्रित्य मित्रधामान इत्युक्तम् । (यद्वा विष्णुधामत्वान्मित्रधामान इति बहुव्रीहिद्वयम् । तथा सति मित्रेण धाम्ना धामभिर्धामवद्भिरिति व्याख्येयम्) । अग्ने मित्रस्य धामभिर्विश्वेभिर्देवैरिन्द्रेण वायुना च सह **सोम्यं** सोमस्वरूपं मधु पिब । इन्द्रवाय्वोः प्राधान्यात्पृथग्ग्रहणम् ।। १० ।।

**मन्त्रार्थमञ्जरी–** (हे) अग्ने । मित्रस्य धामभिः, 'मित्रं हुवे' इत्यत्रोक्तदिशा मित्रनाम्नो विष्णोर्धामभिरधिष्ठानभूतैः । विश्वेभिः, विश्वैर्देवैः । इन्द्रेण वायुना (च सह) । सोम्यम्, सोमस्वरूपम् । मधु पिब । इन्द्रवाय्वोः प्राधान्यात्पृथगुक्तिः ।। १० ।।

**स्कन्द– विश्वेभिः** सर्वैः सह **सोम्यं** सोममयं मधु हे अग्ने! पिब । सोमरसोऽत्र द्रव्यत्वसामान्यान्मृष्टत्वसामान्याच्च मधूच्यते । इन्द्रेण वायुना मित्रस्य च धामभिः धामशब्द-स्तेजोवचनः । अथवा 'धामानि त्रयाणि भवन्ति, स्थानानि नामानि जन्मानि' (या ९,२८) इति । धामभिश्चात्र तत्सम्बन्धो मित्र एव लक्ष्यते । मित्रस्य यानि तेजांसि स्थानानि नामानि जन्मानि वा तैः सम्बद्धेनैव मित्रेणैव सहैत्वर्थः ।। १० ।।

**वेङ्कटमाधव–** अग्ने! विश्वेदेवैः सह सोममयं मधु पिब इन्द्रवायुभ्यां मित्रस्य च सर्वैस्तेजोभिः । देवानां बहूनि धामानि भवन्ति । यैस्तत्र सन्निधानं कुर्वन्तीति वक्ष्यामः ।। १० ।।

**मुद्गल–** हे **अग्ने!** त्वं **विश्वेभिः** सर्वैः पूषभगादिभिर्देवैः **इन्द्रेण वायुना मित्रस्य** सम्बन्धिभिः **धामभिः** तेजोभिः मूर्तिविशेषरूपैश्च सह **सोम्यं** सोमसम्बन्धि **मधु** मधुरं भागं **पिब** ।। १० ।।

**सायण–**अग्निष्टोमे प्रउगशस्त्रस्य याज्या 'विश्वेभिः सोम्यं मधु' इति । 'स्तोत्रमग्ने शस्त्रात्' इति खण्डे सूत्रितं– 'विश्वेभिः सोम्यं मध्विति याज्या' (आश्व.श्रौ.५,१०) इति ।।

हे **अग्ने** त्वं **विश्वेभिः** सर्वैः पूषभगादिभिर्देवैः **इन्द्रेण वायुना मित्रस्य** सम्बन्धिभिः **धामभिः** तेजोभिर्मूर्तिविशेषरूपैश्च सह **सोम्यं** सोमसम्बन्धि **मधु** मधुरं भागं **पिब** ।

विश्वेभिः । 'बहुलं छन्दसि' (पा.सू.७,१,१०) इति भिस ऐसादेशाभावः । सोम्यम् । 'सोममर्हति यः' (पा.सू.४,४,१३७) इत्यनुवृत्तौ 'मये च' (पा.सू.४,४,१३८) इति यप्रत्ययः सोमस्य विकार इत्यर्थे । 'यस्येति च' (पा.सू.६,४,१४८) इति अकारलोपः । प्रत्ययस्वरः । मधु । 'फलिपाटिनमिमनि' (उ.सू.१.१८) इत्यादिना उप्रत्ययः । 'नित्' इत्यनुवृत्तेः नित्त्वादाद्युदात्तः । वायुना । 'कृवापाजि' (उ.सू.१,१) इत्यादिना उण् । 'आतो युक् चिण्कृतोः' (पा.सू.७,३,३३) इति युक् । प्रत्ययस्वरः । पिब । 'पा पाने' । लोटः सेर्हिरादेशः । शपि 'पाघ्रा' (पा.सू.७,३,७८) इत्यादिना पिबादेशः । 'अतो हेः' (पा.सू.६,४,१०५) इति हेर्लुक् । शपःपित्त्वात् धातुस्वरः । पादादित्वात् न निघातः । 'द्व्यचोऽतस्तिङः' (पा.सू. ६,३,१३५) इति संहितायां दीर्घः । धामभिः । धात्र् । 'आतो मनिन्' (पा.सू.३,२,७४) इति मनिन् । नित्स्वरः ।। १० ।।

**सिद्धाञ्जनम्–** दशमीमृचमाह– हे **अग्ने विश्वेभिः** सर्वैः देवैः **इन्द्रेण वायुना,** मित्रस्य एतदाख्यस्य देवस्य **धामभिः** तेजोविशेषैः सह **सोम्यं** सोममयं **मधु** मधुरं आस्वादनीयं रसं पिब । सोमस्य विकारः सोम्यमिति मयट् ।। १० ।।

## ऋक्संहिता पदपाठसहिता

**त्वं होता मनुर्हितोऽग्ने यज्ञेषु सीदसि । सेमं नो अध्वरं यज ।। ११ ।।**

त्वम् । होता । मनुःऽहितः । अग्ने । यज्ञेषु । सीदसि । सः । इमम् । नः । अध्वरम् । यज ।। ११ ।।

**ऋग्भाष्यटीका– त्वं होता ।।** अग्ने मनुर्हितो होता त्वं **यज्ञेषु सीदसि** यज्ञानामधिष्ठाता भवसि । तस्मात् सः त्वं **न इममध्वरं यज** देवेभ्यो देहि ।। ११ ।।

**मन्त्रार्थमञ्जरी–** (हे) अग्ने मनुर्हितः (मनुभ्यो देवेभ्यो हितः) होता त्वम् । यज्ञेषु सीदसि, यज्ञानामधिष्ठाता भवसि । तस्मात् सः (त्वम्) नः इमम् अध्वरम् । यज, देवेभ्यो देहि । 'सोऽचि लोपे चेत्पादपूरणम्' इति 'सेमम्' इति साधु ।। ११ ।।

**स्कन्द–** सेममिति तच्छब्दाद्यच्छब्दोऽध्याहर्तव्यः । **यस्त्वं होता मनुर्हितः** मनुना प्रजापतिना निहितः । मनुष्येषु वा निहितः । मनुष्येभ्यो वा निहितः । हे अग्ने । **यज्ञेषु सीदसि** होतृत्वं कर्तुं यज्ञेषु सीदसीत्यर्थः । सः इमं **नः अध्वरं** यज्ञं होतृत्वेन निषद्य यज ।।

**वेङ्कटमाधव–** त्वं होता मनुष्यैर्निहितः अग्ने! यज्ञेषु सीदसि । सः त्वं अस्माकं इमं यज्ञं यज ।। ११ ।।

**मुद्गल–** हे **अग्ने! मनुर्हितः** मनुषा होत्रादिरूपेण मनुष्येण हितः सम्पादितः **होता** होमनिष्पादकः यः त्वं यज्ञेषु **सीदसि** तिष्ठसि । सः त्वं **नः** अस्मदीयं इमं **अध्वरं** यज्ञं **यज** निष्पादय ।। ११ ।।

**सायण–** हे **अग्ने मनुर्हितः** मनुषा होत्रादिरूपेण मनुष्येण हितः सम्पादितः **होता** होमनिष्पादको **यः त्वं यज्ञेषु सीदसि** तिष्ठसि सः त्वं **नः** अस्मदीयं इमं **अध्वरं** यज्ञं **यज** निष्पादय ।

मनुर्हितः । मन्यते इति मनुः । 'निच्च' (उ.सू.२,२७४) इत्यनुवृत्तौ 'बहुलमन्यत्रापि' (उ.सू.२,२७८) उस् । नित्वादाद्युदात्तः । हितः । धाञो धातोः 'निष्ठा' इति क्तप्रत्ययः । 'दधातेर्हिः' (पा.सू.७,४,४२) इति हिरादेशः । मनुषा हितो मनुर्हितः । 'कर्तृकरणे कृता बहुलम्' (पा.सू.२,१,३२) इति समासः । कृत्स्वरापवादेन 'तृतीया कर्मणि' (पा.सू.६,२,४८) इति पूर्वपदप्रकृतिस्वरत्वम् । सीदसि । 'षद्लृ विशरणगत्यवसादनेषु' । लटः सिप् । शपि 'पाघ्राध्मा' (पा.सू.७,३,७८) इत्यादिना सीदादेशः । निघातः । सेममित्यत्र संहितायां 'सोऽचि लोपे चेत्पादपूरणम्' (पा.सू.६,१,१३४) इति सोर्लोपे गुणः। अध्वरम् । न विद्यते ध्वरो हिंसा यस्मिन् सोऽध्वरः । 'नञ्सुभ्याम्' (पा.सू.६,२,१७२) इत्युत्तरपदान्तोदात्तत्वम् । 'नो अध्वरम्' इत्यत्र संहितायाम् 'एङः पदान्तादति' (पा.सू.६,१,१०९) इति पूर्वरूपं प्राप्तं 'प्रकृत्यान्तःपादमव्यपरे' (पा.सू.६,१,११५) इति प्रकृतिभावात् निवर्तते ।। ११ ।।

**सिद्धाञ्जनम्–** एकादशीमृचमाह– हे **अग्ने त्वं होता** आह्वाता देवानाम् , **मनुर्हितः** मनुना मन्त्रेण मन्त्रा वा हितः स्थापितः **यज्ञेषु सीदसि** स्थितो भवसि । **सः** तादृक् त्वं **नः इमं अध्वरं** अस्मदीयमिमं यज्ञं प्राप्य **यज** यजनं निर्वह । सेमं संहितायां सोर्लोपे गुणः। मनुर्हितः प्राग्व्याख्यातम् ।। ११ ।।

### ऋक्संहिता पदपाठसहिता

**युक्ष्वा ह्यरुषी रथे हरितो देव रोहितः । ताभिर्देवाँ इहावह ।। १२ ।।**

युक्ष्व । हि । अरुषीः । रथे । हरितः । देव । रोहितः । ताभिः । देवान् । इह । आ । वह ।। १२ ।।

### ऋग्भाष्यम्

**अग्निवाहा अश्वतर्यो दूर्वा पद्माग्निसप्रभाः ।**
**लोहिताः क्वचिदश्वाश्च रोहिन्मृग्योऽपि कुत्रचित् ।। १२ ।।**

**ऋग्भाष्यटीका– युक्ष्व** । अत्रारुषीरित्यादिनाऽग्नेर्वाहनान्युच्यन्ते तद्विवृणोति– **अग्निवाहा** इति ।। हे अग्ने **देव** त्वं **रथे अरुषीः** अरुणा अग्निसप्रभा अश्वतरीः **युक्ष्व** संयोजय । अथवा अरुषीर्लोहिता अश्वाश्च युक्ष्व । **हरितः** हरिद्वर्णा दूर्वासप्रभा अश्वतरीश्च युक्ष्व । अथवा **रोहितः**

रोहिन्मृगीर्वा युक्ष्व । **ताभिः** अश्वतरीभी रोहिद्भिर्वा युक्तेन रथेन **देवान् इह** यज्ञे **आवह** । पद्मसप्रभा इत्यन्यत्रोक्तस्य विवरणम् ।। १२ ।।

**मन्त्रार्थमञ्जरी–** (हे अग्ने) देव (त्वम्) हि रथे । अरुषीः, अरुणाः अग्निसप्रभाः अश्वतरीः । युक्ष्व, संयोजय । अथ वा, अरुषीः, लोहिताः अश्वाः । (च) युक्ष्व, युङ्क्ष्व । हरितः, हरिद्वर्णाः दूर्वासप्रभाः अश्वतरीः । (च) (युक्ष्व) रोहितः, रोहिन्मृगीः । (वा) (युक्ष्व) ताभिः, (अश्वाभिः) अश्वतरीभी रोहिद्भिर्वा युक्तेन रथेन । देवान् । इह, यज्ञे । आ वह ।। १२ ।।

**स्कन्द–** हि इति पदपूरणः । **युक्ष्व अरुषीः** रोचतेर्वा रुशतेर्वाऽऽङ्पूर्वस्य अरुषशब्दो दीप्तवचनः । बलवत्त्वाद् दीप्ताः । अथवा 'अरुषत्यार्यति' (निघ २,१४) इति गतिकर्मसु पाठादरुषशब्दो गन्तृवचनः गन्त्रीः । क्व युङ्क्ष्व ? उच्यते– स्वे **रथे** । **हरितः** हरितवर्णाः । हे **देव!** अग्ने! 'रोहितः' (निघ १,१५) आदिष्टोपयोजनमेतदग्नेरश्वानां नामधेयम् । आत्मीया वडवाः । युक्त्वा च **ताभिः देवान् इह आवह** ।। १२ ।।

**वेङ्कटमाधव–** योजय आरोचमानाः रोहितवर्णाः अश्वाः स्वरथे । योजयित्वा च ताभिः इह देवान् आवह । आग्नेयं सूक्तम् । अन्ये निपातभाज इति वैश्वदेवं भवति (तु.बृदे.३,३३) ।। १२ ।।

**मुद्गल–** हे **देव!** अग्ने! **रोहितः** रोहिच्छब्दाभिधेयास्त्वदीयवडवाः **रथे युक्ष्व** योजय । हि शब्दः पादपूरणः । कीदृशीः ? **अरुषीः** गतिमतीः **हरितः** हर्तुं रथारूढान् पुरुषान् नेतुं समर्थाः **ताभिः** वडवाभिः **इह** अस्मिन् कर्मणि **देवान् आवह** ।। १२ ।।

**सायण–**हे **देव** अग्ने **रोहितः** रोहिच्छब्दाभिधेयास्त्वदीया वडवाः **रथे युक्ष्व** योजय । हिशब्दः पादपूरणार्थः । कीदृशीः? **अरुषीः** गतिमतीः **हरितः** हर्तुं रथारूढान् पुरुषान् नेतुं समर्थाः । **ताभिः** वडवाभिः **इह** अस्मिन् कर्मणि **देवान् आ वह** ।

युक्ष्व । 'युजिर् योगे' । लोट् । स्वरितेत्त्वादात्मनेपदम् । 'थासः से' । 'सवाभ्यां वामौ' । 'रुधादिभ्यः श्नम्' । तस्य बाहुलकात् लुक् । कुत्वषत्वे । प्रत्ययस्वरेणान्तोदात्तः । संहितायां 'द्व्यचोऽतस्तिङः' (पा.सू.६,३,१३५) इति दीर्घः । अरुषीः । 'ऋ गतौ' । रन्ति (?)

गच्छन्तीत्यरुष्यो वडवाः । 'ऋहनिभ्यामुषन्' (उ.सू.४,५१३) । धातोर्गुणो रपरत्वम् । नित्त्वादाद्युदात्तोऽरुषशब्दः । तस्मात् स्त्रियां छान्दसो ङीप् । शसि 'प्रथमयोः पूर्वसवर्णः' (पा.सू. ६,१,१०२) इति दीर्घः । रथे । रमेः औणादिकः क्थन्प्रत्ययः । नित्त्वादाद्युदात्तः । हरितः । 'हृसृरुहियुषिभ्य इतिः' (उ.सू.१,९७) इति हरतेः इति प्रत्ययः । इकारः प्रत्ययस्वरेणोदात्तः । रोहितः । रुहेरपि तेनैव सूत्रेण इतिः । इकारः प्रत्ययस्वरेणोदात्तः । ताभिः । 'सावेकाचः' (पा.सू.६,१,१६८) इति विभक्तेः प्राप्तमुदात्तत्वं 'सावर्ण' (पा.सू.६,१,१८२) इति निषिध्यते । देवान् इत्यत्र पूर्ववत् रुत्वानुनासिकौ ।। २७ ।।

**सिद्धाञ्जनम्–** द्वादशीमृचमाह– **देव!** हे अग्ने **रथे युक्ष्व** योजय । काः? त्वदीयाः **रोहितः** रोहिच्छब्दाभिधेयाः वडवाः । कीदृशीः ? **अरुषीः** आरोचमाना **हरितः** हरणसमर्थाश्च । **ताभिः** अश्वाभिः **देवान् इह** अस्मिन् वजने **आवह** आहर । अत्र पूर्वे व्याख्यातारः स्थूलदृष्ट्या बाह्यानुसारेणैवं प्राहुः– 'रोहितः' अग्नेरश्वाः रोहिताख्याः प्रसिद्धाः । 'अरुषीः'– गतिमतीः, ऋ-गतौ इति धातोः शब्दनिष्पत्तिः । 'हरितः' हर्तुं अश्वारूढान् नेतुं समर्था इति च । अत्रेद-मवधेयम् । अश्वानां गतिमत्त्वे आरूढजनहरणसामर्थ्ये वा न कस्यापि स्यात् सन्देहः। किं तु साभिप्रायविशेषणप्रयोगः मतिमत्पथं नावतरेत् । यदि गतिमत्त्वादिकमेव विवक्षितमित्यभ्युपगच्छेम । किं तर्हि ? विस्तरभिया किञ्चिदेव उपक्षिप्यते । अरुषपदेन आरोचमानं सांध्यरागं अरुणं, हरिच्छब्देन हरिद्वर्णं कमनीयं ऐन्द्रं, रोहिच्छब्देन लोहितप्रभमाग्नेयं च वाहं वाहसमूहं वा द्योतितवान् मन्त्रद्रष्टा । सर्वान् देवानानेतुं तत्तद्देवतायोग्यवाहशक्तिविशेषैर्युक्तानावह, भोः इति ।। १२ ।।

।। इति प्रथमाष्टके प्रथमाध्याये सप्तविंशो वर्गः ।।

## ।। अथ अष्टाविंशो वर्गः ।।

## (सूक्तम् १५)

## ऋक्संहिता पदपाठसहिता

१२ मेधातिथिः काण्वः । (प्रतिदैवतं ऋतुसहितं=) १ इन्द्रः, २ मरुतः, ३ त्वष्टा, ४ अग्निः, ५ इन्द्रः, ६ मित्रावरुणौ, ७-१० द्रविणोदाः, ११ अश्विनौ, १२ अग्निः । गायत्री ।

**इन्द्र सोमं पिब ऋतुना त्वा विशन्त्विन्दवः । मत्सरासस्तदोकसः ।। १ ।।**

इन्द्र । सोर्मम् । पिर्ब । ऋतुर्ना । आ । त्वा । विशन्तु । इंदवः ।। मत्सरासः । तत्ऽओकसः ।।

ऋग्भाष्यम्

**ऋतुर्मार्गस्तु नेतृत्वान्नेष्टाग्निर्हरिरेव वा ।**
**ईष्टेन कश्चिदस्येति ग्रा नद्यश्च समीरिताः ।**
**गतिशीलत्वतो ग्रास्ता ज्ञातृनेतृत्वतो हरिः ।**
**गमनान्नयनाद्वा ग्रा ऋतुपात्रमृतुस्तथा ।**
**सोमास्तदोकसः प्रोक्ता ऋतुपात्रस्थिता यतः ।**
**पत्नीनेतृत्वतो नेष्टा नेष्टर्त्विक्सम्प्रकीर्तितः ।**
**ज्ञापयन्ति स्वलिङ्गानीत्यृतवः षट्प्रकीर्तिताः ।**
**पावनाच्चैव पोतारो मरुतः पोतृदेवताः ।**
**अग्निस्तु देवता नेष्टुस्त्वष्टेन्द्रो विष्णुरेव वा ।। २ ।।**

**ऋग्भाष्यटीका– इन्द्रसोमम्** । द्वादशर्चमेतत्सूक्तमृतव्यम् । अवान्तरदेवताभेदश्च तत्र तत्र द्रष्टव्यः । अस्मिन्नृतुशब्दो बहुः श्रूयते । तस्य तावत्सामान्यतोऽर्थमाह– **ऋतुर्मार्ग इति** ।। ऋ गतौ । अस्मात्करणे क्तुप्रत्ययः । मार्गश्चादित्यस्येति विशेष्टुं तुशब्दः । तथाचादित्यमार्गस्थाः कालदेवता ऋतुशब्दा इत्यर्थः । अभियज्ञमित्यस्यामृचि नेष्टः पिबेत्युच्यते । ऋत्विग्विशेषस्य च नेष्टुः सोमपानप्रार्थनं न सङ्गतमित्यत आह– **नेतृत्वादिति** ।। नयतेः षुगिति नयतेस्तृन् षुगागमश्च । ईष्टे न कश्चिदस्येत्यतश्च नेष्टा हरिः । न विद्यते ईष्टा ईशिता यस्यासौ नेष्टेत्यर्थः । तस्यामेवर्चि ग्राशब्दं व्याचष्टे– **ग्रा इति** ।। चशब्दाद्धरिश्च । तत्कथमित्यत आह– **गतीति** ।। गमेस्ताच्छील्येन इतिप्रत्ययो डिच्च । ज्ञातृणां नेतृत्वतः ज्ञातृत्वतो नेतृत्वतश्चेति वा गमेर्नयतेश्च डः । अनेनैव गमनान्नयनाद्वा ग्रा इत्युक्तार्थम् । स्त्रीलिङ्गं बहुवचनं च हरौ व्याख्यातमेव । ऋतुशब्देन यदि देवताः स्वीक्रियन्ते तर्हि मत्सरासस्तदोकस इत्यनुपपन्नं स्यात् । तदिति परामर्शस्य विषयाभावादित्यत आह– **ऋतुपात्रमिति** ।। सत्यमृतुशब्देन देवतोच्यते । किं तूपलक्षणया तत्र तद्देवतापात्रमपि गृह्यते । ततश्च किमित्यत आह– **तथेति** ।। तथा तथा सति ऋतुशब्देन ऋतुपात्रग्रहणे सति यत्सोमास्तदोकसः प्रोक्तास्तद्युक्तमेव । कथमित्यत आह– **ऋतुपात्रेति** ।। नेष्टाऽग्निरिति नेष्टृदेवतात्वाभिप्रायेणाप्युक्तम् । तथाच वक्ष्यति । तत्र नेष्टाऽपि

कस्मान्नेष्टोच्यत इत्यत आह– **पत्नीति** ।। अनेन ग्नाशब्दस्य स्त्रीवाचित्वव्याख्यानमपि निरस्तं भवति । स्त्रीनामसु पठितत्वेऽपि ग्नावो नेष्टरित्यनर्थान्तरत्वप्रसङ्गात् । ऋतुशब्दो मार्गवाची तत्रत्या देवता लक्षणया तच्छब्दा इत्युक्तम् । इदानीमृतुशब्दं देवतास्वेव निर्वक्ति– **ज्ञापयन्तीति** ।। अनेन धातुरन्तर्णीतण्यर्थ इत्युक्तं भवति । यद्वा करण एव प्रत्ययो ज्ञापयन्तीति तु तात्पर्यार्थः । स्वलिङ्गानि कुसुमोद्भवादीनि । अथवा । पूर्वमृतुशब्दो मार्ग एव निरुक्तः इदानीं पुनर्ऋतुदेवतास्विति भेदः । मरुतः पिबतेत्यत्र मारुतेन पात्रेणेति वक्तव्यं पोत्रादिति कथमुच्यते । मैवम् । पोतृशब्देन मरुतां विवक्षितत्वात् तदीयस्य पात्रस्य पोत्रशब्दार्थत्वादित्याशयेनाह– **पावनादिति** ।। पोतृदेवताः अतश्च पोतारः । नेष्टृशब्दस्याग्नाविष्ण्वोः प्रवृत्तौ कारणमुक्तं कारणान्तरं च वदन्नभिधेयान्तरमप्याह– **अग्निस्त्विति** ।।

ततश्चायमर्थः ।। **इन्द्रसोमम्** । हे **इन्द्र** **ऋतुना** मार्गेणागत्य **ऋतुना** पात्रेण **ऋतुना** ऋतुदेवतया सह सोमं पिब । **तदोकसः** तदृतुपात्रमोको येषां ते ऋतुपात्रस्थिता इति यावत् । **मत्सरासः इन्दवः** सोमाः **त्वामाविशन्तु** त्वदुदरस्था भवन्तु ।। १ ।।

**मन्त्रार्थमञ्जरी–** अथ 'इन्द्र सोमम्' इति पञ्चदशं द्वादशर्चं वर्गद्वयात्मकमृतव्यं (ऋतु-देवताकम्) गायत्रीछन्दस्कं सूक्तम् । अवान्तरदेवताभेदश्च तत्र तत्र ज्ञेयः । (तत्र) (आद्या तावदिन्द्रदेवतकापि) (हे) इन्द्र । ऋतुना, गतिहेतुत्वनिमित्तेन ऋतुशब्दित मार्गेण, गत्येति यावत् । ऋतुना, पुष्पोद्भवादिस्वलिङ्गावगतिहेतुत्वहेतुना ऋतुनामकऋतुदेवतया सह । ऋतुना, लक्षणया ऋतुसम्बन्धिपात्रेण । सोमम् पिब, इत्यृतुपदस्यार्थत्रयम्, 'ऋ गतौ' इत्यतः करणे क्तुप्रत्ययः । तदोकसः, तदृतुपात्रमोको येषां ते तदोकसः ऋतुपात्रस्थाः । मत्सरासः, प्राग्वत् इंदवः । त्वा आ विशन्तु, त्वदुदरस्था भवन्तु ।। १ ।।

**स्कन्द–** 'ऋतुदैवतम्' । सर्वत्र चतुर्देवता । वक्ष्यमाणा ऋतुसहिता देवताः, देवता न केवलाः । तत्राद्या तावदैन्द्री । हे **इन्द्र! सोमं पिब ऋतुना** पीयमानाश्च **आ त्वा विशन्तु** त्वामाविशन्तु त्वदुदरं प्रविशन्त्वित्यर्थः । के ? **इन्दवः** सोमाः । कीदृशाः ? **मत्सरासः** तृप्तिकराः **तदोकसः** तन्निवासाः सर्वदा त्वदुदरस्थायिन इत्यर्थः ।। १ ।।

**वेङ्कटमाधव–** ऋतव्यं सूक्तम् (तु.बृदे. ३,३४) । इन्द्रए! त्वं ऋतुना सह पिब सोमम् ।

आख्यातानानुदात्तत्वे कारणमुक्तम् । आ विशन्तु त्वां दीप्ताः सोमाः तदेकनिलयास्तस्मिन्नेवेन्द्रे तिष्टन्तः ।। १ ।।

**मुद्गल–** 'इन्द्र सोमम्' इति द्वादशर्चं चतुर्थं सूक्तम् । मेधातिथिः ऋषिः गायत्रम् । यद्यप्येतत्सूक्तम् ऋतुदेवताकं तथापि प्रत्यृचं इन्द्रादिदेवतान्तराणि मिलितानि । तथा च अनुक्रम्यते । 'इन्द्र सोमममृतव्यं तत्रैन्द्री मारुती त्वाष्ट्र्याग्नेय्यैन्द्री मैत्रावरुणी चतस्रो द्रविणोदस आश्विन्याग्नेय्यृतुदवताः सर्वत्र' (ऋ,अनु.१,१५) इति ।

हे **इन्द्र! ऋतुना** सह **सोमं पिब** । **इन्दवः** पीयमानाः सोमाः । **त्वा** त्वाम् । **आ विशन्तु** । कीदृशाः ? **मत्सरासः** तृप्तिकराः **तदोकसः** तन्निवासाः । सर्वदा त्वदुदरस्थायिन इत्यर्थः ।। १ ।।

**सायण–**'इन्द्र सोमम्' इत्यादिकस्य द्वादशर्चस्य चतुर्थस्य सूक्तस्य ऋषिच्छन्दसी पूर्ववत् । यद्यप्येतत्सूक्तं कृत्स्नं ऋतुदेवताकं तथापि प्रत्यृचं इन्द्रादिदेवतान्तराणि मिलितानि । तथा च अनुक्रम्यते– 'इन्द्र सोमममृतव्यं तत्रैन्द्री मारुती त्वाष्ट्र्याग्नेय्यैन्द्री मैत्रावरुणी चतस्रो द्रविणोदस आश्विन्याग्नेय्यृतुदेवताः सर्वत्र' इति । विनियोगस्तु स्मार्तो द्रष्टव्यः ।

हे **इन्द्र ऋतुना** सह **सोमं पिब** । **इन्दवः** पीयमानाः सोमाः **त्वा** त्वां **आविशन्तु** । कीदृशाः ? **मत्सरासः** तृप्तिकराः **तदोकसः** तन्निवासाः । सर्वदा त्वदुदरस्थायिन इत्यर्थः ।

इन्द्र । षाष्ठिकम् आमन्त्रिताद्युदात्तत्वम् । सोमम् । 'अर्तिस्तुसु' (उ.सू.१,१३७) इत्यादिना मन् । नित्त्वादाद्युदात्तः । पिब 'पिबा मित्रस्य' (ऋ.सं.१,१४,१०) इत्यत्रोक्तम् । अस्य आ त्वा विशन्तु इत्युत्तरवाक्यगताख्यातार्थेन सह समुच्चयार्थश्चशब्दो लुप्तः । अतः 'चादिलोपे विभाषा' (पा.सू८,१,६३) इतीयं प्रथमा तिङ्विभक्तिर्न निहन्यते । विशन्त्विति चलोपसाम्येऽपि द्वितीयत्वात् निहन्यते एव । संहितायां 'आद्गुणः' इति प्राप्तस्य गुणस्य 'ऋत्यकः' (पा.सू.६,१,१२८) इति शाकल्यमते प्रकृतिभावादभावः । इन्दवः । 'प्र वो भ्रियन्ते' (ऋ.सं. १,१४,४) इत्यत्रोक्तम् । मत्सरासः । तत्रैवोक्तम् । 'आज्जसेरसुक्' (पा.सू.७,१,५०) इति असुक् । तदोकसः । तदेव ओकः स्थानं येषां ते तथोक्ताः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ।।

**सिद्धाञ्जनम्–** चतुर्थेऽनुवाके काण्वस्य मेधातिथेश्चतुर्थं द्वादशर्चं सूक्तं गायत्रम् । ऋतुसहिता

इन्द्राद्या देवताः प्रतिपादिता इति सूक्तमिदं ऋतुदेवताकं ऋतव्यं इत्याहुः । यथा लोके अहोरात्रमासर्त्वादिभिः भिन्नभिन्नक्रियाफललक्षितकालविभागैः महीरुहादिमानवान्तानां तत्तद्योग्यपरिपाकविशेषाः सम्पाद्यमानाः संलक्ष्यन्ते, तथा अन्तर्यजनेऽपि देवतानामिन्द्राद्यानां तत्तद्युक्तकालविध्यनुसारेण सम्पाद्यमाना विलासविशेषाः यजमाने पूर्णाहुतिपरे सम्पूर्णऋतधामकामे, अत एव तदङ्गभूतबहुदैवतयोगनिष्ठे तत्तद्युक्तान् परिपाकान् विदधते । ऋतुशब्देनायमर्थो लक्षितः, यद्देवताभिः अस्मदन्तर्निरुह्यमानानां कर्मणां कालविधिः दैवतरहस्यभाक् यजमानपरिपाकदशानुसारीति, तस्मात् मन्त्रेषु व्याख्यास्यमानेषु 'ऋतुना' सह इत्यत्र दिव्यसमयानुसारेण इति ग्राह्यम् । विवरणमन्तरेण ऋतुशब्दः प्रयुज्यते मा भून्मन्त्रशोभाहानिरिति ।

तत्र प्रथमामृचमाह– हे **इन्द्र ऋतुना** उक्तलक्षणेन सह **सोमं पिब** । **इन्दवः** सोमाः **त्वा** त्वां **आविशन्तु** सर्वतः प्रविशन्तु । कीदृशास्ते? **मत्सरासः** तृप्तिकराः **तदोकसः** तन्निवासाः (तच्छब्दवाच्य इन्द्रस्य कुक्षिः ओको येषां ते)। एवं च 'यः कुक्षिः सोमपातमः' (१-८-७) इति सङ्गच्छते ।। १ ।।

### ऋक्संहिता पदपाठसहिता

**मरुतः पिबत ऋतुना पोत्राद्यज्ञं पुनीतन । यूयं हिष्ठा सुदानवः ।। २ ।।**
**मरुतः । पिबत । ऋतुना । पोत्रात् । यज्ञम् । पुनीतन । यूयम् । हि । स्थ । सुऽदानवः ।।**

**ऋग्भाष्यटीका– मरुतः** ।। हे मरुतः ऋतुना पूर्ववत् । **पोत्रात्** पोतॄणां भवतां सम्बन्धिनः । पात्राच्च तृतीयार्थे पञ्चमी पिबत सोममिति शेषः । पीत्वाच **यज्ञं पुनीतन** पावयत । ततश्च **यूयं हि** यस्मात् **सुदानवः** सुदानशीलाः **स्थ** तस्मादस्मभ्यमभिमतं दत्तेति ।। २ ।।

**मन्त्रार्थमञ्जरी–** (हे) मरुतः । ऋतुना, प्राग्वत् पोत्रात्, पावनहेतुना पोतृदैवतात्वहेतुना च पोतृनामकानां भवतां सम्बन्धिनः पात्रात्, तृतीयार्थे पञ्चमी, पोतृपात्रेण । पिबत । (सोमम्) इति शेषः । पीत्वा च यज्ञम् । पुनीतन, पावयत, 'त' इत्यस्य 'तप्तनप्तनथनाश्च' इति तनादेशः ।। ततश्च यूयम् । हि, यस्मात् । सुदानवः, शोभनदानशीलाः । स्थ, ददातेः नुः, तस्मादस्मभ्यमभिमतं दत्तेत्यभिप्रायः ।। 'हि ष्ठा' इति सुषामादित्वात्षत्वम् ।। २ ।।

**स्कन्द–** 'ऋङ् मारुती' । ऋग् द्वितीया मरुद्देवता । हे **मरुतः! पिबत ऋतुना** सह ।

आख्याताननुदात्तत्वे कारणमुक्तम् । आ विशन्तु त्वां दीप्ताः सोमाः तदेकनिलयास्तस्मिन्नेवेन्द्रे तिष्ठन्तः ।। १ ।।

**मुद्गल–** 'इन्द्र सोमम्' इति द्वादशर्चं चतुर्थं सूक्तम् । मेधातिथिः ऋषिः गायत्रम् । यद्यप्येतत्सूक्तम् ऋतुदेवताकं तथापि प्रत्यृचं इन्द्रादिदेवतान्तराणि मिलितानि । तथा च अनुक्रम्यते । 'इन्द्र सोमममृतव्यं तत्रैन्द्री मारुती त्वाष्ट्र्याग्नेय्यैन्द्री मैत्रावरुणी चतस्रो द्रविणोदस आश्विन्याग्नेय्यृतुदेवताः सर्वत्र' (ऋ,अनु.१,१५) इति ।

हे **इन्द्र! ऋतुना** सह **सोमं पिब** । **इन्दवः** पीयमानाः सोमाः । **त्वा** त्वाम् । **आ विशन्तु** । कीदृशाः ? **मत्सरासः** तृप्तिकराः **तदोकसः** तन्निवासाः । सर्वदा त्वदुदरस्थायिन इत्यर्थः ।। १ ।।

**सायण–**'इन्द्र सोमम्' इत्यादिकस्य द्वादशर्चस्य चतुर्थस्य सूक्तस्य ऋषिच्छन्दसी पूर्ववत् । यद्यप्येतत्सूक्तं कृत्स्नं ऋतुदेवताकं तथापि प्रत्यृचं इन्द्रादिदेवतान्तराणि मिलितानि । तथा च अनुक्रम्यते– 'इन्द्र सोमममृतव्यं तत्रैन्द्री मारुती त्वाष्ट्र्याग्नेय्यैन्द्री मैत्रावरुणी चतस्रो द्रविणोदस आश्विन्याग्नेय्यृतुदेवताः सर्वत्र' इति । विनियोगस्तु स्मार्तो द्रष्टव्यः ।

हे **इन्द्र ऋतुना** सह **सोमं पिब** । **इन्दवः** पीयमानाः सोमाः **त्वा** त्वां **आविशन्तु** । कीदृशाः ? **मत्सरासः** तृप्तिकराः **तदोकसः** तन्निवासाः । सर्वदा त्वदुदरस्थायिन इत्यर्थः ।

इन्द्र । षाष्ठिकम् आमन्त्रिताद्युदात्तत्वम् । सोमम् । 'अर्तिस्तुसु' (उ.सू.१,१३७) इत्यादिना मन् । नित्त्वादाद्युदात्तः । पिब 'पिबा मित्रस्य' (ऋ.सं.१,१४,१०) इत्यत्रोक्तम् । अस्य आ त्वा विशन्तु इत्युत्तरवाक्यगताख्यातार्थेन सह समुच्चयार्थश्चशब्दो लुप्तः । अतः 'चादिलोपे विभाषा' (पा.सू८,१,६३) इतीयं प्रथमा तिङ्विभक्तिर्न निहन्यते । विशन्त्विति चलोपसाम्येऽपि द्वितीयत्वात् निहन्यते एव । संहितायां 'आद्गुणः' इति प्राप्तस्य गुणस्य 'ऋत्यकः' (पा.सू.६,१,१२८) इति शाकल्यमते प्रकृतिभावादभावः । इन्दवः । 'प्र वो भ्रियन्ते' (ऋ.सं. १,१४,४) इत्यत्रोक्तम् । मत्सरासः । तत्रैवोक्तम् । 'आज्जसेरसुक्' (पा.सू.७,१,५०) इति असुक् । तदोकसः । तदेव ओकः स्थानं येषां ते तथोक्ताः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ।।

**सिद्धाञ्जनम्–** चतुर्थेऽनुवाके काण्वस्य मेधातिथेश्चतुर्थं द्वादशर्चं सूक्तं गायत्रम् । ऋतुसहिता

इन्द्राद्या देवताः प्रतिपादिता इति सूक्तमिदं ऋतुदेवताकं ऋतव्यं इत्याहुः । यथा लोके अहोरात्र-मासर्त्वादिभिः भिन्नभिन्नक्रियाफललक्षितकालविभागैः महीरुहादिमानवान्तानां तत्तद्योग्यपरिपाकविशेषाः सम्पाद्यमानाः संलक्ष्यन्ते, तथा अन्तर्यजनेऽपि देवतानामिन्द्राद्यानां तत्तद्युक्तकालविध्यनुसारेण सम्पाद्यमाना विलासविशेषाः यजमाने पूर्णाहुतिपरे सम्पूर्णऋतधामकामे, अत एव तदङ्गभूतबहुदैवत-योगनिष्ठे तत्तद्युक्तान् परिपाकान् विदधते । ऋतुशब्देनायमर्थो लक्षितः, यद्देवताभिः अस्मदन्तर्निरुह्य-मानानां कर्मणां कालविधिः दैवतरहस्यभाक् यजमानपरिपाकदशानुसारीति, तस्मात् मन्त्रेषु व्याख्यास्यमानेषु 'ऋतुना' सह इत्यत्र दिव्यसमयानुसारेण इति ग्राह्यम् । विवरणमन्तरेण ऋतुशब्दः प्रयुज्यते मा भून्मन्त्रशोभाहानिरिति ।

तत्र प्रथमामृचमाह– हे **इन्द्र ऋतुना** उक्तलक्षणेन सह **सोमं पिब** । **इन्दवः** सोमाः **त्वा** त्वां **आविशन्तु** सर्वतः प्रविशन्तु । कीदृशास्ते? **मत्सरासः** तृप्तिकराः **तदोकसः** तन्निवासाः (तच्छब्दवाच्य इन्द्रस्य कुक्षिः ओको येषां ते)। एवं च 'यः कुक्षिः सोमपातमः' (१-८-७) इति सङ्गच्छते ।। १ ।।

### ऋक्संहिता पदपाठसहिता

**मरुतः पिबत ऋतुना पोत्राद्यज्ञं पुनीतन । यूयं हिष्ठा सुदानवः ।। २ ।।**

**मरुतः । पिबत । ऋतुना । पोत्रात् । यज्ञम् । पुनीतन । यूयम् । हि । स्थ । सुऽदानवः ।।**

**ऋग्भाष्यटीका– मरुतः** ।। हे मरुतः ऋतुना पूर्ववत् । **पोत्रात्** पोतॄणां भवतां सम्बन्धिनः । पात्राच्च तृतीयार्थे पञ्चमी पिबत सोममिति शेषः । पीत्वाच **यज्ञं पुनीतन** पावयत । ततश्च **यूयं हि** यस्मात् **सुदानवः** सुदानशीलाः **स्थ** तस्मादस्मभ्यमभिमतं दत्तेति ।। २ ।।

**मन्त्रार्थमञ्जरी–** (हे) मरुतः । ऋतुना, प्राग्वत् पोत्रात्, पावनहेतुना पोतृदैवतात्वहेतुना च पोतृनामकानां भवतां सम्बन्धिनः पात्रात्, तृतीयार्थे पञ्चमी, पोतृपात्रेण । पिबत । (सोमम्) इति शेषः । पीत्वा च यज्ञम् । पुनीतन, पावयत, 'त' इत्यस्य 'तप्तनप्तनथनाश्च' इति तनादेशः ।। ततश्च यूयम् । हि, यस्मात् । सुदानवः, शोभनदानशीलाः । स्थ, ददातेः नुः, तस्मादस्मभ्यमभिमतं दत्तेत्यभिप्रायः ।। 'हि ष्ठा' इति सुषामादित्वात्षत्वम् ।। २ ।।

**स्कन्द–** 'ऋङ् मारुती' । ऋग् द्वितीया मरुद्देवता । हे **मरुतः! पिबत ऋतुना** सह ।

किम् ? सामर्थ्यात् सोमम् । कुतः । **पोत्रात्** पोतुः स्वभूतात् पात्रात् । पीत्वा **यज्ञं** अस्मदीयं **पुनीतन** शोधयत व्यपगतदोषं कुरुतेत्यर्थः । कस्मात् ? **यूयं हि ष्ठा सुदानवः** हिशब्दो यस्मादर्थे । दानुशब्दो दानवचनो दातृवचनो वा । यस्माद् यूयं शोभनदाना शोभना वा दातारः । तत्र च सम्बोधनासम्भवात् सुदानव इत्यर्थातिरिक्त एव प्रातिपदिकार्थे प्रत्यये नाऽऽमन्त्रितप्रथमा । कथम् ? प्रतिपाद्यार्थप्रत्यभिमुखीकरणं हि सम्बोधनमुच्यते । तद्यत्र तदर्थं प्रसिद्धोऽर्थान्तरं च प्रतिपाद्यं तत्र सम्भवति । यथा अत्रैव मरुतां मरुत्वम् । यथा वा लोके राजन्! इदं च कुरु इति । यत्र तु तदर्थमेव स्वार्थं वा प्रतिपाद्यते 'राजा भव । यस्माद् राजाऽसि अतो युध्यस्व' । 'त्वं हि रत्नधा असि' इति न तत्र सम्बोधनस्य सम्भवः । आमन्त्रितविभक्तिश्रुतिसामर्थ्याद् यूयं हि ष्ठेत्यनेन सुदानव इत्यस्य सम्बन्धासम्भवात् सोमस्य पातारो यज्ञस्य पवितारः स्थ हे सुदानवः । तस्मात् पिबत सोमं यज्ञश्च पुनीतनेति ।। २ ।।

**वेङ्कटमाधव–** मरुतः! पिबत ऋतुना सह पोतुः प्रदीयमानं सोमम् । यज्ञश्च शोधयत । यूयं हि भवथ सुदानाः ।। २ ।।

**मुद्गल–** हे **मरुतः! ऋतुना** सह **पोत्रात्** पोतृनामकस्य ऋत्विज पात्रात् सोमं **पिबत** । ततोऽस्मदीयं **यज्ञं पुनीतन** शोधयत । हे **सुदानवः** शोभनदातारो मरुतः **हि** यस्मात् **यूयं स्थ** युष्माकं शोधयितृत्वं प्रसिद्धं तस्मात् शोधयतेत्यर्थः ।। २ ।।

**सायण–** हे **मरुतः ऋतुना** सह **पोत्रात्** पोतृनामकस्य ऋत्विजः पात्रात् सोमं **पिबत** । ततोऽस्मदीयं **यज्ञं पुनीतन** शोधयत । हे **सुदानवः** शोभनदातारो मरुतः **हि** यस्मात् **यूयं स्थ** युष्माकं शोधयितृत्वं प्रसिद्धं तस्मात् शोधयतेत्यर्थः ।

पिबत । अत्र तिङोऽदुपदेशात् शपः परत्वात् लसार्वधातुकानुदात्तत्वम् । धातुस्वरः । पूर्वामन्त्रितस्य अविद्यमानवत्त्वेन पदादपरत्वात् निघाताभावः । पूर्ववत् प्रकृतिभावः । पोत्रात् । पोतुः सम्बन्धि पात्रं पोत्रम् । 'तस्येदम्' (पा.सू.४,३,१२०) इति अण् । 'तद्धितेष्वचामादेः' (पा.सू.७,२,११७) इति प्राप्ता वृद्धिः 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' (परिभा.३५) इति न भवति । ननु एवमन्त्यस्य ऋकारस्य 'अचो ञ्णिति' (पा.सू.७,२,११५) इति वृद्धिः प्राप्नोति । त्वाष्ट्रो जागत इत्यत्र हि 'विप्रतिषेधे परं कार्यम्' (पा.सू.१,४,२) इति परया

आदिवृद्ध्यान्त्योपधालक्षणा वृद्धिर्बाध्यते इत्युक्तम् । इह तु परस्या आदिवृद्धेश्छान्दसत्त्वेन निवृत्तत्वात् अन्त्यवृद्धिः प्राप्नोत्येवेति । एवं तर्हि अत्रापि आदिवृद्धिः औकारः क्रियताम् । तस्य तु छान्दसः ओकारो भविष्यति । पुनीतन । 'पूञ् पवने' । लोट् । 'लोटो लङ्वत्' (पा.सू.३,४,८५) इति लङ्वद्भावात् तस्य 'तस्थस्थमिपाम्' (पा.सू.३,४,१०१) इति तादेशः । 'क्र्यादिभ्यः श्ना' । 'ई हल्यघोः' (पा.सू.६,४,११३) इति ईकारः । 'तप्तनप्तनथनाश्च' (पा.सू.७,१,४५) इति तनादेशः । 'प्वादीनां ह्रस्वः' (पा.सू.७,३,८०) इति ह्रस्वः । प्रत्ययद्वयस्यापि 'सार्वधातुकमपित्' (पा.सू.१,२,४) इति ङित्त्वात् स्वस्वपूर्वयोः इकोर्गुणाभावः । यूयम् । युष्मदः परस्य जसः 'ङेप्रथमयोरम्' (पा.सू.७,१,२८) इति अमादेशः । 'न विभक्तौ तुस्माः' (पा.सू.१,३,४) इति मकारस्य इत्संज्ञाप्रतिषेधः । 'यूयवयौ जसि' (पा.सू.७,२,९३) इति मपर्यन्तस्य यूयादेशः । 'शेषे लोपः' । अत्र यूयादेशात् प्रागेव अन्तरङ्गत्वात् प्रातिपदिकस्यान्तोदात्तत्वम् । शेषनिघातः । ततो यूयादेशः 'स्थानेऽन्तरतमः' (पा.सू.१,१,५०) इति सर्वानुदात्तः । तत्र 'शेषे लोपः' (पा.सू.७,२,९०) अन्त्यलोप इति पक्षे पूर्वसवर्णदीर्घत्वं बाधित्वा योऽयम् 'अमि पूर्वः' (पा.सू.६,१,१०७) इति प्रातिपदिकान्तेनोदात्तेन सह अनुदात्तस्य सुप एकादेशः सः 'एकादेश उदात्तेनोदात्तः' इत्युदात्तः । टिलोपपक्षे तु उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम् । स्थ । 'अस भुवि' । लटो मध्यमबहुवचनं थ । 'अदिप्रभृतिभ्यः शपः' शपो लुक् । 'श्नसोरल्लोपः' इति अकारलोपः । व्यत्ययेन षत्वम् । 'हि च' इति निषेधात् 'तिङ्ङतिङः' इति निघातो न भवति । संहितायाम् 'अन्येषामपि दृश्यते' इति दीर्घत्वम् । अत्र हे सुदानवो यूयं हि स्थ इति विवक्षितम् । सुदानवः । 'दाभाभ्यां नुः' (उ.सू.३,३१२) । सोः प्रादिसमासः । आमन्त्रितनिघातः । अत्र यूयमित्युद्दिश्य सुदानवः स्थ इति न विधीयते येन अनामन्त्रितत्वात् निघातो न स्यात् । किन्तु सुदानव इति सिद्धवद्दातृत्वेन सम्बोध्य तेषु तेषु मारुतसूक्तेषु मरुतां प्रसिद्धात् प्रभावातिशयात् यूयं स्थ इति युष्मच्छब्देन प्रतिनिर्दिश्य पुनीतन इति प्रार्थने पवने तेषां हेतुत्वं हिशब्देनोच्यते ।। २ ।।

**सिद्धाञ्जनम्**– द्वितीयामृचमाह– **हे सुदानवः** शोभनदानाः हे **मरुतः ऋतुना** युष्मदीययोग्यकालानुसारेण **पिबत** सोममिति शेषः । कुतः ? **पोत्रात्** पोतुः पात्रात् । पुनातेः पोता, तस्येदमित्यण् । वृद्ध्यभावो वैकल्पिकः छन्दसि । **यज्ञं** इमं **पुनीतन** पुनीत, शोधयत । छन्दसि तनादेशः । **हि** यस्मात् **यूयं स्थ** भवथ पवने प्रसिद्धा इति शेषः ।

सुदानवः– दानुशब्दः दानवचनो दातृवचनो वा, प्रादिसमासः । पोतृनामक ऋत्विक् अन्तर्यजने पविता शोधको देवताविशेषः । ऋत्विजः सर्वेऽपि देवा एव युक्ताः । प्रथममेवोक्तमग्निमधिकृत्य 'यज्ञस्य देवमृत्विजं' इति । पवितुस्तस्य पात्रात्सोमग्रहणाश्रयभूतात् पीता मरुतोऽपि पवितारः प्रसिद्धाः यज्ञं पूतं निर्दोषं विधातुं प्रभवन्ति । तथा तत्कर्तृकपारिशुद्ध्यदाने शोभनत्वमत्यन्तस्पृहणीयं 'सुदानवः' ।। २ ।।

## ऋक्संहिता पदपाठसहिता

**अभियज्ञं गृणीहि नो ग्रावो नेष्टः पिब ऋतुना । त्वं हि रत्नधा असि ।। ३ ।।**

**अभि । यज्ञम् । गृणीहि । नः । ग्रावः । नेष्टरिति । पिब । ऋतुना । त्वम् । हि । रत्नऽधाः । असि ।।**

**ऋग्भाष्यटीका– अभियज्ञम् ।** हे **नेष्टः** विष्णो इन्द्र अग्ने त्वष्टुर्वा ग्रा नद्यस्ता अस्य सन्तीति ग्रावान् तस्य सम्बुद्धिः **ग्रावः** । नदीदेवताभिः सहित । ऋतुना पूर्ववत् । **पिब** । सोमं पीत्वाच **नो यज्ञमभिगृणीहि** साधुरयमिति । **त्वं हि** यस्मात् **रत्नधाः** रतिधारकोऽसि तस्मादस्मभ्यं रतिं देहीति भावः ।। ३ ।।

**मन्त्रार्थमञ्जरी–** (तृतीयस्यां विष्णुरिन्द्रोऽग्निस्त्वष्टा वापि देवता) (हे) नेष्टः, नेतृत्वहेतुना नेष्टः ज्ञातृत्वहेतुना च नेष्टृपदोक्त विष्णो, इन्द्र, अग्ने, त्वष्टर्वा, 'नयतेः षुक्च' इति तृन्षुगागमश्च, 'पुगन्त' इति गुणः, ष्टुत्वम् । ग्रावः, गमनशीलत्वाद् ग्रा नद्यः, गमेः नो डिच्च, ग्रा अस्य सन्तीति ग्रावान्, तस्य सम्बुद्धिर्ग्रावन्, 'मतुवसो रुः सम्बुद्धौ छन्दसि' इति रुः, ग्रावः, नदीदेवीभिः सहित । ऋतुना, प्राग्वत् । पिब (सोमम्) पीत्वा च नः यज्ञम् । अभि गृणीहि, 'साधुरयम्' इति प्रशंसावाक्यं ब्रूहि । त्वम् । हि, यस्मात् । रत्नधाः, रतिधारकः । असि, 'रत्नऽधातमम्' इत्यत्र व्युत्पादितमेवैतत्पदम्, तस्मादस्मभ्यं रतिं देहीति भावः । विष्णौ तु न विद्यते ईष्टे ईशिता यस्यासौ 'नेष्टा' इत्येवं व्युत्पत्त्यन्तरं च ध्येयम् ।। ३ ।।

**स्कन्द–** 'तथा त्वाष्ट्री' । तृतीया ऋक् त्वष्टृदेवता । **अभि गृणीहि** अहो शोभन इत्येवमभिष्टुहि । कम् ? **यज्ञं** अस्माकम् । अथवा यज्ञं इति सप्तम्यर्थे द्वितीया । होतृकर्तृत्वेन अभिष्टुहि यज्ञे अस्माकम् । अस्मान् स्तुवतो यज्ञे प्रयुङ्क्ष्वेत्यर्थः । हे **ग्रावः!** 'ग्राः' (या.३,२१)

इति स्त्रीनाम । पत्नीभिः स्त्रीभिः तद्वन्! नेष्टः! देवसत्रे किल त्वष्टा नेष्टाऽऽसीत् । तदपेक्षमिदं नेष्टरिति त्वष्टुः सम्बोधनम् । **पिब च** ऋतुना सह सोमम् । कस्मात् ? **त्वं हि रत्नधाः** धनानां दाता असि । यस्मात् पीत्वा च धनमस्मभ्यं दाताऽसीत्यर्थः ।। ३ ।।

**वेङ्कटमाधव–** कुर्वित्यनुज्ञाऽभिगरणम् । अनुमन्यस्व अस्माकं यज्ञं देव पत्नीवन् ! नेष्ठः ! पिब च सोमं ऋतुना । त्वं असि रत्नानां दाता । त्वष्टा नेष्टोक्त इति ।। ३ ।।

**मुद्गल–** ग्नाशब्दः स्त्रीवाची । ग्ना अस्य सन्तीति ग्नावान् । नेष्टृशब्दोऽत्र त्वष्टारं देवमाह । कस्मिंश्चिद् देवसत्रे नेष्टृत्वेन त्वष्टुर्वृतत्वात् । हे ग्नावः पत्नीयुक्त! नेष्टः! त्वष्टः! नः अस्मदीयम् यज्ञम् अभि गृणीहि अभितो देवानां समीपे स्तुहि । ऋतुना सह त्वं सोमम् पिब । हि यस्मात् त्वम् रत्नधाः असि रत्नानां दाता भवति । तस्मात् सोमं पातुमर्हसीत्यर्थः ।। ३ ।।

**सायण–** ग्नाशब्दः स्त्रीवाची । तथा च यास्क आह– 'मेना ग्ना इति स्त्रीणां मेना मानयन्त्येना ग्ना गच्छन्त्येनाः' (निरु.३,२१) इति । ग्ना अस्य सन्तीति ग्नावान् । नेष्टृशब्दोऽत्र त्वष्टारं देवमाह; कस्मिंश्चित् देवसत्रे नेष्टृत्वेन त्वष्टुर्वृत्तत्वात् । हे **ग्नावः** पत्नीयुक्त **नेष्टः** त्वष्टः **नः** अस्मदीयं **यज्ञं अभि गृणीहि** अभितो देवानां समीपे स्तुहि । **ऋतुना** सह त्वं सोमं **पिब** । **हि** यस्मात् **त्वं रत्नधाः असि** रत्नानां दाताऽसि दाता भवसि तस्मात् सोमं पातुमर्हसीत्यर्तः ।

अभि । 'उपसर्गाश्चाभिवर्जम्' (फि.सू.८१) इति पर्युदासात् उभेः अन्तोदात्तत्वम् । गृणीहि । 'गॄ शब्दे' । लोटि सिपो हिः । 'क्र्यादिभ्यः श्ना' । हेर्ङित्त्वात् 'ई हल्यघोः' इति ईत्वम् । श्नाप्रत्ययस्य ङित्वाद्गुणाभावः । 'प्वादीनां ह्रस्वः' । 'तिङ्ङतिङः' इति निघातः । ग्ना अस्य सन्तीति मतुप् । व्यत्ययेन वत्वम् । सम्बुद्धौ 'मतुवसो रुः' इति रुत्वम् । विसर्गः । पादादित्वेन आमन्त्रितनिघाताभावात् षाष्ठिकं आमन्त्रिताद्युदात्तत्वम् । ग्नाव इत्यस्य विशेषणतया विशेषवचनत्वात् 'नामन्त्रिते समानाधिकरणे' इति निषेधाभावात् अविद्यमानवत्त्वेन उत्तरस्य नेष्टृशब्दस्य षाष्ठिकमाद्युदात्तत्वम् । पिब । शपः पित्त्वात् धातुस्वरः । पूर्वयोरामन्त्रितयोरविद्यमानवत्त्वेन निघाताभावः । रत्नानि दधातीति रत्नधाः । 'क्विप् च' इति क्विप् । धातुस्वरः । समासे कृदुत्तरपदप्रकृतिस्वरत्वेन स एव शिष्यते । असि । सिपः पित्त्वात् धातुस्वरः । 'तिङ्ङतिङः' इति निघातो न भवति 'हि च' इति प्रतिषेधात् ।। ३ ।।

**सिद्धाञ्जनम्–** तृतीयामृचमाह– हे **ग्रावः** ग्राः स्त्रियः अस्य सन्तीति ग्रावान् तस्य सम्बोधनं ग्रावन्, व्यत्ययेन वः छान्दसः । पत्नीसमेत, हे **नेष्टः** 'नेष्टा' ऋत्विग्भूतो देवताविशेषः, णिजिर् शौचपोषणयोरित्यस्मान्निष्पन्नः । यदि पोता यज्ञं शोधयित्वा दोषव्यतिरिक्तं विधत्ते, नेष्टा तं शुचिं शुभं अत एव शोभावहगुणान्वितं करोति अत्र देवशिल्पी त्वष्टा नेष्टरिति आमन्त्रित इत्यामनन्ति । तर्हि शुभत्वापादनरूपः परिष्कारः त्वाष्ट्रकर्मैकदेश इत्यदोषः । उक्तलक्षणं स्वशक्तियुक्तं ऋत्विजं देवमामन्त्र्य ऋषिराह– **नः** अस्माकं **यज्ञं अभिगृणीहि** अभिष्टुहि प्रशंसास्पदं कुरु । **ऋतुना** सह **पिब** सोमम् । **हि** यस्मात् **त्वं रत्नधाः असि** (रजचा व्याख्यातम् ) रत्नीनां धारकोऽसि, तस्मात् रत्यतिशयजनकं सोमं पिब ।। ३ ।।

### ऋक्संहिता पदपाठसहिता

**अग्ने॑ दे॒वाँ इ॒हाव॑ह सा॒दया॒ योनि॑षु त्रि॒षु । परि॑ भूष॒ पिब॑ ऋ॒तुना॑ ।। ४ ।।**

अग्ने॑ दे॒वान् इ॒ह आ व॒ह सा॒दय॑ । योनि॑षु । त्रि॒षु । परि॑ । भू॒ष । पिब॑ । ऋ॒तुना॑ ।।४।।

### ऋग्भाष्यम्

**वेद्युत्तरा सदश्चैव प्राग्वंशो योनयः स्मृताः ।**
**भूष भूषय नो यज्ञम् ............. ।। ४ ।।**

**ऋग्भाष्यटीका– अग्नेदेवान्** । हे **अग्ने देवान् इह** यज्ञे **आवह** । आगतांश्च **त्रिषु** तिसृषु योनिषु स्थानेषु **सादय** उपवेशय । तत्र कास्ता योनय इत्यत आह– **वेद्युत्तरेति** ।। एवशब्देन सवनत्रयं निराचष्टे । स्थानशब्दस्य कालेऽनिरूढत्वात् । भूषेत्येतदन्तर्णीतण्यर्थमिति दर्शयंस्तस्य कर्मापेक्षत्वात्तद्दर्शयति– **भूषेति** ।। देवानामुपवेशनेन नो यज्ञं परिभूषय । पिब ऋतुनेति गतार्थम् ।।

**मन्त्रार्थमञ्जरी–** (चतुर्थ्यामग्निरपि देवता) (हे) अग्ने देवान् । इह, यज्ञे । आ वह । आगताँश्चत्रिषु, तिसृषु । योनिषु, स्थानेषु, उत्तरवेदिसदःप्राग्वंशेषु । सादय, उपवेशय । परिभूष, देवोपवेशनेन नो यज्ञं परिभूषय । 'पिब ऋतुना' इत्युक्तार्थम् ।। ४ ।।

**स्कन्द–** 'आग्नेयी' । चतुर्थी ऋगग्निदेवता । **हे अग्ने! देवान् इह आवह** । आहूय च **सादय** उपवेशय **योनिषु** स्थानेषु त्रिषु सवनाख्येषु । सादयित्वा च **परिभूष** परिपूर्वो भूषतिः परिग्रहे । यथा यागार्थं परिग्रहीतव्यं तथा परिगृहाण यजेत्यर्थः । अथवा भूष अलङ्कार इत्यस्यैतद्रूपम् । परिभूष स्वमण्डलदेवान् । स्वयमपि च **पिब ऋतुना** सह सोमम् ।। ४ ।।

**वेङ्कटमाधव–** अग्ने! देवान् इह आवह । सादय च सवनाख्येषु त्रिषु स्थानेषु । अलङ्कुरु च यज्ञम् । पिब च सोमम् ।। ४ ।।

**मुद्गल–** हे **अग्ने! देवान् इह** अस्मिन् आवह । ततः **योनिषु** स्थानेषु **त्रिषु** सवनेषु **सादय** देवान् उपवेशय । ततस्तान् **परिभूष** अलङ्कुरु । **ऋतुना** सह त्वं सोमम् पिब ।।

**सायण–** हे **अग्ने देवान् इह** अस्मिन् कर्मणि **आवह** । ततः **योनिषु त्रिषु** सवनेषु **सादय** देवानुपवेशय । ततस्तान् **परिभूष** अलङ्कुरु । **ऋतुना** सह त्वं सोमं **पिब** ।

'अग्ने देवान्' इत्ययं पादो गतः । योनिषु । 'यु मिश्रणे' । 'वहिश्रि' (उ.सू.४,४९१) इत्यादिना निप्रत्ययः । नित्त्वादाद्युदात्तः । त्रिषु । 'षट्त्रिचतुर्भ्यो हलादिः' (पा.सू.६,१,१७९) इति विभक्तेरुदात्तत्वम् । 'भूष अलङ्कारे' । 'तिङ्ङतिङः' इति निघातः । पिब ऋतुना । गतौ ।।

**सिद्धाञ्जनम्–** चतुर्थीमृचमाह– हे **अग्ने देवान् इह आवह** । व्याख्यातः पादः । आहूतान् देवान् **सादय** उपवेशय । कुत्र? **त्रिषु योनिषु** स्थानेषु सवनेषु **परिभूष** परितोऽलंकुरु । **ऋतुना** समयानुसारेण **पिब** । इदं सवनानां सदनानां वा त्रयस्य रहस्यं बोद्धव्यम् । अन्नप्राण-मनोमयात्मकशरीरस्य यानि मूलभूतानि व्याहृतित्रयवाच्यपृथिव्यन्तरिक्षद्युलोकस्थानानि भवन्ति । तेषां तत्तद्विशिष्टवैभवस्थानानि मानवस्यान्तरे गुप्तानि किञ्चिद्व्यक्तानि वा भवन्तीति बोध्यम् । आहिताग्नेस्त्वन्तर्यजने इमानि त्रीणि देवसदनानि सन्नद्धानि भवन्ति, यान्यग्निपुरोहिताः देवा यष्टव्यत्वेन अलंकुर्वन्ति ।। ४ ।।

## ऋक्संहिता पदपाठसहिता

**ब्राह्मणादिन्द्र राधसः पिबा सोममृतूँरनु । तवेद्धि सख्यमस्तृतम् ।। ५ ।।**

**ब्राह्मणात् । इन्द्र । राधसः । पिब । सोमम् । ऋतून् । अनु । तव । इत् । हि । सख्यम् । अस्तृतम् ।। ५ ।।**

## ऋग्भाष्यम्

**.............. ब्राह्मणाच्छंसिपात्रतः ।**

**पिबेन्द्र नो राधसोऽर्थे त्वामनु त्वृतुदेवताः ।**
**स्तृतं छिन्नमिति प्रोक्तम् ............... ।। ५ ।।**

**ऋग्भाष्यटीका– ब्राह्मणात्** । ब्राह्मणाच्छंसि । हे **इन्द्र** त्वं **राधसः** नो राधसोऽर्थे **ऋतूननु** ऋतुदेवता अनु । अत्र ऋतुदेवतानामिन्द्रस्य च साहित्यमात्रं विवक्षितं न पुनरिन्द्रस्या-प्राधान्यमित्यभिप्रायेण त्वामन्वृतुदेवता इति व्यत्यासेन व्याख्यातम् । ऋतुदेवताभिः सहेति यावत् । **ब्राह्मणात्** ब्रह्मेति ब्राह्मणाच्छंस्युच्यते तस्येदं ब्राह्मणं ब्राह्मणाच्छंसिपात्रेण **सोमं पिब** । **हि** यस्मात् **तवेत्** तवैव **सख्यमस्तृतम्** । स्तृतं छिन्नमिति प्रोक्तम् । अस्तृतमच्छिन्नं तस्मादस्मत्सखा त्वं सोमं पिबेति ।। ५ ।।

**मन्त्रार्थमञ्जरी–** (पञ्चम्यपीन्द्रदेवतकापि) (हे) इन्द्र (त्वम्) राधसः, सो राधसोऽर्थे, इष्टसिद्ध्यर्थम् । ऋतून् अनु, ऋतुदेवताभिः सहेति यावत् । ब्राह्मणात्, 'ब्रह्मा' इति ब्राह्मणाच्छंसिरूपऋत्विग्विशेषः, तस्येदं ब्राह्मणम्, तस्मात्, तृतीयार्थे पञ्चमी, ब्राह्मणाच्छंसिपात्रेण । सोमम् पिब । हि, यस्मात् । तव इत्, तवैव । सख्यम् । अस्तृतम्, अच्छिन्नम्, तस्मादस्माकं सखा त्वं सोमं पिब इति ।। ५ ।।

**स्कन्द–** 'ऐन्द्र्येव पञ्चमी' । पञ्चमी ऋगिन्द्रदेवता । ब्रह्मन्शब्दोऽत्र ब्राह्मणाच्छंसिनि वर्तते । तस्य स्वभूतात् **ब्राह्मणात्** । हे **इन्द्र! राधसः** धनात् पात्राख्यात् **पिब सोमं ऋतून् अनु** ऋतूनां पश्चात् । ऋतुभिः पीत इत्यर्थः । **तव इत् हि** इच्छब्दः पादपूरणः । यस्मात् तव **सख्यं अस्तृतं** अहिंसितं, न कश्चिद्धिंसितुं शक्नोति, स्थिरसख्योऽसीत्यर्थः । तस्मात् हि इन्द्र त्वं सोमं पिब ।। ५ ।।

**वेङ्कटमाधव–** ब्राह्मणाच्छंसिनः सोमं इन्द्र! पिब सह ऋतुभिः । तव हि सख्यं ऋतुभिर्न विच्छिद्यते ।। ५ ।।

**मुद्गल–** हे **इन्द्र! ब्राह्मणात्** ब्राह्मणाच्छंसिसम्बद्धात् **राधसः** धनभूतात् पात्रात् **सोमं पिब** । किं कृत्वा ? **ऋतून् अनु** ऋतुदेवान् अनुसृत्य । ऋतवोऽपि पिबन्तु इत्यर्थः । **हि** यस्मात् **तवेत्** तव **सख्यं अस्तृतं** ऋतूनामविच्छिन्नम् । तस्माद‍ृतुभिः सह पानं युक्तम् ।। ५ ।।

**सायण–** हे **इन्द्र ब्राह्मणात्** ब्राह्मणाच्छंसिसम्बद्धात् **राधसः** धनभूतात् **पात्रात् सोमं पिब** । किं कृत्वा ? **ऋतूननु** ऋतुदेवाननुसृत्य । ऋतवोऽपि पिबन्त्वित्यर्थः । **हि** यस्मात् **तवेत्** तव **सख्यं अस्तृतं** ऋतूनामविच्छिन्नं तस्मात् ऋतुभिः सह पानं युक्तम् ।

ब्राह्मणात् । ब्रह्मशब्देनात्र ब्रह्मवर्गे द्वितीयो ब्राह्मणाच्छंसी कथ्यते । स च पुंलिङ्गे शेषनिघातेन अनुदात्तादिः । तस्य सम्बन्ध्युत्तष्टश्चमसः । स च तस्यैव अवयववत् नियत इत्यवयवविवक्षायां 'अनुदात्तादेरञ्' (पा.सू.४,२,४४) । तेन ञित्त्वादाद्युदात्तः चमसपरोऽत्र ब्राह्मणशब्दः । राधसः । 'सर्वधातुभ्योऽसुन्' । नित्त्वादाद्युदात्तः । पिब । पादादित्वादाद्युदात्तत्वम् । 'द्व्यचोऽतस्तिङः' इति दीर्घत्वम् । ऋतूँरनु इत्यत्र 'दीर्घादटि समानपादे' इति नकारस्य रुत्वम् । 'अत्रानुनासिकः पूर्वस्य तु वा' (पा.सू.८,३,२) इति ऊकारस्य अनुनासिकत्वम् । तव । युष्मदस्मद्भ्यां ङसोऽश्' (पा.सू.७,१,२७) । शित्त्वात् सर्वादेशः । 'तवममौ ङसि' इति तवादेशः । 'युष्मदस्मदोर्ङसि' इत्याद्युदात्तत्वम् । सख्यम् । सख्युः कर्म सख्यम् । 'सख्युर्यः' 'यस्य' इति लोपः । प्रत्ययस्वरः । अस्तृतम् । स्तृणातेः हिंसार्थस्य क्तः । नञ्समासः । अव्ययपूर्वपदप्रकृतिस्वरत्वम् ।। ५ ।।

**सिद्धाञ्जनम्–** हे इन्द्र ब्राह्मणात् ऋत्विग्विशेषो देवो ब्रह्मा ब्राह्मणाच्छंसीत्याहुः, तस्येदं ब्राह्मणं तस्मात् । **राधसः** सोमरसरूपधनाश्रयभूतात् स्थानात् । पात्रात् इति ब्राह्मपक्षे वक्तव्यम् । पात्रशब्दव्याख्याऽवधेया । **ऋतून् अनु** अनुसृत्य **सोमं पिब** । तव इत् सख्यम् तव सखित्वमेव **अस्तृतं** अबाधितम् । हि अवधारणे । देवकामस्य यजमानस्य अन्तरुन्मेषशालिनः सर्वस्वं देवेभ्योऽर्पयतः परदैवतनिष्ठस्य विषये इन्द्रसख्यं नित्यमेव भवति ।। ५ ।।

ऋक्संहिता पदपाठसहिता

**युवं दक्षं धृतव्रत मित्रावरुण दूळभम् । ऋतुना यज्ञमाशाथे ।। ६ ।।**
युवम् । दक्षम् । धृतऽव्रता । मित्रावरुणा । दुःऽदभम् । ऋतुना । यज्ञम् । आशाथे इति ।।

ऋग्भाष्यम्

**............... अस्तभ्यं दुर्दभं स्मृतम् ।**
**दक्षाख्यं यजमानं चापीशाथे यज्ञमेव च ।**
**सोमं पीत्वर्तुपात्रेण सहवातेन चर्तुना ।। ६ ।।**

**ऋग्भाष्यटीका– युवं दक्षम्** । अस्तभ्यम् । हे **मित्रावरुणौ** धृतं व्रतं जगद्रक्षादिकं कर्म याभ्यां तौ **धृतव्रतौ युवं** युवामेव **ऋतुना** ऋतुपात्रेण सोमं पीत्वेति शेषः । **दुर्दभं** अस्तभ्यं स्वकर्मणि तिष्ठन्तं दक्षाख्यं यजमानं च **यज्ञं** च **आशाथे** ईशाथे तदीयसोमपानेन प्रसन्नौ पुनस्तं प्रवर्तयथः । ऋतुनेत्येतत्सोमं पीत्वेत्यध्याहारेण योजितम् । अध्याहारमन्तरेणापि व्याचष्टे– **सहवेति** ।। ऋतुना ऋतुदेवतया साऽपि यजमानस्य यज्ञस्य चेष्ट इति ।। ६ ।।

**मन्त्रार्थमञ्जरी–** (षष्ठ्यां) मित्रावरुणावपि देवते । (हे) मित्रावरुणा, मित्रावरुणौ । धृतव्रता, धृतव्रतौ, धृतं व्रतं जगद्रक्षादिकर्म याभ्यां तौ । युवम्, युवामेव । ऋतुना, पात्रेण । (सोमं पीत्वा) इति शेषः । ऋतुदेवतया सहेति वा । दुर्दभम्, अस्तभ्यम्, स्वकर्मणि निष्ठितम् । दक्षम्, दक्षाख्यं यजमानम् । यज्ञम् । (च) आशाथे, ईशाथे, नियमयथः, ततस्तदीयसोम पानेन प्रसन्नौ पुनस्तं प्रवर्तयथ इति भावः ।। अत्र 'धृतव्रत' इत्यादौ संहितायां ह्रस्वत्वं दीर्घान्ततया पदच्छेदस्तयोरैक्यद्योतनाय । तच्चैक्यम् विष्णुरूपयोः स्वरूपैक्यम्, मित्रावरुणयोस्तु मत्यैक्यम्, इति ज्ञेयम् ।। ६ ।।

**स्कन्द–** 'मित्रावरुणयोः षष्ठी' । षष्ठी ऋङ्मित्रावरुणदेवताः । युवं इति षष्ठ्यर्थे प्रथमा । युवयोः **दक्षं** बलं **धृतव्रत! मित्रावरुण!** उभयत्र द्विवचनादेशाकारस्य छान्दसं सांहितं ह्रस्वत्वम् । 'व्रतम्' (निघ.१,१७) इति कर्मनाम । धृतानि सर्वकर्माणि स्वकर्माणि वा याभ्यां तौ धृतव्रतौ सर्वकर्मणां हेतुभूतौ स्वकर्मणां वा नित्यमनुप्रदातारौ इत्यर्थः । मित्रावरुणौ **दूलभं** दभ्नोतेर्वधकर्मण एतद्रूपम् । दुर्हणम् । युवयोर्बलं न कश्चिदपि जेतुं शक्नोतीत्यर्थः । यावीदृशौ स्थः तौ **ऋतुना** सह **यज्ञं आशाथे** । लोडर्थेऽयं लिट् । अश्नुवाथां व्याप्नुतम् । यज्ञे सोमं पिबतमित्यर्थः ।।

**वेङ्कटमाधव–** युवां प्रवृद्धं धृतकर्माणौ मित्रावरुणौ शत्रुभिर्हिंसितुमशक्यं यज्ञं ऋतुना सह आशाथे ।। ६ ।।

**मुद्गल–** हे **धृतव्रतौ** स्वीकृतकर्माणौ **मित्रावरुणा** मित्रावरुणौ! **युवं** उभौ युवां **ऋतुना** सह अस्मदीयं **यज्ञं आशाथे** व्याप्नुथः । कीदृशं यज्ञम् ? **दक्षं** प्रवृद्धं **दूळभं** दुर्दहं शत्रुभिर्दग्धुम-शक्यमित्यर्थः ।। ६ ।।

**सायण–** हे **धृतव्रता** स्वीकृतकर्माणौ **मित्रावरुणा** हे मित्रनामकवरुणनामकौ देवौ **युवं** उभौ युवां **ऋतुना** सहास्मदीयं **यज्ञं आशाथे** व्याप्नुथः । कीदृशं यज्ञम् ? **दक्षं** प्रवृद्धं **दूळभं** दुर्दहं शत्रुभिर्दग्धुं विनाशयितुमशक्यमित्यर्तः ।

युवम् । प्रथमाद्विवचनस्य 'ङेप्रथमयोरम्' (पा.सू.७,१,२८) इति अमादेशः । 'युवावौ द्विवचने' (पा.सू.७,२,९२) इति मपर्यन्तस्य युवादेशः । 'शेषे लोपः' इति टिलोपः अन्त्यलोपो वा । अमि पूर्वत्वम् । भाषायामेव हि आत्वम् । टिलोपपक्षे उदात्तनिवृत्तिस्वरेण अम उदात्तत्वम् । अन्त्यलोपपक्षे एकादेश उदात्तः । दक्षम् । 'दक्ष वृद्धौ' । दक्षन्त्यनेनेति करणे घञ् । एवं हि पुल्लिङ्गत्वनियमः अन्यस्यानियम इति नपुंसकत्वम् । धृतव्रता मित्रावरुणा । धृतानि व्रतानि याभ्यां तौ धृतव्रतौ । मित्रश्च वरुणश्च मित्रावरुणौ । उभयत्र 'सुपां सुलुक्' इत्यादिना विभक्तेः आकारः । मित्रशब्दस्य 'देवताद्वन्द्वे च' इति आनङादेशः । प्रथमस्य आमन्त्रितनिघातः । द्वितीयस्य पादादित्वादाद्युदात्तत्वम् । संहितायां छान्दसं ह्रस्वत्वम् । दूळभम् । 'दह भस्मीकरणे' । दुःखेन दह्यते इति दुर्दहम् । 'ईषद्दुःसुषु' (पा.सू.३,३,१२६) इत्यादिना दुर्युपपदे दग्धेः खल् । 'व्यत्ययो बहुलम्' इति उकारस्य ऊकारो रेफस्य लोपो दकारस्य डकारो हकारस्य च भकारः । 'लिति' इति प्रत्ययात्पूर्वमुदात्तत्वम् । कृदुत्तरपदत्वेन स एव शिष्यते । आशाथे । 'अशू व्याप्तौ' । 'छन्दसि लुङ्लङ्लिटः' इति वर्तमाने लिट् । मध्यमद्विवचनं आथाम् । टेः एत्वम् । 'अत आदेः' (पा.सू.७,४,७०) इत्यभ्यासस्य दीर्घः । 'अश्नोतेश्च' (पा.सू.७,४,७२) इति प्राप्तो नुडागमः 'अनित्यमागमशासनम्' इति निवर्तते ।। २८ ।।

**सिद्धाञ्जनम्–** षष्ठीमृचमाह– हे **धृतव्रता** धृतवतौ ऋतानुरोधेन विहितानां कर्मणां धारयितारौ । **मित्रावरुणा** मित्रो वरुणश्च । संहितायां उभयत्र च ह्रस्वश्छान्दसः। **युवं** युवा उभौ **दक्षं** विवेचनपरं (व्याख्यातम् ) दुर्दभं दुर्दहं दुःखेन दग्धुं शक्यम् । अन्यैः विनाशयितुं अशक्यमित्यर्थः । **यज्ञं ऋतुना** योग्यकालानुसारेण **आशाथे** व्याप्नुतः भोक्तुमिति शेषः । दूळभन्दुःपूर्वकाद्दहतेः खल्, दुरित्यत्र दूरिति दीर्घश्छान्दसः, तथा रेफस्य लोपः, दकारस्य हकारो हस्य भश्च ।। ६ ।।

।। इति प्रथमाष्टके प्रथमाध्याये अष्टाविंशो वर्गः ।।

## ।। अथ एकोनत्रिंशो वर्गः ।।

### ऋक्संहिता पदपाठसहिता

**द्रविणोदा द्रविणसो ग्रावहस्तासो अध्वरे । यज्ञेषु देवमीळते ।। ७ ।।**

द्रविणःऽदाः । द्रविणसः । ग्रावऽहस्तासः । अध्वरे । यज्ञेषु । देवम् । ईळते ।। ७ ।।

### ऋग्भाष्यम्

**होताच होतृकाश्चैव द्रविणोदा द्रवीणसः ।**
**अग्निश्चैवाग्नयस्तेषां देवता विष्णुमीळते ।। ७ ।।**

**ऋग्भाष्यटीका–** **द्रविणोदाः** । अत्र पदद्वयं व्याख्याति– **होताचेति** ।। यथासङ्ख्यं व्याख्यानम् । एवशब्देन द्रविणोदा इति प्रथमां द्वितीयात्वेन विपरिणाम्याग्निमिति व्याख्यानं निराकरोति । यद्यत्र होता द्रविणोदास्तदा द्रविणोदा ददातुन इत्यादिकमयुक्तं स्यादित्यत आह– **अग्निश्चेति** ।। यद्यप्यत्र होता द्रविणोदास्तथापि तद्देवतात्वेनाग्निरपि द्रविणोदा इति न कोऽपि विरोधः । अत्राप्यग्निरेव किं न स्यात् । मैवम् । देवतास्तुतौ कर्तृत्वेन श्रवणादिति भावेन देवमीळत इत्येतद्व्याचष्टे– **विष्णुमिति** ।। विभक्तिव्यत्यासेन व्याख्यानं त्वगतिकागतिः । **द्रविणोदाः** होता **द्रविणसः** होतृकाश्च **अध्वरे** अध्वरेषु यथाविध्यनुष्ठितेषु **यज्ञेषु ग्रावहस्तासः** सोमसवनार्थं ग्रावहस्ताः सन्तो **देवं** विष्णुमग्निभिः सहितं प्रधानाग्निं वा **ईळते** स्तुवन्ति ।।७।।

**मन्त्रार्थमञ्जरी–** एतदृक्चतुष्टयस्य द्रविणोदा अपि देवता । द्रविणोदाः, होता । द्रविणसः, होतृकाः । (च) अध्वरे, अध्वरेषु, 'अग्ने यं यज्ञम्' इत्यत्र व्युत्पादितमेतत्पदम्, यथाविध्यनुष्ठितेषु । यज्ञेषु । ग्रावहस्तासः, सोमसवनार्थं ग्रावहस्ताः सन्तः । देवम्, विष्णुम्, अग्निभिः सहितं प्रधानाग्निं च । ईळते, स्तुवन्ति ।। ७ ।।

**स्कन्द–** 'चतस्रो द्रविणोदसः' । सप्तम्याद्याश्चतस्र ऋचः द्रविणोदसः । ईळत इत्यस्य स्तुत्यपेक्षत्वाद् देवतानां च स्तुत्यत्वात् द्रविणोदशब्दस्य च देवतावचनत्वात् । **द्रविणोदाः** द्वितीयार्थे प्रथमा । द्रविणोदसम् । **द्रविणसः** 'द्रविणम्' (निघ.२,१०) इति धननाम । एतदिच्छन्ति द्रविणस्यन्तीति क्यचि सुगागमः । 'द्रविणस्युर्विषन्यया' (ऋ ६,१६,३४) इति यथा । द्रविणस्यतेः छान्दसत्वात् क्विप् । क्विपि चाद्युदात्तत्वम् । द्रविणसाधनकामा इत्यर्थः ।

**ग्रावहस्तासः** गृहीताभिषवणग्रावाण ऋत्विजः । **अध्वरे यज्ञेषु** अध्वरशब्दोऽत्र ध्वरतेर्हिंसाकर्मणः क्रियाशब्दः, न यज्ञनाम । व्यत्ययेन चैकवचनम् । साद्गुण्याद् रक्षआदिभिरहिंसितेषु यज्ञेषु । अथवा अध्वरशब्दः समस्तज्योतिष्टोमादिवचनः । यज्ञशब्दस्तदवयवभूताभ्यासविशेषवचनः । ज्योतिष्टोमादावध्वरे येऽभ्यासविशेषाख्या यज्ञास्तेषु । **देवं** दातारं दीप्तं वा । **ईळते** स्तुवन्ति ॥

**वेङ्कटमाधव– द्रविणोदाः द्रविणसः** धनस्य दाता भवति । तं ग्रावहस्तासः यज्ञेषु देवं स्तुवन्ति । 'यज्ञेषु अध्वरे' इत्यनयोरर्धर्चभेदात् सङ्गतिः । यास्काचार्यस्त्वाह– 'द्रविणोदा यस्त्वम् । द्रविणस इति द्रविणसादिन इति वा । द्रविणसानिन इति वा । द्रविणसस्तस्मात् पिबत्विति वा । यज्ञेषु देवमीलते । याचन्ति स्तुवन्ति वर्धयन्ति पूजयन्ति वा' (या ८,२) इति ॥ ७ ॥

**मुद्गल– अध्वरे** अग्निष्टोमे यज्ञे **यज्ञेषु** उक्थ्यादिषु च **देवं** अग्निं **ईळते** ऋत्विजः स्तुवन्ति । कीदृशा ऋत्विजः ? **द्रविणसः** धनार्थिनः **ग्रावहस्तासः** अभिषवसाधनपाषाणधारिणः । कीदृशं देवम् ? **द्रविणोदाः** धनप्रदम् ॥ ७ ॥

**सायण– अध्वरे** अग्निष्टोमे प्रकृतिरूपे **यज्ञेषु** विकृतिरूपेषु उक्थ्यादिषु च **देवं** अग्निं **ईळते** ऋत्विजः स्तुवन्ति । कीदृशा ऋत्विजः ? **द्रविणसः** धनार्थिनः **ग्रावहस्तासः** अभिषवसाधन-पाषाणधारिणः । कीदृशं देवम् ? **द्रविणोदाः** धनप्रदम् । यद्वा । धनप्रदोऽग्निः सोमं पिबत्विति शेषः । तमेतं मन्त्रं यास्क एवं निर्वक्ति– 'द्रविणोदाः कस्माद्धनं द्रविणमुच्यते यदेनदभिद्रवन्ति बलं वा द्रविणं यदेनेनाभिद्रवन्ति तस्य दाता द्रविणोदास्तस्यैषा भवति । द्रविणोदा द्रविणसः' (निरु.८,१२) इत्यादि । सोऽयं यास्कोक्तो निर्वचनप्रपञ्चः तस्मिन्नेव ग्रन्थेऽवगन्तव्यः ।

द्रविणोदाः । 'द्रुदक्षिभ्यामिनन्' (उ.सू.२,२०८) । नित्त्वादाद्युदात्तो द्रविणशब्दः । तद्ददातीति द्रविणोदाः । 'क्विप् च' इति क्विप् । पूर्वपदस्य सकारोपजनश्छान्दसः । रुत्वोत्वे । कृदुत्तरपदप्रकृतिस्वरत्वम् । देवविशेषणत्वेन एकवाक्यतापक्षे द्वितीयायाः स्वादेशः । अथवा द्रविणमात्मन इच्छन्ति द्रविणस्यन्ति । 'सुप आत्मनः क्यच्' । 'सर्वप्रातिपदिकेभ्यो लालसायां सुग्वक्तव्यः' (पा.म.७,५१,२) इति क्यचि परतः सुगागमः । द्रविणस्यतेः सम्पदादित्वात् भावे क्विप् । 'अतो लोपः' । 'क्वौ लुप्तं न स्थानिवद्भवति' (पा.म.१,१,५८,२) इति तस्य

स्थानिवत्त्वप्रतिषेधात् यलोपः । एवं द्रविणस्शब्दो धनेच्छावचनः । द्रविणेच्छां दस्यति यथेष्टधनप्रदानेन उपक्षपयतीत्यर्थे 'दसु उपक्षये' इत्यस्मात् अन्तर्भावितण्यर्थात् 'क्विप् च' इति क्विप् । एवं द्रविणोदःशब्दः सकारान्तो भवति । तथा 'द्रविणोदसाः प्रवादा भवन्ति' (निरु.८,२) इति नैरुक्तो व्यवहार उपपद्यते । अतो द्रविणोदस्शब्दो भिन्नवाक्यत्वे स्वार्थे प्रथमा; एकवाक्यत्वे तु व्यत्ययेन द्वितीयार्थो भवति । द्रविणस इत्यत्रापि वाक्यभेदपक्षे द्रविणसः सोमस्य इत्यर्थे सकारोपजनश्छान्दसः । आद्युदात्तत्वं तु नियमेन स्थितम् । ऋत्विग्विशेषणत्वेन एकवाक्यत्वपक्षे तु क्यजन्तात् क्विप् । अतो लोपादि पूर्ववत् । अत्र तु पक्षे क्यचः चित्त्वेन अन्तोदात्तत्वे प्राप्ते व्यत्ययेनाद्युदात्तत्वम् । ग्रावयुक्ता हस्ता येषां ते ग्रावहस्तासः । 'आज्जसेरसुक्' । ग्रावशब्दो वृषादित्वादाद्युदात्तः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । अध्वरे । न विद्यते ध्वरो हिंसा यस्मिन् । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । ईळते । अनुदात्तेत्वात् आत्मनेपदम् । 'अदिप्रभृतिभ्यः' इति शपो लुक् । झस्य अदादेशः ।। ७ ।।

**सिद्धाञ्जनम्**–अथास्मिन् सूक्ते सप्तमीमृचमाह– यो **द्रविणोदाः** द्रविणप्रदः तं **देवं** अग्निं **ईळते** अध्येष्यत्वेन स्तुवन्ति ऋत्विज इति शेषः । कुत्र? **अध्वरे** यज्ञसामान्ये **यज्ञेषु** यज्ञविशेषेषु । प्रकृतिभूतोऽध्वरः अग्निष्टोमः, तद्विकृतयः उक्थादय इति बाह्यपक्षानुसारिणः । अन्तर्यजने तु सामान्येन परदैवताय स्वात्मीयतात्यागपूर्वकं यजमानकृतस्वात्मार्पणम्, विशेषेण स्वीयसर्व-स्वभूताङ्गप्रत्यङ्गसमर्पणं परदैवतायैव तदङ्गभूतनानादेवतायजनद्वारेण चेति प्रकृतिविकृतिसारांशो बोध्यः । ते च ऋत्विजः **द्रविणसः** द्रविणार्थिनः **ग्रावहस्तासः** सोमाभिषवसाधनभूताः ग्रावाणः पाषाणाः हस्तेषु येषां ते । यजमानार्थं ऋत्विजो देवा एव द्रविणार्थिनः सोमाभिषवाय सन्नद्धाः सन्त अग्निं द्रविणदायिनं सत्कारपूर्वकं ईरयन्तीत्यर्थः । द्रविणं धनं वा वलं वा भवतु । तद्दिव्यं वस्तु द्रव्यं भवति । यजमानकृते स्वयमग्निरेव तद्द्रविणं गवेषयति साधयति चेति मन्त्रवर्णेभ्योऽव-गम्यते । तस्मादग्निर्द्रविणस्युरपि भवति । न केवलं द्रविणोदाः । अत्र अन्ये देवाः ऋत्विग्भूता यजमानकृते द्रविणार्थिनो भवन्तीति बोध्यम् । द्रुदक्षिभ्यामिनन्, द्रविणं ददाति द्रविणोदाः, पूर्वपदस्य सकारः छान्दसः । उत्तरपदात् 'सु' आदेशोऽपि छान्दसः। द्रविणसः-द्रविणमात्मन इच्छन्तीति द्रविणस्यवः, द्रविणस्यतेः छान्दसत्वात् क्विप् । द्रविणेच्छव इत्यवयवार्थः ।। ७ ।।

## ऋक्संहिता पदपाठसहिता

**द्रविणोदा ददातु नो वसूनि यानि शृण्विरे । देवेषु ता वनामहे ॥ ८ ॥**

द्रविणःऽदाः । ददातु । नः । वसूनि । यानि । शृण्विरे । देवेषु । ता । वनामहे ॥ ८ ॥

**ऋग्भाष्यटीका– द्रविणोदा ददातु ॥ द्रविणोदा** अग्निः **यानि वसूनि शृण्विरे** श्रूयन्ते प्रसिद्धानीति यावत् । तानि **नः** अस्मभ्यं **ददातु** । तानि च वयं **देवेषु** देवनिमित्तमेव **वनामहे** सम्भजामः । न तु स्वशरीरपोषणार्थम् । यद्वा तानि वयं **देवेषु** देवेभ्यो वनामहे वनतिर्दानार्थः । दद्मः ॥ ८ ॥

**मन्त्रार्थमञ्जरी–** द्रविणोदाः होतृदेवतात्वादग्निरत्र द्रविणोदा ग्राह्यः । यानि वसूनि । शृण्विरे, श्रुतानि, प्रसिद्धानीति यावत् । (ता) तानि । नः, अस्मभ्यम् । ददातु । ता, तानि । (च वयम्) देवेषु, देवनिमित्तमेव वनामहे, सम्भजामः, न तु स्वदेहपोषणार्थमित्यर्थः ॥ यद्वा ता, तानि । (वयम्) देवेषु, देवेभ्यः । वनामहे, वनतिः अत्र दानार्थः, दद्मः ॥ ८ ॥

**स्कन्द– द्रविणोदाः ददातु** अस्मभ्यं **वसूनि यानि शृण्विरे** लटर्थेऽयं लिट् कर्मणि च । श्रूयन्ते । उत्कृष्टत्वात् प्रभूतत्वाच्च सर्वलोकप्रकाशानि भवन्तीत्यर्थः । वयमपि **देवेषु** । सम्प्रदानस्येयमधिकरणत्वेन विवक्षा । 'सममब्राह्मणे दानम्' (मनु.७,८५) इति यथा । देवेभ्यः तानि हवीरूपाणि कृत्वा **वनामहे** । वनतिरत्र सामर्थ्याद् दानार्थः । 'वंस्वा नो वार्या पुरु' (ऋ.८,२३,२७) इति यथा । दद्म इत्यर्थः । अथवा वनिर्हि सम्भक्त्यर्थः एव । देवेष्विति 'निमित्तात् कर्मसंयोगे' (पावा २,३,३६,६) इत्येव सप्तमी । 'चर्मणि द्वीपिनं हन्ति' (पाम २,३,३६) इति यथा । देवार्थं संभजामहे देवान् यष्टुं परिगृह्णीम इत्यर्थः ॥ ८ ॥

**वेङ्कटमाधव– द्रविणोदाः ददातु** अस्मभ्यं **वसूनि** धनानि गवादीनि । **यानि** विश्रुतानि । तानि वयं देवेषु स्थितानि द्रविणोदसं याचामहे । स तत आदाय नः ददातु ॥ ८ ॥

**मुद्गल– द्रविणोदाः** देवः **नः** अस्मभ्यं **वसूनि** धनानि **ददातु यानि** धनानि **शृण्विरे** हविरुपयुक्तत्वेन श्रूयन्ते तानि धनानि **देवेषु** निमित्तभूतेषु **वनामहे** सम्भजामः । धनैर्देवान् यष्टुं तानि स्वीकुर्म इत्यर्थः ॥ ८ ॥

**सायण– द्रविणोदाः** देवः **नः** अस्मभ्यं **वसूनि** धनानि **ददातु यानि** धनानि **भृण्विरे** हविरुपयुक्तत्वेन श्रूयन्ते । **ता** तानि च सर्वाणि धनानि **देवेषु** निमित्तभूतेषु **वनामहे** सम्भजामः । धनैर्देवान् यष्टुं तानि स्वीकुर्म इत्यर्थः ।

द्रविणोदाः । गतम् । वसूनि । 'शृस्वृस्निहि' (उ.सू.१,१०) इत्यादिना उप्रत्ययः । 'नित्' इत्यनुवृत्तेः आद्युदात्तः । भृण्विरे । 'श्रु श्रवणे' । 'छन्दसि लुङ्लङ्लिटः' इति वर्तमाने लिट् । झ इरेच् (पा.सू.३,४,८१) । 'छन्दस्युभयथा' इति सार्वधातुकत्वे व्यत्ययेन श्नुः; तत्सन्नियोगेन शृभावश्च । उवङि प्राप्ते 'हुश्नुवोः सार्वधातुके' (पा.सू.६,४,८७) इति यणादेशः । 'चितः' इत्यन्तोदात्तत्वम् । 'यद्वृत्तान्नित्यम्' इति निघातप्रतिषेधः । ता । 'शेश्छन्दसि बहुलम्' इति शेर्लोपः । 'नलोपः प्रातिपदिकान्तस्य' (पा.सू.८,२,७) इति नलोपः । वनामहे । 'वन षण सम्भक्तौ' । व्यत्ययेनात्मनेपदम् ॥ ८ ॥

**सिद्धाञ्जनम्–** अष्टमीमृचमाह– **द्रविणोदाः** एतन्नामको देवोऽग्निः **नः** अस्मभ्यं **ददातु** प्रयच्छतु । कानि? **वसूनि** द्रविणानि **यानि भृण्विरे** श्रूयन्ते । छन्दसि लटः लिट्, अन्यच्छान्दसम् । यानि दिव्यानि वसूनि विश्रुतानि भवन्ति, देवरहस्यवेदिनां ऋषीणां विदितानि **ता** तानि **देवेषु** निमित्तभूतेषु **वनामहे** सम्भजामहे । देवार्थं देवेषु मध्ये भुञ्ज्मः । न स्वार्थपरा वयं सोमयाजिनः, अपि तु देवार्थपराः, अतः देवेष्वेव नो वसूपभोगः ॥ ८ ॥

### ऋक्संहिता पदपाठसहिता

**द्रविणोदाः पिपीषति जुहोत प्रचतिष्ठत । नेष्ट्रादृतुभिरिष्यत ॥ ९ ॥**

द्रविणःऽदाः । पिपीषति । जुहोत । प्र । च । तिष्ठत । नेष्ट्रात् । ऋतुऽभिः । इष्यत ॥

### ऋग्भाष्यम्

**पातुमिच्छति सोमं स सोमास्तस्मै प्रतिष्ठिताः ।**
**ऋतुपात्रैर्देवताभिः सहैवैनमभीप्सत ॥ ९ ॥**

**ऋग्भाष्यटीका– द्रविणोदाः पिपीषति** । पातुम् । स **द्रविणोदाः** अग्निः **पिपीषति** पीङ्पाने सोमं पातुमिच्छति । सोमाश्च तस्मै **प्रतिष्ठत** प्रातिष्ठन्त तदुद्देशेनैव प्रतिष्ठिताः सन्ति । अतस्तांस्तस्मै **जुहोत** जुहुत । किं च । **नेष्ट्रात्** नेष्टुः सम्बन्धिना पात्रेण **ऋतुभिः** ऋतुपात्रैश्च ऋतुदेवताभिः सहेति वा । एनमग्निं **इष्यत** अभीप्सत पूज्यत्वेनेति शेषः ॥ ९ ॥

**मन्त्रार्थमञ्जरी–** द्रविणोदाः । पिपीषति, 'पीङ् पाने' पातुमिच्छति ।। (सोमाः) च (तस्मै) प्र तिष्ठत, प्रातिष्ठन्त, तदुद्देशेनैव प्रतिष्ठिताः सन्ति । (अतस्ताँस्तस्मै) जुहोत, जुहुत । किं च नेष्ट्रात् नेष्टुः, पत्नीनेतृत्वतो नेष्टृनामकऋत्विजः लक्षणया तत्सम्बन्धिपात्रात्, पञ्चमी तृतीयार्थे, नेष्टृपात्रेण । ऋतुभिः, ऋतुपात्रैः, ऋतुदेवताभिः सहेति वा । (एनम्) अग्निम् । इष्यत, अभीप्सत । (पूज्यत्वेन) इति शेषः ।। ९ ।।

**स्कन्द–** **द्रविणोदाः पिपीषति** पिबतेश्छान्दसत्वादीत्वं, पिपासति पातुमिच्छति सोमम् । एतद् ज्ञात्वा **जुहोत** अध्वर्यवः । **प्रच तिष्ठत** प्रतिष्ठध्वञ्च सोमं हुत्वा चाहवनीयदेशात् सदः प्रति गच्छतेत्यर्थः । कुतः पिपासति ? उच्यते– **नेष्ट्रात्** नेष्टुः स्वभूतात् पात्रात् । न च केवलः । किन्तर्हि ? **ऋतुभिः** ऋतुभिः सह **इष्यत** । इषु गतौ । गच्छत । मा विलम्बध्वमित्यर्थः ।। ९ ।।

**वेङ्कटमाधव–** द्रविणोदाः सोमं पातुमिच्छति । ततः जुहोत अध्वर्यवः । हविर्धानात् प्रतिष्ठत च नेष्टुः स्वभूताच्चमसात् ऋतुभिः सह यष्टुमिच्छत ।। ९ ।।

**मुद्गल–** **द्रविणोदाः** देवः **ऋतुभिः** सह **नेष्ट्रात्** नेष्टृसबन्धिपात्रात् **पिपीषति** सोमं पातुमिच्छति । ततो हे ऋत्विजः! **इष्यत** होमस्थाने गच्छत । गत्वा च **जुहोत** होमं कुरुत । हुत्वा **प्रतिष्ठत च** होमस्थानात् स्थानान्तरं प्रति प्रस्थानमपि कुरुत ।। ९ ।।

**सायण–** **द्रविणोदाः** देवः **ऋतुभिः** सह **नेष्ट्रात्** नेष्टृसम्बन्धिपात्रात् **पिपीषति** सोमं पातुमिच्छति । ततो हे ऋत्विजः **इष्यत** होमस्थाने गच्छत । गत्वा च **जुहोत** होमं कुरुत । हुत्वा **प्र तिष्ठत च** होमस्थानात् स्थानान्तरं प्रति प्रस्थानमपि कुरुत ।

द्रविणोदाः । गतम् । पिपीषति । 'पा पाने' । पातुमिच्छतीति सन् । छान्दस ईकारः । 'तिङ्ङतिङः' इति निघातः । जुहोत । लोण्मध्यमबहुवचनम् । तस्य लङ्वद्भावात् तादेशः । तस्य 'तप्तनप्तनथनाश्च' इति तबादेशः । तस्य पित्त्वाद्गुणः । 'अभ्यस्तानामादिः' इत्यनुवृत्तौ 'अनुदात्ते च' (पा.सू.६,१,१९०) इत्याद्युदात्तत्वे प्राप्ते 'भीह्रीभृहुमदजनधनदरिद्राजागरां प्रत्ययात्पूर्वं पिति' (पा.सू.६,१,१९२) इति ओकार उदात्तः । तिष्ठत । 'ष्ठा गतिनिवृत्तौ' । लोण्मध्यमबहुवचनस्य थस्य लङ्वद्भावात् तादेशः । शपि 'पाघ्राध्मा' इत्यादिना तिष्ठादेशः ।

'समवप्रविभ्यः स्थः' (पा.सू.१,३,२२) इत्यात्मनेपदं न भवति; तत्रानुवृत्तस्य निर्दिष्टग्रहणस्य आनन्तर्यार्थत्वात् अत्र चशब्देन व्यवधानात् । 'ते प्राग्धातोः' (पा.सू.१,४,८०) इत्युपसर्गत्वेन प्राक्प्रयोक्तव्यस्यापि प्रशब्दस्य 'व्यवहिताश्च' (पा.सू.१,४,८२) इति छन्दसि व्यवहितप्रयोगः । अत्र चशब्दो जुहोत इति पूर्वेण सह समुच्चयार्थः, न पुनः इष्यत इत्युत्तरेण । तेन अप्रथमत्वात् 'चवायोगे प्रथमा' (पा.सू.८,१,५९) इति निषेधाभावात् 'तिङ्ङतिङः' इति निघातः । नेष्ट्रात् । 'पोत्राद्यज्ञं पुनीतन' (ऋ.सं.१,१५,२) इत्यत्र पोत्रशब्दे यदुक्तं तदत्र द्रष्टव्यम् । इष्यत । 'इष गतौ' । लोण्मध्यमबहुवचनम् ।। ९ ।।

**सिद्धाञ्जनम्–** नवमीमृचमाह- **द्रविणोदाः** देवः **ऋतुभिः** सह परिपाकविधिविभवसम्पन्न-समयानुसारेणेत्यर्थः, **पिपीषति** पिपासति (छान्दसम् ) सोममिति शेषः । कस्मात् ? **नेष्ट्रात्** । नेष्ट्रसम्बन्धिनः पानात् । प्रागुक्तं द्रष्टव्यम् । तस्मात् **जुहोत** हवनं कुरुत, **प्रतिष्ठत च** तदीयं स्थानं प्रति प्रस्थानं कुरुत । **इष्यत** तमुद्दिश्य एषणं कुरुत श्यन्विकरणिनः इषधातोः न केवला गतिरर्थः, प्रेरणबलसम्पन्ना गतिरिति बोध्यम् । जुहोतलोट्, मध्यमबहुवचनं छान्दसम् ।।९।।

## ऋक्संहिता पदपाठसहिता

**यत्त्वा तुरीयमृतुभिर्द्रविणोदो यजामहे । अधस्मानो ददिर्भव ।। १० ।।**

यत् । त्वा । तुरीयम् । ऋतुऽभिः । द्रविणःऽदः । यजामहे । अध । स्म । नः । ददिः । भव ।। १० ।।

## ऋग्भाष्यम्

**चतुर्थवारमपि यत्त्वां यजामो ददिर्भव ।। १० ।।**

**ऋग्भाष्यटीका–** **यत्त्वा** । चतुर्थ । **द्रविणोदः** अग्ने **ऋतुभिः** ऋतुपात्रैस्तद्देवताभिः सह वा **तुरीयं** चतुर्थवारमपि **यत्** यस्मात् **त्वां** **यजामहे** । चतुर्थी हीयमृग्द्राविणोदसी । **अध** अथ तस्मात् **नः** अस्मभ्यं **ददिः** दाता **भव** **स्म** ।। १० ।।

**मन्त्रार्थमञ्जरी–** (हे) द्रविणोदः, अग्ने । ऋतुभिः, ऋतुपात्रैः, तद्देवताभिः सह वा । तुरीयम्, चतुर्थवारमपि । यत्, यस्मात् । त्वा, त्वाम् । यजामहे । अध, अथ, तस्मात् । नः, अस्मभ्यम् । ददिः भव, 'दद दाने' किप्रत्ययः, (डुदाञ् दाने आदृगमहन इति किप्रत्ययो वा) दाता भव । स्म ।। १० ।।

**स्कन्द–** यत् इति निपातो यस्मादर्थे । यस्मात् त्वाम् । **तुरीयं** क्रियाविशेषणमेतत् । पूर्वद्रविणोदोदेवतात्रयापेक्षश्चात्र तुरीयव्यपदेशः। चतुर्थमिदम् । **ऋतुभिः** सह **हे द्रविणोदः यजामहे । अध स्म** अधेति तस्मादर्थे । स्मशब्दस्तु पदपूरणः । तस्मात् **नः** अस्मभ्यं **ददिः** दाता धनानि भव त्वम् ।। १० ।।

**वेङ्कटमाधव–** यदा त्वां चतुर्थमपि ऋतुभिः सह द्रविणोदः! यजामहे । अथ त्वं अस्माकं भव दाता । स्म इति स्फुटीकरणार्थः ।। १० ।।

**मुद्गल–** हे **द्रविणोदः** देव! **यत्** यस्मात् कारणात् **ऋतुभिः** सह **त्वा** त्वां यजामहे । अध इत्यर्थः निपातः तच्छब्दार्थः । तस्मात् कारणात् **नः अस्मभ्यं ददिः** धनस्य दाता **भव स्म** अवश्यं भव । तुरीयं चतुर्णां पूरणम् ।। १० ।।

**सायण–** हे **द्रविणोदः** देव **यत्** यस्मात् कारणात् **ऋतुभिः** सह त्वां यजामहे । अध इत्ययं निपातस्तच्छब्दार्थः । तस्मात् कारणात् **नः** अस्मभ्यं **ददिः** धनस्य दाता **भव स्म** अवश्यं भव । **तुरीयं** चतुर्णां पूरणम् ।

तुरीयम् । 'चतुरश्छयतावाद्यक्षरलोपश्च' (पा.सू.५,२,५१,१) इति छप्रत्ययः । तस्य प्रत्ययस्वरेणोदात्तात् प्रागेव 'आयनेयी' (पा.सू.७,१,२) इत्यादिना ईयादेशः । 'आयनादिषूपदेशिवद्वचनं स्वरसिद्ध्यर्थम्' (पा.सू.७,१,२,१) इति वचनात् कृते आदेशे प्रत्ययस्वरेण इकार उदात्तः । द्रविणोदः । उक्तम् । पादादित्वात् आमन्त्रिताद्युदात्तत्वम् । यजामहे । अत्र शपः पित्त्वेन तिङश्च लसार्वधातुकस्वरेण धातुस्वर एव । पूर्वस्य आमन्त्रितस्य अविद्यमानवत्त्वात् यद्वृत्तयोगाद्वा न निघातः । व्यवहितयोगेऽपि स निषेध इत्युक्तम् । अध । छान्दसो धकारः । स्म । चादिरनुदात्तः । संहितायां 'निपातस्य च' (पा.सू.६,३,१३६) इति दीर्घः । ददिः । 'डुदाञ् दाने' । 'आदृगमहनजनः किकिनौ लिट् च' (पा.सू.३,२,१७१) इति किप्रत्ययः । लिड्वद्भावात् द्विर्वचनादि । 'आतो लोप इटि च' (पा.सू.६,४,६४) इति आकारलोपः । प्रत्ययस्वरः ।। १० ।।

**सिद्धाञ्जनम्–** दशमीमृचमाह– हे **द्रविणोदः** भगवन् , **यत्** यस्मात् **ऋतुभिः** त्वदीयदिव्यवेलानुसारेण **तुरीयं** चतुर्णां पूरणं **त्वा** त्वां **यजामहे अध** तस्मात् कारणात् **नः** अस्मभ्यं **ददिः**

दाता द्रविणस्येति शेषः, भव । **स्म** पादपूरणः । ददिः किप्रत्ययः, लिङ्वद्भावाद् द्विर्वचनादि, आतो लोपश्च । अत्रेदमवधातव्यम् । पूर्वं द्रविणोदाः स्थानत्रयापेक्षया त्रिः स्तुतः । अधुना चतुर्थवारं व्याहृतित्रयप्रतिपादितत्रिलोकस्थानान्यतीत्य वर्तमानं तुरीयं सर्वोत्कृष्टं दिव्यं द्रविणं सम्पादयितुं तत्रस्थो द्रविणोदाः तुरीयस्थानः प्राध्यर्ते । चतुर्थवारं यजामह इति यजनक्रिया-विशेषणतया तुरीयपादग्रहणेऽपि समानमेव भवति तात्पर्यम् ।। १० ।।

**ऋक्संहिता पदपाठसहिता**

**अश्विना पिबतं मधु दीद्यग्नी शुचिव्रता । ऋतुना यज्ञवाहसा ।। ११ ।।**

**अश्विना । पिबतम् । मधु । दीद्यग्नी इति दीदिऽअग्नी । शुचिऽव्रता । ऋतुना । यज्ञऽवाहसा ।।**

**ऋग्भाष्यम्**

**दीद्यग्नी इति दीप्ताग्नी...................... ।। ११ ।।**

**ऋग्भाष्यटीका– अश्विना** । अत्र दीद्यग्नी इति व्याचष्टे– **दीद्यग्नी इति** ।। दीव्यतेर्यङ्-लुगन्ताड्डिप्रत्ययः । हे अश्विनौ **दीद्यग्नी** दीप्ताग्नी अतिशयेन दीप्ताग्निसदृशौ शुचि व्रतं कर्म ययोस्तौ **शुचिव्रतौ यज्ञवाहसौ** यज्ञानां प्रवर्तकौ युवामृतुना पूर्ववत् **मधु** सोमं पिबतम् ।। ११ ।।

**मन्त्रार्थमञ्जरी–** (एकादश्यामश्विनावपि देवते) अश्विना, निरुक्तमेतत् 'अश्विना यज्वरी' इत्यत्र, हे अश्विनौ । दीद्यग्नी, दीप्ताग्नी, अतिशयेन दीप्ताग्नि सदृशाविति यावत्, 'दीपी दीप्तौ' इत्यतो यङ्लुगन्ताड्डिप्रत्यये टिलोपे 'दीदि' इति सिद्धेः । शुचिव्रता, शुचिव्रतौ, शुचि पवित्रं व्रतं कर्म ययोस्तौ शुचिव्रतौ । यज्ञवाहसा, यज्ञवाहसौ, यज्ञानां प्रवर्तकौ । (युवाम्) ऋतुना पूर्ववत् । मधु, सोमम् । पिबतम् ।। ११ ।।

**स्कन्द–** 'आश्विन्येकादशी ज्ञेया' । एकादश्यृगश्विनीदेवता ज्ञातव्या । **अश्विना पिबतं मधु** सोमाख्यम् । **दीद्यग्नी** दीव्यतेर्द्योतनार्थस्य दीदिः अत्यर्थदीप्तः । दीदिरग्निः ययोः सम्बन्धी तौ दीद्यग्नी । केन सम्बन्धेन सम्बन्धी ? जन्यतया । कुत एतत् । 'युवं शका मायाविना' (ऋ.१०,२४,४) इत्यश्विनोररणिमन्थनदर्शनात् दीप्तस्याग्नेर्जनयितारौ पितरावित्यर्थः । **शुचिव्रता** शुद्धकर्माणौ । मा च केवलावेव पिबतम् ? किन्तर्हि । **ऋतुना** सह । हे **यज्ञवाहसा!** अन्तं यज्ञस्य प्रापयितारौ समापयितारावित्यर्थः ।। ११ ।।

**वेङ्कटमाधव–** अश्विनौ पिबतं सोमं अरण्योर्दीप्तस्य अग्नेर्जनयितारौ शुचिकर्माणौ ऋतुना सह यज्ञस्य वोढारौ ॥ ११ ॥

**मुद्गल–** हे **अश्विना** अश्विनौ! **मधु** माधुर्योपेतं सोमम् । कीदृशौ ? **दीद्यग्नी** द्योतमानाहवनीयाद्यग्नियुक्तौ **शुचिव्रता** शुद्धकर्माणौ **ऋतुना** ऋतुदेवतया सह **यज्ञवाहसा** यज्ञस्य निर्वाहकौ ॥

**सायण–** हे अश्विनौ **मधु** माधुर्योपेतं सोमं पिबतम् । कीदृशौ ? **दीद्यग्नी** द्योतमानाहवनीयाद्यग्नियुक्तौ **शुचिव्रता** शुद्धकर्माणौ **ऋतुना** ऋतुदेवतया सह **यज्ञवाहसा** यज्ञस्य निर्वाहकौ ।

अश्विना । सम्बोधनद्विवचनस्य 'सुपां सुलुक्' इति आकारः । आमन्त्रिताद्युदात्तः । पिबतम् । शपः पित्त्वादनुदात्तत्वम् । तिङश्च लसार्वधातुकस्वरेण धातुस्वर एव शिष्यते । मधु । 'फलिपाटि' (उ.सू.१,१८) इत्यादिना उप्रत्ययः । 'नित्' इत्यनुवृत्तेः नित्त्वादाद्युदात्तः । दीद्यग्नी । 'दिवु क्रीडादौ' । 'अन्येभ्योऽपि दृश्यन्ते' (पा.सू.३,२,७५) इति विच् । वेरपृक्तलोपात् वलि लोपो बलीयानिति प्रथमवकारस्य लोपः (पा.सू.६,१,६६-६७) । प्रथमं प्रत्ययलोपे हि 'वर्णाश्रयविधौ प्रत्ययलक्षणं नास्ति' (परिभा.२१) इति निषेधात् वलि लोपो न स्यात् । छान्दसं द्विर्वचनम् । तुजादित्वात् अभ्यासस्य दीर्घत्वम् । यङ्लुगन्ताद्वा 'संज्ञापूर्वको विधिरनित्यः' (परिभा. ९३,१) इत्यभ्यासस्य गुणाभावः । दीदिरग्निर्ययोस्तौ दीद्यग्नी । आमन्त्रिताद्युदात्तत्वम् । पादादित्वात् न निघातः । शुचिव्रता । शुचि व्रतं ययोस्तौ । 'सुपां सुलुक्' इति आकारः । दीद्यग्निशब्दस्य सामान्यवचनत्वेन 'नामन्त्रिते' इति अविद्यमानवत्त्वप्रतिषेधात् आष्टमिकनिघातत्वम् । पूर्वस्य पराङ्गवद्भावाद्वा ऐकस्वर्यम् । यज्ञवाहसा । 'वह प्रापणे' । यज्ञं वहतः इति यज्ञवाहसौ । 'वहिहाधाञ्भ्यश्छन्दसि' (उ.सू.४,६६०) इति असुन् । तत्र हि 'गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं च' (उ.सू.४,६६६) इति वचनात् सोपपदानामपि भवति इत्युक्तम् । 'णित्' इत्यनुवृत्तेः उपधावृद्धिः । 'सुपां सुलुक्' इत्यादिना विभक्तेः आकारः । आमन्त्रितनिघातः । असामर्थ्यात् पूर्वस्य न पराङ्गवद्भावः ॥ ११ ॥

**सिद्धाञ्जनम्–** एकादशीमृचमाह– हे **अश्विना** अश्विनौ, **ऋतुना** दिव्यसमयानुसारेण **मधु** मधुरं सोमं पिबतम् । कीदृशौ ? **दीद्यग्नी** दीदिः दीप्तः अग्निः ययोस्तौ । दिवु धातोरभ्यासः छन्दसि रूपम् । 'अश्विनौ वै देवानां भिषजावश्विनावध्वर्यू धर्मं सम्भरतः' इति ऐतरेयब्राह्मणं

अश्विनोः अग्निमन्थनमुपपादयति । ऋक्संहितायामन्यत्र (१०-२४-४) ऋषिणा विमदेन 'ईळितौ' अश्विनौ परम्परसङ्गतौ अग्निं निर्मथितवन्तौ इत्यर्थको मन्त्रवर्णश्च भवति । अन्तरर्थानुसारेण तात्पर्ययोजने रसवान् भवति 'दीद्यग्री' इति मन्त्रस्थशब्दार्थः। अश्विनोर्व्यापारः प्रथमानुवाके प्रतिपादितः । 'दीद्यग्री' इति सकृदेव प्रयुक्तं ऋक्संहितायाम् । अन्यत्र वालखिल्यसूक्तेषु सकृत् । उभयत्र च अश्विनोर्विशेषणम् । **शुचिव्रता** शुद्धकर्माणौ **यज्ञवाहसा** यज्ञस्य प्रापयितारौ ।। ११ ।।

## ऋक्संहिता पदपाठसहिता

**गार्हपत्येन सन्त्य ऋतुना यज्ञनीरसि । देवान् देवयते यज ।। १२ ।।**

**गार्हऽपत्येन । सन्त्य । ऋतुना । यज्ञऽनीः । असि । देवान् । देवऽयते । यज ।।१२।।**

## ऋग्भाष्यम्

**............... सन्त्योऽग्निः सन्ततत्वतः ।**
**विष्णुर्वर्त्वधिपो विष्णुः केशवादिस्वरूपतः ।**
**ग्रहान्सोमस्य मिमत इति तस्यैव कथ्यते ।**
**गार्हपत्येन पात्रेण यजमानस्तु देवयन् ।**
**देवान् यातीति ..................... ।। १२ ।।**

**ऋग्भाष्यटीका– गार्हपत्येन ।** सन्त्यपदमग्नाविष्ण्वोर्योजयति– **सन्त्य इति** ।। सम्पूर्वात्तनोतेर्ड्यः । सन्ततत्वतः अग्नेरजस्रत्वाद्विष्णोर्व्याप्तत्वात् । अत्र प्राक् ऋतुशब्देन देवता विवक्षिता कासावित्यतोऽधिदेवतामाह– **ऋत्वधिप इति** ।। एकैकस्यर्तोर्मासभेदेन द्वे द्वे रूपे । तत्कुत इत्यत आह– **ग्रहानिति** ।। सुपर्णं विप्राः कवयो वचोभिरेकं सन्तं बहुधा कल्पयन्ति । छन्दांसि च दधतो अध्वरेषु ग्रहान्त्सोमस्य मिमते द्वादशेति श्रुतौ तस्यैव विष्णोरेव ऋत्वाधिपत्यं कथ्यते । तथाहि । कवयो विप्राः सुपर्णं सुष्ठुपरमानन्दरूपं विष्णुमेकमेव सन्तं वचोभिः ऋतुशब्दैरेव बहुधा केशवादिद्वादशधास्थितं कल्पयन्ति चिन्तयन्ति । किंच । तं द्वादशधा स्थितं प्रत्यध्वरेषु छन्दांसि मन्त्रान् दधतो दधानाः सोमस्य ग्रहान् मिमते निर्मिमत इति । गार्हपत्यदेवयच्छब्दौ व्याख्याति– **गार्हपत्येनेति** ।। हे **सन्त्य** अग्ने त्वं **गार्हपत्येन** पात्रेण **ऋतुना** ऋतुपात्रेण च सोमं पीत्वेति शेषः । ऋतुदेवतया सहेति वा । **यज्ञनीः** यज्ञानां प्रवर्तकः **असि** । स च त्वं देवान् यातीति **देवयन्** यजमानस्तस्मै तत्प्रयोजनाय **देवान् यज** ।। १२ ।।

**मन्त्रार्थमञ्जरी–** (द्वादश्यां विष्णुरग्निर्वापि देवता) (हे) सन्त्य, अजस्रत्वरूप व्याप्तत्वरूप-सन्तततत्वहेतुना यथाक्रमं 'सन्त्य!' इत्युक्त हे अग्ने, हे विष्णो, सम्पूर्वात् 'तनु विस्तारे' इत्यतो ड्यप्रत्ययः । (यस्त्वम्) । गार्हपत्येन, पात्रेण । ऋतुना, पात्रेण । (च), ऋतुदेवतया सहेति वा । (सोमं पीत्वा) इति शेषः । यज्ञनीः, यज्ञानां प्रवर्तकः । असि । (स च त्वम्) देवयते, देवानेतीति व्युत्पत्त्या देवयन्यजमानः, इणः शतृप्रत्ययः, तस्मै, तत्प्रयोजनाय । देवान् यज ।। अत्र सूक्ते सर्वत्र 'ऋतुदेवतया सह' इत्युक्तऋतुदेवताः द्वादशमासाधिपेषु केशवादिषु द्वादशसु यथाक्रमं केशवादिद्वयं द्वयं षड्तुषु च ज्ञेयम् । (ऋत्वधिपत्वं) मासाधिपत्वं च विष्णोः 'सुपर्णं विप्राः' (ऋ०म०१०।११४।५) इति श्रुतिसिद्धम् । श्रुत्यर्थष्टीकायां व्यक्तः ।। १२ ।।

**स्कन्द–** 'आग्नेयी चैव द्वादशी' । द्वादश्यृगग्निर्देवता । **गार्हपत्येन** इति हेतौ तृतीया । गृहपतित्वेन हेतुना । हे **सन्त्य** । षणु दाने इत्यस्यैतद् रूपम् । दातः अग्ने! **ऋतुना** सह **यज्ञनीः** यज्ञस्य देवान् प्रति प्रापयिता **असि** । अतो ब्रवीमि, **देवान् देवयते** देवान् कामयमानस्य ममार्थाय **यज** ।। १२ ।।

**वेङ्कटमाधव–** कथमहं गृहपतिः स्यामिति, सन्त्य । सनोतेदानकर्मणः, सतां वा हित ! ऋतुना सह यज्ञस्य नेता असि । स देवान् यज यजमानाय ।। १२ ।।

**मुद्गल–** हे **सन्त्य** फलप्रदाग्निदेव । **गार्हपत्येन** गृहपतिसम्बन्धिना रूपेण युक्तः सन् **ऋतुना** ऋतुदेवेन सह **यज्ञनीः** यज्ञस्य निर्वाहकः **असि** । तस्मात् त्वं **देवयते** देवविषयकामनायुक्ताय यजमानाय देवान् यज ।। १२ ।।

**सायण–** हे **सन्त्य** फलप्रदाग्निदेव **गार्हपत्येन** गृहपतिसम्बन्धिना रूपेण युक्तः सन् ऋतुना ऋतुदेवेन सह **यज्ञनीः** यज्ञस्य निर्वाहकः असि । तस्मात् त्वं **देवयते** देवविषयकामनायुक्ताय यजमानाय **देवान्** यज ।

गार्हपत्येन । 'गृहपतिना संयुक्ते ञ्यः' (पा.सू.४,४,९०) । 'यस्य' इति लोपः । ञित्वात् आदिवृद्धिः आद्युदात्तत्वं च । गृहपतित्वमित्यर्थे 'पत्यन्तपुरोहितादिभ्यः' (पा.सू.५,१,१२८) इति यकि तु अन्तोदात्तत्वं स्यात् । सन्त्य सनने भव । 'षणु दाने' । 'क्तिच्क्तौ च' इति क्तिच् । 'न क्तिचि दीर्घश्च' (पा.सू.६,४,३९) इति दीर्घनलोपाभावः । 'भवे छन्दसि' (पा.सू.

४,४,११०) इति यत्; 'तत्र साधुः' (पा.सू.४,४,९८) इति वा । निघातः । यज्ञं नयतीति यज्ञनीः । 'सत्सूद्विष' इत्यादिना क्विप् । कृदुत्तरपदप्रकृतिस्वरः । देवयते । देवानात्मन इच्छतीति देवयन् । तस्मै । 'क्यचि च' इति ईत्वं न भवति 'न च्छन्दस्यपुत्रस्य' इति निषेधात् । 'अश्वाघस्य' (पा.सू.७,४,३७) इति आत्वविधानात् ईत्वनिषेधे प्राप्तस्य दीर्घस्याप्येष निषेध इत्युक्तम् । 'शतुरनुमो नद्यजादी' इति विभक्तेरुदात्तत्वम् । अत्र क्यचश्चित्त्वादन्तोदात्तत्वम् । शपः पित्त्वादनुदात्तत्वम् । शतुश्च लसार्वधातुकस्वरेण उभयोः क्यचा सह एकादेशे 'एकादेश उदात्तेनोदात्तः' इत्युदात्तः । तस्मादन्तोदात्तत्वात् परस्या विभक्तेः 'शतुरनुमो नद्यजादी' इत्युदात्तत्वम् ।। २९ ।।

**सिद्धाञ्जनम्–** द्वादशीमृचमाह– **गार्हपत्येन** गृहपतित्वेन हेतुना **सन्त्य** सनने दाने भव । षणु दाने भवेत् छन्दसीति यत् , अन्यच्च छान्दसम् । हे अग्ने **ऋतुना** ऋत्वनुसारेण **यज्ञनीः** यज्ञस्य प्रापयिता असि भवसि । **देवयते** देवकामाय यजमानाय **देवान् यज** । अग्निः यजमानाय स्वयं गार्हपत्यं वहन् दानाधिकारी भवति, तस्मात् यजमानस्यार्थाय स एव देवान् यष्टुं प्रभवति । सन्त्य इत्यत्र सनने भवः साधुर्वा स्यात् । भवश्चेत् यजमानेन कृते स्वार्थत्यागरूपे दाने इति ग्राह्यम् । साधुश्चेत् दाता सोऽग्निरिति स्पष्टम् ।

।। इति प्रथमाष्टके प्रथमाध्याये एकोनत्रिंशो वर्गः ।।

### ।। अथ त्रिंशो वर्गः ।।

### (सूक्तम् १६)

### ऋक्संहिता पदपाठसहिता

९ मेधातिथिः काण्वः । इन्द्रः । गायत्री ।

**आत्वा वहन्तु हरयो वृषणं सोमपीतये । इन्द्र त्वा सूरचक्षसः ।। १ ।।**

आ । त्वा । वहन्तु । हरयः । वृषणम् । सोमऽपीतये । इन्द्र । त्वा । सूरऽचक्षसः ।।१।।

### ऋग्भाष्यम्

**............... सुष्ठूरीकुर्वन्ति विषयान्यतः ।**

**चक्षूंषीन्द्रस्य हरयस्तेनोक्ताः सूरचक्षसः ।। १ ।।**

**ऋग्भाष्यटीका– आत्वा ।** नवर्चमेतदैंद्रं सूक्तम् । अत्र सूरचक्षस इत्येतद्व्याख्याति – **सुष्ठ्विति ।।** ऊरशब्द ऊरीशब्दार्थश्छन्दसि धातुना विनाऽपि प्रयुज्यते । सुष्ठु ऊराणि विषयान् उरीकुर्वन्ति गृह्णन्तीति सूराणि चक्षांसि चक्षूंषि येषां ते **सूरचक्षसः** इत्यर्थः । चक्षूंषि हरीणामिति शेषः । हे **इन्द्र वृषणं** वर्षितारं **त्वा** त्वां **सोमपीतये** सोमपानाय सूरचक्षसः **त्वा** तव **हरयः आवहन्तु** ।। १ ।।

**मन्त्रार्थमञ्जरी–** अथ 'आ त्वा' इति षोडशं नवर्चं वर्गद्वयात्मकमैन्द्रं गायत्रीछन्दस्कं सूक्तम् । (हे) इन्द्र । वृषणम्, वर्षितारम् । त्वा, त्वाम् । सोमपीतये, सोमपानाय । सूरचक्षसः, सुष्ठूराणि सम्यग्विषयविषयकाणि चक्षांसि चक्षूंषि येषां ते सूरचक्षसः, ऊरीशब्दपर्याय ऊरशब्दः, 'सुष्ठूरीकुर्वन्ति विषयानिति सूराणि' इति व्युत्पत्त्या सम्यग्वस्तुविषयकत्वं सूरशब्दस्य ज्ञेयम् । त्वा, तव । हरयः, अश्वाः । आ वहन्तु ।। १ ।।

**स्कन्द–** 'ऐन्द्रं त्वनन्तरं सूक्तम्' । ऐन्द्रमेतदनन्तरं सूक्तम् । **आ वहन्तु** त्वां **हरयः** अश्वाः । कीदृशम् ? **वृषणं** वर्षितारम् । किमर्थम् ? सोमपीतये । हे **इन्द्र! त्वा** षष्ठ्यर्थे द्वितीया । तव स्वभूताः । कीदृशः ? **सूरचक्षसः** सूरः आदित्यः, चक्षो दर्शनम् । सूरस्येव चक्षो येषां ते सूरचक्षसः । बलवत्वादादित्यवद् दीप्तिमन्त इत्यर्थः । सूर्यदर्शिनो वा सूरचक्षसः ।।

**वेङ्कटमाधव–** आ वहन्तु त्वाम् अश्वा वर्षितारं सोमपानाय इन्द्र! त्वा सुवीर्यदर्शना दूरेऽपि पश्यन्त । त्वाशब्दावृत्तिरर्धर्चभेदात् ।। १ ।।

**मुद्गल–** 'आ त्वा वहन्तु' इति नवर्चं पञ्चमं सूक्तम् । मेधातिथि ऋषिः । गायत्रम् । इन्द्रो देवता ।

हे **इन्द्र! वृषणं** कामानां वर्षितारं **त्वा** त्वां **सोमपीतये** सोमपानार्थं **हरयः** त्वदीया अश्वा **आ वहन्तु** अस्मिन् कर्मणि आनयन्तु । तथा च **सूरचक्षसः** सूर्यसमानप्रकाशयुक्ता ऋत्विजः **त्वा** त्वां मन्त्रैः प्रकाशयन्त्विति शेषः ।। १ ।।

**सायण–** 'आ त्वा वहन्तु' इति पञ्चमं नवर्चं सूक्तम् । ऋषिच्छन्दसी पूर्ववदनुवर्तेते । विशेषादेशाभावात् इन्द्रो देवता । विनियोगस्तु– प्रातः सवने मैत्रावरुणस्योन्नीयमाने सूक्तम् 'आ

त्वा वहन्तु हरयः' इति । तथा च 'द्विदेवत्यैश्चरन्ति' इति खण्डे सूत्रितम्– 'उन्नीयमानेभ्योऽन्वाहा त्वा वहन्तु' (आश्व.श्रौ.५,५) इति । तथा षोडशिशस्त्रे 'आ त्वा वहन्तु हरयः' इति तिस्रः । तथा सूत्रितम् 'अथ षोडशी' इति खण्डे– 'आ त्वा वहन्तु हरय इति तिस्रो गायत्र्यः' (आश्व.श्रौ.६,२) इति ।

हे **इन्द्र वृषणं** कामानां वर्षितारं त्वां **सोमपीतये** सोमपानार्थं **हरयः** त्वदीया अश्वाः **आ वहन्तु** अस्मिन् कर्मण्यानयन्तु । तथा **सूरचक्षसः** सूर्यसमानप्रकाशयुक्ता ऋत्विजस्त्वां मन्त्रैः प्रकाशयन्त्विति शेषः ।

हरन्तीति हरयः । 'इन् सर्वधातुभ्यः' (उ.सू.४,५५७) इति इन् । नित्त्वादाद्युदात्तः । वृषणम् । 'कनिन्युवृषितक्षि' (उ.सू.१,१५४) इत्यादिना कनिन् । कित्त्वात् लघूपधगुणाभावः । 'वा षपूर्वस्य निगमे' (पा.सू.६,४,९) इति विकल्पितमुपधादीर्घत्वम् । सोमपीतये । 'ऐभिरग्ने' (ऋ.सं.१,१४,१) इत्यत्रोक्तम् । सूरचक्षसः । 'चक्षिङ् व्यक्तायां वाचि' । 'सर्वधातुभ्योऽसुन्' । 'चक्षिङः ख्याञ्' (पा.सू.२,४,५४) इति न भवति 'अनसोः प्रतिषेधो वक्तव्यः' (पा.सू. २,४,५४,१०) इति निषेधात् । 'षू प्रेरणे' । सुवतीति सूरः । 'सुसूधा गृधिभ्यः क्रन्' (उ.सू. २,१८२) इति क्रन् । कित्त्वाद्गुणाभावः । नित्त्वादाद्युदात्तः । सूरवत् ख्यानं प्रकाशो येषाम् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ।। १ ।।

**सिद्धाञ्जनम्–** चतुर्थेऽनुवाके आ त्वा वहन्त्विति पञ्चमं नवर्चं सूक्तम् । ऋषिच्छन्दसी पूर्ववत् । इन्द्रो देवता ।

तत्र प्रथमामृचमाह– हे **इन्द्र वृषणं** वर्षितारं **त्वा** त्वां **हरयः** अश्वाः त्वदीयाः **सोमपीतये** सोमपानाय **आवहन्तु** आनयन्तु । **त्वा** त्वां **सूरचक्षसः** सूरवत् चक्षो दर्शनं येषां ते सूर्यतुल्यदृष्टय इत्यर्थः । चक्षेरसुन् छन्दसि । ते हरयः आवहन्त्विति सम्बन्धः । त्वा इति द्विरावृत्तिरादरायां, अर्धर्चभेदाच्च । इन्द्रस्य हरीणां दर्शनानि सूर्यस्येव दूरगामीनि दीप्तानि च भवन्ति । सूर्यदर्शिनस्ते हरय इत्येकेषां व्याख्यानेऽप्यदोषः । सूरचक्षस ऋत्विज इति सायणीयम् । तर्हि न तैर्मानुषैर्भाव्यम् । ये च यज्ञशालामलङ्कुर्वाणाः यथाविधि वेदपाठिनः यज्ञकर्मपरिसमाप्तौ स्वकर्मपरिश्रमानुरोधेन यथोक्तदक्षिणालाभसन्तुष्टाः निवर्तन्ते, न ते सूरचक्षसः । अथेमे च ऋत्विजो

देवाश्चेत्, तेषां न तत् कर्तव्यम् । इन्द्रस्य वोढारो हरयः, न ऋत्विजः, सर्वान् देवान् आवहन्नग्निः गीयते । इन्द्रश्च सर्वैर्देवैरागच्छतीति च श्रूयते । क्व श्रूयते देवा ऋत्विग्भूता इन्द्रं आवहन्तीति? 'सूरचक्षसो' देवाः स्युः, देवत्वं प्राप्ता ऋषयः स्युः । इह तु न सा प्रसक्तिः । हरय एव प्रसक्ताः उत्तरत्रापि सूक्तेऽस्मिन् हरिप्रशंसैव प्रकृतेत्यसंशयम् । नैतद्युक्तं यत् सूरचक्षस ऋत्विज इन्द्रावहनाय आहूयन्त इति ।। १ ।।

## ऋक्संहिता पदपाठसहिता

**इमा धाना घृतस्नुवो हरी इहोपवक्षतः । इन्द्रं सुखतमे रथे ।। २ ।।**

इमाः । धानाः । घृतस्नुवः । हरीइति । इह । उप । वक्षतः । इन्द्रम् । सुखऽतमे । रथे ।।

## ऋग्भाष्यम्

**भक्तिस्नुतानि धानानि बुद्धेर्धाना इति ह्यपि ।। २ ।।**

**ऋग्भाष्यटीका–** **इमाः** । अध्यात्मं व्याख्याति– **भक्तीति** ।। हे **हरी** मनोबुद्धी इन्द्रार्थं **इमा घृतस्नुवः** स्नेहसाम्याद्घृतं भक्तिः तया स्नुताः ष्णुप्रस्रवणे आर्द्राः **धानाः** बुद्धेर्धानानि वृत्तिविशेषाः सन्ति तस्मात् **इह सुखतमे रथे** शरीरे **इन्द्रं उपवक्षतः** उपवहतं सन्निधापयतम् । बाह्ये त्वाह– **धाना इति** ।। धानाशब्देन प्रसिद्धाधना अपीत्यर्थः । हे **हरी** अश्वौ युवयोरर्थे **इमा घृतस्नुवो धानाः** सन्ति । तस्मात् **इन्द्रं सुखतमे रथे** स्थितं सुखतमेन रथेनेति वा इह यज्ञमुपवक्षतः ।।

**मन्त्रार्थमञ्जरी–** (हे) हरी, इन्द्रसम्बन्ध्यश्वौ । (युवयोरर्थे) इमाः धानाः । घृतस्नुवः, घृतार्द्राः सन्ति, 'ष्णु प्रस्रवणे' इति धातोर्विच् तस्मात् इन्द्रम् । सुखतमे रथे (स्थितम्) इति शेषः, सुखतमेन रथेनेति वा इह, यज्ञे । उप वक्षतः, उपवहतम् । अध्यात्मं तु (हे) हरी, मनोबुद्धी । (इन्द्रार्थाः) इमाः । घृतस्नुवः, स्नेहसाम्याद्घृतं भक्तिस्तया स्नुवः स्नुता आर्द्राः, भक्तियुक्ता इति यावत् । धानाः, बुद्धिवृत्तिविशेषाः सन्ति । तस्मात् इह सुखतमे । रथे, शरीरे । इन्द्रम् । उपवक्षतः, वहतेः लेट्यडागमे सिपि ढत्वकत्वषत्वेषु रूपम्, उपवहतम् (संनिधापयतम्) इत्यर्थः ।

**स्कन्द–** द्वितीयाश्रुतेरत्र तद्योग्यः कर्मप्रवचनीयः प्रतिशब्दोऽध्याहार्यः । **इमाः धानाः घृतस्नुवः** ष्णुप्रस्रवणे । अलङ्करणोपस्तरणाभिघारणैर्घृतस्राविणीः प्रति । यज्ञे हि हर्योः ऋजीषं भागो धानाश्च । अत इदं तद्भागेन धानादिभिर्हर्योः प्रोत्साहनार्थं न देशोपलक्षणम् । **हरी** इन्द्राश्वौ

**इह** कर्मणि **उप वक्षतः** उपेति आ इत्येतस्य स्थाने । लोडर्थे च पञ्चमो लकारः । आवहताम् । कम् ? **इन्द्रम्** । **सुखतमे रथे** सप्तमीनिर्देशात् स्थितमिति वाक्यशेषः। तृतीयार्थे वा सप्तमी, सुखतमेन रथेन ।। २ ।।

**वेङ्कटमाधव–** इन्द्राश्वयोर्भागधेयभूताः इमाः धानाः उपस्तरणाभिघारणाभ्यां घृतस्राविण्यः । तदर्थमश्वौ इन्द्रं इह सुखतमे रथे स्थापयित्वा उपवक्षतः ।। २ ।।

**मुद्गल– हरी** इन्द्रस्य रथस्य वोढारौ अश्वौ **इमाः** यागार्थं वेद्यामासादितत्वेन पुरोवर्तिनीः **धानाः** भ्रष्टयवतण्डुलादीनुद्दिश्य **सुखतमे रथे** इन्द्रमवस्थाप्य **इह** अस्मिन् कर्मणि **उप वक्षतः** वेदिसमीपे वहताम् । कीदृशीः धानाः ? **घृतस्नुवः** घृतं स्नुवन्तीति घृतस्नुवः अलङ्करणोपस्तरणाभिघारणेन घृतस्राविणीः ।। २ ।।

**सायण–** हरिशब्द इन्द्ररथस्य वोढारौ अश्वौ आचष्टे । तथा च श्रुत्यन्तरं– 'हर्योः स्थाता' इति, 'हरिभ्यां त्वेन्द्रो देवतां गमयतु' (तै.सं.१,४,२८,१; १,६,४,३) इति च । एतदेवाभिप्रेत्य निघण्टुकार आह– 'हरी इन्द्रस्य' (नि.१,१५,१) इति । तादृशौ हरी **इमाः** यागार्थं वेद्यां आसादितत्वेन पुरोवर्तिनीः **धानाः** भ्रष्टयवतण्डुलानुद्दिश्य **सुखतमे रथे इन्द्रं** अवस्थाप्य **इह** अस्मिन् कर्मणि **उप वक्षतः** वेदिसमीपे वहताम् । कीदृशीर्धानाः? **घृतस्नुवः** अलङ्करणोपस्तरणाभिघारणेन घृतस्राविणीः ।

धीयन्ते इति धानाः । 'धापृवस्यजतिभ्यो नः' (उ.सू.३,२८६) इति नः । प्रत्ययस्वरः । घृतस्नुवः । घृतं स्नुवन्तीति घृतस्नुवः । क्विपि तुगभावश्छान्दसः । धातुस्वरः । समासे कृदुत्तरपदप्रकृतिस्वरत्वम् । स्नोः संयोगपूर्वत्वेन यणभावात् उवङादेशः । हरी । 'हृञ् हरणे' । 'सर्वधातुभ्य इन्' । नित्त्वादाद्युदात्तः । प्रगृह्यत्वात् संहितायां प्रकृतिभावः । वक्षतः । प्रार्थनाख्ये लिङर्थे लेट् । तस्य प्रथमपुरुषद्विवचनं तस् । 'लेटोऽडाटौ' (पा.सू.३,४,९४) इति अडागमः । शपि प्राप्ते 'सिब्बहुलं लेटि' (पा.सू.३,१,३४) इति सिप् । ढत्वकत्वपत्वानि । 'तिङ्ङतिङः' इति निघातः । सुखतमे । गतम् ।। २ ।।

**सिद्धाञ्जनम् –** द्वितीयामृचमाह– **इमाः** पुरोवर्तिन्यः घृतसाधिताः अत एव **घृतस्नुवः** घृतं स्नुवन्ति प्रस्रावयन्तीति घृतस्नुवः ताः **धानाः** भृष्टयवतण्डुलरूपाः उद्दिश्य, **हरी** इन्द्रस्याश्वौ **इह**

यजनकर्मणि **इन्द्रं सुखतमे रथे** अवस्थाप्य **उपवक्षतः** वेदिसमीपे वहताम् । प्रार्थनायां लिङर्थे लोडर्थे वा लेट् । घृतेन यवतण्डुलानां भर्जनेन साधु साधिता धानाः घृतं स्रावयन्ति । ता इमाः हर्योः प्रोत्साहनार्थाः । यज्ञे हर्योः ऋजीषं भागो धानाश्च इति स्कन्दस्वामी। बहिर्यागपरस्य तात्पर्यस्यास्य जीवभूतो धानाशब्द भृष्टयवतण्डुलेषु रूढः । यागोपयोगार्थानि द्रव्याणि घृतपयोदधिप्रभृतीनि सङ्केतभूतानीति अस्माभिः प्रतिपादितं अत्रावधातव्यम् । यवतण्डुल-तद्विकारधानापुरोडाशादयः अन्नमयशरीरसम्बन्धलक्षकाः । यद्यपि धानं धानी धानाः इति त्रीण्यपि धारणार्थस्य दधातेः रूपाणि, रूढिभेदात् धानं धानी वा आधारपात्रं आसनं अभिधत्ते, न तथा धानाः । तथाऽपि तासां शरीरधारकत्वं, बुद्धिगतदीप्तिवाचकघृतस्राविणीत्वं च अवयवार्थबलात् सङ्केतार्थबलात् घृतस्नुव इति विशेषणोपादानाच्च बोध्ये । बहिर्यागे हर्योर्भोज्या धानाः । अन्तर्यागे हर्योः प्रदीप्तप्राणबलयोर्भोग्याः अन्नमयशरीरगतधारणाशक्तिविशेषाः । ऋक्संहितायां प्रायशः सर्वत्र इन्द्रायैव धानाः पच्यन्त इति श्रूयते । याज्ञिकग्रन्थेष्वेव हर्योर्भोगो धाना उक्ताः । तत्रापि अन्तरर्थ उपपादितः । इन्द्रायैव धाना इति निर्णायका मन्त्रवर्णा बहवो भवन्ति । इन्द्रस्वीकार्या 'घृतस्नुवो धानाः' तु अन्नमयशरीरोपहितदीप्तिभरितधीवृत्तिविशेषा इति ग्राह्यम् । तादृशीर्धानाः दिव्यप्रकाश-मनोधामस्वामिनः इन्द्रस्य स्वीकार्या भवन्ति । प्रत्यहं ईदृशी 'धानाः' परस्परं सुसङ्गता इन्द्रमुद्दिश्य ऋषिर्निवेदयन् 'भुङ्क्ष्व' इति प्रार्थयते 'दिवे दिवे सदृशीः अद्धि धानाः' (३-३५-३) इति । अन्यत्र 'य इन्द्राय सुनवत् सोममद्य पचात् पक्तीः उत भृज्जाति धानाः' (४-२४-७) । याग-द्रव्याणां सङ्केतात्मकत्वे विचार्यमाणे, दधिधानादिशब्दानामवयवार्थो गूढार्थद्वारमुद्घाटयेदिति बोध्यम् । उद्देशपूर्वकं धानादिद्रव्याणि सङ्केतरूपतया स्थापयित्वा अन्तर्यागार्थाः मन्त्रवर्णाः प्रवृत्ता इति प्रदर्शयितुं धानाशब्दप्रस्तावेऽत्र किञ्चिद्विस्तृतं विवरणम् ॥ २ ॥

### ऋक्संहिता पदपाठसहिता

**इन्द्रं॑ प्रा॒तर्ह॑वामह॒ इन्द्रं॑ प्रय॒त्य॑ध्व॒रे । इन्द्रं॒ सोम॑स्य पी॒तये॑ ॥ ३ ॥**

इन्द्र॑म् । प्रा॒तः । ह॒वा॒म॒हे॒ । इन्द्र॑म् । प्र॒ऽय॒ति । अ॒ध्व॒रे ॥ इन्द्र॑म् । सोम॑स्य । पी॒तये॑ ॥

### ऋग्भाष्यम्

**प्रातरित्यादिवाक्येन सवनत्रयमीरितम् ।**
**समाप्तत्वात्सोमपीतिस्तृतीयं सवनं स्मृतम् ।**
**सदा .................. ........... ॥ ३ ॥**

**ऋग्भाष्यटीका–** इन्द्रम् । ऋचस्तात्पर्यमाह– **प्रातरिति ।** कथं सोमपीतिशब्देन तृतीयं सवनमुच्यते सोमपानस्यान्यत्र सद्भावात् अत आह– **समाप्तत्वादिति ।।** सोमपानस्यान्यत्र सद्भावेऽपि तृतीयसवने तस्य समाप्तत्वात्पूर्णत्वादसाधारण्येन च व्यपदेशा भवन्तीति तद्विवक्षया सोमपीतिशब्देन तृतीयसवनं स्मृतम् । अभिप्रायमाह– **सदेति ।।** ततश्च वयं **प्रातः** प्रातःसवने **इन्द्रं हवामहे । अध्वरे** यज्ञे **प्रयति** प्रवर्तमाने माध्यंदिने सवन इति यावत् । इन्द्रं हवामहे । **सोमस्य पीतये** तृतीयसवनेऽपि सोमपानायेन्द्रं हवामहे । एवं सदा तं हवामह इति । अन्यथा पुनरिन्द्रमिति व्यर्थं स्यात् । क्रियाशब्दोयऽमिति चेन्न पूर्वस्यापि तथात्वेन विशेषणत्वायोगात् ।।

**मन्त्रार्थमञ्जरी–** प्रातः, प्रातः सवने । इन्द्रम् (वयम्) हवामहे । अध्वरे, यज्ञे प्रयति, प्रवर्तमाने, माध्यन्दिनसवन इति यावत् । इन्द्रम् (वयम्) (हवामहे) सोमस्य पीतये, तृतीयसवने सोमपानस्य पर्यवसानात् 'असाधारण्येन व्यपदेशा भवन्ति' इति सोमपीतिशब्देन तृतीयसवनग्रहः, (तृतीयसवनेऽपि) सोमपानार्थम् । इन्द्रम् (वयम्) (हवामहे) आह्वयामः ।। ३ ।।

**स्कन्द– प्रातः** प्रक्रमकाले **हवामहे इन्द्रं** एव **प्रयति** प्रवृत्ते **अध्वरे** यज्ञे । कीदृशम् इन्द्रम् ? इदि परमैश्वर्ये । सुष्ठु ईश्वरम् । पुनरिन्द्रशब्दश्रुतिसामर्थ्यात् समाप्यमान इति वाक्यशेषः । इन्द्रम् एव समाप्यमाने यज्ञे । किमर्थम् ? सोमस्य पीतये ।। ३ ।।

**वेङ्कटमाधव–** इन्द्रं प्रातः प्रवर्तमाने च यज्ञे सोमपानार्थं हवामहे । पुनः इन्द्रं इति पूरणम् ।।

**मुद्गल– प्रातः** कर्मारम्भे प्रातःसवने **इन्द्रं हवामहे** आह्वयामः । तथैव **अध्वरे** सोमयागे **प्रयति** प्रगच्छति प्रारभ्ये प्रवर्तमाने सति माध्यन्दिने सवने तं **इन्द्रं** हवामहे । तथा यज्ञसमाप्त्यवसरे तृतीयसवने **सोमस्य पीतये** सोमपानार्थं इन्द्रं हवामहे ।। ३ ।।

**सायण– प्रातः** कर्मारम्भे प्रातःसवने **इन्द्रं हवामहे** आह्वयामः । तथैव **अध्वरे** सोमयागे **प्रयति** प्रगच्छति प्रारभ्य वर्तमाने सति माध्यन्दिने सवने तं **इन्द्रं** हवामहे । तथा यज्ञसमाप्त्यवसरे तृतीयसवने **सोमस्य पीतये** सोमपानार्थं हवामहे ।

प्रातः । स्वरादिषु अन्तोदात्तो निपातितः । हवामहे । ह्वेञो लटि शपि परतो 'ह्वः सम्प्रसारणम्' इत्यनुवृत्तौ 'बहुलं छन्दसि' इति सम्प्रसारणं परपूर्वत्वं गुणावादेशौ । प्रयति । 'इण् गतौ' । लटः शतृ । 'अदिप्रभृतिभ्यः शपः' इति शपो लुक् । शतुर्ङित्त्वाद्गुणाभावः ।

प्रादिसमासः । 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्' (परिभा.२८) इति वचनात् 'प्रत्ययग्रहणे' इति नियमाभावात् 'शतुरनुमो नद्यजादी' (पा.सू.६,१,१७३) इति विभक्तेरुदात्तत्वम् । अध्वरे । उक्तम् । संहितायां 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' (पा.सू.८,२,४) इति अकारस्य स्वरितत्वम् । पीतये । 'पा पाने' । क्तिनि छान्दसमन्तोदात्तत्वम् ।। ३ ।।

**सिद्धाञ्जनम्–** तृतीयामृचमाह– **इन्द्रं प्रातः** सवनारम्भे **हवामहे** आह्वयामः। **अध्वरे** यज्ञे प्रयति प्रवृत्ते चलति सति **इन्द्रं** हवामहे इति सम्बन्धः । **इन्द्रं सोमस्य पीतये** पानाय हवामहे । अस्माकं सर्वानुभूतिरसः सोमशब्दलक्षित इन्द्रायार्प्यते । तस्मात् सवने प्रक्रान्ते प्रवृत्ते समाप्ते च इन्द्राह्वानमेव नः सर्वदा साधनं शरणं चेति भावः ।

### ऋक्संहिता पदपाठसहिता

**उप॑ नः सु॒तमाग॑हि॒ हरि॑भिरिन्द्र के॒शिभिः॑ । सु॒ते हि त्वा॒ हवा॑महे ।। ४ ।।**
**उप॑ । नः॒ । सु॒तम् । आ । ग॒हि॒ । हरि॑ऽभिः । इ॒न्द्र॒ । के॒शिऽभिः॑ ।। सु॒ते । हि । त्वा॒ । हवा॑महे ।। ४ ।।**

**ऋग्भाष्यटीका– उपनः ।** हे **इन्द्र केशिभिः** केशवद्भिः प्रलम्बकेशैः **हरिभिः** अश्वैः **नः सुतं** सोमं **उपागहि** उपागच्छ । **हि** यस्मात् त्वा त्वां सोमे **सुते** सति **हवामहे** । तस्मात् ।।

**मन्त्रार्थमञ्जरी–** (हे) इन्द्र । केशिभिः, प्रलम्बकेशयुक्तैः । हरिभिः, अश्वैः । नः । सुतम्, सोमम् । उप आ गहि, उपागच्छ । हि, यस्मात् । त्वा, त्वाम् । (सोमे) सुते (सति) हवामहे (तस्मात्) ।। ४ ।।

**स्कन्द– नः** अस्माकं स्वभूतम् **सुतं** सोमं **उप आगहि** उपागच्छ । हरिभिः हे **इन्द्र! केशिभिः** केशवद्भिः प्रलम्बकेसरैः । कस्मात् । **सुते हि** यस्माद् अभिषुते सोमे त्वां वयं हवामहे । यन्तारमाह्वयामः ।। ४ ।।

**वेङ्कटमाधव–** उत्तरा निगदसिद्धा ।। ४ ।।

**मुद्गल–** हे **इन्द्र! केशिभिः** केसरयुक्तैः **हरिभिः** अश्वैः त्वं **नः** अस्मदीयं **सुतं** अभिषुतं सोमं प्रति **उप** समीपे **आगहि** आगच्छ । **सुते** अभिषुते सोमे निमित्तभूते सति **हि** यस्मात् कारणात् **त्वां हवामहे** त्वामाह्वयामः तस्मादागच्छेति सर्वत्रान्वयः ।। ४ ।।

**सायण–** हे **इन्द्र केशिभिः** केसरयुक्तैः **हरिभिः** अश्वैस्त्वं **नः** अस्मदीयं **सुतं** अभिषुतं सोमं प्रति **उप** समीपे **आगहि** आगच्छ । **सुते** अभिषुते सोमे निमित्तभूते सति यस्मात् कारणात् **त्वा हवामहे** त्वामाह्वयामः तस्मादागच्छेति पूर्वत्रान्वयः ।

गहि । गमेर्लोटः सेर्हिः । 'शपः' इत्यनुवृत्तौ 'बहुलं छन्दसि' इति शपो लुक् । 'इषुगमियमां छः' (पा.सू.७,३,७७) इति छत्वं न भवति; 'न लुमताङ्गस्य' इति प्रतिषेधात् । 'अनुदात्तोपदेश' (पा.सू.६,४,३७) इत्यादिना अनुनासिकलोपः । तस्य 'असिद्धवदत्रा भात्' (पा.सू.६,४,२२) इत्यसिद्धत्वात् 'अतो हेः' इति हेर्लुक् न भवति । केशिभिः । 'क्लिशेरन् लो लोपश्च' (उ.सू.५,७११) इति अन् । मत्वर्थीय इनिः । प्रत्ययस्वरः । हवामहे । 'ह्वः' इत्यनुवृत्तौ 'बहुलं छन्दसि' इति सम्प्रसारणम् । शपः पित्त्वादनुदात्तत्वम् । तिङश्च लसार्वधातुक-स्वरेण धातुस्वर एव । 'तिङ्ङतिङः' इति न निघातः; 'हि च' इति प्रतिषेधात् ।। ३ ।।

**सिद्धाञ्जनम्–** चतुर्थीमृचमाह– हे **इन्द्र नः** अस्माकं **सुतं** सोमं प्रति **उपागहि** समीप-मागच्छ । कैः वोढृभिः ? **केशिभिः हरिभिः** प्रलम्बकेसरैरश्वैः । हि यस्मात् **सुते** सोमे अभिषुते निमित्तसप्तमी, **त्वा** त्वां **हवामहे** आह्वयामः, तस्मात् 'उपागहि' इति सम्बन्धः । केशिभिरिति हरिविशेषणस्य प्रयोजनं प्रागुक्तम् ।। ४ ।।

### ऋक्संहिता पदपाठसहिता

**सेमं नः स्तोममा गह्युपेदं सवनं सुतम् । गौरो न तृषितः पिब ।। ५ ।।**
सः । इमम् । नः । स्तोमम् । आ । गहि । उप । इदम् । सवनम् । सुतम् । गौरः । न । तृषितः । पिब ।। ५ ।।

**ऋग्भाष्यटीका– सेमम्** । हे इन्द्र स त्वं नः **इमं स्तोमं** स्तुतिं इदं सवनं च **सुतं** सोमं चोपागहि । आगत्य च **तृषितो गौरो न** गौरो मृगविशेषः । स इव सोमं पिब ।।५।।

**मन्त्रार्थमञ्जरी–** (हे इन्द्र) सः (त्वम्) नः इमम् । स्तोमम्, स्तुतिम् । इदम् सवनम् (च) सुतम्, सोमम् । (च) उप आ गहि । आगत्य च तृषितः । गौरः न, मृगविशेष इव । (सोमम्) पिब ।। ५ ।।

**स्कन्द–** **सः इमं** नः अस्माकं स्वभूतं **स्तोमं उपा गहि** उपागच्छ **इदं सवनं** 'सवनम्' (निघ.३,१७) इति यज्ञनाम । इमश्च यज्ञं **सुतं** अभिषुतश्च सोमम् । अथवेदं सवनमिति सप्तम्यर्थे प्रथमा । अस्मिन् यज्ञे स्तोमं सुतं च सोममुपागच्छ । उपागत्य च **गौरः न तृषितः** गौरः इत्युत्तरपदलोपो दृष्टव्यः भीमसेनो भीम इति यथा । गौरखर इव । यथा गौरः खरस्तृषितः उदकं पिबेत् तद्वत् पिब सोमम् ।। ५ ।।

**वेङ्कटमाधव–** सः त्वं इमं अस्माकं स्तोमं आगच्छ । आगत्य च इमं सुतं सोमं तृषितः गौरमृग इव उदकं उप पिब ।। ५ ।।

**मुद्गल–** हे इन्द्र **सः** त्वं **नः** अस्मदीयं **इमं स्तोमं** स्तुतिं प्रति **आगहि** आगच्छ । आगमने हेतुरुच्यते– **उप** देवयजनसमीपे **सुतं** अभिषुतं सोमयुक्तं इदं इदानीं अनुष्ठीयमानं **सवनं** प्रातःसवनादिरूपं कर्म वर्तते । तस्मात् **गौरः न** गौरमृग इव **तृषितः** सन् इमं सोमं पिब ।।

**सायण–** हे इन्द्र **सः** त्वं **नः** अस्मदीयं **इमं स्तोमं** स्तुतिं प्रति **आगहि** आगच्छ । आगमने हेतुरुच्यते– **उप** देवयजनसमीपे **सुतं** अभिषुतं सोमयुक्तं **इदं** इदानीमनुष्ठीयमानं **सवनं** प्रातःसवनादिरूपं कर्म वर्तते । तस्मात् **गौरः न** गौरमृग इव **तृषितः** सन् इमं सोमं **पिब** ।

सः इमं इत्यत्र संहितायां 'सोऽचि लोपे चेत्पादपूरणम्' (पा.सू.६,१,१३४) इति सुलोपः । गहि । गतम् । सवनम् । सूयतेऽस्मिन् सोम इत्यधिकरणे ल्युट् । 'लिति' इति प्रत्ययात्पूर्वस्योदात्तत्वम् । ल्युडन्तात् सप्तम्याः 'सुपां सुपो भवन्तीति वक्तव्यम्' (पा.म.७,१,३९) इति वचनात् द्वितीया । अभिषुतसोमयुक्तमिदं सवनमिति कर्मण्येव वा द्वितीया । तदा सुतशब्दात् अर्शआदित्वादच् (पा.सू.५,२,१२७) । तृषितः । 'ञितृष पिपासायाम्' । 'निष्ठा' इति क्तः । प्रत्ययस्वरेणोदात्तः । पश्चात् इटः 'आगमा अनुदात्ताः' इत्यनुदात्तत्वम् ।। ५ ।।

**सिद्धाञ्जनम्–** पञ्चमीमृचमाह– सः इमं इति संहितायां सुलोपः। **सः** त्वं **नः** अस्माकं **इमं स्तोमं** स्तवं **आगहि** आगच्छ, आकर्ण्य अङ्गीकुर्वित्यर्थः। **सुतं** अभिषुतसोमं **इदं सवनं** यजनं **उप** उपेहि । उपेत्य **तृषितः गोरो न** तीव्रपिपासुः गौरमृग इव **पिब** सोममिति शेषः ।।

।। इति प्रथमाष्टके प्रथमाध्याये त्रिंशो वर्गः ।।

## ।। अथ एकत्रिंशो वर्गः ।।

### ऋक्संहिता पदपाठसहिता

**इ॒मे सोमा॑स॒ इंद॑वः सु॒तासो॒ अधि॑ ब॒र्हिषि॑ । ताँ इन्द्र॒ सह॑से पिब ।। ६ ।।**

इ॒मे । सोमा॑सः । इंद॑वः । सु॒तासः॑ । अधि॑ । ब॒र्हिषि॑ । तान् । इ॒न्द्र॒ । सह॑से । पि॒ब॒ ।।

### ऋग्भाष्यम्

**......विष्णुविवक्षायां यजमानबलं सहः ।**
**तदिष्टस्यैव दानाय तद्गुणव्यक्तिरेव वा ।**
**पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।**
**हेयोपादेयरहितगुणपूर्णो हरिः सदा ।**
**अनुग्रहव्यक्तिरेव तद्गुणानां च नान्यथा ।**
**इत्यादिवेदवाक्येभ्यो नैव वृद्धिर्हरेः क्वचित् ।। ६, ७, ८ ।।**

**ऋग्भाष्यटीका–** **इमे सोमासः** । हे इन्द्र **इमे इन्दवः** इष्टदाः **सुतासः** अभिषुताः **सोमासः** सोमाः **अधिबर्हिषि** बर्हिष उपरि सन्ति **तान्** सोमान् **सहसे** बलार्थं **पिब** । इदं प्रसिद्धेन्द्रे घटते । सोमपानादिना तस्य बलवृद्धिसद्भावात् । परमेश्वरे तु योजनान्तरं सूचयति– **विष्ण्विति** ।। इन्द्रशब्देन विष्णुविवक्षायां यजमानबलं सहः । कथं तर्ह्यन्वय इत्यत आह– **तदिष्टस्येति** ।। सहसे बलाय यजमानस्य यदिष्टं बलं ज्ञानादिरूपं तस्य दानाय सोमं पिबेति योजनीयमित्यर्थः । अथ सहःशब्देन परमेश्वरबलमङ्गीकृत्य घटयति– **तदिति** ।। तस्य विष्णोर्यो गुणो बलाख्यस्तस्य व्यक्तिर्वाऽत्रोच्यते । सहसे बलाय तव बलव्यक्त्यै । व्यक्तिश्च बलसाध्यमभीष्टसम्पादनम् । एवशब्दाभ्यां परमेश्वरबलस्य सोमेन वृद्धिं निराकरोति ।। तत्कुत इत्यत आह– **पूर्णमिति** । अनुग्रह इति पराभीष्टसम्पादनमुच्यते ।। ६ ।।

**मन्त्रार्थमञ्जरी–** (हे) इन्द्र इमे । इंदवः, इष्टदाः सुतासः, अभिषुताः । सोमासः, सोमाः । अधि बर्हिषि, बर्हिष, उपरि । (सन्ति) तान्, सोमान् । सहसे, बलार्थम् । पिब । हरिपक्षे यजमानस्य बलार्थमिति वा त्वदीयबलाभिव्यक्त्यर्थं वेति व्याख्या । बलाभिव्यक्तिर्भक्ताभीष्टदानं ज्ञेयम् ।। ६ ।।

**स्कन्द– इमे सोमास इन्दवः** इन्धेर्दीप्तिकर्मण एतद्रूपम् । स्वया दीप्त्या दीप्ताः **सुतासः अधि बर्हिषि** बर्हिष उपरि । **तान्** हे इन्द्र! **सहसे** बलनामैतत् (तु. निघ २,९) । तादर्थ्ये चतुर्थी । आत्मनो बलार्थम् **पिब** ।। ६ ।।

**वेङ्कटमाधव–** इमे सोमाः दीप्ताः सुताः बर्हिषि अध्यासते । तान् इन्द्र ! बलाय पिब ।।

**मुद्गल–** इन्दवः क्लेदनयुक्ता **इमे** वेद्यामवस्थिताः **सोमासः** सोमाः **बर्हिषि** यज्ञे । **अधि** आधिक्येन **सुतासः** अभिषुताः । हे **इन्द्र! सहसे** बलार्थं **तान्** सोमान् ।। ६ ।।

**सायण–** इन्दुशब्दः 'उन्दी क्लेदने' इति धातोरुत्पन्नः । **इन्दवः** क्लेदनुयुक्ताः **इमे** वेद्यामवस्थिताः **सोमासः** तत्तत्पात्रगताः सोमाः **बर्हिषि** यज्ञे **अधि** आधिक्येन **सुतासः** अभिषुताः । हे **इन्द्र सहसे** बलार्थं **तान्** सोमान् पिब ।

सोमासः । 'आज्जसेरसुक्' (पा.सू.७,१,५०) इति जसोऽसुगागमः । इन्दवः । उक्तम् । सुतासः । पूर्ववत् असुक् । संहितायां 'प्रकृत्यान्तःपादमव्यपरे' इति प्रकृतिभावात् परपूर्वत्वं न भवति । बर्हिषि । 'बृंहेर्नलोपश्च' (उ.सू.२,२६६) इति इस् । प्रत्ययस्वरः । 'ताँ इन्द्र' इत्यत्र 'दीर्घादटि समानपादे' इति रुत्वम् । यत्वयलोपौ । अनुनासिकः । सहसे । 'षह मर्षणे' । असुनन्तो नित्त्वादाद्युदात्तः ।। ६ ।।

**सिद्धाञ्जनम्–** षष्ठीमृचमाह– **इमे सोमासः** सोमाः **इन्दवः** उन्दी क्लेदने इत्यस्य रूपम्, क्लेदनयुक्ताः आर्द्राः सुखकरा इत्यर्थः। **बर्हिषि** अन्तरे वेद्यां आसने **अधि** उपरि **सुतासः** अभिषुताः अवस्थिताः । **तान्** तथा त्वत्पानाय संस्कृतान् अंशबाहुल्यलक्षकपात्रभेदेषु अवस्थितान् सोमान् हे **इन्द्र सहसे** बलार्थं पिब । अत्र 'अधि' आधिक्येन 'सुतासः', 'बर्हिषि' यज्ञे इति सायणः । 'अधि बर्हिषि' इत्यत्र अस्मदुक्तार्थो न क्षपयति स्थूलपक्षीयं आशयम् , बर्हिश्शब्दस्य कर्मणि दर्भे रूढेः । 'अधि' उपरि 'बर्हिषि' इत्येव स्कन्दस्वामी ।। ६ ।।

### ऋक्संहिता पदपाठसहिता

**अयं ते स्तोमो अग्रियो हृदिस्पृगस्तु शन्तमः । अथा सोमं सुतं पिब ।। ७ ।।**

अयम् । ते । स्तोमः । अग्रियः । हृदिऽस्पृक् । अस्तु । शम्ऽतमः । अथ । सोमम् । सुतम् । पिब ।। ७ ।।

**ऋग्भाष्यटीका– अयं ते ।** हे इन्द्र **शन्तमः** स्तोतृणामतिशयेन सुखप्रदः **अयं स्तोमः** स्तुतिः **ते हृदि स्पृक्** हृदयंगमोऽस्तु । **अथ** स्तुत्या प्रीतस्त्वं **सुतं** अभिषुतं **सोमं पिब** ॥

**मन्त्रार्थमञ्जरी–** (हे) इन्द्र । अग्रियः, अग्र्यः । शन्तमः, श्रोतृणामतिशयेन सुखप्रदः । अयम् । स्तोमः, स्तुतिः । ते । हृदिस्पृक्, हृदयङ्गमः । अस्तु । अथ (स्तुत्या प्रीतस्त्वम्) सुतम्, अभिषुतम् । सोमम् पिब ॥ ७ ॥

**स्कन्द– अयं** तवास्मत्कृतः **स्तोमः अग्रियः** प्रधानभूतः **हृदिस्पृक् अस्तु** हृदयस्य स्प्रष्टाऽस्तु । तुभ्यं रोचतामित्यर्थः । लोकेऽपि हि यद् रोचते तद् हृदयं स्पृशतीत्युच्यते । अथवा हृदयस्पर्शेनात्रावधारणमुच्यते । चित्तेन त्वयाऽवधार्यतामित्यर्थः । कीदृशः ? **शंतमः** सुखतमः । **अथ** अनन्तरं च **सुतं सोमं पिब** ॥ ७ ॥

**वेङ्कटमाधव–** अयं तव स्तोमः मुख्यः हृदिस्पृक् अस्तु सुखतमः । अथ सोमं सुतं पिब ॥ ७ ॥

**मुद्गल–** हे इन्द्र! **अयं** अस्माभिः क्रियमाणः **स्तोमः** स्तोत्रविशेषः **अग्रियः** श्रेष्ठः सन् **ते** तव **हृदिस्पृक्** मनस्यङ्गीकृतः **शंतमः** सुखतमः अस्तु । **अथ** स्तुतेरनन्तरं **सुतं** अभिषुतं **सोमं पिब** ॥ ७ ॥

**सायण–** हे इन्द्र **अयं** अस्माभिः क्रियमाणः **स्तोमः** स्तोत्रविशेषः **अग्रियः** श्रेष्ठः सन् **ते** तव **हृदिस्पृक्** मनस्यङ्गीकृतः **शंतमः** सुखतमः अस्तु । **अथ** स्तुतेरनन्तरं **सुतं** अभिषुतं **सोमं पिब** ।

अग्रियः । 'अग्रात्' इत्यनुवृत्तौ 'घच्छौ च' (पा.सू.४,४,११७) इति घञ् । चित्त्वादन्तोदात्तः । हृदि स्पृशतीति हृदिस्पृक् । 'स्पृशोऽनुदके क्विन्' (पा.सू.३,२,५८) । 'तत्पुरुषे कृति बहुलम्' (पा.सू.६,३,१४) इति अलुक् । 'क्विन्प्रत्ययस्य कुः' (पा.सू.८,२,६२) इति शकारस्य कुत्वम् । कृदुत्तरपदप्रकृतिस्वरत्वम् । शंतमः । सुखकरद्रव्यवचनोऽत्र शंशब्दः । ततस्तमप् । अत्र सुखप्रकर्षस्य गुणद्वारा गुणनिष्ठद्रव्ये सङ्क्रान्तत्वात् 'अद्रव्यप्रकर्षे' इति निषेधात् 'किमेत्तिङव्यय' (पा.सू.५,४,११) इत्यादिना आम् न भवति, द्रव्यस्य स्वतः प्रकर्षाभावात् । ईदृगर्थ एव हि स निषेधः । अथा सोमम् । संहितायां 'निपातस्य' इति दीर्घः ॥ ७ ॥

**सिद्धाञ्जनम्–** सप्तमीमृचमाह– हे इन्द्र, **अयं** अस्मदीयः **स्तोमः** स्तोत्रविशेषः **अग्रियः** श्रेष्ठः **ते** तव **हृदिस्पृक्** हृदि स्पृशतीति हृदिस्पृक्, तत्पुरुषे कृति बहुलमित्यलुक् हृदयङ्गमः । **शन्तमः** सुखतमः अस्तु भवतु । **अथ** हृदयस्पृशः अत्यन्तसुखप्रदस्य अस्य स्तोत्रविशेषस्य अङ्गीकारात् परं **सुतं** अभिषुतं **सोमं पिब** ।। ७ ।।

ऋक्संहिता पदपाठसहिता

**विश्वमित्सर्वनं सुतमिन्द्रो मदाय गच्छति । वृत्रहा सोमपीतये ।। ८ ।।**

विश्वम् । इत् । सवनम् । सुतम् । इन्द्रः । मदाय । गच्छति । वृत्रऽहा । सोमऽपीतये ।।

**ऋग्भाष्यटीका– विश्वमित्** । **वृत्रहा इन्द्रः मदाय** यजमानहर्षाय स्वगुणस्य व्यक्तये वा **सोमपीतये विश्वं** सर्वं **सवनं** सर्वेष्वपि सवनेषु **सुतं** सोमं प्रति **गच्छति** ।। ८ ।।

**मन्त्रार्थमञ्जरी–** वृत्रहा इन्द्रः । मदाय, यजमानस्य हर्षाय, स्वगुणव्यक्तये वा । सोमपीतये । विश्वम्, सर्वम् । इत्, एव । सवनम्, सर्वेष्वपि सवनेषु । सुतम्, सोमं प्रति । **गच्छति** ।। ८ ।।

**स्कन्द–** 'सवनम्' (निघ.३,१७) इति यज्ञनाम । **विश्वं सवनं** इति चोभयत्र सप्तम्यर्थे प्रथमा । इच्छब्दः पदपूरणः । सर्वस्मिन् यज्ञे । **सुतं** सोमं प्रति **इन्द्रः गच्छति वृत्रहा** । किमर्थम् ? **मदाय सोमपीतये** मदार्थं यत् सोमपानं तदर्थम् । अथवा मदायेत्येतत् सुतमित्यनेन सम्बध्यते । मदार्थमभिषुतोऽयं सोमस्तस्यार्थ इति ।। ८ ।।

**वेङ्कटमाधव–** विश्वं एव सुतं सोमं इन्द्रः मदार्थं गच्छति शत्रहा सोमपानार्थम् । पानेन मदो भवति ।। ८ ।।

**मुद्गल– वृत्रहा** शत्रुहा **इन्द्रः सोमपीतये** सोमपानाय **मदाय** तत्पानजन्यहर्षाय च **विश्वं** इत् सर्वमपि सुतं अभिषुतसोमयुक्तं **सवनं** प्रातःसवनादिरूपं कर्म गच्छति ।। ८ ।।

**सायण– वृत्रहा** शत्रुघातकः **इन्द्रः सोमपीतये** सोमपानाय **मदाय** तत्पानजन्यहर्षाय च **विश्वमित्** सर्वमपि **सुतं** अभिषुतसोमयुक्तं **सवनं** प्रातःसवनादिरूपं कर्म गच्छति ।

विश्वम् । 'अशिप्रुषि' इत्यादिना कन् । नित्त्वादाद्युदात्तः । सवनं सुतम् । पूर्ववत् । मदाय । 'मदोऽनुपसर्गे' (पा.सू.३,३,६७) इति अप्प्रत्ययः । पित्त्वात् धातुस्वरः । गच्छति । 'इषुगमियमां छः' (पा.सू.७,३,७७) । वृत्रहा । वृत्रं हतवान् । 'ब्रह्मभ्रूणवृत्रेषु क्विप्' (पा.सू. ३,२,८७) । 'इन्हन्' इत्यादिना निवृत्तं दीर्घत्वं 'सौ च' (पा.सू.६,४,१२-१३) इति प्रतिप्रसवात् भवति । कृदुत्तरपदप्रकृतिस्वरत्वम् । सोमपीतये । व्यधिकरणबहुव्रीहिः इत्युक्तम् । तत्पुरुषे वा दासीभारादित्वात् (पा.सू.६,२,४२) पूर्वपदप्रकृतिस्वरत्वम् ॥ ८ ॥

**सिद्धाञ्जनम्–** अष्टमीमृचमाह– **वृत्रहा** सर्वावरकतमश्शरीरस्य ज्योतिर्विज्ञान शक्ति-संहतिशत्रोरसुरस्य वृत्रस्य घातक **इन्द्रः सुतं** सुतसोमं सोमाभिषवयुक्तमिति यावत् **विश्वं इत्** सर्वमपि **सवनं** यजनं **सोमपीतये** सोमपानाय **मदाय** तज्जन्यसम्मदाय आनन्दाय इत्यर्थः **गच्छति** प्राप्नोति । यत्र यत्र सोमेन देवयजनं चलति तत्र सर्वत्र तदङ्गीकाराय सिद्धो भवन्निन्द्रः सन्निहितो भवति ॥ ८ ॥

## ऋक्संहिता पदपाठसहिता

**सेमं नः काममापृण गोभिरश्वैः शतक्रतो । स्तवाम त्वा स्वाध्यः ॥ ९ ॥**

**कामम् । आ । पृण । गोभिः । अश्वैः । शतक्रतो इति शतऽक्रतो । स्तवाम । त्वा । सुऽआध्यः ॥ ९ ॥**

## ऋग्भाष्यम्

**पृणसम्पूरय स्वाध्यः सुधीतय इतीरिताः ॥ ९ ॥**

**ऋग्भाष्यटीका– सेमम्** । अत्र पृणोति स्वाध्य इति पदद्वयं व्याख्याति– **पृणेति** । हे **शतक्रतो सः** त्वं **नः** अस्माकं **इमं** गवादिविषयं **कामं** अभिलाषं **गोभिरश्वैः** गवाश्वं दत्वा **आपृण** सम्पूरय । धातूनामनेकार्थत्वात् । पृण प्रीणन इत्यस्येदं रूपम् । वयं तु **स्वाध्यः** स्वाङ्पूर्वाद्ध्यायतेः क्विप् । यणादेशश्छान्दसः । नभूसुधियोरिति नञानिर्दिष्टमनित्यमिति वा । रूपग्रहणाद्वा । सुधीतयो भूत्वा **त्वा** त्वां स्तवाम ॥ ९ ॥

**मन्त्रार्थमञ्जरी–** (हे) शतक्रतो सः (त्वम्) । नः अस्माकम् । इमम्, गवादिविषयकम् । कामम्, अभिलाषम् । गोभिः अश्वैः, गवाश्वं दत्त्वा । आ पृण, सम्पूरय, 'पृण प्रीणने' इत्यस्येह

पूर्त्यर्थत्वं धातूनामनेकार्थत्वात् । (वयम्) स्वाध्यः, स्वाधियः, 'सुः आङ्' इत्युपसर्गद्वयपूर्वस्य धीशब्दस्य बहुवचनम्, यणादेशश्छान्दसः, 'नञा निर्दिष्टमनित्यम्' इति 'न भूसुधियोः' इति यण्निषेधस्यानित्यत्वाद्वा सूत्रे 'सुधी' इति रूपग्रहणादिह यण्निषेधस्याप्राप्तेर्वा, सुधियो भूत्वा । त्वा, त्वाम् । स्तवाम, 'ष्टुञ् स्तुतौ' लोट् ॥ ९ ॥

**स्कन्द–** **सः त्वं इमं नः कामं** इच्छां आपृण पृण प्रीणने । आप्रीणय तर्पय पूरयेत्यर्थः । केन ? **गोभिः अश्वैः च** । हे **शतक्रतो!** बहुकर्मन्! बहुप्रज्ञ! वा **स्तवाम त्वा** । सेमं न इति तच्छब्दश्रुतेर्यच्छब्दोऽप्याहर्तव्यः । यं त्वां स्तुतवन्तो वयं स्वाध्यः, आध्यानं आधीः प्रार्थना, शोभनप्रार्थनाः ॥ ९ ॥

**वेङ्कटमाधव–** सः त्वं गवादिभिः इमं अस्माकं कामं आपूरय । शतकर्मन् । स्तवाम त्वा सुकर्माणः ॥ ९ ॥

**मुद्गल–** हे **शतक्रतो! सः** त्वं **नः** अस्मदीयं **इमं कामं** काम्यमानं फलं **गोभिः अश्वैः** च सह **आपृण** सर्वतः पूरय । वयमपि **स्वाध्यः** सुष्ठु सर्वतो ध्यानयुक्ताः सन्तः **त्वा** त्वां **स्तवाम** ॥ ९ ॥

**सायण–** हे **शतक्रतो सः** त्वं **नः** अस्मदीयं **इमं कामं** काम्यमानं फलं **गोभिरश्वैः** च सह **आपृण** सर्वतः पूरय । वयमपि **स्वाध्यः** सुष्ठु सर्वतो ध्यानयुक्ताः सन्तः **त्वा** त्वां **स्तवाम** ।

सेमम् । संहितायां 'सोऽचि लोपे चेत्पादपूरणम्' इति सुलोपः । कामम् । कमेर्घञि 'कर्षात्वतो घञोऽन्त उदात्तः' (पा.सू.६,१,१५९) इत्यन्तोदात्तत्वे प्राप्ते वृषादिषु पाठादाद्युदात्तत्वम् । पृण । 'पृण प्रीणने' । लोटः सेर्हिः । 'तुदादिभ्यः शः' । तस्य ङित्त्वाद्गुणाभावः । 'अतो हेः' इति हेर्लुक् । गोभिः । 'सावेकाचः' इति प्राप्तं विभक्तेरुदात्तत्वं 'न गोश्वन्साववर्ण' इति प्रतिषिध्यते । अश्वैः । कनन्त इत्युक्तम् । असामर्थ्यात् न पराङ्गवद्भावः । स्तवाम । 'ष्टुञ् स्तुतौ' । 'धात्वादेः षः सः' । लोडुत्तमबहुवचनस्य 'लोटो लङ्वत्' इति लङ्वद्भावात् 'नित्यं ङितः' (पा.सू.३,४,९९) इति सकारस्य लोपः । 'आडुत्तमस्य पिच्च' (पा.सू. ३,४,९२) इति आडागमः । प्रत्ययस्य पित्त्वादनुदात्तत्वम् । धातुस्वर एव । स्वाध्यः । 'ध्यै चिन्तायाम्' । स्वाङोरुपसर्गयोः प्राक्प्रयोगः । 'अन्येभ्योऽपि दृश्यते' (पा.सू.३,२,१७८) इति क्विप् । दृशिग्रहणस्य विध्यन्तरोपसङ्ग्रहणार्थत्वात् अत्र सम्प्रसारणे सति परपूर्वत्वम् । 'हलः'

(पा.सू.६,४,२) इति दीर्घः । जसि 'एरनेकाचः' (पा.सू.६,४,८२) इति यणादेशः । 'गतिकारकोपपदात्कृत्' इत्युत्तरपदप्रकृतिस्वरत्वम् । 'उदात्तयणो हल्पूर्वात्' (पा.सू.६,१,१७४) इति जस उदात्तत्वं न भवति, तत्र 'असर्वनामस्थानम्' इत्यनुवृत्तेः । अतः 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' (पा.सू.८,२,४) इति स्वरितत्वमेव भवति ।। ९ ।।

**सिद्धाञ्जनम्**–नवमीमृचमाह– **हे शतक्रतो** बहुकर्मन् बहुप्रज्ञ वा, **सः** तादृशस्त्वं **नः** अस्माकं **इमं कामं** अभीप्सितमर्थं **आपृण** आपूरय। पृण प्रीणने, इत्यस्य रूपम् । **गोभिः अश्वैः** च सह काममापृणेति सम्बन्धः । वयं **स्वाध्यः** सुष्ठु आध्यानपराः सन्तः **त्वा** त्वां स्तवाम । सु-आङ्-पूर्वकस्य ध्यै चिन्तायामित्यस्य स्वाधी इति प्रथमैकवचनान्तं रूपम् । स्वाध्य इति बहुवचनम् । गावः अश्वाश्च चतुष्पादः पशवः प्रेप्सिता इति स्थूलार्थपराणां मतम् । गोशब्दलक्षिताः प्रज्ञांशवः, अश्वशब्दलक्षिता भोगसामर्थ्यसम्पन्नाः क्रियाशक्तिमूलभूतप्राणवलवाहिन इति सर्वत्रामिमतमस्माकम् ।

**।। इति प्रथमाष्टके प्रथमाध्याये एकत्रिंशो वर्गः ।।**

## ।। अथ द्वात्रिंशो वर्गः ।।

### (सूक्तम् १७)

### ऋक्संहिता पदपाठसहिता

**मेधातिथिः काण्वः । इन्द्रावरुणौ । गायत्री ४-५ पादनिचृत् (५ हसीयसी वा) गायत्री ।**

**इन्द्रावरुणयोरहं सम्राजोरव आवृणे । तानो मृळात ईदृशे ।। १ ।।**
इन्द्रावरुणयोः । अहम् । सम्ऽराजोः । अवः । आ । वृणे । ता । नः । मृळातः । ईदृशे ।।

### मध्वभाष्यम्

**अविकारेण संस्थानमीदृक्त्वं नाम कीर्तितम् ।। १ ।।**

**ऋग्भाष्यटीका– इन्द्रावरुणयोः ।** नवर्चमिदमैन्द्रावरुणसूक्तम् । अत्रेदृश इत्येतद्व्याख्याति– **अविकारेणेति ।। अहं सम्राजोः** सम्यग्दीप्तयोः **इन्द्रावरुणयोः** तत्कर्तृकमिति यावत् । **अवः** अवनं रक्षां **आवृणे** प्रार्थये **तौ** चेन्द्रावरुणौ **नः** अस्मान् **ईदृशे** भावप्रधानो निर्देशः । इदानीं यथा सर्वदा तथा भावोऽविकारेण संस्थानं ईदृक्त्वं तस्मै **मृळातः** रक्षेताम् ।। १ ।।

**मन्त्रार्थमञ्जरी–** 'अथ इन्द्रावरुणयोरहम्' इति सप्तदशं नवर्चं वर्गद्वयात्मकमैन्द्रावरुणं सूक्तम् । एते विना गायत्रीछन्दस्कम् । अहम् । सम्राजोः सम्यग्दीप्तयोः, 'राजृ दीप्तौ' इति धातोः क्विप् । इन्द्रावरुणयोः । अवः, अवनम्, इन्द्रवरुणकर्तृकं रक्षणम् । आवृणे, प्रार्थये ।। ता, तौ चेन्द्रावरुणौ । नः, आस्माकम् । ईदृशे, भावप्रधानम्, ईदृक्त्वाय, अविकारेणैवावस्थानायेति यावत् । मृळातः, रक्षेताम् ।। १ ।।

**स्कन्द–** 'ऐन्द्रावरुणमुत्तरम्' । उत्तरं सूक्तमैन्द्रावरुणाम् । **इन्द्रावरुणयोः अहं सम्राजोः** सम्यगृदीप्तयोः स्वभूतं **अवः** पालनं **आवृणे** प्रार्थये । एतज्ज्ञात्वा **ता** तौ **नः** अस्मान् **मृळातः** । मृढ सुखने । लोडर्थे च पञ्चमो लकारः । अवःसम्पादनेन सुखयतः । ईदृशे प्रार्थनाविशेषे वर्तमानानिति शेषः ।। १ ।।

**वेङ्कटमाधव–** इन्द्रावरुणयोः अहं सर्वेषामीश्वरयोः पालनं आवृणे । तौ मृळयेतां अस्मान् ईदृशे स्तोत्रे । यद्वा ईदृशेनावसेति ।। १ ।।

**मुद्गल–** 'इन्द्रावरुणयोः' इति नवर्चं षष्ठं सूक्तम् । मेघातिथिः ऋषिः । गायत्रम् । इन्द्रावरुणौ देवते । युवाकु हि' इत्यादिके द्वे ऋचौ पादनिचृन्नामकच्छन्दोयुक्ते ।

**अहं** अनुष्ठाता **सम्राजोः** समीचीनराज्योपेतयोः **इन्द्रावरुणयोः** देवयोः संबन्धि **अवः** रक्षणं **आवृणे** सर्वतः प्रार्थये । **ता** तौ देवौ **ईदृशे** एवंविधे अस्मदीयवरणे निमित्तभूते सति **मृळातः नः** अस्मान् सुखयत ।। १ ।।

**सायण–** 'इन्द्रावरुणयोः' इत्यादिकं नवर्चं षष्ठं सूक्तम् । अत एव नवशब्दानुवृत्तावनुक्रम्यते– 'इन्द्रावरुणयोरैन्द्रावरुणं युवाकु पादनिचृतौ' इति । अत्र देवता विस्पष्टा । ऋषिच्छन्दसी तु पूर्ववदनुवर्तेते । अयं तु विशेषः । 'युवाकु हि' इत्यादिके द्वे ऋचौ पादनिचृन्नामकच्छन्दोयुक्ते । विनियोगस्तु स्मार्तो लैङ्गिको वा कश्चिदवगन्तव्यः ।

**अहं** अनुष्ठाता **सम्राजोः** समीचीनराज्योपेतयोः सम्यग्दीप्यमानयोर्वा **इन्द्रावरुणयोः** देवयोः सम्बन्धि **अवः** रक्षणं **आवृणे** सर्वतः प्रार्थये । **ता** तौ देवौ **ईदृशे** एवंविधे अस्मदीयवरणे निमित्तभूते सति **मृळातः** अस्मान् सुखयतः ।

इन्द्रशब्दो रन्प्रत्ययान्तः । वरुणशब्द उनन्प्रत्ययान्तः । उभौ नित्त्वादाद्युदात्तौ समासे 'देवताद्वन्द्वे च' इति पूर्वपदस्य आनङादेशः । 'उभे युगपत्' इत्यनुवृत्तौ 'देवताद्वन्द्वे च' इति युगपत् उभयपदप्रकृतिस्वरत्वम् । सम्राजोः । 'राजृ दीप्तौ' । 'सत्सूद्विष' (पा.सू. ३,२,६१) इत्यादिना क्विप् । समो 'मोऽनुस्वारः' (पा.सू.८,३,२३) इत्यनुस्वारे प्राप्ते 'मो राजि समः क्वौ' (पा.सू. ८,३,२५) इति मकारादेशः । कृदुत्तरपदप्रकृतिस्वरत्वम् । 'कर्तृकर्मणोः कृति' (पा.सू२,३,६५) इति कर्तरि षष्ठी । अवः । अव रक्षणादिषु । भावेऽसुन् । नित्त्वादाद्युदात्तः । ता । 'सुपां सुलुक्' इत्यादिना द्विवचनस्य डादेशः । टिलोपे विभक्तेरुदात्तनिवृत्तिस्वरः । मृळातः । 'मृड सुखने' । प्रार्थनायां लिङर्थे लेट् । द्विवचनं तस् । 'लेटोऽडाटौ' (पा.सू.३,४,९४) इति आडागमः । 'तुदादिभ्यः शः' । ङित्त्वात् लघूपधगुणाभावः । ईदृशे । 'त्यदादिषु दृशोऽनालोचने कञ् च' (पा.सू.३,२,६०) इति इदंशब्दे उपपदे दृशेः कञ् । उपपदसमासे 'इदंकिमोरीश्की' (पा.सू.६,३,९०) इति इदम ईश् । शित्त्वात् सर्वदिशः । कञः कित्त्वाद्गुणाभावः । ञित्त्वादुत्तरपदस्याद्युदात्तत्वम् । उपपदसमासे कृदुत्तरपदप्रकृतिस्वरत्वेन तदेव शिष्यते ॥ १ ॥

**सिद्धाञ्जनम्–** चतुर्थेऽनुवाके इन्द्रावरुणयोरित्यादिकं षष्ठं नवर्चं सूक्तम् । इन्द्रावरुणदेवताकम् । ऋषिच्छन्दसी पूर्ववत् । युवाकु हीत्यादिके द्वे ऋचौ पादलिचृन्नामकच्छन्दोयुक्ते इत्ययं विशेषः ।

तत्र प्रथमामृचमाह– **अहं सम्राजोः** सम्यग्राजमानयोः **इन्द्रावरुणयोः** इन्द्रो वरुणश्च तयोः **अवः** वर्धनं मयीति शेषः, **आवृणे** प्रार्थये । **ता** तौ देवौ **ईदृशे** एवंविधेऽस्मदीयवरणे निमित्तभूते **नः** अस्मान् **मृळातः** सुखयतः । अव–अवधातोरसुन् , रक्षणं वर्धनं वा भवति । उपासकस्य अन्तरे देवानां जन्म वर्धनं च अन्तर्यागफलांशभूते स्तः । मृळातः–मृड सुखने, प्रार्थनायां लिङर्थे लेट् । इन्द्रः स्वर्धामाऽपि दिव्येन मनसा धीसम्राड् भवति । वरुणस्तु ऋतसद्मा, ऋतवर्धनः, ऋतस्पृक् ज्योतिर्मय इति विशेषो ग्राह्यः । उभयोस्तत्त्वं प्रथमानुवाके प्रस्तुतम् ॥ २ ॥

## ऋक्संहिता पदपाठसहिता

**गन्तारा हिस्थोऽवसे हवं विप्रस्य मावतः । धर्तारा चर्षणीनाम् ॥ २ ॥**

गन्तारा । हि । स्थः । अवसे । हवम् । विप्रस्य । माऽवतः । धर्तारा । चर्षणीनाम् ॥

## ऋग्भाष्यम्

**मावतो ज्ञानयुक्तस्य प्रजाश्चर्षणयः स्मृताः ॥ २ ॥**

**ऋग्भाष्यटीका– गन्तारा ।** अत्र मावत इति पदं चर्षणिशब्दं च व्याख्याति– **मावत इति ।।** हे इन्द्रावरुणौ । **चर्षणीनां** प्रजानां **धर्तारौ** युवां **मावतः** ज्ञानयुक्तस्य **विप्रस्य हवं** आह्वानं प्रति **अवसे** तस्य रक्षायै **गन्तारौ** स्थौ हि यस्मात्तस्मादागच्छतमिति ।। २ ।।

**मन्त्रार्थमञ्जरी–** (हे) इन्द्रावरुणौ चर्षणीनाम्, प्रजानाम् । धर्तारा, धर्तारौ, धारकौ । (युवाम्) मावतः, ज्ञानयुक्तस्य । विप्रस्य । हवम्, आह्वानं प्रति । अवसे, तस्य रक्षायै । गन्तारा, गन्तारौ । स्थः । हि, यस्मात् । (तस्मादागच्छतम्) इति ।। २ ।।

**स्कन्द–** हि इति पदपूरणः । **गन्तारा** गमनशीलौ युवां स्थः **अवसे** पालनाय **हवं** आह्वानं **विप्रस्य** मेधाविनः **मावतः** मत्सदृशस्य । **धर्तारा** धारयितारौ च तैस्तैरुपकारैः **चर्षणीनां** मनुष्याणाम् ।। २ ।।

**वेङ्कटमाधव–** गन्तारौ हि भवथः रक्षणार्थं आह्वानं मेधाविनः मत्सदृशस्य धारकौ मनुष्याणाम् । तौ मयि चागच्छतम् ।। २ ।।

**मुद्गल–** हे इन्द्रावरुणौ! **अवसे** अवितुं अनुष्ठातारं रक्षितुं **मावतः** मद्विधस्य **विप्रस्य** ब्राह्मणर्त्विजः **हवं** आह्वानं **गन्तारा** गन्तारौ **स्थः** हि प्राप्तिशीलौ भवथः खलु । कीदृशौ ? **चर्षणीनां** मनुष्याणां **धर्तारा** धर्तारौ योगक्षेमसम्पादनेन धारयितारौ ।। २ ।।

**सायण–** हे इन्द्रावरुणौ **अवसे** अवितुमनुष्ठातारं रक्षितुं **मावतः** मद्विधस्य **विप्रस्य** ब्राह्मणर्त्विजः **हवं** आह्वानं **गन्तारौ स्थः** हि प्राप्तिशीलौ भवथः खलु । कीदृशौ ? **चर्षणीनां** मनुष्याणां **धर्तारौ** योगक्षेमसम्पादनेन धारयितारौ ।

गन्तारा । गमेस्ताच्छील्ये तृन् । द्विवचनस्य 'सुपां सुलुक्' (पा.सू.७,१,३९) इत्यादिना आकारादेशः । 'ऋदृशोऽङि गुणः' (पा.सू.७,४,१६) । 'अप्तृन्' (पा.सू.६,४,११) इत्यादिना उपधादीर्घत्वम् । तृनो नित्त्वादाद्युदात्तत्वम् । स्थः । 'अस भुवि' । लड्मध्यमपुरुषद्विवचनं थस् । 'अदिप्रभृतिभ्यः शपः' इति शपो लुक् । 'हि च' इति निघातप्रतिषेधः । अवसे । 'अव रक्षणे' । 'तुमर्थे सेसेन्' (पा.सू.३,४,९) इति असेन् । नित्त्वादाद्युदात्तः । हवम् । ह्वेञो 'बहुलं छन्दसि' इत्यनैमित्तिके सम्प्रसारणे परपूर्वत्वे च 'ऋदोरप्' इति अप् । गुणावादेशौ ।

अपः पित्त्वादनुदात्तत्वम् । धातुस्वर एव । विप्रस्य । डुवप् बीजसन्ताने । अस्य 'ऋज्रेन्द्र' इत्यादिना रन् निपातितः । नित्त्वादाद्युदात्तः । मावतः । 'वतुप्प्रकरणे युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसङ्ख्यानम्' (पा.सू.५,२,३९,१) वतुप् । प्रत्ययोत्तरपदयोः अस्मदो मपर्यन्तस्य मादेशः (पा.सू.७,२,९८) । 'आ सर्वनाम्नः' (पा.सू.६,३,९१) इति दकारस्य आकारः । सवर्णदीर्घः । मतुपः पित्त्वादनुदात्तत्वम् । प्रातिपदिकान्तोदात्तत्वे स एव शिष्यते । धर्तारा । 'धृञ् धारणे' । 'ण्वुल्तृचौ' (पा.सू.३,१,१३३) इति तृच् । 'एकाच उपदेशे' इति इट्-प्रतिषेधः । गुणो रपरत्वम् । 'अप्तृन्' इत्यादिना उपधादीर्घः । 'सुपां सुलुक्' इति आकारः । तृचश्चित्त्वादन्तोदात्तत्वम् । चर्षणीनाम् । 'कृषेरादेश्च चः' (उ.सू.२,२६१) इति अनिप्रत्ययः, तत्सन्नियोगेन ककारस्य चकारः । प्रत्ययाद्युदात्तत्वं बाधित छान्दसमन्तोदात्तत्वम् । अत एव 'नामन्यतरस्याम्' इति विभक्तेरुदात्तत्वम् । तत्र हि मतुपि यो ह्रस्वान्तः तत उत्तरस्य नाम उदात्तत्वमिति व्याख्यातम् ।। २ ।।

**सिद्धाञ्जनम्**– द्वितीयामृचमाह– हे इन्द्रावरुणौ, युवां **अवसे** अवितुं । अवतेः तुमर्थे से । अन्तर्याजिनो वर्धनायेत्यर्थः । **मावतः** मद्विधस्य । वतुप्प्रकरणे छन्दसि सादृश्य उपसङ्ख्यानम् । **विप्रस्य** मेधाविनः हवं आह्वानं **गन्तारौ** प्राप्तारौ **स्थः** भवथः । कीदृशौ ? **चर्षणीनां धर्तारौ** सूक्ष्मतत्त्वं देवतारहस्यं वा पश्यतां पुरुषाणां धारयितारौ । चर्षणिः पश्यतिकर्मा । द्रष्टॄणां ऋषीणां योगक्षेमं बिभृतो देवाविन्द्रावरुणौ । 'चर्षणयः' न मनुष्यसामान्यवाचकोऽवधेयः ।। २ ।।

### ऋक्संहिता पदपाठसहिता

**अनुकामं तर्पयेथामिन्द्रावरुण राय आ । तावां नेदिष्ठमीमहे ।। ३ ।।**

अनुऽकामम् । तर्पयेथाम् । इन्द्रावरुणा । रायः । आ । ता । वाम् । नेदिष्ठम् । ईमहे ।।

### ऋग्भाष्यम्

**नेदिष्ठत्वं समीपत्वं क्षिप्रं शरणमीमहे ।। ३ ।।**

**ऋग्भाष्यटीका– अनुकामम्** । अत्र नेदिष्ठमिति पदं व्याख्याति– **नेदिष्ठत्वमिति** ।। तर्हि कथमन्वय इत्यत आह– **क्षिप्रमिति** ।। तच्च समीपत्वमिह कालतो विवक्षितम् । ततश्च क्षिप्रमिति भवति । तस्य चेमह इत्यनेन सम्बन्ध इत्यर्थः । **हे इन्द्रावरुणौ** अस्मान् **रायः**

वित्तस्य विषये **अनुकामं** यथेष्टं **आतर्पयेथां** तृप्तान् कुरुतम् । वयं च तौ वां युवां **नेदिष्ठं** क्षिप्रं **ईमहे** शरणमिति शेषः ।। ३ ।।

**मन्त्रार्थमञ्जरी–** इन्द्रावरुणा, हे इन्द्रावरुणौ । (अस्मान्) रायः, वित्तस्य विषये । अनुकामम्, यथेष्टम् । आ तर्पयेथाम्, तृप्तान्कुरुतम् । (वयं च) ता वाम्, तौ युवाम् । नेदिष्ठम्, क्षिप्रम् । ईमहे (शरणम्) इति शेषः, शरणं प्राप्नुम इत्यर्थः ।। ३ ।।

**स्कन्द–** अन्विति पश्चादर्थे । सोमस्य च पश्चात् **अनुकामं** कामयित्वा तत्पानानन्तर-मित्यर्थः । अथवा अनुशब्दो वीप्सायां कर्मप्रवचनीयः । कामं काममनु अनुकामं, यदा यदा वयं कामयामहे तदा तदेत्यर्थः । **तर्पयेथां** अस्मान् **हे इन्द्रावरुणा!** द्विवचनादेशाकारस्येदं सांहितं ह्रस्वत्वम् । इन्द्रावरुणौ! केन ? **रायः** तृतीयार्थे वा षष्ठीश्रुतेर्वैकदेशेनेति शेषः । धनेन धनस्य वाऽऽत्मीयस्यैकदेशेन । आकारस्तु पदपूरणः । **ता** रायो धनेन तर्पणं प्रार्थितवन्तो वयं तौ **वां** युवां **नेदिष्ठं** इष्टत्वाद् यत् सन्निकृष्टं युवयोर्धनं तद् **ईमहे** याचामहे । न यत् किञ्चित् ।

**वेङ्कटमाधव–** कामानन्तरमस्मान् धनेन आ तर्पयेथां इन्द्रावरुणौ ! तौ वां वयं युवयोरन्तिकतमं धनं याचामहे ।। ३ ।।

**मुद्गल– हे इन्द्रावरुणा** इन्द्रावरुणौ! **अनुकामं** अस्मदीयाभिलाषमनु **रायः** धनस्य प्रदानेन **आ तर्पयेथां** सर्वतोऽस्मान् तृप्तान् कुरुतम् । यदा यदा धनं कामयामहे तदा तदा प्रयच्छतमित्यर्थः । **ता वां** तादृशौ युवां **नेदिष्ठं** अतिशयेन सामीप्यं यथा भवति तथा ईमहे याचामहे । कालविलम्ब-मन्तरेण धनं दातव्यमित्यर्थः ।। ३ ।।

**सायण– इन्द्रावरुणा** हे इन्द्रावरुणौ **अनुकामं** अस्मदीयाभिलाषमनु **रायः** धनस्य प्रदानेन **आ तर्पयेथां** सर्वतोऽस्मांस्तृप्तान् कुरुतम् । वयं यदा यदा धनं कामयामहे तदा तदा प्रयच्छतमित्यर्थः । **ता वां** तादृशौ युवां **नेदिष्ठं** अतिशयेन सामीप्यं यथा भवति तथा **ईमहे** याचामहे । कालविलम्बमन्तरेण धनं दातव्यमित्यर्थः । सप्तदशसु याच्ञाकर्मसु 'ईमहे' (नि.३, १९,१) इति पठितम् । अनुकामम् । कामस्य पश्चादनुकामम् । अथवा कामे कामेऽनुकामम् । अनुः इह पश्चादर्थे अथवा वीप्सालक्षणे यथार्थे । योग्यता वीप्सा पदार्थानतिवृत्तिः सादृश्यं चेति चत्वारो हि यथार्था गृहीताः । 'अव्ययं विभक्ति' (पा.सू.२,१,६) इत्यादिना अव्ययी-

भावसमासः । 'अव्ययीभावश्च' (पा.सू.१,१,४१) इति अव्ययसंज्ञायां 'अव्ययादाप्सुपः' (पा.सू. २,४,८२) इति प्राप्तस्य लुकोऽपवादो 'नाव्ययीभावादतोऽम् त्वपञ्चम्याः' (पा.सू.२,४,८३) इति विभक्तेः अमादेशः । 'समासस्य' इत्यन्तोदात्तत्वम् । तर्पयेथाम् । तृपेर्ण्यन्तात् लोटो 'णिचश्च' (पा.सू.१,३,७४) इत्यात्मनेपदम् । मध्यमद्विवचनं आथाम् । टेः एत्वे 'आमेतः' (पा.सू.३,४,९०) इति आमादेशः । शपि सति 'अतो येयः' (पा.सू.७,२,८०) इति आकारस्य इयादेशः । आद्गुणो यलोपश्च । इन्द्रावरुणा । 'सुपां सुलुक्' इति द्विवचनस्य आकारः । आमन्त्रिताद्युदात्तत्वम् । संहितायाम् आकारस्य ह्रस्वत्वम् । रायः । ऊडिदम्' इत्यादिना विभक्तेरुदात्तत्वम् । ता । 'सुपां सुलुक्' इति विभक्तेः आकारः । पदात्परत्वात् युवामित्यस्य वामादेशोऽनुदात्तः । नेदिष्ठम् । अतिशयेन अन्तिकम् । अतिशायने इष्ठन् । 'अन्तिकबाढयो-र्नेदसाधौ' (पा.सू.५,३,६३) इति नेदादेशः । 'यस्य' इति लोपः । इष्ठनो नित्त्वादाद्युदात्तत्वम् । ईमहे । 'ईङ् गतौ' । ङित्त्वादात्मनेपदम् । 'बहुलं छन्दसि' इति श्यनो लुक् । निघातः ।।३।।

**सिद्धाञ्जनम्–** तृतीयामृचमाह– **हे इन्द्रावरुणा** । सांहितिकः ह्रस्वः अकारः । इन्द्रो वरुणश्च उभौ युवां **अनुकामं** कामं अनु कर्मप्रवचनीयः । अनुरिह यथापर्यायत्वेन ग्रहीतुं शक्य इति सायणस्याभिमतम् , कामस्य पश्चादनुकाममिति च युक्तो विग्रहः । प्रथमोक्ते यथेष्टमित्यर्थः । द्वितीयोक्ते, स्तोमाकर्णनसोमपानादिरूपकामपूर्तेरनन्तरं इत्यर्थः । एवमेव मन्यते स्कन्दस्वामी 'सोमस्य च पश्चादनुकामं कामयित्वा तत्पानानन्तरमित्यर्थः' इति । उभयथाऽप्यस्मत्पक्ष इन्द्रावरुणयोः कामः गृह्यते । तस्मात् तयोर्यथाकामं कामपूर्तेः पश्चाद्वेति बोध्यम् । **रायः** तृतीयार्थे षष्ठी, दिव्येन युवयोर्धनेन **आतर्पयेथां** सर्वतः अस्मान् तृप्तान् कुरुतम् । **ता** तौ **वां** युवां **नेदिष्ठं** अतिशयेन सामीप्यं **ईमहे** याचामहे । युवयोरत्यन्तसन्निकर्षं युवां याचामहे इति याच्ञार्थक-क्रियायाः द्विकर्मकत्वं अभ्युपगम्य तात्पर्यं ग्राह्यम् । अथवा तौ युवां नेदिष्ठं युष्मदीयं राय ईमहे इति स्याद्वा भावः । पूर्वे व्याख्यातारः सर्वेऽपि 'नेदिष्ठं' इत्यस्य तात्पर्यविवरणे विप्रतिपद्यन्ते । 'युवाकु हि' इति उत्तरस्यामृचि प्रार्थितस्य दिव्यस्य धनस्य प्रज्ञाबलसमृद्धिनिधेः 'नेदिष्ठस्य' 'रायः' गूढं प्रतिपादनं भवति । तत्संप्रत्यावेदयामः ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**युवाकु हि शचीनां युवाकु सुमतीनाम् । भूयाम वाजदाव्नाम् ।। ४ ।।**

युवाकु । हि । शचीनाम् । युवाकु । सुऽमतीनाम् । भूयाम । वाजऽदाव्नाम् ।। ४ ।।

ऋग्भाष्यम्

**युवयोरेव वाक्यानां सुमतीनां च सर्वशः ।**
**भवेमान्नप्रदातृणां सर्वदा विषया वयम् ।। ४ ।।**

**ऋग्भाष्यटीका– युवाकु** ।। युवयोः । हे इन्द्रावरुणौ वयं **युवाकु** लुप्तषष्ठीबहुवचनान्तमेतत् । युवयोरेव सम्बन्धिनीनां **शचीनां** वाक्यानां साधवो यूयमित्येवंरूपाणां तथा **युवाकु सुमतीनां** शोभनानां मतीनां सर्वशः काले विषया **भूयाम** भवेम विकरणस्य लुक् । किञ्च **वाजदाव्नां** अन्नप्रदातृणां सर्वदा विषया भवेम । सर्वपूज्या भवेमेति ।। ४ ।।

**मन्त्रार्थमञ्जरी–** (चतुर्थी गायत्रीविशेषपादनिचृच्छन्दस्का) (हे इन्द्रावरुणौ वयम्) युवाकु, लुप्तषष्ठीकं बहुवचनान्तम्, युष्मद आकुः, युवयोः सम्बन्धिनीनाम् । शचीनाम्, वाक्यानाम्, 'साधवो यूयम्' इत्येवं रूपाणाम् । तथा युवाकु सुमतीनाम्, युष्मत्सम्बन्धिबुद्धीनाम् । (सर्वदा विषयाः) भूयाम, भवेम, विकरणस्य लुक् । किं च, वाजदाव्नाम्, अन्नप्रदातृणाम् । (सर्वदा विषयाः) (भूयाम) सर्वपूज्या भवेम इति । आतो वनिप् हि ।। ४ ।।

**स्कन्द–** हिशब्दो यस्मादर्थे । यस्माद् **युवाकु** युवां कामयत इति युवाकु, युष्मत्पानकाममित्यर्थः । अथवा यु मिश्रणे । मिश्रितं वसतीवर्येकघनाभिरद्भिः श्रयणैर्वा । किं पुनस्तत् । सामर्थ्यात् सोमलक्षणं हविः । कस्य ? **शचीनां** 'शची' (निघ.२,१) इति कर्मनाम । सामर्थ्याद् वाऽत्रान्तर्णीतमत्वर्थम् । यागकर्मवतामस्माकं स्वभूतम् । न च सोमलक्षणमेव हविः केवलम् । किं तर्हि ? **युवाकु** युष्मत्कामं युष्मद्गुणमिश्रं वा युष्मत्सर्वगुणसङ्कीर्तनरूपमित्यर्थः । किं तत् ? सामर्थ्यात् स्तुतिलक्षणं वचनम् । **सुमतीनां** मतिः स्तुतिः मन्यतेरर्चतिकर्मत्वात् । सुस्तुतीनामस्माकं स्वभूतम् । अथवा द्वावपि युवाकुशब्दौ सोमविषयावेव । मिश्रणार्थ एकः, युष्मत्पानकाममित्येवमर्थोऽपरः । अथवा एवमन्यथाऽस्यार्धर्चस्य अर्थयोजना । युवाकु इति बहुवचनस्य स्थान एकवचनं शचीनां सुमतीनामित्यपि तृतीयार्थे षष्ठी । यस्माद् युष्मत्कामाः कर्मभिः शोभनाभिश्च स्तुतिभिः वयम् । यस्मादिति वचनात् तस्माच्छब्दोऽध्याहार्यः । **भूयाम वाजदाव्नां** भावेऽयं वनिर्द्रष्टव्यः । अन्नदानानाम् । षष्ठीश्रुतेर्लब्धारः कर्तारो वेति वाक्यशेषः ।।

**वेङ्कटमाधव–** युष्मत्कामः हि पुरुषः प्रज्ञानां भाजनं भवति युवाकु सुमतीनाञ्च । वयञ्च युवाकवो युवयोरन्नस्य दातॄणां कर्मणां भाजनं भवाम, भूयास्म वेति ।। ४ ।।

**मुद्गल– हि** यस्मात् कारणात् **शचीनां** अस्मदीयकर्मणां सम्बन्धि सोमरूपं हविः **युवाकु** वसतीवर्येकधनात्मकैरुदकैः पयःसत्त्वादिद्रव्यान्तरैश्च मिश्रितम् । तथा **सुमतीनां**, शोभनबुद्धि-युक्तानां ऋत्विजां स्तुतियुक्तं वचनमपि **युवाकु** नानाविधैः स्तुत्यगुणैः मिश्रितम् । तस्मात् कारणात् हे इन्द्रावरुणौ । तथाविधं हविः स्वीकुर्वतोर्युवयोः प्रसादात् वयं **वाजदाव्नां** अन्नप्रदानां पुरुषाणां मध्ये मुख्याः **भूयाम** भवेम ।। ४ ।।

**सायण– हि** यस्मात् कारणात् **शचीनां** अस्मदीयकर्मणां सम्बन्धि सोमरूपं हविः **युवाकु** वसतीवर्येकधनात्मकैरुदकैः पयःसत्त्वादिद्रव्यान्तरैश्च मिश्रितं तथा **सुमतीनां** शोभनबुद्धियुक्ताना-मृत्विजां स्तोत्ररूपं वचनमपि **युवाकु** नानाविधैः स्तुत्यगुणैर्मिश्रितम् । तस्मात् कारणात् हे इन्द्रावरुणौ तथाविधं हविः स्वीकुर्वतोर्युवयोः प्रसादाद्वयं **वाजदाव्नां** अन्नप्रदानां पुरुषाणां मध्ये मुख्या **भूयाम** भवेम । 'अपः अप्नः' इत्यादिषु षड्विंशतिसङ्ख्याकेषु कर्मनामसु 'शची शमी' (नि.२,१,२२) इति पठितम् ।

युवाकु । 'यु मिश्रणे' । 'कटिकृषिभ्यां काकुः' (उ.सू.३,३५७) इत्यत्र बाहुलकात् यौतेरपि काकुः प्रत्ययः । कित्त्वेन गुणाभावात् उकारस्य उवङादेशः । प्रत्ययस्वरेण मध्योदात्तत्वम् । शचीशब्दः केषाञ्चिन्मते शार्ङ्गरवादिः । ङीनन्तो (पा.सू.४,१,७३) नित्त्वादाद्युदात्तः इति 'उभे वनस्पत्यादिषु युगपत्' इत्यत्र वृत्तिकृतोक्तम् (का.६,२,१४०) । सुमतीनाम् । 'विद्याम सुमतीनाम्' (ऋ.सं.१,४,३) इत्यत्रोक्तम् । भूयाम । प्रार्थनायां लिङ् । उत्तमबहुवचने 'नित्यं ङितः' इति सकारलोपः । 'यासुट् परस्मैपदेषूदात्तो ङिच्च' (पा.सू.३,४,१०३) इति उदात्तो यासुडागमः । 'लिङः सलोपोऽनन्त्यस्य' (पा.सू.७,२,७९) इति सकारलोपः । 'बहुलं छन्दसि' इति शपो लुक् । सति शिष्टत्वात् यासुडुदात्त एव शिष्यते । वाजदाव्नाम् । वाजं ददतीति वाजदावानः । 'आतो मनिन्' (पा.सू.३,२,७४) इत्यादिना वनिप् । तस्य पित्त्वात् धातुस्वर एव शिष्यते । समासे कृदुत्तरपदप्रकृतिस्वरत्वेन स एव शिष्यते । आमि 'अल्लोपोऽनः' (पा.सू.६,४,१३४) इति अकारलोपः । तस्य 'अचः परस्मिन्' (पा.सू.१,१,५७) इति स्थानिवद्भावात् 'लोपो व्योर्वलि' (पा.सू.६,१,६६) इति वकारलोपो न भवति ।। ४ ।।

**सिद्धाञ्जनम्–** चतुर्थीमृचमाह– युवाकुपदार्थनिर्णयेन मन्त्रावगतौ क्लेशः शिथिलितः स्यात्। यौतेर्मिश्रणार्थात् औणादिके काकुप्रत्यये परे युवाकुपदं निष्पन्नं, मिश्रितमित्यर्थः। अयमर्थः सायणीयः कर्मपरव्याख्यानोपयोगी भवति । अस्यामृचि द्विः प्रयुक्तं युवाकुपदम् । प्रथमं 'युवाकु' 'शचीनाम्' कर्मणां सम्बन्धि द्रव्यं सोमरूपं हविः उदकैः द्रव्यान्तरैश्च 'मिश्रितम्' । द्वितीयं तु 'सुमतीनां' ऋत्विजां सम्बन्धि स्तोत्रं स्तुत्यगुणैः 'मिश्रितम्'। इदं द्वयं सिद्धं भवति । तस्मात् 'वाजदाव्नां' अन्नदानप्रभूणां मध्ये वयं स्याम, इति मन्त्रसारांशः कर्मठपक्षानुसारेण । युवां कामयते युवाकुरिति बहुषु स्थलेषु सायणः । 'दस्रा युवाकवः सुताः' इत्यत्र वीर्यशालिनो बलिनः सोमा इत्यस्माभिः व्याख्यातम् । तत्र सायणव्याख्यामवलम्ब्य(३-६२-१)युवपदलक्षितं बलमित्यवोचाम । अत्रापि वीर्यवद्बलवद्वा युवाकु भवति । स्कन्दस्वामिनो वैकल्पिकपक्षानुसारेण युवाकव इति बहुवचनस्थाने एकवचनं प्रयुक्तमिति चेदभिमतमेव तन्नः ।

**हि** यस्मात् **शचीनां** शक्तीनां **युवाकु** वीर्यं, **सुमतीनां** साधुधीवृत्तीनां **युवाकु** वीर्यं **भूयाम** भूयास्म । प्रार्थनायां लिङ् सकारलोपः छान्दसः । तस्मात् इन्द्रावरुणौ 'नेदिष्ठं ईमहे' इति पूर्वया सम्बन्धः । कीदृशां शचीनां सुमतीनां वा ? **वाजदाव्नां** वाजं समृद्धिं ददतीति वाजदावानः। आतो मनिन्नित्यादिना वनिप्, छान्दसम्) समृद्धिप्रदानां शक्तीनां शोभनानां साध्वीनां वा प्रज्ञावृत्तीनां च वयं बलभूताः भूयास्म इत्यर्थः । समृद्धिपदानां शक्तीनां प्रज्ञावृत्तीनां च यद्वीर्यं भवति तद्वन्तः स्याम तदेव वा भवेम । तस्मान्नेदिष्ठमीमहे येनेयं सिद्धिः स्यात् । प्रकारान्तर-व्याख्यायां पूर्वयर्चा नास्ति सम्बन्धः । सेयं भवति– हि यस्मात् शचीनां युवाकु (वयं) सुमतीनां युवाकु (वयं) तस्मात् 'वाजदाव्नां' समृद्धिप्रदानां देवानां मध्ये भूयास्मेति ।। ४ ।।

### ऋक्संहिता पदपाठसहिता

**इन्द्रः॑ सहस्र॒दाव्नां॒ वरु॑णः॒ शंस्या॑नाम् । क्रतु॑र्भवत्यु॒क्थ्यः॑ ।। ५ ।।**

इन्द्रः॑ । स॒ह॒स्र॒ऽदाव्ना॑म् । वरु॑णः । शंस्या॑नाम् । क्रतुः॑ । भ॒व॒ति॒ । उ॒क्थ्यः॑ ।। ५ ।।

### ऋग्भाष्यम्

**क्रतुः प्रधान उक्थ्यश्च शस्त्रैः स्तुत्यो विशेषतः ।। ५ ।।**

**ऋग्भाष्यटीका–** इन्द्रः । अत्र क्रतूक्थ्यशब्दार्थमाह– **क्रतुरिति** ।। क्रतुरिव क्रतुः यथा

क्रतुः कर्ममध्ये विशिष्टस्तथा प्रधानः क्रतुः । उक्थानि शस्त्राणि तैः स्तुत्य **उक्थ्यः** । तर्हि शंस्यानां क्रतुरित्यनेन पुनरुक्तिरित्यत आह– **विशेषत इति ।।** शंस्यानां क्रतुरिति सामान्ये-नोक्तम् । उक्थ्य इति विशेषतः । अतो न दोषः । **इन्द्रः सहस्रदाव्नां** भूरिदातॄणां **शंस्यानां** स्तुत्यानां च क्रतुर्भवति । उक्थ्यश्च । एवं वरुणोऽपीति योज्यम् ।। ५ ।।

**मन्त्रार्थमञ्जरी–** (पञ्चमी पादनिचृद्धसीयसी वा गायत्रीविशेषश्छन्दः) इन्द्रः । सहस्रदाव्नाम्, भूरिदातॄणाम् । शंस्यानाम्, स्तुत्यानाम् । (च) ऋतुः भवति, ऋतुरिव क्रतुः, यथा क्रतुः कर्ममध्ये प्रधानस्तथा प्रधान इत्यर्थः । उक्थ्यः, उक्थैः शस्त्रैः स्तुत्यः । (च) एवम् 'वरुणः (अपि)' इति योज्यम् ।। ५ ।।

स्कन्द– **इन्द्रः सहस्रदाव्नां** सहस्रसङ्ख्याकदानानां, **वरुणः** च **शंस्यानां** स्तुत्यानाम-त्यन्तोत्कृष्टानां **क्रतुः** कर्ता भवति । स्तोतृभ्यः प्रभूतानि धनानि ददातीत्यर्थः । कीदृशः ? **उक्थ्यः** प्रशस्यनामैतत् (तु.निघ ३,८) वक्तव्ये प्रशस्यः ।। ५ ।।

**वेङ्कटमाधव–** इन्द्रः सहस्रस्य दातॄणामपि कर्मणां कर्ता भवति, वरुणः च प्रशंसनीयानां प्रशस्यः । अपि वा स्तोतॄन् सहस्रदाव्नः प्रशस्यांश्च करोति ।। ५ ।।

**मुद्गल– अयं इन्द्रः सहस्रदाव्नां** सहस्रसङ्ख्याकधनप्रदानां मध्ये **क्रतुः** धनदानस्य कर्ता भवति । प्रभूतं ददातीत्यर्थः । तथा **वरुणः शंस्यानां** स्तुत्यानां मध्ये **उक्थ्यः** स्तुत्यो **भवति** । अतिशयेन स्तुत्य इत्यर्थः ।। ५ ।।

**सायण–** अयं **इन्द्रः सहस्रदाव्नां** सहस्रसङ्ख्याकधनप्रदानां मध्ये **क्रतुः** धनदानस्य कर्ता भवति प्रभूतं ददातीत्यर्थः । तथा **वरुणः शंस्यानां** स्तुत्यानां मध्ये **उक्थ्यः** स्तुत्यो **भवति** अतिशयेन स्तुत्य इत्यर्थः ।

वरुणः । उनन्प्रत्ययो नित्त्वादाद्युदात्तः । शंस्यानाम् । 'शंसु स्तुतौ' । 'ऋहलोर्ण्यत्' । 'तित्स्वरितम्' इति प्राप्ते 'ईडवन्दवृशंसदुहां ण्यतः' (पा.सू.६,१,२१४) इत्याद्युदात्तः । क्रतुः । 'कृञः कतुः' (उ.सू.१,७७) इति कतुः । कित्त्वाद्गुणाभावे यणादेशः । प्रत्ययस्वरेणाद्युदात्तः । उक्थ्यः । उक्थं शस्त्रम् । तेन स्तुत्यत्वेन तत्र भव उक्थ्यः । 'भवे छन्दसि' (पा.सू.४,४,

११०) इति यत् । 'यस्य' इति लोपः । अत्र 'तित्स्वरितम्' इत्येतद्बाधित्वा 'तीर्थ्याय कूप्याय' इत्यादिवत् ब्यचूत्वात् 'यतोऽनावः' इति प्राप्तमाद्युदात्तत्वं 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' (परिभा.३५) इति न क्रियते । ननु 'यस्य' इति लोपात् प्रागेव तिस्वरितत्वमस्तु । न हि तदा 'यतोऽनावः' इत्येतदस्ति, ब्यचूत्वाभावात् । अत एव हि 'ऊर्म्याय च सूर्म्याय च' इत्यादौ स्वरितत्वं दृश्यते । न च परत्वान्नित्यत्वाच्च 'यस्य' इति लोपेन प्रथमतो भाव्यमिति वाच्यम् । प्रकृतिप्रत्ययाश्रयात् बहिरङ्गात् 'यस्य' इति लोपात् प्रत्ययमात्राश्रयतया अन्तरङ्गत्वेन 'तित्स्वरितम्' इत्येतस्य प्राबल्यात् । अतः 'ऊर्म्याय' इत्यादिवत् 'उक्थ्यः' इत्यत्रापि लक्षणत एव स्वरितत्वं भविष्यतीति किं छान्दस्येन । यत्र हि लोपमन्तरेणैव ब्यचूत्वं तत्र 'यतोऽनावः' इत्येतद्भवति । यथा चेयं येयमिति । लोपनिबन्धनब्यचूत्वप्रदेशेषु तु स्वरितेनैव भवितव्यमिति । एवं तर्हि 'तीर्थ्याय कूप्याय' इत्यादौ यत् आद्युदात्तत्वं तदेव च्छान्दसमस्तु । अथात्र तु 'वार्णादाङ्गं बलीयः' (परिभा.५५) इत्यन्तरङ्गत्वेऽपि स्वरितत्वं बाधित्वा लोप एव भविष्यति । तर्हि 'उक्थ्यः, ऊर्म्याय सूर्म्याय' इत्यादौ च च्छान्दस्यमस्तु । सर्वथैकत्र च्छान्दस्यान्न मुच्यते ।।

**सिद्धाञ्जनम्**– पञ्चमीमृचमाह– **इन्द्रः सहस्रदाव्नां** सहस्रं बह्वर्थकं , विविधस्य बहोः ज्ञानबलादेः दातृणां **क्रतुः** दानेच्छाबलभूतः दानकारकः कर्तेति यावत् । **वरुणः शंस्यानां** स्तुत्यानां **उक्थ्यः** सर्वोत्कृष्टत्वेन स्तुत्यः भवति । उक्थ्यः–उक्थं शस्त्रं तत्र स्तुत्यत्वेन भवः, भवे छन्दसीति यत् ।। ५ ।।

।। इति प्रथमाष्टके प्रथमाध्याये द्वात्रिंशो वर्गः ।।

### ।। अथ त्रयस्त्रिंशो वर्गः ।।

### ऋक्संहिता पदपाठसहिता

**तयोरिदवसा वयं सनेम नि च धीमहि । स्यादुत प्ररेचनम् ।। ६ ।।**

तयोः । इत् । अवसा । वयम् । सनेम । नि । च । धीमहि । स्यात् । उत । प्रऽरेचनम् ।।

### ऋग्भाष्यम्

**रक्षणेन तयोर्वित्तं ज्ञानं वा प्राप्नुमः सदा ।**
**निधीमहि च दानं च स्यादेवास्माकमर्थिने ।। ६ ।।**

**ऋग्भाष्यटीका– तयोरित्** ।। रक्षणेन । वयं **तयोः** इन्द्रावरुणयोः **इत्** एव **अवसा** रक्षणेन **सनेम** वित्तं ज्ञानं वा सदाऽऽप्नुमः । **निधीमहि** च निखाय स्थापयामच । सदा ताविन्द्रावरुणौ चिन्तयामेति वा । किञ्च । अस्माकं **प्रेरेचनं** विसर्जनमर्थिने दानं **उत** स्यादेव ।। ६ ।।

**मन्त्रार्थमञ्जरी–** वयम् । तयोः इत्, इन्द्रावरुणयोरेव । अवसा, रक्षणेन । सनेम, वित्तं ज्ञानं वा सदाप्नुमः । नि धीमहि च, निखाय स्थापयाम च, सदा ताविन्द्रावरुणौ चिन्तयाम चेति वा । किं च, (अस्माकम्) प्रेरेचनम्, विसर्जनम्, अर्थिने दानम् । स्यात् उत, स्यादेव ।।

**स्कन्द–** इत् इति पदपूरणः । **तयोः** इन्द्रावरुणयोः **अवसा** 'हेतौ' (पा.२,३,२३) इति तृतीया । तर्पणेन पालनेन वा हेतुना । ताभ्यां तर्प्यमाणाः पाल्यमाना वेत्यर्थः । **सनेम** सम्भजेमहि । किम् ? सामर्थ्याद् धनम् । **निधीमहि च** उपभोगातिरिक्तं च निखाय स्थापयेमेत्यर्थः । **स्यात् उत प्रेरेचनं** उतेत्यप्यर्थे । प्रकर्षेण यदतिरिच्यते तत् प्रेरेचनं । उपभोगान्निधानाच्चातिरिक्तमपि स्यादित्यर्थः ।। ६ ।।

**वेङ्कटमाधव–** इन्द्रावरुणयोः एव रक्षणेन वयं धनं भजेमहि निधीमहि च । उपयुक्तादतिरिक्तं निहितादतिरिक्तं अपि अस्तु ।। ६ ।।

**मुद्गल– तयोरित्** पूर्वोक्तयोरिन्द्रावरुणयोरेव **अवसा** रक्षणेन वयं अनुष्ठातारः **सनेम** सम्भजेम धनमिति शेषः । **निधीमहि च** प्राप्ते धने यावदपेक्षितं तावद् भुक्त्वा ततोऽवशिष्टं धनं क्वचिन्निधिरूपेण स्थापयामश्च । **उत** अपि च **प्रेरेचनं** भुक्तात् निहिताच्च प्रकर्षेणाधिकं धनम् स्यात् सम्पद्यताम् ।। ६ ।।

**सायण–** तयोरित् पूर्वोक्तयोरिन्द्रावरुणयोरेव अवसा रक्षणेन वयम् अनुष्ठातारः सनेम सम्भजेम धनमिति शेषः । 'नि धीमहि च । प्राप्ते धने यावदपेक्षितं तावद्भुक्त्वा ततोऽवशिष्टं धनं क्वचिन्निधिरूपेण स्थापयामश्च । उत अपि च प्रेरेचनं भुक्तान्निहिताच्च प्रकर्षेणाधिकं धनं स्यात् सम्पद्यताम् ।। अवसा । असुन् । नित्त्वादाद्युदात्तः । वयम् । 'यूयं हि ष्ठा' (ऋ.सं.१,१५,२) इत्यत्र यदुक्तं तदत्र द्रष्टव्यम् । सनेम । आशिषि लिङ् । तस्य मस् । 'नित्यं ङितः' इति सकारलोपः । 'किदाशिषि' (पा.सू.३,४,१०४) इति यासुट् । 'छन्दस्युभयथा' इति सार्वधातुकत्वमप्यस्तीति 'लिङः सलोपोऽनन्त्यस्य' (पा.सू.७,२,७९) इति सकारलोपः ।

'अतो येयः' (पा.सू.७,२,८०) इति इयादेशः । 'लोपो व्योर्वलि' (पा.सू.६,१,६६) इति यलोपः । 'लिङ्याशिष्यङ्' (पा.सू.३,१,८६) इति अङ् । 'आद्गुणः' । पादादित्वात् न निघातः । धीमहि । 'डुधाञ् धारणपोषणयोः' । आशिषि लिङो महिङ् । तस्य 'छन्दस्युभयथा' इति सार्वधातुकार्धधातुकसंज्ञे । तत्र सार्वधातुकत्वेन 'लिङः सलोपोऽनन्त्यस्य' इति सकारलोपः । 'सार्वधातुकमपित्' इति ङित्त्वं शप् च । 'बहुलं छन्दसि' इति जुहोत्यादेरपि शपो लुक् । आर्धधातुकत्वात् 'आतो लोप इटि च' (पा.सू.६,४,६४) इति आकारलोपः । निघातः । सनेम इत्यपेक्षया द्वितीयत्वादत्र 'चवायोगे प्रथमा' इति न निषेधः । स्यात् । अस्तेः प्रार्थनायां लिङ् । तिप् । 'इतश्च' (पा.सू.३,४,१००) इति इकारलोपः । 'यासुट् परस्मैपदेषूदात्तो ङिच्च' (पा.सू.३,४,१०३) इति यासुड्ङित्त्वे । 'अदिप्रभृतिभ्यः शपः' इति शपो लुक् । 'श्नसोरल्लोपः' इति अकारलोपः । पादादित्वात् अनिघातः । उत । 'एवमादीनामन्तः' इत्यन्तोदात्तः । प्रेरेचनम् । 'रिचिर् विरेचने' । भावे ल्युट् । योरनादेशः । 'लिति' इति प्रत्ययात्पूर्वस्योदात्तत्वम् । प्रादिसमासः । कृदुत्तरपदप्रकृतिस्वरत्वम् ॥ ६ ॥

**सिद्धाञ्जनम्–** षष्ठीमृचमाह– **तयोः** इत् सर्वदातृक्रतुभूतस्य कर्तुरिन्द्रस्य सर्वोत्कृष्टत्वेन शंसनीयस्य वरुणस्य च उभयोः **अवसा** अस्मासु वर्धनेन **वयं** दिव्यवनकामाः **सनेम** सम्भजेम, लब्धव्यं लभेमहि, लब्धं च **निधीमहि** च उपभुक्तावशिष्टं अमितत्वात् निधिवन्निदध्मः उपभोगाय यावदपेक्षितं तावतोऽप्यधिकं वर्तते तद्धनं, तस्मात् तन्निक्षेपवद्रक्ष्यते। अपि च यावदस्माभिर्निधातुं शक्यं, तदपि अतिरिच्य वर्तते तदित्याह– **उत** अपि च **प्ररेचनं** प्रकर्षेण अतिरिक्तं **स्यात्** । तयोरिन्द्रावरुणयोरस्मासु वर्धनेन यद्दिव्यं धनं लभ्यते तदपरिमितमित्यर्थः । इदं 'विभु प्रभु' इति माधुच्छन्दसी मन्त्रदृष्टिः स्मर्तव्या । इहापि 'चित्राय राधसे' उत्तरत्राह ॥ ६ ॥

## ऋक्संहिता पदपाठसहिता

**इन्द्रा॑वरुण वा॒मह॒ं हु॒वे चि॒त्राय॒ राध॑से । अ॒स्मान्त्सु जि॒ग्युष॑स्कृतम् ॥ ७ ॥**

इन्द्रा॑वरुणा । वा॒म् । अ॒हम् । हु॒वे । चि॒त्राय॑ । राध॑से । अ॒स्मान् । सु । जि॒ग्युषः॑ । कृ॒तम् ॥

## ऋग्भाष्यम्

**ह्रस्वता संहितायां तु देवतैक्यप्रदर्शिनी ।**
**स्वरूपैक्यं हरौ तत्तु मत्यैक्यं भिन्नयोरपि ॥ ७ ॥**

**ऋग्भाष्यटीका– इन्द्रावरुण ।** अत्रेन्द्रावरुणेति संहितायां ह्रस्वान्तं पठ्यते पदं तु दीर्घान्ततया विच्छिद्यते तत्र तात्पर्यमाह– **ह्रस्वतेति ।।** देवतयोरिन्द्रवरुणयोरैक्यं विभागेन दर्शयति– **स्वरूपेति ।।** तद्ध्रस्वतया प्रकाशितमैक्यं हरौ विवक्षिते स्वरूपैक्यं ज्ञेयम् । अन्ययोस्त्विन्द्रावरुणयोर्विवक्षायां मत्यैक्यं ज्ञातव्यमित्यर्थः । अपिशब्दोऽर्थद्वयसमुच्चयार्थः । हे **इन्द्रावरुणौ अहं चित्राय** भद्राय राधसे वा युवां **हुवे** आह्वयामि । युवां **अस्मान्सुजिग्युषः** सुजितवतः **कृतं** कुरुतम् ।। ७ ।।

**मन्त्रार्थमञ्जरी–** (हे) इन्द्रावरुणा, इन्द्रावरुणौ । अहम् । चित्राय, भद्राय । राधसे, संसिद्ध्यर्थम् । वाम्, युवाम् । हुवे, आह्वयामि । (युवाम्) अस्मान् । सु जिग्युषः, सुजितवतः । कृतम्, कुरुतम् । अत्र 'इन्द्रावरुण' इत्यत्र संहितापदयोर्वैरूप्यतात्पर्यम् 'युवं दक्षं धृतव्रत' इत्यत्रोक्तम् ।। ७ ।।

**स्कन्द–**हे **इन्द्रावरुणौ! वां अहं हुवे ।** किमर्थम् ? **चित्राय राधसे** चित्रस्य धनस्यार्थाय । चित्रं धनं मह्यं दत्तमित्यर्थः । किञ्च **अस्मान् सुजिग्युषः** सुष्ठु जितवतः शत्रून् **कृतं** कुरुतम् । अस्मच्छत्रूनप्यस्माभिर्जापयतमित्यर्थः ।। ७ ।।

**वेङ्कटमाधव–** इन्द्रावरुणौ! वां अहं हुवे चित्राय धनाय । तौ अस्मान् शत्रून् जितवतः सुष्ठु कुरुतम् ।। ७ ।।

**मुद्गल– इन्द्रावरुणा** हे इन्द्रावरुणौ! **वां** युवां **अहं हुवे** आह्वयामि । किमर्थम् ? **चित्राय** मणिमुक्तादिरूपेण विविधाय **राधसे** धनाय । तत आहूतौ युवां **अस्मान्** अनुष्ठातॄन् **सु जिग्युषः** शत्रुविषये सुष्ठु जययुक्तान् **कृतं** कुरुतम् ।। ७ ।।

**सायण– इन्द्रावरुणा** हे इन्द्रावरुणौ **वां** युवामुभौ **अहं हुवे** आह्वयामि । किमर्थम् ? **चित्राय** मणिमुक्तादिरूपेण विविधाय **राधसे** धनाय । तत आहूतौ युवां **अस्मान्** अनुष्ठातॄन् **सुजिग्युषः** शत्रुविषये सुष्ठु जययुक्तान् **कृतं** कुरुतम् ।

इन्द्रावरुणा । 'सुपां सुलुक्' इत्यादिना सम्बोधनस्य आकारः । 'देवताद्वन्द्वे च' इति पूर्वपदस्य आनङ् । आमन्त्रितायुदात्तत्वम् । संहितायां छान्दसं ह्रस्वत्वम् । हुवे । ह्वयतेः

लड्डुत्तमैकवचनम् इट् । 'शपः' इत्यनुवृत्तौ 'बहुलं छन्दसि' इति लुक् । 'ह्वः' इत्यनुवृत्तौ 'बहुलं छन्दसि' इति सम्प्रसारणं परपूर्वत्वम् । 'अचि श्नुधातु' (पा.सू.६,४,७७) इत्यादिना उवङ् । न च 'हुश्नुवोः' (पा.सू.६,४,८७) इत्यादिना यणादेशः । जुहोतेरेव हि प्रतिपदोक्तस्य तत्, न पुनरस्य लाक्षणिकत्वात् । इटः प्रत्ययस्वरेणोदात्तत्वम् । पादादित्वात् न निघातः । राधसे । असुन् । नित्त्वादाद्युदात्तत्वम् । अस्मान् शसि 'द्वितीयायां च' (पा.सू.७,२,८७) इति आत्वम् । 'शसो न' (पा.सू.७,१,२९) इति नत्वम् । जिग्युषः । 'जि जये' । लिटः 'क्वसुश्च' (पा.सू. ३,२,१०७) इति क्वसुः । द्विर्भावः । 'सन्लिटोर्जेः' (पा.सू.७,३,५७) इति द्वितीयस्य कुत्वम् । क्वसोः कित्त्वाद्गुणाभावः । क्रादिनियमात् प्राप्तस्य इटः 'वस्वेकाजाद्घसाम्,' इति नियमेन निवृत्तिः । द्वितीयाबहुवचनं शस् । भसंज्ञायां 'वसोः सम्प्रसारणम्' इति सम्प्रसारणम् । परपूर्वत्वम् । 'एरनेकाचः' इति यणादेशः । 'शासिवसिघसीनां च' इति षत्वम् । प्रत्ययस्वरेण उकार उदात्तः । कृतम् । 'डुकृञ् करणे' । लोण्मध्यमद्विवचनस्य लड्वद्भावात् तमादेशः । शपः 'बहुलं छन्दसि' इति लुक् । 'तिङ्ङतिङः' इति निघातः ।। ७ ।।

**सिद्धाञ्जनम्**– सप्तमीमृचमाह– हे **इन्द्रावरुणा** हे इन्द्रावरुणौ । संहितायां ह्रस्वः छान्दसः । **वां** युवामुभौ **अहं हुवे** आह्वयामि । किमर्थम् ? **चित्राय** विविधाय **राधसे** धनाय । इदं च विचित्रं दिव्यं धनं बोध्यम् । **अस्मान्** दिव्याय कर्मणे प्रवृत्तान् देवोपासकान् **सुजिग्युषः** सुष्ठु जयसम्पन्नान् **कृतं** कुरुतम् । जिग्युषः– जि जये इति धातोः लिड्वद्भावे क्वसुन् । कृतं–करोतेः लोण्मध्यमद्विवचनम् , लङ्वद्भावात् तमादेशः छान्दसः ।। ७ ।।

### ऋक्संहिता पदपाठसहिता

**इन्द्रा॑वरुण नू॒नुवां॑ सिषा॑सन्तीषु धी॒ष्वा । अ॒स्मभ्यं॒ शर्म॑ यच्छतम् ।। ८ ।।**

इन्द्रा॑वरुणा । नु । नु । वा॒म् । सिसा॑सन्तीषु । धी॒षु । आ । अ॒स्मभ्य॑म् । शर्म॑ । य॒च्छ॒त॒म् ।।

### ऋग्भाष्यम्

**अद्य वां नु नुमो लोपः स्वातन्त्र्यार्थे हि सूत्रतः ।**
**साधयन्तीषु धीष्वेव शर्मास्मभ्यं प्रयच्छतम् ।। ८ ।।**

**ऋग्भाष्यटीका**– **इन्द्रावरुण नु** । अद्य हे **इन्द्रावरुणौ नु** अद्य **वां** युवां **नु** नुमः णु

स्तुतौ स्तुमः । ननु कथमेतत् मस्प्रत्ययस्यादर्शनात् । धातुमात्रस्य च प्रयोगायोगात् कारकालाभाच्च अत आह– **लोप इति ।।** लोपः मस्प्रत्ययस्य स्तुत्यादौ परमेश्वरस्यैव स्वातन्त्र्यं न स्तोतु-जीवस्येत्येतदर्थप्रतिपादनायेत्यर्थः । सूत्रतश्चिरन्तनव्याकरणसूत्रात् । हिशब्देनास्यार्थस्यानुभवसिद्धतां च दर्शयति । प्रत्ययेन हि स्तोतुर्जीवस्य स्वातंत्र्यलक्षणं कर्तृत्वं वक्तव्यम् । तल्लोपेन च कर्तृत्वस्यापि लोपो ज्ञापितो भवति । **धीषु** अस्मद्बुद्धिषु **वां** युवां **सिषासन्तीषु** साधयतेः स्वार्थे सन् धातुलोप इडभावश्च । साधयन्तीषु सम्यक्प्रकाशयन्तीषु सतीष्वेव अस्मद्बुद्धयो युवां प्रकाशयन्ति यतस्तस्मादिति यावत् । **अस्मभ्यं शर्म यच्छतम्** ।। ८ ।।

**मन्त्रार्थमञ्जरी–** (हे) इन्द्रावरुणा, इन्द्रावरुणौ । नु, अद्य । वाम्, युवाम् । नु, नुमः, 'णु स्तुतौ' कर्त्रर्थकलादेशस्य 'मस्' इति प्रत्ययस्य लोपेन धातुमात्रनिर्देशः 'अस्माकं स्तुतौ न कर्तृत्वम्, तवैव स्वातन्त्र्यम्' इति ज्ञापनाय, कर्त्रर्थकप्रत्ययाभावे कर्तृत्वाभावस्य सुज्ञानत्वात्, 'लोपः स्वातन्त्र्यार्थे' इति चिरन्तनव्याकरणोक्तेः, इति ज्ञेयम् । धीषु, अस्मद्बुद्धिषु । (वाम्) युवाम् । आ सिसासन्तीषु, साधयन्तीषु, सम्यक्प्रकाशयन्तीष्विति यावत्, साधयतेः स्वार्थे सन्, द्विर्वचनम्, अभ्यासस्य 'सन्यतः' इतीत्वम्, इडभावधकारलोपौ छान्दसौ, शतृङीपौ । अस्मभ्यम् । शर्म, सुखम् । यच्छतम्, प्रयच्छतम्, यतो युवामस्मद्बुद्धयः प्रकाशयन्ति तस्मात्सुख-मस्मभ्यं दत्तमिति भावः ।। ८ ।।

**स्कन्द–** नुशब्दयोर्द्वयोरेकः क्षिप्रनाम । पदपूरणोऽपरः । हे **इन्द्रावरुणौ!** क्षिप्रं **वां** युवां **सिसासन्तीषु** सम्भक्तुकामासु **धीषु आ** आकारः पदपूरणः, कर्मसु । सप्तमीनिर्देशाद् वर्तमानेभ्य इति वाक्यशेषः । युष्मद्देवत्यानि कर्माण्यनुतिष्ठद्भ्य इत्यर्थः । केभ्यः ? **अस्मभ्यं शर्म** गृहं सुखं वा **यच्छतं** दत्तम् ।। ८ ।।

**वेङ्कटमाधव–** इन्द्रावरुणौ! क्षिप्रं वां सम्भक्तुमिच्छत्सु ध्यातृषु स्तोतृषु अस्मभ्यं सुखं प्रयच्छतम् । एको नुः पूरणः ।। ८ ।।

**मुद्गल– इन्द्रावरुणा** हे इन्द्रावरुणौ! **धीषु** अस्मदीयबुद्धिषु **वां** युवां **सिषासन्तीषु** सनितुं सम्भक्तुं सम्यक् सेवितुमिच्छन्तीषु तदानीं **आ** समन्तात् **अस्मभ्यं शर्म** सुखं **नू नु** अतिशयेन क्षिप्रं **यच्छतं** दत्तम ।। ८ ।।

**सायण–** **इन्द्रावरुणा** हे इन्द्रावरुणौ **धीषु** अस्मदीयबुद्धिषु **वां** युवां **सिषासन्तीषु** सनितुं सम्भक्तुं सम्यक् सेवितुमिच्छन्तीषु तदानीं **आ** समन्तात् **अस्मभ्यं शर्म** सुखं **नू नु** अतिशयेन क्षिप्रं **यच्छतं** दत्तम् । षड्विंशतिसङ्ख्याकेषु क्षिप्रनामसु 'नु मक्षु' (नि.२,१५,१) इति पठितम् । तस्य द्विरावृत्तिबलादतिशयो लभ्यते ।

इन्द्रावरुणा । उक्तम् । नू नु । 'ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम्' इति पूर्वस्य दीर्घत्वम् । सिषासन्तीषु । 'वन षण सम्भक्तौ' । 'धात्वादेः षः सः' । इच्छायां सन् । द्विर्भावो हलादिशेषः । 'सन्यतः' इति इत्वम् । 'आदेशप्रत्यययोः' (पा.सू.८,३,५९) इति षत्वम् । 'सनीवन्त' (पा.सू.७,२,४९) इत्यादिना विकल्पात् इडभावः । 'जनसनखनां सञ्झलोः' (पा.सू.६,४,४२) इति नकारस्य आकारः । उपरि लटः शतृ । कर्तरि शप् । 'उगितश्च' (पा.सू.४,१,६) इति ङीप् । 'शप्श्यनोर्नित्यम्' (पा.सू.७,१,८१) इति नुम् । ङीपः शपश्च पित्त्वात् शतुश्च लसार्वधातुकत्वेनानुदात्तत्वम् । सनो नित्त्वादाद्युदात्तत्वम् । तदेव शिष्यते । धीषु । 'सावेकाचः' इति विभक्तेरुदात्तत्वम् । अस्मभ्यम् । 'अस्मभ्यमप्रतिष्कुतः' (ऋ.सं.१,७,६) इत्यत्रोक्तम् । यच्छतम् । 'दाण् दाने' शपि 'पाघ्रा' इत्यादिना यच्छादेशः ।। ७ ।।

**सिद्धाञ्जनम्–** अष्टमीमृचमाह– **इन्द्रावरुणा** सांहितिकः ह्रस्वः । **धीषु** अत्मदीपासु **वां** युवां, **सिषासन्तीषु** सनितुं सम्भक्तुं इच्छन्तीषु सतीषु । षण धातोः इच्छायां सन् , ततः शतरि ङीप् । **अस्मभ्यं शर्म** सुखं **आयच्छतं** सर्वतः दत्तम् । **नु नु** क्षिप्रं द्विरावृत्तिरतशया । संहितायां पूर्वस्य दीर्घः छान्दसः ।। ८ ।।

### ऋक्संहिता पदपाठसहिता

**प्र वा॒मश्नो॑तु सुष्टु॒तिरिन्द्रा॑वरुण॒ यां हु॒वे । याम॒धाथे॑ स॒धस्तु॑तिम् ।। ९ ।।**

प्र । वा॒म् । अ॒श्नो॒तु॒ । सु॒ऽस्तु॒तिः । इन्द्रा॑वरुणा । याम् । हु॒वे । याम् । ऋ॒धाथे॒इति॑ । स॒धऽस्तु॑तिम् ।।

### ऋग्भाष्यम्

**यथास्थितस्तुतिं यां च वर्धयेथे सदैव मे ।। ९ ।।**

**ऋग्भाष्यटीका– प्रवाम्** । यथास्थित । हे **इन्द्रावरुणौ** अहं **यां हुवे** आह्वयामि सम्पादयामि । यद्वा तृतीयार्थे द्वितीया । यया वां हुवे सा **सुष्टुतिः** शोभना स्तुतिः **वां प्राश्नोतु** सम्यक्प्राप्नोतु । तस्यां च न मम स्वातन्त्र्यं किन्तु यां **सधस्तुतिं** सधेति सहार्थे अर्थसहितां

स्तुतिं यथास्थितस्तुतिं मे सदैव **ऋधाथे** ऋधवृद्धौ विकरणव्यत्ययोऽन्तर्णीतण्यर्थताच । वर्धयेथे प्रवर्तयथः । सा वां प्राश्नुतामिति सम्बन्धः ।। ९ ।।

**मन्त्रार्थमञ्जरी–** हे इन्द्रावरुणा, इन्द्रावरुणौ, वैरूप्यतात्पर्यं प्राग्वत् । (अहम्) याम्, सुष्टुतिम् । हुवे, आह्वयामि, सम्पादयामीति यावत्, तृतीयार्थे वा द्वितीया, यया स्तुत्या वां हुव इत्यर्थः । (सा) सुष्टुतिः, शोभना स्तुतिः । वाम् । प्र अश्नोतु, प्राश्नुताम्, प्राप्नोतु, सम्यगाप्नोतु, 'अशू व्याप्तौ' लोट्, ।। तस्यां च न मे स्वातन्त्र्यम्, किं तु, याम् । सधस्तुतिम्, 'सध' इति सहशब्दपर्यायः, अर्थसहितस्तुतिम्, यथास्थितस्तुतिम् । (मे सदैव) ऋधाथे, वर्धयेथे, प्रवर्तयथ इति यावत्, 'ऋधु वृद्धौ' व्यत्ययेन लुग्विकरणम्, अन्तर्णीतणिजर्थत्वं च 'सा वाम् प्र अश्नोतु' इत्यन्वयः ।। ९ ।।

**स्कन्द– प्र वां अश्नोतु** प्रकर्षेण युवां व्याप्नोतु । **सुष्टुतिः** शोभना स्तुतिः । **हे इन्द्रावरुणौ! यां हुवे** यामिति द्वितीयानिर्देशात् प्रतीति वाक्यशेषः । तृतीयार्थे वा द्वितीया । यां प्रति यथा वा युवामाह्वयामि । **यां** च **ऋधाथे** वर्धयथः । यो यो निजस्तुतेः फलं साधयति स तां पुनःपुनः कारयति वर्धयति । कीदृशम् ? **सधस्तुतिं** सहहूतयोर्युवयोः स्तुतिम् । अथवा सधस्तुतिमिति तृतीयार्थे द्वितीया । यया सहस्तुत्या वर्धेथे इत्यर्थः । स्तूयमाना हि देवता वीर्येण वर्धन्ते ।।

**वेङ्कटमाधव–** प्र अश्नोतु वां सुष्टुतिः इन्द्रावरुणौ! यां स्तुतिं प्रति वां अहं हुवे । यां च युवां वर्धयथः सहहूताम् ।। ९ ।।

**मुद्गल– इन्द्रावरुणा** हे इन्द्रावरुणौ! **यां** अस्मत्कर्तृकां शोभनस्तुतिं प्रति **हुवे** युवामुभौ आह्वयामि । किञ्च **सधस्तुतिं** युवयोरुभयोः साहित्येन क्रियमाणायाः स्तवक्रियायाः सुष्टुतिं **प्र** प्रतिलभ्य ऋधाथे युवां वर्धाथे । तादृशी **सुष्टुतिः** शोभनस्तुतिहेतुभूतः ऋक्समूहः **वां अश्नोतु** युवां व्याप्नोतु ।। ९ ।।

**सायण– इन्द्रावरुणा** हे इन्द्रावरुणौ **यां** अस्मत्कर्तृकां शोभनस्तुतिं प्रति **हुवे** युवामुभौ आह्वयामि । किञ्च **सधस्तुतिं** युवयोरुभयोः साहित्येन क्रियमाणायाः स्तवक्रियायाः यां सुष्टुतिं प्रतिलभ्य **ऋधाथे** युवां वर्धाथे तादृशी **सुष्टुतिः** शोभनस्तुतिहेतुभूत ऋक्समूहः **वामश्नोतु** युवां व्याप्नोतु ।

अश्नोतु । 'अशू व्याप्तौ' । लोटो व्यत्ययेन तिप् । 'स्वादिभ्यः श्नुः' । सुष्टुतिः । 'न विन्धे अस्य सुष्टुतिम्' (ऋ.सं.१,७,७) इत्यत्रोक्तम् । इन्द्रावरुणा हुवे । उक्ते । अत्र तु यद्वृत्तयोगात् निघातः । ऋधाथे । 'ऋधु वृद्धौ' । लट् । व्यत्ययेनात्मनेपदम् । मध्यमद्विवचने श्नोः 'बहुलं छन्दसि' इति लुक् । प्रत्ययस्वरेण आकार उदात्तः । यच्छब्दयोगात् न निघातः । सधस्तुतिम् । सह स्तुतिर्यस्यां सुष्टुतौ सा सधस्तुतिः । अत्र सुष्टुतिरित्यन्यपदार्थे स्तुतिशब्दस्य स्तूयतेऽनयेति करणसाधनत्वेन ऋक्परत्वे अयं स्तुतिशब्दो भावसाधनतया स्तवनक्रियापरः । तस्मिन् भावसाधनत्वेन क्रियापरे अयं करणसाधनतया ऋक्पर इति समस्यमानपदार्थादन्यः । सहेत्यत्र इकारस्य व्यत्ययेन धकारः । सहशब्दः एवमादित्वादन्तोदात्तः । बहुव्रीहित्वेन पूर्वपदप्रकृतिस्वरत्वम् ।। ९ ।।

**सिद्धाञ्जनम्–** नवमीमृचमाह– **हे इन्द्रावरुणा** इन्द्रावरूणौ, **सुष्टुतिः** मदीया शोभनेयं स्तुतिः **वां** युवां **प्राश्नोतु** प्राप्नोतु यां सुष्टुतिं प्रति, यस्या अङ्गीकरणायेत्यर्थः, **हुवे** आह्वयामि युवाम् । **यां सधस्तुतिं** सहस्तुतिसम्पन्नां अन्तर्यजनक्रियां **ऋधाथे** युवां वर्धयेथे । सधस्तुतिम् । हकारस्य धकारव्यत्ययः, पूर्वपदप्रकृतिस्वरः, बहुव्रीहिः । तस्मात्, यस्यां इन्द्रावरुणसाहित्ययुक्ता स्तुतिर्वर्तते सा अन्तर्यजनक्रिया इति व्याख्यातम् , सर्वथा अन्यपदार्थप्रधानः समासो भवति । सा च ऋक् सधस्तुतिरिति सायणस्याभिमतम् । ऋधाथे– ऋधु वृद्धौ, व्यत्ययेन लुग्विकरणम् । अन्तर्णीतणिजर्थत्वं च । तर्हि अर्धर्चस्येदं तात्पर्यं भवति । यां 'सधस्तुतिं' ऋचं अन्तर्यजनक्रियां वा युवां वर्धयेथे, सा युवां प्रकर्षेण व्याप्नोत्विति ।। ९ ।।

।। इति प्रथमाष्टके प्रथमाध्याये त्रयस्त्रिंशो वर्गः ।।

।। इति प्रथमे मण्डले चतुर्थोऽनुवाकः ।।

## ।। अथ चतुस्त्रिंशो वर्गः ।।

## (सूक्तम् १८)

## ऋक्संहिता पदपाठसहिता

**९ मेधातिथिः काण्वः । १-३ ब्रह्मणस्पतिः,४ इन्द्रो ब्रह्मणस्पतिः सोमश्च ५ ब्रह्मणस्पतिः सोम इन्द्रो दक्षिणाच ६-८ सदसस्पतिः ९ सदसस्पतिर्नराशंसो वा । गायत्री ।**

**सोमानं स्वरणं कृणुहि ब्रह्मणस्पते । कक्षीवन्तं य औशिजः ।। १ ।।**
**सोमानम् । स्वरणम् । कृणुहि । ब्रह्मणः । पते । कक्षीवन्तम् । यः । औशिजः ।। १ ।।**

## ऋग्भाष्यम्

**सौम्यं शब्दं कृणु त्वं नो विष्णो वायो सुवाक्पते ।**
**कक्षीवन्तं प्रति हियो दत्तो यः स उशिक्सुतः ।**
**विवक्षितो मुनिः सोऽपि तस्मादर्थोऽपि मां प्रति ।। १ ।।**

**ऋग्भाष्यटीका– सोमानम् ।।** नवर्चमिदं सूक्तम् । अत्र पञ्चब्राह्मणस्पत्याः चतुर्थ्यामिन्द्रश्च सोमश्च । पञ्चम्यां दक्षिणाच शिष्टाश्च दस्रः सादसस्पत्याः । अन्त्या नाराशंसीवा । ब्राह्मण-स्पत्यादिशब्दार्थस्तु भाष्ये । सौम्यम् । हे **ब्रह्मणस्पते** सुवाक्पते ब्रह्मणो वेदस्य पते विष्णो वायो वा त्वं नोऽस्मान्प्रति कारुण्यात् **सोमानं स्वरणं** सौम्यं शब्दं **कृणुहि** कुरु । **यः** शब्दः प्राक् **कक्षीवन्तं** ऋषिं प्रति दत्तः तादृशम् । कः कक्षीवान् ? **य औशिजः** य उशिक्सुतः सः । कक्षीवन्तमिति परोक्षत्वोक्त्याऽन्यत्वमाशंक्य परिहरति– **विवक्षित इति ।।** योत्र मुनिर्विवक्षितो मेधातिथिः स एव कक्षीवानपि तस्मात्कक्षीवन्तं प्रतीत्यस्य मां प्रतीत्येवार्थो भवति ।

**मन्त्रार्थमञ्जरी–** अथ 'सोमानम्' इत्यष्टादशं नवर्चं वर्गद्वयात्मकं गायत्रीछन्दस्कं सूक्तम् । अत्रादितः पञ्च ब्राह्मणस्पत्याः, चतुर्थ्यां पञ्चम्यां चेन्द्र सोमोऽपि च, पञ्चम्यां दक्षिणापि, शिष्टाश्चतस्रः सादसस्पत्याः, अन्त्या नाराशंसी वा । (हे) ब्रह्मणः पते, ब्रह्मणो वेदस्य पते, पारस्करादित्वात्सुट् (षष्ठ्याः पतिपुत्र' इत्यादिना सत्वम्) विष्णो, वायो वा (त्वम्) (नः) अस्मान्प्रति । (कारुण्यात्) सोमानम् स्वरणम्, सौम्यं शब्दम् । कृणुहि, कुरु । यः, शब्दः । (प्राक्) कक्षीवन्तम्, ऋषिम्, मामिति यावत् । (प्रति दत्तः) तादृशम् । कः कक्षीवान् ? (यः) औशिजः, उशिक्सुतः । सः ।। १ ।।

**स्कन्द–** 'सोमानमिति चाद्या याः पञ्च ता ब्रह्मणस्पतेः' । सोमानमित्यादौ याः पञ्चर्चस्ता ब्रह्मणस्पतिदेवताः । **सोमानं** षुञ् अभिषुवे । अभिषोतारम् । कस्य ? सामर्थ्यात् सोमस्य । **स्वरणं** स्वृ शब्दोपतापयोः । शब्दयितारम् । कस्य ? सामर्थ्यात् स्तुतीनां अर्चयितारञ्च । यष्टारं स्तोतारं चेत्यर्थः । **कृणुहि** कुरु मां धनप्रदानेन । अथवा सर्वत्र यः शब्द्यते स स्वरणः प्रकाश इत्यर्थः । अभिषोतारं मां स्वरणं देवमनुष्येषु प्रकाशं कुरु हे ब्रह्मणः पते! । कमिव ? उच्यते । **कक्षीवन्तं** लुप्तोपममेतद् द्रष्टव्यम् । कक्षीवन्तमिव ऋषिम् । कतमोऽयं कक्षीवान् ? उच्यते– **यः औशिजः** उशिक्पुत्रः ।। १ ।।

**वेङ्कटमाधव–** सोतारं प्रकाशनवन्तं कुरु मां ब्रह्मणस्पते! कक्षीवन्तम् । यथा कृतवानसि । यः कक्षीवानुशिक्प्रसूतः । स्वरतिः शब्दकर्मेति ।। १ ।।

**मुद्गल–** पञ्चमे अनुवाके षट् सूक्तानि । तत्र 'सोमानम्' इति नवर्चं प्रथमं सूक्तम् । मेधातिथिः । गायत्रम् । आद्यास्तिस्रो ब्राह्मणस्पत्याः । चतुर्थी ब्रह्मणस्पतीन्द्रसोमा इति त्रिदेवताका । पञ्चमी दक्षिणा ब्रह्मणस्पतिश्च इन्द्रश्च सोमश्चेति चतुर्देवताका नाराशंसी वा ।।

हे **ब्रह्मणस्पते** एतन्नामकदेव! **सोमानं** अभिषवस्य कर्तारं मामनुष्ठातारं **स्वरणं** देवेषु प्रकाशनवन्तं **कृणुहि** कुरु । दृष्टान्तः– **कक्षीवन्तं** एतन्नामकं ऋषिम् । इवेत्यस्याध्याहारः । कक्षीवान् यथा देवेषु प्रसिद्धः तद्वदित्यर्थः । कक्षीवान् ऋषिः **औशिजः** उशिक्पुत्रः । तमिवेति पूर्वत्र योजना ।। १ ।।

**सायण–** पञ्चमेऽनुवाके षट् सूक्तानि । तत्र 'सोमानम्' इत्यादिकं नवर्चं प्रथमं सूक्तम् । ऋषिच्छन्दसी पूर्ववत् । देवताविशेषस्त्वेवमनुक्रम्यते– 'सोमानमिति पञ्च ब्राह्मणस्पत्याश्चतुर्थ्या-मिन्द्रश्च सोमश्च पञ्चम्यां दक्षिणा चान्याः सादसस्पत्या नाराशंसी वाऽन्त्या' इति । सूक्तगता आद्याः पञ्चर्चो ब्रह्मणस्पतिदेवताकाः । तासां मध्ये 'स घा वीरः' इत्येतस्याश्चतुर्थ्या ऋचो ब्रह्मणस्पतिरिन्द्रश्च सोमश्चेति तिस्रो देवताः । 'त्वं तम्' इत्येतस्याः पञ्चम्या दक्षिणया सह पूर्वोक्तास्तिस्रो देवताः । षष्ठीमारभ्य तिसृणां सदसस्पतिर्देवता । 'नाराशंसम्' इत्येतस्या नवम्याः सदसस्पतिर्नराशंसो वा विकल्प्यते । विनियोगस्तु पूर्ववत् ।।

हे **ब्रह्मणस्पते** एतन्नामकदेव **सोमानं** अभिषवस्य कर्तारं **स्वरणं** देवेषु प्रकाशनवन्तं **कृणुहि** कुरु । अत्र दृष्टान्तः । **कक्षीवन्तं** एतन्नामकमृषिम् । इवशब्दोऽत्राध्याहर्तव्यः । कक्षीवान्

## ।। अथ चतुस्त्रिंशो वर्गः ।।

### (सूक्तम् १८)

### ऋक्संहिता पदपाठसहिता

९ मेधातिथिः काण्वः । १-३ ब्रह्मणस्पतिः,४ इन्द्रो ब्रह्मणस्पतिः सोमश्च ५ ब्रह्मणस्पतिः सोम इन्द्रो दक्षिणाच ६-८ सदसस्पतिः ९ सदसस्पतिर्नराशंसो वा । गायत्री ।

**सोमानं स्वरणं कृणुहि ब्रह्मणस्पते । कक्षीवन्तं य औशिजः ।। १ ।।**

**सोमानम् । स्वरणम् । कृणुहि । ब्रह्मणः । पते । कक्षीवन्तम् । यः । औशिजः ।। १ ।।**

### ऋग्भाष्यम्

**सौम्यं शब्दं कृणु त्वं नो विष्णो वायो सुवाक्पते ।**
**कक्षीवन्तं प्रति हियो दत्तो यः स उशिक्सुतः ।**
**विवक्षितो मुनिः सोऽपि तस्मादर्थोऽपि मां प्रति ।। १ ।।**

**ऋग्भाष्यटीका– सोमानम्** ।। नवर्चमिदं सूक्तम् । अत्र पञ्चब्राह्मणस्पत्याः चतुर्थ्यामिन्द्रश्च सोमश्च । पञ्चम्यां दक्षिणाच शिष्टाश्च दस्रः सादसस्पत्याः । अन्त्या नाराशंसीवा । ब्राह्मणस्पत्यादिशब्दार्थस्तु भाष्ये । सौम्यम् । हे **ब्रह्मणस्पते** सुवाक्पते ब्रह्मणो वेदस्य पते विष्णो वायो वा त्वं नोऽस्मान्प्रति कारुण्यात् **सोमानं स्वरणं** सौम्यं शब्दं **कृणुहि** कुरु । **यः** शब्दः प्राक् **कक्षीवन्तं** ऋषिं प्रति दत्तः तादृशम् । कः कक्षीवान् ? **य औशिजः** य उशिक्सुतः सः । कक्षीवन्तमिति परोक्षत्वोक्त्याऽन्यत्वमाशंक्य परिहरति– **विवक्षित इति** ।। योत्र मुनिर्विवक्षितो मेधातिथिः स एव कक्षीवानपि तस्मात्कक्षीवन्तं प्रतीत्यस्य मां प्रतीत्येवार्थो भवति ।

**मन्त्रार्थमञ्जरी–** अथ 'सोमानम्' इत्यष्टादशं नवर्चं वर्गद्वयात्मकं गायत्रीछन्दस्कं सूक्तम् । अत्रादितः पञ्च ब्राह्मणस्पत्याः, चतुर्थ्यां पञ्चम्यां चेन्द्र सोमोऽपि च, पञ्चम्यां दक्षिणापि, शिष्टाश्चतस्रः सादसस्पत्याः, अन्त्या नाराशंसी वा । (हे) ब्रह्मणः पते, ब्रह्मणो वेदस्य पते, पारस्करादित्वात्सुट् (षष्ठ्याः पतिपुत्र' इत्यादिना सत्वम्) विष्णो, वायो वा (त्वम्) (नः) अस्मान्प्रति । (कारुण्यात्) सोमानम् स्वरणम्, सौम्यं शब्दम् । कृणुहि, कुरु । यः, शब्दः । (प्राक्) कक्षीवन्तम्, ऋषिम्, मामिति यावत् । (प्रति दत्तः) तादृशम् । कः कक्षीवान् ? (यः) औशिजः, उशिक्सुतः । सः ।। १ ।।

**स्कन्द–** 'सोमानमिति चाद्या याः पञ्च ता ब्रह्मणस्पतेः' । सोमानमित्यादौ याः पञ्चर्चस्ता ब्रह्मणस्पतिदेवताः । **सोमानं** षुञ् अभिषुवे । अभिषोतारम् । कस्य ? सामर्थ्यात् सोमस्य । **स्वरणं** स्वृ शब्दोपतापयोः । शब्दयितारम् । कस्य ? सामर्थ्यात् स्तुतीनां अर्चयितारञ्च । यष्टारं स्तोतारं चेत्यर्थः । **कृणुहि** कुरु मां धनप्रदानेन । अथवा सर्वत्र यः शब्द्यते स स्वरणः प्रकाश इत्यर्थः । अभिषोतारं मां स्वरणं देवमनुष्येषु प्रकाशं कुरु हे ब्रह्मणः पते! । कमिव ? उच्यते । **कक्षीवन्तं** लुप्तोपममेतद् द्रष्टव्यम् । कक्षीवन्तमिव ऋषिम् । कतमोऽयं कक्षीवान् ? उच्यते– **यः औशिजः** उशिक्पुत्रः ।। १ ।।

**वेङ्कटमाधव–** सोतारं प्रकाशनवन्तं कुरु मां ब्रह्मणस्पते! कक्षीवन्तम् । यथा कृतवानसि । यः कक्षीवानुशिक्प्रसूतः । स्वरतिः शब्दकर्मेति ।। १ ।।

**मुद्गल–** पञ्चमे अनुवाके षट् सूक्तानि । तत्र 'सोमानम्' इति नवर्चं प्रथमं सूक्तम् । मेधातिथिः । गायत्रम् । आद्यास्तिस्रो ब्राह्मणस्पत्याः । चतुर्थी ब्रह्मणस्पतीन्द्रसोमा इति त्रिदेवताका । पञ्चमी दक्षिणा ब्रह्मणस्पतिश्च इन्द्रश्च सोमश्चेति चतुर्देवताका नाराशंसी वा ।।

हे **ब्रह्मणस्पते** एतन्नामकदेव! **सोमानं** अभिषवस्य कर्तारं मामनुष्ठातारं **स्वरणं** देवेषु प्रकाशनवन्तं **कृणुहि** कुरु । दृष्टान्तः– **कक्षीवन्तं** एतन्नामकं ऋषिम् । इवेत्यस्याध्याहारः । कक्षीवान् यथा देवेषु प्रसिद्धः तद्वदित्यर्थः । कक्षीवान् ऋषिः **औशिजः** उशिकुपुत्रः । तमिवेति पूर्वत्र योजना ।। १ ।।

**सायण–** पञ्चमेऽनुवाके षट् सूक्तानि । तत्र 'सोमानम्' इत्यादिकं नवर्चं प्रथमं सूक्तम् । ऋषिच्छन्दसी पूर्ववत् । देवताविशेषस्त्वेवमनुक्रम्यते– 'सोमानमिति पञ्च ब्राह्मणस्पत्याश्चतुर्थ्या-मिन्द्रश्च सोमश्च पञ्चम्यां दक्षिणा चान्याः सादसस्पत्या नाराशंसी वाऽन्त्या' इति । सूक्तगता आद्याः पञ्चर्चो ब्रह्मणस्पतिदेवताकाः । तासां मध्ये 'स घा वीरः' इत्येतस्याश्चतुर्थ्या ऋचो ब्रह्मणस्पतिरिन्द्रश्च सोमश्चेति तिस्रो देवताः । 'त्वं तम्' इत्येतस्याः पञ्चम्या दक्षिणया सह पूर्वोक्तास्तिस्रो देवताः । षष्ठीमारभ्य तिसृणां सदसस्पतिर्देवता । 'नाराशंसम्' इत्येतस्या नवम्याः सदसस्पतिर्नराशंसो वा विकल्प्यते । विनियोगस्तु पूर्ववत् ।।

हे **ब्रह्मणस्पते** एतन्नामकदेव **सोमानं** अभिषवस्य कर्तारं **स्वरणं** देवेषु प्रकाशनवन्तं **कृणुहि** कुरु । अत्र दृष्टान्तः । **कक्षीवन्तं** एतन्नामकमृषिम् । इवशब्दोऽत्राध्याहर्तव्यः । कक्षीवान्

यथा देवेषु प्रसिद्धस्तद्वदित्यर्थः । **यः** कक्षीवानृषिः **औशिजः** उशिजः पुत्रः । तमिवेति पूर्वत्र योजना । कक्षीवतोऽनुष्ठातृषु मुनिषु प्रसिद्धिस्तैत्तिरीयैराम्नायते– 'एतं वै पर आट्णारः कक्षीवाँ औशिजो वीतहव्यः श्रायसस्त्रसदस्युः पौरुकुत्स्यः प्रजाकामा अचिन्वत' (तै.सं.५,६,५,३) इति । ऋगन्तरेऽपि ऋषित्वकथनेनानुष्ठातृत्वप्रसिद्धिः सूच्यते– 'अहं कक्षीवाँ ऋषिरस्मि विप्रः' (ऋ.सं.४,२६,१) इति । तस्मात् अस्यानुष्ठातारं प्रति दृष्टान्तत्वं युक्तम् ।

सोऽयं मन्त्रो यास्केनैवं व्याख्यातः– 'सोमानं सोतारं प्रकाशनवन्तं कुरु ब्रह्मणस्पते कक्षीवन्तमिव य औशिजः । कक्षीवान् कक्ष्यावानौशिज उशिजः पुत्र उशिग्वष्टेः कान्तिकर्मणोऽपि त्वयं मनुष्यकक्ष एवाभिप्रेतः स्यात्तं सोमानं सोतारं मा प्रकाशनवन्तं कुरु ब्रह्मणस्पते' (निरु.६,१०) इति । अस्मिन् मन्त्रे सोमानमिति पादेन कृणुहि ब्रह्मण इति पादेन सूचितं तात्पर्यं तैत्तिरीया आमनन्ति– 'सोमानं स्वरणमित्याह सोमपीथमेवाव रुन्धे । कृणुहि प्रह्मणस्पत इत्याह ब्रह्मवर्चसमेवाव रुन्धे' (तै.सं.१,५,८,४) इति ॥

सोमानम् । सुनोतीति । 'षुञ् अभिषवे' । 'अन्येभ्योऽपि दृश्यन्ते' इति मनिन् । दृशिग्रहणस्य विध्यन्तरोपसङ्ग्रहणार्थत्वात् नित्त्वेऽपि नाद्युदात्तत्वं किन्तु प्रत्ययस्वर एव । उञ्छादिषु (पा.सू.६,१,१६०) वा सोमञ्शब्दो द्रष्टव्यः बहुलग्रहणात् औणादिको वा मनिर्द्रष्टव्यः । स्वरणं प्रख्यातम् । 'स्वृ शब्दोपतापयोः' । 'कृत्यल्युटो बहुलम्' (पा.सू.३,३,११३) इति कर्मणि ल्युट् । 'लिति' इति अकार उदात्तः । कृणुहि । 'कृवि हिंसाकरणयोश्च' । 'इदितो नुम् धातोः' (पा.सू.७,१,५८) इति नुम् । लोटः सिपो हिः । शपि प्राप्ते 'धिन्विकृण्व्योर च' इति उप्रत्ययः; तत्सन्नियोगेन वकारस्य च अकारः । तस्य 'अतो लोपः' इति लोपः । तस्य स्थानिवद्भावात् न पूर्वस्य लघूपधगुणः । हेर्ङित्त्वात् उकारस्य न गुणः । 'उतश्च प्रत्ययाच्छन्दोवावचनम्' (पा.सू. ६,४,१०६,१) इति हेर्लुक् न । 'सति शिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्यः' इति वचनात् हेरेव प्रत्ययस्वरेणोदात्तत्वम् । पादादित्वात् न निघातः । ब्रह्मणः । 'षष्ठ्याः पतिपुत्र' (पा.सू. ८,३,५३) इत्यादिना संहितायां विसर्जनीयस्य सकारः । सुबामन्त्रितपराङ्गवद्भावात् पदद्वयस्य आमन्त्रितनिघातः । कक्षीवन्तम् । कक्षे भवा कक्ष्या अश्वोदरसम्बन्धिनी रज्जुः । 'भवे छन्दसि' (पा.सू.४,४,११०) इति यप्रत्ययः । सा अस्यास्तीत्यर्थे 'आसन्दीवदष्ठीवच्चक्रीवत्कक्षीवत्' (पा.सू.८,२,१२) इति ऋषिविशेषनाम कक्षीवच्छब्दो निपातितः । 'छन्दसीरः' इति वत्वम् ।

यप्रत्ययस्वरेण तदादेशो निपातित ईकार उदात्तः । मतुप्सुपौ पित्त्वादनुदात्तौ । औशिजः । 'वश कान्तौ' । 'इजि' (उ.सू.२,२२८) इत्यनुवृत्तौ 'वशेः किच्च' (उ.सू.२,२२९) इति इजिप्रत्ययः । तस्य कित्त्वात् 'ग्रहिज्या' (पा.सू.६,१,१६) इत्यादिना सम्प्रसारणं, परपूर्वत्वे गुणाभावः । 'तस्यापत्यम्' (पा.सू.४,१,९२) इति 'प्राग्दीव्यतोऽण्' (पा.सू.४,१,८३) । आदिवृद्धिः । प्रत्ययस्वरेणान्तोदात्तत्वम् ।। १ ।।

**सिद्धाञ्जनम्–** पञ्चमानुवाके षट् सूक्तानि । तत्राद्यं सोमानमित्यादिकं नवर्चं सूक्तम् । ऋषिच्छन्दसी पूर्ववत् । ब्रह्मणस्पत्याद्या देवता मन्त्रार्थप्रतिपादने तत्र तत्र स्पष्टाः स्युः ।

तत्र प्रथमामृचमाह– ब्रह्मणस्पतिर्नाम मन्त्राधिदेवता भवति । उत्तरत्र 'उत्तिष्ठ' इति ब्राह्मणस्पत्यसूक्तव्याख्यायां तदीयं तत्त्वं प्रपञ्चयिष्यामः। **हे ब्रह्मणस्पते** एतन्नामकदेव **सोमानं** सोतारं मां, षुञ् अभिषवे, सुनोतेर्मनिन् । अभिषवस्य कर्तारमित्यर्थः **। स्वरणं,** स्वृशब्दोपतापयोः प्रकाशनवन्तं **कृणुहि** कुरु । **कक्षीवन्तं** ऋषिमिव इति अध्याहर्तव्यः । **यः** कक्षीवान् ऋषिः **औशिजः** उषिजः पुत्रः प्रसिद्ध आसीत् । इदं च पूर्वेषां व्याख्यानम् । इवशब्दाध्याहारो नावश्यकः तं विनाऽपि तात्पर्यसिद्धेः । ऐतिहासिकः कक्षीवान् ऋषिः बहुत्र ऋक्संहितायां प्रसिद्ध उपन्यस्तो भवति । अन्तरर्थपरे व्याख्याने उशिजः कक्षीवतश्च अवयवार्थानुगमेन तात्पर्यं बोध्यम् । इमामृचं विवृण्वन् यास्कः 'कक्षीवान् कक्ष्यावान् औशिजः उशिजः पुत्रः । उशिक् वष्टेः कान्तिकर्मणः । अपि त्वयं मनुष्यकक्ष एवाभिप्रेतः स्यात्' इत्याह । तर्हि उशिक् कान्तिमत् तेजो वा भवति, तस्य अपत्यं तैजसः कक्षीवान् रहस्यवान् परदैवतरहस्यसम्पन्न इति वाच्यम् , कक्षशब्दस्य गहनार्थे गोप्यार्थे वा प्रसिद्धेः । इदं चावधेयम्– अत्र इवशब्दाध्याहारवर्जं आचार्यदुर्गव्याख्या भवति । 'अपि चैवमन्यथा स्यात्– योऽहं सोमानं सोता कक्षीवान् औशिजः, तमेवंगुणविशिष्टं मां प्रकाशनवन्तं कुरु हे ब्रह्मणस्पते' इति । योऽहमौशिजः कान्तिजन्मा तैजसः, तं सोमानं सोतारं कक्षीवन्तं परमरहस्यविज्ञं मां स्वरणं प्रकाशनवन्तं देवेषु प्रख्यातं कृणुहि कुरु, ब्रह्मणस्पते- इत्युपपन्नतरम् ।। १ ।।

**नीतिमञ्जरी–** 'सोमसुत् धन्य' इत्यर्थ आह–

**'कुयोनिजोऽपि सर्वेभ्यो धन्यो भवति सोमसुत् ।**
**ऐच्छन्मेधातिथिः साम्यमुशिक्पुत्रस्य सुन्वतः ।। ८ ।।**

कुयोनिजोऽपि कुत्सितयोनिजातोऽपि यः सोमसुत् । सोमं सुतवान् इति सोमसुत् । सोमे सुञः (पा०३।२।९) इति क्विप् । ह्रस्वस्य पिति कृति तुक् (पा०६.१.७१) इति तुक् । सर्वेभ्यः सुन्वद्भ्यो द्विजवर्येभ्यः धन्यः प्रशस्यो भवति । तत्कुतः । यतो मेधातिथिः मेधानां यज्ञानां अतिथिः । यज्ञः मेधः वनः इति तन्नामसु पाठात् (निघण्टु ३।१७) । सोऽप्युशिक्पुत्रस्य उशिगिति दास्या आख्या तस्याः पुत्रस्य कक्षीवतः सुन्वतः सोमानमित्यनयर्चा साम्यं सादृश्यमैच्छत् ।

तदर्थेयमृक्–

सोमानं स्वरणं कृणुहि ब्रह्मणस्पते । कक्षीवन्तं य औशिजः । (ऋ.१.१८.१)

सोमानम् । स्वरणम् । कृणुहि । ब्रह्मणः । पते । कक्षीवन्तम् । यः । औशिजः ।।७।।

कक्षीवत उशिक्पुत्रत्वं वदामः । अङ्गराजः कस्मिंश्चिद्दिवसे स्वकीयाभिर्योषिद्भिः सह गङ्गायां जलक्रीडां चक्रे । तस्मिन्दिवसे दीर्घतमा नाम ऋषिः स्वभार्यापुत्रभृत्यादिभिश्च दुर्बलत्वात् किमपि कुर्वन्न शक्नोतीति द्वेषेण गङ्गामध्ये प्रचिक्षिपे । स च ऋषिः केनचित्प्लवेन अङ्गराजस्य क्रीडादेशं प्रति समाजगाम । स च राजा सर्वज्ञं तमृषिमवगम्य प्लवादवतार्यैवमवोचत् । हे भगवन् मम पुत्रो नास्तीति । एषा महिषी । अस्यां कंचित्पुत्रमुत्पादयेति । स तथेत्यब्रवीत् । सा महिषी राजानं प्रति तथेत्युक्त्वा अयं वृद्धतरः, जुगुप्सितो मम योग्यो न भवतीति बुद्ध्या स्वकीयां उशिक्संज्ञिकां दासीं प्राहैषीत् । तेन सर्वज्ञेन ऋषिणा मन्त्रपूतेन वारिणा अभ्युक्षिता सती सैव ऋषिपत्नी बभूव । तस्यामुत्पन्नः कक्षीवान् नाम ऋषिः स एव राज्ञः पुत्रोऽभूत् ।

तथा च बृहदेवता–

**जीर्णं तु दीर्घतमसं खिन्नास्तत्परिचारकाः ।**
**दासा बद्ध्वा नदीतोये दृष्टिहीनमवादधुः ।। २१ ।।**

**तत्रैकस्त्रैतनो नाम शस्त्रेणैनमपाहनत् ।**
**शिरश्चांसावुरश्चैव स्वयमेव न्यकृन्तत ।। २२ ।।**

**हत्वा दीर्घतमास्तं तु पापेन महता वृतम् ।**
**अङ्गराजसमीपे तु तं नद्यः समुदक्षिपन् ।। २३ ।।**

आत्माङ्गान्यनुदच्चैव तत्रोदोन्मोहितो भृशम् ।
अङ्गराजगृहे दासीमुशिजं पुत्रकाम्यया ।। २४ ।।

राज्ञा च प्रहितां ज्ञात्वा शुद्धां कृत्वाऽरमन्मुनिः ।
सा च कक्षीवतं जज्ञे ।। २५ ।।

इति कथा । इति कक्षीवत उशिक्पुत्रत्वमुक्तम् । मेधातिथिर्ब्रह्मणस्पतिं गायत्र्या स्तौति । सोमानमिति पञ्च ब्राह्मणस्पत्या इत्यनुक्रमणी । अयमर्थः– हे **ब्रह्मणस्पते** एतन्नामक देव । **सोमानं** सोमानामाभिषवस्य कर्तारं अनुष्ठातारं **स्वरणं** देवेषु प्रकाशनवन्तं **कृणुहि** कुरु । कमिव? **औशिजः** उशिक्पुत्रः कक्षीवान् सोमाभिषवकर्ता तमिव । लुप्तोपमानमेतत् । कक्षीवतोऽनुष्ठातृषु मुनिप्रसिद्धिः ।

कक्षीवते वृचयामिन्द्र सुन्वते । (ऋ०१.५१.१३) कक्षीवन्तं स्तोतारं० । (ऋ० १.११२.११) अहं कक्षीवाँ ऋषिः (ऋ.४.२६.१) इत्यादि ।

कक्षीवानुशिक्पुत्रोऽपि यदि सामसुत् ज्यायान् । यः कुलीनोऽपि यदि सुन्वानः स द्विजपरिवृढो ज्ञेयः इत्युक्तमृग्दृष्टान्तेन ।

'सोमानं सोतारं प्रकाशनवन्तं कुरु ब्रह्मणस्पते कक्षीवन्तमिव य औशिजः कक्षीवान् कक्ष्यावानौशिज उशिजः पुत्रः । उशिक् वष्टेः कान्तिकर्मणः । अपि त्वयं मनुष्यकक्ष एवाभिप्रेतः स्यात्तं सोमानां सोतारं मां प्रकाशनवन्तं कुरु ब्रह्मणस्पते' । इति यास्कः । (नि०६-१०)।

ब्रह्मणस्पते– पतिशब्दे द्यक्षरे० (ऋ०प्रा०४।४२) इत्युपाचरितसन्धिः । सुबामन्त्रित (पा० २।१।२) इति पराङ्गवद्भावात् पदद्वयस्य निघातः ।। १ ।।

## ऋक्संहिता पदपाठसहिता

**यो रेवान्यो अमीवहा वसुवित्पुष्टिवर्धनः । स नः सिषक्तु यस्तुरः ।। २ ।।**
यः । रेवान् । यः । अमीवऽहा । वसुऽवित् । पुष्टिऽवर्धनः । सः । नः । सिषक्तु । यः । तुरः ।। २ ।।

### ऋग्भाष्यम्

**वित्तवान्रोगहा ज्ञानवेत्ताऽस्माभिः सयुग्भवेत् ।**
**तुरो वेगाद्धरिर्वायुः .................... ॥ २ ॥**

**ऋग्भाष्यटीका– यो रेवान् ॥** वित्तवान् । **यो रेवान्** रैशब्दस्य रयेर्मताविति सम्प्रसारणं वित्तवान् । यश्च **अमीवहा** रोगहा **वसुवित्** ज्ञानवसुवेत्ता ज्ञातव्यं सर्वं जानातीति यावत् । यश्च **पुष्टिवर्धनः** भक्तानाम् । एवं भूतो **यः तुरः** तुरत्वरण इत्यस्येदं रूपम् । वेगान्निमित्ताद्धरिर्वायुर्वा **सः नः** अस्मान् **सिषक्तु** षचसमवाये अस्माभिः सयुग्भवेत् ॥ २ ॥

**मन्त्रार्थमञ्जरी–** यः रेवान्, वित्तवान्, 'रयेर्मतौ' इति रयिशब्दयकारस्य मतुपि परतः सम्प्रसारणे पूर्वरूपे 'आद्गुणः' । यः (च) अमीवहा, रोगहा । वसुवित्, ज्ञानाख्यवसुनो वेदिता, ज्ञातव्यं सर्वं जानातीति यावत् । (यः) (च) पुष्टिवर्धनः, भक्तानामेवंभूतः । यः । तुरः, वेगवत्त्वहेतुना विष्णुर्वायुर्वा, 'तुर त्वरणे' इत्यतः कप्रत्ययः । सः । नः, अस्मान् सिषक्तु, समवैतु, 'षच सामवाये' श्लुविकरणम्, अस्माभिः संयुक्तो भवेदिति यावत् ॥ २ ॥

**स्कन्द– यः** ब्रह्मणस्पतिः **रेवान्** धनवान् **यः** च **अमीवहा** हिंसितॄणां हन्ता । **वसुवित्** विदिर्लाभे, अपूर्वाणामपि धनानां लब्धा । अथवा विन्दतिरत्र सामर्थ्यादन्तर्णीतण्यर्थः । धनानां लम्भयिता स्तोतृभ्यो दातेत्यर्थः । **पुष्टिवर्धनः** सर्वप्रकारायाः पुष्टेर्वर्धयिता **सः नः सिषक्तु** सेवताम्, **यः तुरः** त्वरिता क्षिप्रकारीत्यर्थः । अथवा यो रेवानित्यादिभिः पुत्रः प्रतिनिर्दिश्यते । ब्रह्मणस्पतिप्रसादाद् धनवत्त्वादिगुणः पुत्रोऽस्मान् सचताम् । अस्माकं जायतामित्यर्थः ॥२॥

**वेङ्कटमाधव–** नः धनवान् यः च रक्षसां हन्ता धनं लम्भयति, पुष्टेर्वर्धयिता सः भजताम् अस्मान् । यः सर्वदा त्वरते कर्मस्विति ॥ २ ॥

**मुद्गल– यः** ब्रह्मणस्पतिः **रेवान्** धनवान् **यः** च **अमीवहा** रोगाणां हन्ता **वसुवित्** धनस्य लब्धा **पुष्टिवर्धनः** पुष्टेर्वर्धयिता **यः** च **तुरः** त्वरोपेतः शीघ्रफलप्रदः **सः** ब्रह्मणस्पतिः **नः** अस्मान् **सिषक्तु** सेवताम् । परिगृह्य अनुगृह्णास्त्वित्यर्थः ॥ २ ॥

**सायण– यः** ब्रह्मणस्पतिः **रेवान्** धनवान् **यः** च **अमीवहा** रोगाणां हन्ता **वसुवित्**

धनलब्धा **पुष्टिवर्धनः** पुष्टेर्वर्धयिता **यः** च **तुरः** त्वरोपेतः शीघ्रफलदः **सः** ब्रह्मणस्पतिः **नः** अस्मान् **सिषक्तु** सेवताम् । परिगृह्यानुगृह्णात्वित्यर्थः । अत्र सिषक्तुशब्दस्य सेवार्थत्वं यास्क आह– 'सिषक्तु सचत इति सेवमानस्य' (निरु.३,२१) इति । प्रत्यायकौ शब्दाविति शेषः ॥

रेवान् । रयिरस्यास्तीति मतुप् । 'रयेर्मतौ बहुलम्' (पा.सू.६,१,३७,६) इति यकारस्य सम्प्रसारणं परपूर्वत्वम् । 'छन्दसीरः' इति वत्वम् । 'आद्गुणः' । ननु वत्वस्य असिद्धत्वात् बहिरङ्गत्वाच्च प्रागेव गुणे कृते इवर्णाभावान्न वत्वम् । न च 'अन्तादिवच्च' (पा.सू.६,१,८५) इति आदिवद्भावेन इवर्णसम्पादनं, वर्णाश्रयविधौ तत्प्रतिषेधात् । अन्यथा खट्वाभिः इत्यत्र सवर्णदीर्घस्य अन्तवद्भावेन अकारत्वात् 'अतो भिस ऐस्' (पा.सू.७,१,९) इति ऐसादेशः स्यात् । न च निरवकाशत्वेन वत्वस्य अनवकाशत्वम् । 'अग्निवान्वै दर्भस्तम्बः' (सै.ब्रा. २,२,१,५), 'उप ब्रह्माणि हरिवः' (ऋ.सं.१०,१०४,६) इत्यादौ अवकाशलाभात् । सत्यम् । अत्र गुणप्रवृत्तेः प्राक् इकारात्परो मतुप् । कदाचित् इवर्णात्परस्य मतुपः पश्चात् एकारादेशेन इवर्णाभावेऽपि भवति वत्वमिति 'छन्दसीरः' इति सूत्रकृता विवक्षितम् । अमुनैवाभिप्रायेण 'हरिवः' इत्यादिकमुदाहृत्यापि अन्ते वृत्तिकृता 'आरेवान्' (का.८,२,१५) इत्यप्युदाहृतम् । 'ह्रस्वनुड्भ्याम्' इत्यत्र आरेशब्दात् मतुप इत्युदात्तत्वं वक्तव्यम् ? (पा.सू.६,१,१७६,१) इत्यत्र आरेशब्दो रेशब्दस्याप्युपलक्षणम् । अत एव हि 'रेवाँ इन्द्र' इत्यादौ मतुप उदात्तत्वं दृष्टम् । अथवा 'ह्रस्वनुड्भ्याम्' इत्यत्रापि कदाचित् ह्रस्वात्परस्य मतुप उदात्तत्वमित्येव व्याख्येयम् । एवं च सम्प्रसारणपरपूर्वत्वयोः कृतयोर्गुणात् प्राक् ह्रस्वात्परो मतुप् इति रेवान् आरेवान् इत्यादौ सर्वत्रोदात्तत्वं सिध्यति । अयमेव सूत्रकृतोऽभिप्रायो वार्तिककृता व्याख्यात इति । अमीवहा । 'अम रोगे इत्येतस्मात् वन्प्रत्ययेन अमीवशब्दो निपातितः । तं हन्तीति 'बहुलं छन्दसि' (पा.सू.३,२,८८) इति क्विप् । कृदुत्तरपदप्रकृतिस्वरत्वम् । वसुवित् । वसु विन्दतीति वसुवित् । 'क्विप् च' इति क्विप् । उत्तरपदप्रकृतिस्वरत्वम् । पुष्टिवर्धनः । वर्धयतेः नन्द्यादित्वात् । (पा.सू.३,१,१३४) ल्युः । 'लिति' इति प्रत्ययात्पूर्वस्योदात्तत्वम् । पुष्टेर्वर्धन इति कर्मणि षष्ठ्या समासः । कृदुत्तरपदप्रकृतिस्वरत्वम् । सिषक्तु । 'षच समवाये' । लोटि 'बहुलं छन्दसि' (पा.सू.२,४,७६) इति शपः श्लुः । 'श्लौ' इति द्वित्वे हलादिशेषे 'बहुलं छन्दसि' (पा.सू.७,४,७८) इत्यभ्यासस्य अकारस्य इकारः । तुरः । 'तुर त्वरणे' । 'इगुपध-ज्ञाप्रीकिरः कः' । प्रत्ययस्वरः ॥ २ ॥

**सिद्धाञ्जनम्–** द्वितीयामृचमाह– **यः** ब्रह्मणस्पतिः **रेवान्** धनवान् **यः** च **अमीवहा** हिंसितृणां हन्ता, अमीवा व्याख्यातः (१-१२-७) । **वसुवित्** वसुनः द्रव्यस्य लम्भयिता अन्तर्भावितण्यर्थः । **पुष्टिवर्धनः** पुष्टेः वर्धयिता च भवति । **यः तुरः** वेगवान् च । तुर त्वरणे । **सः नः** अस्मान् **सिषक्तु** समवैतु । षच समवाये लुग्विकरणम् । अस्माभिः सदा संयुक्तो भवतु । मन्त्रवाचामधिष्ठातुर्ब्रह्मणस्पतेः धनवत्त्वादिगुणवैशिष्ट्याभिवर्णनात् सर्वार्थसिद्धिर्मन्त्रैरिष्टप्राप्तिरनिष्टपरिहारश्च भवन्तीति आर्षसम्प्रदायविदां मतं सामान्यतः सूचितं बोध्यम् । विशेषतस्तु ब्रह्मणस्पतेः प्रसादाद्गुप्तस्य सर्वस्यार्थस्याविष्कारः, अप्राप्तस्य प्राप्तिः, प्राप्तस्य वर्धनेन रक्षणं, रहस्यस्य प्रकाशः इत्यादयो वाचो महिमा सिद्ध्यन्तीति बोध्यम् । अत एव पूर्वस्यामृचि 'कक्षीवन्तं (मां) त्वरणं कृणुहि' इति प्रार्थितम् । अस्यां ऋचि मन्त्रवाक्पतेर्देवस्य अन्तर्याजिना उपासकेन नित्यसंयोगः प्रार्थितः। तथा 'मा नः शंसः' इत्युत्तरस्यां 'तादृशो मन्त्रपतेर्महिमा, येन कवचिनमन्तर्याजिनं यजनविघातिनामयज्वनां रक्षोगुणविशिष्टानां मानुषाणां वा बलिष्ठाऽपि वाणी न प्रभवेत् स्प्रष्टुम्' इत्याह ॥ २ ॥

### ऋक्संहिता पदपाठसहिता

**मा नः शंसो अररुषो धूर्तिः प्रणङ्मर्त्यस्य । रक्षा णो ब्रह्मणस्पते ॥ ३ ॥**
**मा । नः । शंसः । अररुषः । धूर्तिः । प्रणक् । मर्त्यस्य । रक्ष । नः । ब्रह्मणः । पते ॥**

### ऋग्भाष्यम्

**................................ अररुट्चातिरोषणात् ।**
**तस्य धूर्तिर्वचो नास्मान् पूरयेद्रक्ष नो हरे ॥ ३ ॥**

**ऋग्भाष्यटीका– मानः** । अररुट् । चस्त्वर्थः । यस्त्वतिरोषणादररुट् । अरशब्दोऽलंशब्दार्थे । अलं रुष्यतीति क्विप् तस्य । **अररुषः मर्त्यस्य धूर्तिः शंसः** धूर्तिर्वचः । धुर्वी हिंसार्थः । उपद्रवकारिवचनम् । **नः** अस्मान् **मा प्रणक्** प्रापूरण इत्यस्येदं रूपम् । न पूरयेत् । स्वार्थे णिः । न प्रविशेत् । मा प्रापदित्यर्थः । हे **ब्रह्मणस्पते** हरे वायो वा **नः** अस्मान् **रक्ष** । यथा तद्वचोऽस्मान्न प्राप्नुयात्तथा रक्षेत्यर्थः ॥ ३ ॥

**मन्त्रार्थमञ्जरी–** अररुषः, अरशब्दोऽलंशब्दपर्यायः, 'रुष हिंसायाम्' क्विप्, अतिहिंसकस्य । मर्त्यस्य । धूर्तिः, 'धुर्वी हिंसायाम्' क्तिन्, हिंसकः । शंसः, वचनम्, उपद्रवकारिवचनमिति

यावत् । नः, अस्मान् । मा प्राणक्, 'पृची सम्पर्के' न प्रविशेत्, मा प्रापदित्यर्थः । (हे) ब्रह्मणः पते, हरे, वायो वा । नः, अस्मान् । रक्ष, यथा तद्वचोऽस्मान्न प्राप्नुयात्तथा रक्षेत्यर्थः ।।

**स्कन्द–** माशब्दः प्रणक् इत्येतेन सम्बन्धयितव्यः । **नः** अस्मान् **शंसः** शंसनं आशंसा विनाशाद्यभिलाषः । **अररुषः** देवेभ्यो हविषामदातुरयष्टुः स्वभूतः । यो हि न यजते स यष्टॄन् विनश्यन्त्वित्येवमाशंसति । सोऽस्य शंसः । धूर्वतेर्वधकर्मणः **धूर्तिः** हिंसा हिंसिता या । स च **मा प्रणक्** प्रपूर्वस्य नशेर्व्याप्तिकर्मण एतद्रूपम् । मा प्रणशत् मा प्रापदित्यर्थः । अथवाऽनवग्रहैकपदत्वात् पृचेः सम्पर्कार्थस्येदं रूपम्, न प्रपूर्वस्य नशेः । न इति च तृतीयार्थे द्वितीया । माऽस्माभिः प्रणक् सम्पर्चीत् । माऽस्मान् प्रापदित्यर्थः । कः ? शंसः धूर्तिश्च । कस्य । अररुषः । **मर्त्यस्य** मनुष्यस्य । रक्ष त्वं नः हे ब्रह्मणस्पते ।। ३ ।।

**वेङ्कटमाधव–** मा अस्मान् अदातुः मर्त्यस्य कदर्यस्य शंसः न दातुं युष्मभ्यमिच्छामीति वादः, हिंसकः प्राप्नोतु धनाभावात् । तथा अस्मान् त्वं रक्ष ।। ३ ।।

**मुद्गल– अररुषः मर्त्यस्य** उपद्रवं कर्तुमस्मत्समीपं प्राप्तस्य शत्रुरूपस्य मनुष्यस्य **धूर्तिः** हिंसकः **शंसः** शंसनम् । अधिक्षेप इत्यर्थः । तादृशो वाग्विशेषः **नः** अस्मान् **मा प्रणक्** मा सम्पृणक्तु । शत्रुणा प्रयुक्तोऽधिक्षेपः कदाचिदस्मान् मा प्राप्नोत्वित्यर्थः । तदर्थं हे **ब्रह्मणस्पते! नः** अस्मान् **रक्ष** पालय ।। ३ ।।

**सायण– अररुषः मर्त्यस्य** उपद्रवं कर्तुमस्मत्समीपं प्राप्तस्य शत्रुरूपस्य मनुष्यस्य **धूर्तिः** हिंसकः **शंसः** शंसनम् । अधिक्षेप इत्यर्थः । तादृशो वाग्विशेषः **नः** अस्मान् **मा प्रणक्** मा सम्पृणक्तु । शत्रुणा प्रयुक्तोऽधिक्षेपः कदाचिदस्मान्मा प्राप्नोत्वित्यर्थः । तदर्थं **हे ब्रह्मणस्पते नः** अस्मान् **रक्ष** पालय ।

मा । निपातः । शंसनं शंसः । भावे घञ् । ञित्त्वादाद्युदात्तः । अररुषः । 'अर्तेररुः' (उ.सू.४,५१९) इति अन्तर्भावितण्यर्थात् 'ऋगतौ' इत्यस्मात् अरुस् । गुणो रपरत्वम् । प्रत्ययस्वरे प्राप्ते वृषादित्वादाद्युदात्तः । धूर्तिः । धुर्वी हिंसार्थः । 'क्तिच्क्तौ च संज्ञायाम्' इति क्तिच् । 'तितुत्रतथसिसुसरकसेषु च' (पा.सू.७,२,९) इति इट्प्रतिषेधः । 'उपधायाश्च' (पा.सू. ७,१,१०१) इति उपधादीर्घत्वम् । वलि लोपं बाधित्वा ऊठि प्राप्ते (पा.सू.६,४,१९)

'राल्लोपः' (पा.सू.६,४,२१) इति वकारलोपः । प्रणक् । 'पृची सम्पर्के' । लङस्तिप् । 'इतश्च' इति इकारलोपः । हल्ङ्याादिलोपः । कुत्वम् । 'रुधादिभ्यः श्नम्' । तस्य 'व्यत्ययो बहुलम्' (पा.सू.३,१,८५) इति अडागमः । यणादेशः । अकारस्य आगमानुदात्तत्वं बाधित्वा व्यत्ययेनोदात्तत्वम् । 'चादिलोपे विभाषा' (पा.सू.८,१,६३) इति निघाताभावः । मर्त्यस्य । 'मृङ् प्राणत्यागे' । 'असिहसिमृ' (उ.सू.३,३६६) इत्यादिना औणादिकः तन्प्रत्ययः । मर्तेषु भव इत्यर्थे 'भवे छन्दसि' (पा.सू.४,४११०) इति यत् । 'यतोऽनावः' इत्याद्युदात्तत्वम् । रक्ष । 'रक्ष पालने' । शपः पित्त्वादनुदात्तत्वम् । धातुस्वर एव शिष्यते । पादादित्वात् न निघातः । रक्षा णः । 'द्व्यचोऽतस्तिङः' (पा.सू.६,३,१३५) इति दीर्घः । 'उपसर्गाद्बहुलम्' (पा.सू.८,४,२८) इति बहुलग्रहणात् अनुपसर्गादपि नसो णत्वम् । ब्रह्मणस्पते । 'षष्ठ्याः पतिपुत्र' (पा.सू.८,३,५३) इति संहितायां विसर्गस्य सकारः । सुबामन्त्रिते पराङ्गवद्भावात् पदद्वयस्य आमन्त्रितनिघातः ।। ३ ।।

**सिद्धाञ्जनम्–** तृतीयामृचमाह– हे **ब्रह्मणस्पते** भगवन् **अररुषः** अप्रयच्छतः, देवेभ्यो यो न ददाति तस्यायज्वनः देवधिक्कारमाचरतः **शंसः** शंसनं, 'आशंसा विनाशाद्यभिलाषः' इति स्कन्दस्वामी । तदाविष्कारकं वचनं **नः** अस्मान् **मा प्रणक्** मा सम्पृणक्तु । तथा **मर्त्यस्य** मरणशीलस्य मनुष्यस्य **धूर्तिः** हिंसा 'मा प्रणक्' इति सम्बन्धः । **नः** अस्मान् **रक्ष** पाहि । अररुषः– रातिर्दानार्थो धातुः छान्दसः, तस्य लिड्वद्भावे वसुन् , 'ररिवान्' न ररिवान् , तस्य अदातुरित्यर्थः । प्रणक्-पृची सम्पर्के, श्नम्विकरणम्, लङस्तिप्, अन्यत् सर्वं छान्दसम् । धूर्तिः-धुर्वी हिंसायाम्, क्तिच्प्रत्ययः ।

ऋचोऽस्याः प्रकारान्तरेण अन्वयं प्राहुः– अररुषो मर्त्यस्य धूर्तिः शंसः नः मा प्रणक् इति । अत्र धूर्तिः हिंसकः, शंसः वाग्विशेष इति सायणीयम् ।। ३ ।।

### ऋक्संहिता पदपाठसहिता

**स॒घा॑ वी॒रो न रि॑ष्यति॒ यमिन्द्रो॒ ब्रह्म॑ण॒स्पति॑ः । सोमो॑ हि॒नोति॒ मर्त्य॑म् ।। ४ ।।**

**सः । घ॒ । वी॒रः । न । रि॒ष्य॒ति॒ । यम् । इन्द्रः॑ । ब्रह्म॑णः । पति॑ः । सोम॑ः । हि॒नोति॑ । मर्त्य॑म् ।। ४ ।।**

ऋग्भाष्यम्

**घेति हावधृतिश्चैव सोमः सौम्यत्वतो हरिः ।**
**उना मयाच युक्तत्वादूमैर्युक्तत्वतोऽपि वा ।**
**अमः स इति वा ....................।। ४ ।।**

**ऋग्भाष्यटीका– सघ ।** घेति ।। घेतिशब्दो हेत्यस्यार्थे प्रसिद्धिद्योतक इत्यर्थः । एवार्थे वा । ततश्चावधृतिस्तस्य प्रतिपाद्येत्यर्थः । सोमशब्दं हरौ व्याख्याति– **सोम इति ।** सौम्यत्वमक्रौर्यं उना रुद्रेण मया लक्ष्म्याच उश्च माच उमे सहोमाभ्यां वर्तत इति सोम इत्यर्थः । ऊमैर्भूतैः । भूतानि वै विश्व ऊमा इति श्रुतेः । सह ऊमैर्वर्तत इति सोमः । सर्वभूतानि प्रेरयतीत्यर्थः । न विद्यते मा प्रमा इयत्ता यस्यासावमः सारत्वात्सः सरतेर्डः । सश्चासावमश्चेति सोमः प्रथमाया अलुक् । डस्वाप्रत्ययः । **सघ** स एव **वीरः** विक्रान्तो **न रिष्यति** न हिंस्यते ह । यं मर्त्यं इन्द्रो ब्रह्मणस्पतिः सोमश्च **हिनोति** हिगतौ वृद्धौ च । गच्छति वर्धयति च ।। ४ ।।

**मन्त्रार्थमञ्जरी–** 'घ' इति 'ह' इत्यस्यार्थे प्रसिद्धिद्योतकः, एवार्थे च । यम् मर्त्यम् इन्द्रः ब्रह्मणः पतिः सोमः (च) । हिनोति, 'हि गतौ वृद्धौ च' गच्छति वर्धयति च । सः घ, स एव मर्त्यः । वीरः, विक्रान्तः । न रिष्यति, 'रिष हिंसायाम्' न हिंस्यते । (घ) प्रसिद्धमेतत् । इन्द्रब्रह्मणस्पतिशब्दयोः पूर्वत्रैव हरौ निरुक्तिर्व्यक्ता । सोमशब्दस्य तु उश्च मा चोमे रुद्रलक्ष्म्यौ ताभ्यां सहित इति वा, 'भूतानि वै विश्व ऊमाः' इति श्रुतेरूमैर्भूतैः सह प्रेरकतया वर्तत इति वा, न विद्यते मा परिमितिर्यस्यासावमः, सारत्वात्सः 'सृ गतौ' इत्यतो डस्, सस्य रुत्वोत्वे, गुणः, पूर्वरूपम्, सश्चासावमश्चेति वा निरुक्तिर्ज्ञेया ।। ४ ।।

**स्कन्द–** 'चतुर्थ्या सोम इन्द्रश्च' । चतुर्थ्यामस्यामृचि सोम इन्द्रश्च देवता । न केवलो ब्रह्मणस्पतिः । य इति पदपूरणः एवार्थे वा । **सः** एव **वीरः** विक्रान्तः **न रिष्यति** न हिंस्यते केनचित् । **यं** इन्द्रः ब्रह्मणस्पतिः सोमः च **हिनोति** । हि गतौ वृद्धौ च । गच्छति वर्धयति वा **मर्त्यं** मनुष्यम् ।। ४ ।।

**वेङ्कटमाधव–** यं एते युद्धे प्रेरयन्ति, सः खलु न विनश्यति वीरः ।। ४ ।।

**मुद्गल–** इन्द्रः देवः यं मर्त्यं यक्ष्यमाणं **हिनोति** प्राप्नोति । तथा **ब्रह्मणःपतिः** देवः

हिनोति । तथा **सोमः** हिनोति । **सः घ** स एव यजमानः **वीरः** वीर्ययुक्तः सन् **न रिष्यति** न विनश्यति ।। ४ ।।

**सायण–** **इन्द्रः** देवः **यं मर्त्यं** यक्ष्यमाणं **हिनोति** प्राप्नोति वर्धयति वा । तथा **ब्रह्मणस्पतिः** देवो **हिनोति** । तथा सोमः हिनोति । **सः घ** स एव यजमानः **वीरः** वीर्ययुक्तः सन् **न रिष्यति** न विनश्यति ।

घ । चादिरनुदात्तः । संहितायां 'ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम्' इति दीर्घः । ब्रह्मणस्पतिः । उक्तम् । हिनोति । 'हि गतौ वृद्धौ च' । 'स्वादिभ्यः श्नुः' । तिपः पित्त्वात् श्नुप्रत्ययस्वर एव शिष्यते ।। ३ ।।

**सिद्धाञ्जनम्–** चतुर्थीमृचमाह– **स घ** स एव पुमान् अन्तर्यजी **वीरः** वीर्योपेतः भवन् न रिष्यति न विनश्यति । रिष धातुर्हिंसार्थकः, अत्र कर्मणि तिप् छान्दसम् । न हिंस्यत इत्यर्थः । **यं मर्त्यं** मनुष्यं **ब्रह्मणस्पतिः** देवः **हिनोति** त्वरयति । गतौ वृद्धौ च पठितो धातुः । तथाऽपि नायं गतिसामान्यमभिधत्ते । यं **इन्द्रः** हिनोति, तथा यं सोमः हिनोतीति सम्बन्धः । वैदिके यजनशब्दवाच्ये चिरन्तने योगे अनुदिनप्रवृद्धिः नित्यमूर्ध्वगमनं च ऋतज्योतिः-शब्दवाच्यपरदैवतसम्पल्लब्धिं यावत् अवश्यं भवतः । तादृशी यात्रा अनलसस्य वीरस्य आर्यस्य नित्योद्यमस्य पुरुषस्यैव सिद्ध्यति ।

तत्रापि देवानां साहाय्यमपेक्ष्यते । तस्माद् देवराडिन्द्रः तस्य वाग्वीर्यमूलभूतो ब्रह्मणस्पतिः सम्मदबलभूतः सोमश्च उपासकं वीरं त्वरयन्तः प्रतिपादिताः ।। ४ ।।

### ऋक्संहिता पदपाठसहिता

**त्वं तं ब्रह्मणस्पते सोम इन्द्रश्च मर्त्यम् । दक्षिणा पात्वंहसः ।। ५ ।।**

त्वम् । तम् । ब्रह्मणः । पते । सोम । इन्द्रः । च । मर्त्यम् ।। दक्षिणा । पातु । अंहसः ।।

### ऋग्भाष्यम्

**......................साक्षाच्छ्रीर्दक्षेणेति दक्षिणा ।**

**दक्षिणा चतुरत्वाद्वा स्वयमेव जनार्दनः ।। ५ ।।**

**ऋग्भाष्यटीका– त्वं तम्** । अत्र दक्षिणाशब्दार्थमाह– **साक्षादिति** ।। साक्षाच्छ्रीरिति सरस्वत्यादिव्यावृत्त्यर्थम् । दक्षे दक्षिणभागे इनः स्वामी विष्णुरस्या इति दक्षिणेत्यर्थः । शकंध्वादित्वात्पररूपत्वम् । दक्षिणे सरलोदारावित्यभिधानाच्चतुरत्वात्स्वयमेव जनार्दनो वा दक्षिणेत्यर्थः । अत्र तच्छब्दश्रवणाद्योग्यार्थो यच्छब्दोऽध्याहार्यः । हे **ब्रह्मणस्पते** यस्त्वद्भक्तः **तं मर्त्यं त्वं अंहसः** पापात् **पाहि** । **सोम इन्द्रो दक्षिणाच** पात्विति प्रत्येकं सम्बन्धः ।।

**मन्त्रार्थमञ्जरी–** (हे) ब्रह्मणः पते (यस्त्वद्भक्तः) तम् मर्त्यम् त्वम् । अंहसः, पापात् । (पाहि) 'सोमः इन्द्रः दक्षिणा च पातु' इति प्रत्येकमन्वयः । दक्षे दक्षिणभाग इनः स्वामी यस्य असाविति शकन्ध्वादितया पररूपेण दक्षिणात्र श्रीर्ज्ञेया, 'दक्षिणे सरलोदारौ' (अम० ३।१।८) इत्यभिधानाच्चतुरत्वहेतुना स्त्रीरूपो हरिर्वा ज्ञेयः ।। ५ ।।

**स्कन्द–** 'पञ्चम्या दक्षिणाधिका' । पञ्चम्यामस्यामृचि पूर्वाभ्यस्तिसृभ्यो दक्षिणाऽधिका । तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः । यः स्तौति यजते च **त्वं तं** हे **ब्रह्मणः पते! सोमः इन्द्रः च मर्त्यं** मनुष्यं **दक्षिणा** च **पातु** रक्षतु **अंहसः** पापात् ।। ५ ।।

**वेङ्कटमाधव–** त्वं तं ब्रह्मणः पते! सोमः च मर्त्यं यज्ञस्य पत्नी दक्षिणा च रक्षतु । दारिद्र्यादाहन्तुर्वा रक्षसः ।। ५ ।।

**मुद्गल–** हे **ब्रह्मणः पते** । **त्वं मर्त्यं तं** अनुष्ठातारं मनुष्यं **अहंसः** पापात् पाहीति शेषः । तथा **सोमः** पातु । **इन्द्रः** च पातु । दक्षिणाख्या देवता च पातु ।। ५ ।।

**सायण–** हे **ब्रह्मणस्पते त्वं तं मर्त्यं** अनुष्ठातारं मनुष्यं **अंहसः** पापात् पाहीति शेषः । तथा **सोमः पातु इन्द्रश्च** पातु दक्षिणाख्या देवता च पातु ।

दक्षिणा । 'दक्ष वृद्धौ' । 'द्रुदक्षिभ्यामिनन्' (उ.सू.२,२०८) । नित्त्वादाद्युदात्तः । अंहसः । 'नब्विपयस्य' इत्यादिनाद्युदात्तः ।। ५ ।।

**सिद्धाञ्जनम्–** पञ्चमीमृचमाह– प्रागुक्तास्तिस्रो देवता अत्रोक्ताः। दक्षिणा त्वधिका । सा च देवी साध्वसाधुसत्यासत्यविवेचनशीला सहजावबोधरूपिणी शक्तिः । ऋतज्योतिषः प्रादुर्भावात् प्रागुदयद्योतिन्या उषसः विभूतिभूतेति सूक्तान्तरचर्चया देवतान्तरसाहचर्यात् प्रकरणवशाच्च निर्णेतुं शक्यम् । दक्षपदार्थविचारे प्रागस्मदुक्तार्थाद् दक्षधातोर्निष्पन्नः दक्षिणाशब्दः। 'दक्षिभ्यां इनन् ।

**तं मर्त्यं** उपासकं हे **ब्रह्मणस्पते त्वं अंहसः** पापात् पाहि इति पुरुषव्यत्ययेन योजनीयम् । तथा **सोमः पातु** रक्षतु, **इन्द्रश्च** पातु **दक्षिणा** च पातु । अंहः पाप्मा, निर्ऋतिरित्यनर्थान्तरम् । अस्य दुरितस्य स्वरूपं अनृतम् , नित्यकल्याणपरिपन्थि भद्रपदार्थविचारे प्रतिपादितम् ।।५।।

**।। इति प्रथमाष्टके प्रथमाध्याये चतुस्त्रिंशो वर्गः ।।**

**।। अथ पञ्चत्रिंशो वर्गः ।।**

**ऋक्संहिता पदपाठसहिता**

**सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् । सनिं मेधामयासिषम् ।। ६ ।।**

सदसः । पतिम् । अद्भुतम् । प्रियम् । इन्द्रस्य । काम्यम् । सनिम् । मेधाम् । अयासिषम् ।।

**ऋग्भाष्यम्**

**सदसस्पतिर्हरिः साक्षाद्वायुरग्निरथापि वा ।**
**लाभज्ञानस्वरूपोऽसौ शरणं तमयासिषम् ।। ६ ।।**

**ऋग्भाष्यटीका– सदसस्पतिम्** । अत्र सदसस्पतिशब्दार्थमाह– **सदसस्पतिरिति ।।** साक्षादिति मुख्यया वृत्त्या । सहि सदसः पालयिता । साक्षाद्वायुर्मुख्यो वायुरपि । अथवा । साक्षादग्निर्मुख्योऽग्निः सदसस्पतिः । सनिंमेधाशब्दार्थमाह– **लाभेति ।।** अयासिषमित्ये-तच्छेषोक्त्या पूरयति– **शरणमिति ।।** अहं **अद्भुतं** आश्चर्यं **इन्द्रस्य प्रियं** सर्वजनानामपि **काम्यं सनिं** लाभरूपं **मेधां** ज्ञानस्वरूपं सदसस्पतिं **अयासिषं** शरणं गतोऽस्मि ।। ६ ।।

**मन्त्रार्थमञ्जरी–** (अहम्) अद्भुतम्, आश्चर्यम् । इन्द्रस्य प्रियम् । सर्वजनानामपि काम्यम् । सनिम्, लाभस्वरूपम् । मेधाम्, ज्ञानस्वरूपम् । सदसः पतिम्, विष्णुम्, प्रधानवायुम्, प्रधानाग्निं वा । अयासिषम्, 'या प्रापणे' 'लुङ्' शरणं गतोऽस्मि ।। ६ ।।

**स्कन्द–** 'चतस्रः सादसस्पत्याः । सदः प्रसिद्धं यज्ञगृहं तस्याधिपतिः सदसस्पतिः । कोऽसौ ? अग्निः । कुत एतत् ? अग्नेः सर्वयज्ञाधिपतित्वात् । आसु चर्क्षु यज्ञसाधनहविष्कृति-समर्थनाद्यग्निकर्मदर्शनात् तद्देवत्याश्चतस्रश्चर्चः । **सदसः पतिं** अग्निं **अद्भुतं** महन्नामैतत्

(निघ.३,३) । महान्तम् । **प्रियं इन्द्रस्य** तदायतत्वाद्धि यज्ञानां सोमपानार्थिनः इन्द्रस्य प्रियः सदसस्पतिः । **काम्यं** प्रार्थयितव्यं सर्वस्तोत्राणाम् । **सनिं** षणु दाने । धनदानम् । **मेधां** प्रज्ञां च अयासिषम् । 'ईमहे, यामि' (निघ.३,१९) (=याचामि या २,१) इति याच्ञाकर्मसु पाठाद् यातिर्याच्ञाकर्मा । याचे ॥ ६ ॥

**वेङ्कटमाधव–** सदसस्पतिं महान्तं सखायं इन्द्रस्य कमनीयं धनं प्रज्ञां च अयाचिषम् ॥६॥

**मुद्गल– मेधां** लब्धुं **सदसः पतिं** एतन्नामकं देवं **अयासिषं** प्राप्तवानस्मि । कीदृशम् ? **अद्भुतं** आश्चर्यकरं **इन्द्रस्य प्रियं** सोमपाने सहचारित्वाद् **काम्यं** कमनीयम् **सनिं** धनस्य दातारम् ।

**सायण–** अनुप्रवचनीयचरोर्होमे 'सदसस्पतिम्' इत्येषा विनियुक्ता । तथा च गृह्ये 'मेखलामाबध्य' इति खण्डे पठ्यते– 'आचार्यः समन्वारब्धे जुहुयात् सदसस्पतिमद्भुतम्' (आश्व.गृ. १,२२,११) इति ॥

**मेधां** लब्धुं **सदसस्पतिं** एतन्नामकं देवं **अयासिषं** प्राप्तवानस्मि । कीदृशम् ? **अद्भुतं** आश्चर्यकरं **इन्द्रस्य प्रियं** सोमपाने सहचारित्वात् **काम्यं** कमनीयं **सनिं** धनस्य दातारम् ।

सदसः । षद्लृ विशरणादौ । 'सर्वधातुभ्योऽसुन्' । नित्त्वादाद्युदात्तः । पतिम् । पातेर्डतिः (उ.सू.४,४९७) । टिलोपः । प्रत्ययस्वरः । प्रियम् । 'इगुपधज्ञाप्रीकिरः कः' । इयङादेशः । प्रत्ययस्वरः । काम्यम् । कामयतेः 'अचो यत्' । 'णेरनिटि' इति णिलोपः । 'यतोऽनावः' इत्याद्युदात्तत्वम् । सनिम् । 'षणु दाने' । 'धात्वादेः षः सः' । 'अच इः' (उ.सू.४,५७८) इत्यनुवृत्तौ 'खनिकष्यज्यसिवसिवनिसनिध्वनिग्रन्थिचरिभ्यश्च' (उ.सू.४,५७९) इति इप्रत्ययः । प्रत्ययस्वरः । अयासिषम् । 'या प्रापणे' । लुङ् । मिषोऽमादेशः । 'यमरमनमातां सक् च' (पा.सू.७,२,७३) इति सिच इडागमः; धातोः सगागमः । निघातः ॥ ६ ॥

**सिद्धाञ्जनम्–** षष्ठीमृचमाह– इमाश्चतस्र ऋचो नराशंस इत्यन्ता सदसस्पतिदेवताकाः । सदसस्पतिरग्निरेव भवति, तन्मूर्तिविशेषो वा । अत्र 'अद्भुतम्' इति लिङ्गम् । प्रागुक्तम् । अन्ते 'नराशंस' इति, स चाग्निरिति यास्कः । विचारितं चेदमाप्रीसूक्तप्रसक्तौ । **सदसस्पतिं** एतन्नामकं देवं **अयासिषं** प्रापम् । या प्रापणे, लुङ् । कीदृशम् ? **अद्भुतं** महान्तम् , महन्नामैतत्,

आश्चर्यकरमित्यदोषः । **इन्द्रस्य प्रियं** प्रीतिहेतुं **काम्यं** कामयितुं योग्यं **सनिं** दातारम् । षणु दाने, दानमेव वा, लाभस्वरूपमित्यर्थः । **मेधां** मेधाभूतं धारणात्मकप्रज्ञास्वरूपमित्यर्थः । मेधां लब्धुं उक्तगुणविशिष्टं देवं अयासिषमिति सायणीयम् ।। ६ ।।

## ऋक्संहिता पदपाठसहिता

**यस्मा॑दृ॒ते न सिध्य॑ति य॒ज्ञो वि॑प॒श्चित॑श्च॒न । स धी॒नां योग॑मिन्वति ।। ७ ।।**
**यस्मा॑त् । ऋ॒ते । न । सिध्य॑ति । य॒ज्ञः । वि॒पः॒ऽचित॑ः । च॒न ।। सः । धी॒नाम् । योग॑म् । इ॒न्व॒ति॒ ।। ७ ।।**

## ऋग्भाष्यम्

**धीप्रेरकः स ध्येयश्च धीभिर्योगं तदाप्नुते ।। ७ ।।**

**ऋग्भाष्यटीका– यस्मात् । यस्मात्** सदसस्पतेः **ऋते विपश्चितश्चन** ज्ञानिनोऽपि **यज्ञो न सिध्यति सधीनां** बुद्धीनां **योगं** सम्बन्धं **इन्वति** । प्राप्तिकर्माऽयम् । अत्र सदसस्पतेर्धिया योगः कथमित्यत आह– **धीप्रेरक इति** ।। यस्मात्स धीप्रेरको यस्माच्च ध्येयस्तस्माद्धीभिर्योगमाप्नुत इति युक्तम् ।। ७ ।।

**मन्त्रार्थमञ्जरी–** यस्मात्, सदसस्पतेः । ऋते । विपश्चितः चन, ज्ञानिनोऽपि । यज्ञः न सिध्यति सः । धीनाम्, बुद्धीनाम् । योगम् । इन्वति, प्राप्नोति, 'इविव्याप्तौ' लट्, नुमागमः, बुद्धिप्रेरकत्वाद्ध्येयत्वाच्च 'धीयोगमाप्नोति' इत्युक्तम् ।। ७ ।।

**स्कन्द– यस्मात् ऋते** येन सदसस्पतिना विना **न सिध्यति यज्ञः** । कस्य ? **विपश्चितः चन** विपश्चित्' (निघ ३.१५) इति मेधाविनाम । चनशब्दोऽप्यर्थे । मेधाविनोऽपि यजमानस्य । **सः धीनां** 'धी' (निघ २,१) इति कर्मनाम । सहयोगलक्षणतृतीयार्थे षष्ठी । यागकर्मभिः सह । **योगं** सम्बन्धम् । **इन्वति** व्याप्तिकर्माऽयम् । प्राप्नोति । यागकर्मभिः सम्बध्यते । सर्वयागकर्माणि करोतीत्यर्थः ।। ७ ।।

**वेङ्कटमाधव–** यं विना न सिध्यति यज्ञः विदुषः अपि, स कर्मणा योगं व्याप्नोति ।।

**मुद्गल– यज्ञः** अयमनुष्ठातव्यः **विपश्चितः चन** विदुषोऽपि यजमानस्य **यस्मात्**

सदसस्पतिदेवात् **ऋते न सिध्यति सः** अयं सदसस्पतिर्देवः **धीनां** मनोऽनुष्ठानविषयाणां **योगं** सम्बन्धं **इन्वति** व्याप्नोति । यजमानमनुगृह्य तदीयं यज्ञं निष्पादयन्तीत्यर्थः ।। ७ ।।

**सायण– यज्ञः** अयमनुष्ठातव्यः **विपश्चितश्चन** विदुषोऽपि यजमानस्य **यस्मात्** सदसस्पति-देवात् **ऋते न सिध्यति सः** अयं सदसस्पतिर्देवः **धीनां** मनोऽनुष्ठानविषयाणामस्मद्बुद्धीना-मनुष्ठेयकर्मणां वा **योगं** सम्बन्धं **इन्वति** व्याप्नोति । यजमानमनुगृह्य तदीयं यज्ञं निष्पाद-यतीत्यर्थः ।

यस्मात् । 'अन्यारात्' (पा.सू.२,६,२९) इत्यादिना ऋतेयोगात् पञ्चमी । 'सावेकाचः' इति विभक्तेरुदात्तत्वे प्राप्ते 'न गोश्वन्साववर्ण' इति प्रतिषेधः । सिध्यति । 'षिधु संराद्धौ' । श्यनो नित्त्वादाद्युदात्तत्वम् । 'यद्वृतान्नित्यम्' इति निघातप्रतिषेधः । धीनाम् । 'सावेकाचः' इति विभक्तेरुदात्तत्वम् । योगम् । 'युजिर् योगे' । घञो ञित्त्वादाद्युदात्तत्वम् । इन्वति । 'इवि व्याप्तौ' । शप् । 'इदितो नुम् धातोः' इति नुम् । निघातः ।। ७ ।।

**सिद्धाञ्जनम्–** सप्तमीमृचमाह– **यस्माद् ऋते** येन सदसस्पतिना विना **विपश्चितश्चन** मेधाविनोऽपि प्रज्ञोज्वलस्यपीत्यर्थः । **यज्ञः न सिद्ध्यति** ऋषिः प्रज्ञाचक्षुरपि सदसस्पतेरग्रेरेव यजनतन्त्रं शिक्षते, तस्मात् तेन विना न यज्ञसिद्धिरित्युक्तम् । **सः** देवः **धीनां** बुद्धीनां, दिव्याध्वनि गच्छतः पुरुषस्य सम्भाविनीनां विसंवादिनीनां बुद्धीनामित्यर्थः । **योगं** सम्बन्धं परस्परसंवादरूपं **इन्वति** प्राप्नोति तदर्थं यातीत्यर्थः । इवि व्याप्तौ, इदितः नुम्, शब्विकरणम् ।।

### ऋक्संहिता पदपाठसहिता

**आदृध्नोति हविष्कृतिं प्राञ्चं कृणोत्यध्वरम् । होत्रा देवेषु गच्छति ।। ८ ।।**

आत् । ऋध्नोति । हविःऽकृतिम् । प्राञ्चम् । कृणोति । अध्वरम् । होत्रा । देवेषु । गच्छति ।।

### ऋग्भाष्यम्

**तस्माद्धविष्कृतस्त्वृद्धिं करोति यजतो विभुः ।**
**करोति चोत्तमं यज्ञं देवाह्वानानि गच्छति ।। ८ ।।**

**ऋग्भाष्यटीका–** आत् । तस्मात् । सदसस्पतिं विना यज्ञो न सिध्यतीत्येतदत्रोपपाद्यते ।

यस्माद्विभुः सदसस्पतिः **हविष्कृतिं ऋध्नोति** हविष्कृतो यजतः स्वृधिं करोति । यस्माच्च **अध्वरं** यज्ञं **प्राञ्चं** उत्तमं प्रकृष्टतयाऽञ्चति प्रवर्तत इति **कृणोति** करोति यस्माच्च **देवेषु** देवविषयाणि **होत्रा** होत्राणि । ह्वयते रूपमेतत् । देवाह्वानानि **गच्छति** प्राप्नोति स्वीकरोति । **आत्** तस्मात्तेन विना यज्ञो न सिध्यति । अत्र वृद्धिकरणं सफलीकरणम् । उत्तमकरणं तु देवोपभोग्यतापादनम् । त्रयाणां चोत्तरोत्तरो हेतुः ॥ ८ ॥

**मन्त्रार्थमञ्जरी–** 'सदसस्पतिं विना यज्ञो न सिध्यति' इत्येतदत्रोपपाद्यते (यस्माद्विभुः सदसस्पतिः) हविष्कृतिम्, यजमानम् । ऋध्नोति, हविष्कृतो यजतः स्वृद्धिं करोति । (यस्माच्च) अध्वरम्, यज्ञम् । प्राञ्चम्, उत्तमम्, प्रकृष्टतयाऽञ्चति प्रवर्तत इति व्युत्पत्तेः । कृणोति, करोति । (यस्माच्च) देवेषु, देवविषयाणि । होत्रा, होत्राणि, देवाह्वानानि, ह्वयतेः क्रप्रत्ययः, यजादित्वात्सम्प्रसारणम्, 'नञानिर्दिष्टमनित्यम्' इति 'क्ङिति च' इति निषेधाप्राप्तेर्वा बहुलग्रहणाद्वा गुणः । गच्छति, प्राप्नोति, स्वीकरोति । आत्, तस्मात् । तेन विना यज्ञो न सिध्यति । इति । अत्र स्वृद्धिकरणं सफलीकरणम्, उत्तमकरणं तु देवोपभोग्यतापादानम् (अन्यत्स्पष्टम्), त्रयाणां पूर्वं पूर्वं प्रत्युत्तरोत्तरो हेतुः ॥ ८ ॥

**स्कन्द–** आत् इति निपातोऽथशब्दपर्याय आनन्तर्ये । कर्मभिः संयुज्यानन्तरम् । **ऋध्नोति** ऋधु वृद्धौ । सामर्थ्याच्चात्रान्तर्णीतण्यर्थः । वर्धयति । **हविष्कृतिं** हविष्क्रियाम् । हवींषि सारतो वृद्धानि करोतीत्यर्थः । **प्राञ्चं कृणोति** प्रकर्षगामिनः देवान् प्रति करोति **अध्वरम्** । 'होत्रा' (निघ.१,११) इति वाङ्नाम । तृतीयार्थे चात्र प्रथमा । होत्रया च स्तुतिलक्षणया च वाचा देवेषु देवान् प्रति गच्छति देवांश्च स्तौतीत्यर्थः ॥ ८ ॥

**वेङ्कटमाधव–** गमनानन्तरमेव समर्थयति हविष्करणम् । प्राञ्चं कृणोति यज्ञम् । वाचा च देवेषु गच्छति ॥ ८ ॥

**मुद्गल– आत्** अनन्तरमेव **हविष्कृतिं** हविःसम्पादनयुक्तं यजमानं **ऋध्नोति** सदसस्पतिर्देवो वर्धयति । हविर्दानानन्तरमेव फलं प्रयच्छतीत्यर्थः । तथाविधफलसिद्धये **अध्वरं** यजमानेनानुष्ठीयमानं यज्ञं **प्राञ्चं** प्रकर्षेण गच्छन्तमविघ्नेन परिसमाप्तियुक्तं **कृणोति** करोति । ह्वेषा हूयमाना देवता तुष्टा सती यजमानं प्रख्यापयितुम् देवेषु गच्छति ॥ ८ ॥

**सायण– आत्** अनन्तरमेव **हविष्कृतिं** हविःसम्पादनयुक्तं यजमानं **ऋध्नोति** सदसस्पतिर्देवो

वर्धयति । हविर्दानानन्तरमेव फलं प्रयच्छतीत्यर्थः । तथाविधफलसिद्धये **अध्वरं** यजमानेनानुष्ठीयमानं यज्ञं **प्राञ्चं** प्रकर्षेण गच्छन्तमविघ्नेन परिसमाप्तियुक्तं, **कृणोति** करोति । **होत्रा** हूयमाना देवता तुष्टा सती यजमानं प्रख्यापयितुं देवेषु गच्छति । यद्वा । होत्रा अस्मदीयस्तुतिरूपा वाक् देवान् परितोषयितुं देवेषु गच्छति । श्लोकः धारा' इत्यादिषु सप्तपञ्चाशत्सु वाङ्नामसु 'होत्रा गीः' (नि.१,११,३५) इति पठितम् ।

हविष्कृतिम् । हविषः कृतिः सम्पादनं यस्य यजमानस्य सोऽयं हविष्कृतिः । 'बहुव्रीहौ प्रकृत्या' इति पूर्वपदप्रकृतिस्वरत्वम् । प्राञ्चम् । 'अनिगन्तोऽञ्चतौ वप्रत्यये' (पा.सू.६,२,५२) इति गतेः प्रकृतिस्वरत्वम् । पश्चात् एकादेशस्वरः । अध्वरम् । न विद्यते ध्वरो हिंसा यस्मिन् । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । हूयतेऽस्यामिति होत्रा देवता । 'हुयामाश्रुभसिभ्यस्त्रन्' (उ.सू.४,६०७) इति त्रन् । नित्त्वादाद्युदात्तः ।। ७ ।।

**सिद्धाञ्जनम्–** अष्टमीमृचमाह– **आत्** अनन्तरम्, सदसस्पतिना निरुह्यमानस्य 'धीनां योगस्य सिद्धेः परं इत्यर्थः । **सः** देवः **हविष्कृतिं** हविषः कृतिः सम्पादनं यस्य तं अन्तर्यागपरं, पूर्वपदप्रकृतिस्वरो वहुव्रीहिः । **ऋध्नोति** वर्धयति । अन्तर्भावितण्यर्थः । अध्वरं, स्वरूपं प्रागुक्तम् । यज्ञं **प्राञ्चं** प्रकर्षेण गच्छन्तं प्रकृष्टगतिकमित्यर्थः । प्रपूर्वकस्य अञ्चतेर्गत्यर्थस्य रूपम् । **कृणोति** करोति । **होत्रा** वाङ्नाम, आह्वात्री वाक् **देवेषु** मध्ये **गच्छति** तान् प्राप्नोतीत्यर्थः ।।७।।

### ऋक्संहिता पदपाठसहिता

**नराशंसं सुधृष्टममपश्यं सप्रथस्तमम् । दिवो न सद्ममखसम् ।। ९ ।।**

नराशंसम् । सुऽधृष्टमम् । अपश्यम् । सप्रथःऽतमम् । दिवः । न । सद्मऽमखसम् ।। ९ ।।

### ऋग्भाष्यम्

**नरैः स्तुत्यो नराशंसो हरिर्धृष्टतमश्च सः ।**
**गुणानां प्रथिमाधिक्यात्सप्रथस्तम ईरितः ।**
**यस्य स्वर्गादपि गृहं मखः प्रियमिवेयते ।। ९ ।।**

**ऋग्भाष्यटीका– नराशंसम्** । अत्र नराशंसशब्दार्थमाह– **नरैरिति** ।। नरैः पुरुषैः ब्राह्मणादिभिः आशंस्यते स्तूयत इति नराशंसः । सुधृष्टमशब्दार्थमाह– **धृष्टेति** ।। समाने लोप

इति सूत्रात्तशब्दस्य लोप इत्युक्तं भवति । तमबर्थे मप्रत्यय इति वा । सप्रथस्तमशब्दार्थमाह– **गुणानामिति ।।** प्रथप्रख्याने । ततो भावेऽसुन् । सह प्रथसा गुणानां प्रथिम्ना वर्तत इति सप्रथाः । आधिक्येन सप्रथाः सप्रथस्तम इत्युक्तं भवति । तृतीयपादं योजयति– **यस्येति ।।** अत्र यस्येति प्रियमित्यपि चाध्याह्रियते । गृहं मख इत्यनेन मखस(स्) शब्दो मखपर्यायो नपुंसकलिङ्गः कर्मधारयश्च समास इत्युक्तं भवति । यद्वा गृहं मख इत्यनेन द्वन्द्वैकवद्भावं सूचयति । तदयमर्थः । यस्य नराशंसस्य **सद्ममखसं** गृहरूपो मखः । यद्वा अग्निगृहं मखश्च **दिवः** स्वर्गादप्यतिशयेन प्रियमिवेयते प्रतीयते तं **सुधृष्टमं** प्रगल्भतमं **सप्रथस्तमं** अतिशयेन गुणविस्तार-युक्तं **नराशंसं** अहं अपश्यमिति ।। ९ ।।

**मन्त्रार्थमञ्जरी–** अत्र 'यस्य' इति 'तम्' इति च ग्राह्यम् ।। (यस्य) नराशंसस्य । सद्ममखसम्, सद्म गृहरूपम्, मखसम् मखशब्दपर्यायोऽत्र मखसशब्दो नपुंसकलिङ्गः, यद्वा, सद्म अग्निगृहम् मखसम् यज्ञश्च । दिवः, स्वर्गादप्यतिशयेन । 'प्रियम्' इति शेषः (प्रियम्) न, प्रियमिव प्रतीयते (तम्) सुधृष्टमम्, सुधृष्टतमम्, 'समाने लोपः' इति (म० व्या०) सूत्रान्निष्ठातकारलोपः, अतिशयार्थे मप्रत्ययो वा, प्रगल्भतमम् । सप्रथस्तमम्, प्रथसातिशयितगुणविस्तारेण सहितम्, 'प्रथ प्रख्याने' ततोऽसुन्, अतिशायने तमप् । नराशंसम्, नरैर्ब्रह्मादिपुरुषैः शंस्यते स्तूयत इति नराशंसस्तं नराशंसं विष्णुम् । (अहम्) अपश्यम् इति ।। ९ ।।

**स्कन्द– नराशंसं** शंस स्तुतौ । नरैः शस्यत इति नराशंसः प्रकृतः सदसस्पतिरेव । देवतान्तरं वा । तथाह्याह–

उक्ता याः सादसत्पत्याश्चतस्रः सदसस्पतिः ।
तासामन्त्या ऋगेका सा नाराशंसी प्रकीर्तिता ।। इति ।

तं नराशंसं **सुधृष्टमं** सुष्ठु प्रगल्भतमं अहं अपश्यम् । **सप्रथस्तमं** सप्रथाः पृथुः अतिशयेन सप्रथसं सप्रथस्तमम् । कमिव ? **दिवः न** द्युलोकस्येव सम्बन्धिनं **सद्ममखसं** सद्म सदनमादित्यमण्डलं, तन्मखः महद् यस्य स सद्ममखाः आदित्यः । मखशब्दो हि 'रेजते अग्रे पृथिवी मखेभ्यः' (ऋ ६,६६,९) इत्यादिप्रयोगदर्शनादपठितमपि महन्नाम । सकारास्तु तस्यैव छान्दस उपजनः । पर्यायान्तरं वा सकारान्तम् । तं सद्ममखसम् । आदित्यमिवेत्यर्थः ।।९।।

**वेङ्कटमाधव–** नरैः शंसनीयं अतिशयेन धृष्टं पश्यामि सर्वतः पृथुतमं द्युलोकस्य सम्बन्धिनं इव सूर्यं महनीयसदनमिति ।। ९ ।।

**मुद्गल– नराशंसं** एतन्नामकं देवविशेषं सदसस्पतिं वा **अपश्यं** शास्त्रदृष्ट्या दृष्टवानस्मि । कीदृशम् ? **सुधृष्टमं** अत्याधिक्येन धाष्टर्चयुक्तं **सप्रथस्तमं** अतिशयेन प्रख्यातं **सद्ममखसं** प्राप्ततेजस्कम् । तत्र दृष्टान्तः– **दिवः न** द्युलोकानिव । आदित्यचन्द्रादिभिरधिष्ठिता द्युलोकविशेषा यथा तेजस्विनः तद्वदयं नराशंसस्तेजस्वीत्यर्थः ।। ९ ।।

**सायण– नराशंसं** एतन्नामकं देवविशेषम् । यद्वा । अवयवार्थव्युत्पत्त्या सदसस्पतिदेवता-परोऽयं शब्दः । व्युत्पत्तिं च यास्को दर्शयति– 'नराशंसो यज्ञ इति कात्थक्यो नरा अस्मिन्नासीनाः शंसन्त्यग्निरिति शाकपूणिर्नरैः प्रशस्यो भवति' (निरु.८,६) इति । अत्र अग्निवत् सदसस्पतेरपि नरैः शस्यमानत्वात् नराशंसत्वम् । एतमेवाभिप्रायं हृदि निधाय ब्राह्मणमेवमाम्नायते– 'प्रजा वै नरो वाक् शंसः' (ऐ.ब्रा.६,२७) इति । अतो मनुष्यैः शस्यमानो यः सदसस्पतिर्यो वा नराशंसनामको देवः तं **अपश्यं** शास्त्रदृष्ट्या दृष्टवानस्मि । कीदृशम् ? **सुधृष्टमं** अत्याधिक्येन धाष्टर्चयुक्तं **सप्रथस्तमं** अतिशयेन प्रख्यातं **सद्ममखसं** प्राप्ततेजस्कम् । तत्र दृष्टान्तः– **दिवो न** द्युलोकानिव । आदित्यचन्द्रादिभिरधिष्ठिता द्युलोकविशेषा यथा तेजस्विनः तद्वदयं नराशंसस्तेज-स्वीत्यर्थः ।

सुधृष्टमम् । शोभनं धृष्णोतीति सुधृक् । 'क्विप् च' इति क्विप् । आतिशायनिकस्तमप् । षकारस्य जश्त्वाभावश्छान्दसः । कृदुत्तरपदप्रकृतिस्वरत्वेन ऋकार उदात्तः । अपश्यम् । 'पाघ्राध्मा' इत्यादिना पश्यादेशः । 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' इति अट उदात्तत्वम् । पादादित्वात् न निघातः । सप्रथस्तमम् । 'प्रथ प्रख्याने' । प्रथनं प्रथः । 'सर्वधातुभ्योऽसुन्' । नित्त्वादाद्युदा-त्तत्वम् । सह प्रथसा वर्तते इति 'तेन सहेति तुल्ययोगे' (पा.सू.२,२,२८) इति बहुव्रीहिसमासः । 'वोपसर्जनस्य' (पा.सू.६,३,८२) इति सादेशः । पूर्वपदप्रकृतिस्वरत्वे प्राप्ते 'परादिश्छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वम् । दिवः । 'ऊडिदम्' इत्यादिना विभक्तेरुदात्त-त्वम् । सद्ममखसम् । सीदतीति सद्म । षद्लृ विशरणादौ । 'अन्येभ्योऽपि दृश्यन्ते' (पा.सू. ३,२,७५) इति मनिन् । नित्त्वादाद्युदात्तः । सद्म महो यस्येति बहुव्रीहौ हकारस्य व्यत्ययेन खकारः ।। ३५ ।।

**सिद्धाञ्जनम्–** नवमीमृचमाह– **नराशंसं** सदसस्पतिमूर्तिं अग्निं **अपश्यं** दृष्टवानस्मि इति स्वीयं देवतासाक्षात्कारं ब्रूते । अग्निरेवायमिति स्कन्दस्वामीया पङ्क्तिरियं भवति 'आसु चर्क्षु यज्ञसाधनहविष्कृतिसमर्थनाद्यग्निकर्मदर्शनात् तद्दैवत्याश्चतस्रश्चर्चः' इति । कीदृशमपश्यम् ? **सुधृष्टमम्** शोभनं धृष्णोतीति सुधृक् अतिशयेन सुधृक् तं अत्यधिकधाष्टर्चयुक्तं इत्यर्थः । **सप्रथस्तमं** प्रख्याततमम् । सह प्रथसा वर्तत इति सप्रथः, सर्वधातुभ्यः असुन् अतिशयेन तम् । **दिवः** द्युलोकस्य सम्बन्धिनम् । **सद्ममखसं न** गृहयज्ञकारिणं इव स्थितम् । मखो यज्ञः तत्करोति मखयति यज्ञकारी मखः, सद्मनि गृहे मखः, मखसो मखपर्यायः । स्वर्लोकगृहयाजी इव स्थितो नराशंसः, तमपश्यम् । 'सद्ममखसं प्राप्ततेजस्कं, हकारस्य खकारव्यत्ययः' इत्यभिप्रैति सायणः। 'अपठितमपि मखो महन्नाम, रेजते अग्ने पृथिवी मखेभ्यः' इत्युदाहृतं स्कन्दस्वामीये । देवानां समागमस्थानं यज्ञगृहं सद उच्यते । तच्च विशालं बहुभूमिकं ऋषेरन्तर्याजिनः अन्तरं स्थानं भवति । तस्य पतिरग्निः स्वयं यज्ञभारं वहन् स्वर्लोकगृहस्थो यज्ञाकारीव व्यभासत इति ऋषिदृष्टिः ।। ९ ।।

।। इति प्रथमाष्टके प्रथमाध्याये पञ्चत्रिंशो वर्गः ।।

## ।। अथ षट्त्रिंशो वर्गः ।।

(सूक्तम् १९)

### ऋक्संहिता पदपाठसहिता

९ मेधातिथिः काण्वः । अग्निर्मरुतश्च । गायत्री ।

**प्रति त्यं चारुमध्वरं गोपीथाय प्रहूयसे ।। मरुद्भिरग्न आगहि ।। १ ।।**

प्रति । त्यम् । चारुम् । अध्वरम् । गोऽपीथाय । प्र । हूयसे । मरुत्ऽभिः । अग्ने । आ । गहि ।। १ ।।

### ऋग्भाष्यम्

**यज्ञं प्रति प्रति त्यं तं सम्यक् शास्त्रोक्तलक्षणम् ।**
**आहूयसे ............................ ।। १ ।।**

**ऋग्भाष्यटीका–** **प्रतित्यम्** । नवर्चमाग्निमारुतमिदं सूक्तम् । यज्ञम् । हे **अग्ने गोपीथाय**

रक्षणाय **चारुं** भद्रं सम्यक् शास्त्रोक्तलक्षणं **त्यं** तं प्रसिद्धं **अध्वरं** यज्ञं **प्रति** प्रति प्रतिरयं वीप्सायां कर्मप्रवचनीय इति दर्शयितुं द्विर्वचनम् । सर्वान्यज्ञान्प्रति **प्रहूयसे** आहूयसे यस्मात्तस्मान्त् **मरुद्भिः सहागहि** आगच्छ ।। १ ।।

**मन्त्रार्थमञ्जरी–** अथ 'प्रति त्यम्' इत्येकोनविंशं नवर्चं वर्गद्वयात्मकमाग्निमारुतं गायत्रं सूक्तम् । (हे) अग्ने, विष्णो, प्रधानाग्ने च । गोपीथाय, रक्षणाय । चारुम्, भद्रम्, सम्यक्छास्त्रोक्त-लक्षणम् । त्यम्, तम्, प्रसिद्धम् । अध्वरम्, यज्ञम् । प्रति, 'लक्षणेत्थं भूताख्यानभागवीप्सासु प्रतिपर्यनवः' इति वीप्सायां कर्मप्रवचनीयः प्रतिशब्दः, सर्वान्यज्ञान्प्रति । प्र हूयसे, आहूयसे । (यस्मात्तस्मात्) मरुद्भिः (सह) । आ गहि, आगच्छ ।। १ ।।

**स्कन्द–** 'आग्निमारुतमुत्तमम्' । अध्यायस्योत्तमं सूक्तमाग्निमारुतम् । प्रतिशब्दो लक्षणे कर्मप्रवचनीयः । त्यच्छब्दस्तच्छब्दपर्यायः । तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छन्दोऽध्याहर्तव्यः । योऽयमस्माभिः प्रकल्पितः तं प्रति । कीदृशम् ? **चारुं** शोभनम् । **अध्वरं** यज्ञम् । **गोपीथाय** सोमोऽत्र गौरुच्यते, सोमपानाय । **प्रहूयसे** प्रकर्षेणाहूयसे । एतज्ज्ञात्वा मरुद्भिः सह अग्ने! आ गहि ।। १ ।।

**वेङ्कटमाधव–** प्रति चारुं अध्वरं सोमपानाय आ हूयसे, अग्ने! मरुद्भिः सह आगच्छ ।।

**मुद्गल–** 'प्रति त्यम्' इति नवर्चं द्वितीयं सूक्तम् । मेधातिथिः । गायत्रम् । आग्निमारुतम् ।।

हे **अग्ने!** यो यज्ञ चारुः अङ्गवैकल्यरहितः **त्यं** तं तथाविधं **चारुं अध्वरं** प्रतिलभ्य **गोपीथाय** सोमपानाय **प्रहूयसे** प्रकर्षेण त्वं हूयसे । तस्मात् अस्मिन्नध्वरे त्वम् **मरुद्भिः** देवविशेषैः **सह आगहि** आगच्छ ।। १ ।।

**सायण–** 'प्रति त्यम्' इति नवर्चं द्वितीयं सूक्तम् । ऋषिच्छन्दसी पूर्ववत् । देवता त्वनुक्रम्यते– 'प्रति त्यमाग्निमारुतम्' इति । कारीरीष्टौ 'प्रति त्यम्' इत्येषा धाय्या । तथा च सूत्रितं– 'वर्षकामेष्टिः कारीरी तस्यां प्रति त्यं चारुमध्वरमीळे अग्निं स्ववसं नमोभिरिति धाय्ये' (आश्व.श्रौ.२,१३) इति ।।

त्यच्छब्दः सर्वनाम तच्छब्दपर्यायः । हे **अग्ने** यो यज्ञः चारुः अङ्गवैकल्यरहितः **त्यं** तथाविधं

**चारुं अध्वरं** प्रतिलभ्य **गोपीथाय** सोमपानाय **प्रहूयसे** प्रकर्षेण त्वं हूयसे तस्मात् अस्मिन्नध्वरे त्वं **मरुद्भिः** देवविशेषैः **सह आगहि** आगच्छ । सेयमृक् यास्केनैवं व्याख्याता– 'तं प्रति चारुमध्वरं सोमपानाय प्रहूयसे सोऽग्ने मरुद्भिः सहागच्छ' (निरु.१०,३६) इति ।

प्रति । निपात आद्युदात्तः । त्यम् । 'त्यदादीनामः' (पा.सू.७,२,१०२) । प्रातिपदिकस्वरः । चारुम् । 'दृसनिजनिचरि' (उ.सू.१,३) इत्यादिना ञुण् । 'अत उपधायाः' (पा.सू.७,२,११६) इति वृद्धिः । ञित्वादाद्युदात्तः । गोपीथाय । 'निशीथगोपीथावगथाः' (उ.सू.२,१६६) इति थक्प्रत्ययान्तो निपातितः । प्र । निपातस्वरः ॥ १ ॥

**सिद्धाञ्जनम्–** पञ्चमेऽनुवाके द्वितीयं अग्निमारुतं प्रति त्यमिति नवर्चं सूक्तम् । ऋषिच्छन्दसी पूर्ववत् ।

तत्र प्रथमामृचमाह– हे **अग्ने त्वं** तं मयाऽनुष्ठीयमानमिमं **चारुं** स्पृहणीयं अङ्गवैकल्यरहितं अध्वरं यज्ञं प्रति उद्दिश्येत्यर्थः । **गोपीथाय** गौः सोमरसः तस्य पीथसे पानाय **प्रहूयसे** प्रकर्षेणाहूतोऽसि । अतः **मरुद्भिः** सह **आगहि** आगच्छ । त्यच्छब्दः सर्वनामतच्छब्दपर्यायः । बहिर्यागस्येव अन्तर्यागस्यापि अङ्गानां परस्परसम्बन्धः सुसङ्गतः स्यात् । तेन चारुः सुन्दरः स्वादध्वरः । गोशब्देन विकृतिर्गव्यं पयो भवति । सर्वस्यापि हविष अन्नपदवाच्यभोज्यत्वत्वसाम्यात् प्रधानभोज्यतया सोमस्य प्रसिद्धेश्च गौः सोमरस इति पूर्वैर्व्याख्यातम् । मरुतोऽधिकृत्य प्राक् किञ्चिदुक्तम् । पुरस्ताच्च प्रसक्तौ वक्ष्यते। मरुतश्चण्डवेगाः प्राणमयधामानः ऐन्द्रज्योतिबलदीपितानां धीवृत्तीनां दिव्यगतिविधायिनः प्रवातप्रायप्रेरणाः देवविशेषाः । अत एव धीप्रकाशद्योतकस्य गव्यस्य ग्रहणाय 'गोपीथाय' तैः सह अग्नेरागमनं प्रार्थ्यत इत्यलं विस्तरेण ॥

## ऋक्संहिता पदपाठसहिता

**नहि देवो न मर्त्यो महस्तव क्रतुं परः । मरुद्भिरग्न आगहि ॥ २ ॥**

नहि । देवः । न । मर्त्यः । महः । तव । क्रतुम् । परः । मरुत्ऽभिः । अग्ने । आ । गहि ॥ २ ॥

## ऋग्भाष्यम्

**............... महान्नैव त्वदन्योऽस्ति क्रतुं प्रति ।**
**विष्णौ हि मुख्यतोऽर्थोऽयमग्नौ कांश्चिदृते सुरान् ॥ २ ॥**

**ऋग्भाष्यटीका– न हि** । महान् । हे **अग्ने क्रतुं** प्रत्यागन्तुमिति शेषः । **तव** सकाशात् **परः** अन्यस्त्वदन्यो **देवः** वा **महः** महान्पूज्यो **नहि** नैवास्ति । मर्त्यस्तु नैवास्तीति किमु । तस्मान्मरुद्भिः सह आगहि । अत्राग्नेः सर्वोत्तमत्वमुक्तं तद्विभागेन व्याख्याति– **विष्णौ हीति ।।** अयमर्थस्त्वदन्यो महान्नैवेत्ययमर्थोऽग्निशब्देन विष्णौ विवक्षिते मुख्यतः संकोचेन विना व्याख्यातव्यः । प्रसिद्धाग्नौ तु विवक्षिते कांश्चित्सुरान्विनेति संकोचेन व्याख्यातव्य इत्यर्थः ।।

**मन्त्रार्थमञ्जरी–** (हे) अग्ने क्रतुम् (प्रत्यागन्तुम्) इति शेषः । तव (सकाशात्) परः, अन्यः । देवः । महः, महान्, पूज्यः । न हि, नैवास्ति । मर्त्यः । (तु) न (एवास्तीति किमु ? तस्मात्) मरुद्भिः आ गहि, पूर्ववत् । अत्र प्रतीतं सर्वोत्तमत्वं विष्णावग्नौ च यथायोगं ज्ञेयम् ।। २ ।।

**स्कन्द– न देवः न** अपि **मर्त्यः महः** महतः तव सकाशात् । टार्थेऽम् । कर्मणा प्रज्ञया वोत्कृष्टः त्वत्तः श्रेष्ठो देवमनुष्येष्वपि न कश्चित् । तस्मात् मरुद्भिः अग्ने । आ गहि ।। २ ।।

**वेङ्कटमाधव–** नहि देवः मर्त्यः वा महतः तव कर्म तरति ।। २ ।।

**मुद्गल–** हे अग्ने! **महः** महतः तव सबन्धिनं **कृतुं** कर्मविशेषं उल्लङ्घ्य **परः नहि** उत्कृष्टः **देवः** न भवति । तथा **मर्त्यः** मनुष्यश्च परः न भवति । ये मनुष्याः त्वदीयं क्रतुमनुतिष्ठन्ति ये च देवाः त्वदीये क्रतौ इज्यन्ते ते एवोत्कृष्टा इत्यर्थः । मरुद्भिः इत्यादि पूर्ववत् ।। २ ।।

**सायण–** हे **अग्ने महः** महतः तव सम्बन्धिनं **क्रतुं** कर्मविशेषमुल्लङ्घ्य **परः नहि** उत्कृष्टः **देवः** न भवति खलु । तथा **मर्त्यः** मनुष्यश्च परः न भवति । ये मनुष्यास्त्वदीयं क्रतुमनुतिष्ठन्ति ये च देवास्त्वदीये क्रतौ इज्यन्ते ते एवोत्कृष्टा इत्यर्थः । मरुद्भिरित्यादि पूर्ववत् ।

नहि । 'एवमादीनामन्तः' इत्यन्तोदात्तः । देवः । पचाद्यजन्तः । चित्त्वादन्तोदात्तः । महः । महतस्तलोपश्छान्दसः । 'बृहन्महतोरुपसङ्ख्यानम्' (पा.सू.६,१,१७३,१) इति विभक्तेरुदात्तत्वम् । तव । 'युष्मदस्मदोर्ङसि' (पा.सू.६,१,२११) इत्याद्युदात्तत्वम् । क्रतुम् । 'कृञः कतुः' (उ.सू.१,७७) । प्रत्ययाद्युदात्तत्वम् । गहि । 'गम्लृ सृप्लृ गतौ' । लोटः सेर्हिः । 'बहुलं छन्दसि' इति शपो लुक् । 'अनुदात्तोपदेश' (पा.सू.६,४,३७) इत्यादिना अनुनासिक-

लोपः । तस्य 'असिद्धवदत्रा भात्' (पा.सू.६,४,२२) इति असिद्धत्वात् 'अतो हेः' इति लुक् न भवति । निघातः ।। २ ।।

**सिद्धाञ्जनम्–** द्वितीयामृचमाह– हे **अग्ने, महः** महतः, । तलोपः छान्दसः । **तव क्रतुं** प्रज्ञां अध्यवसायात्मकं क्रियाबलं वा उल्लङ्घ्य **परः** अन्य **देवः न हि** न भवति खलु । तथा **मर्त्यः न** भवति । महतस्तव क्रतुमत्येतुं देवो वा मर्त्ये वा न प्रभुरित्यर्थः। मरुद्भिरित्यादि पूर्ववत् ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**ये महो रजसो विदुर्विश्वे देवासो अद्रुहः । मरुद्भिरग्न आगहि ।। ३ ।।**
ये । महः । रजसः । विदुः । विश्वे । देवासः । अद्रुहः । मरुत्ऽभिः । अग्ने । आ । गहि ।।

## ऋग्भाष्यम्

**महतो रञ्जकात्स्वर्गादद्रोग्धारोऽखिलं विदुः ।। ३ ।।**

**ऋग्भाष्यटीका– ये महः** । महतः । ये **अद्रुहः** न द्रुह्यन्तीति अद्रोग्धारः साधूनामिति शेषः । विश्वेदेवासः मरुतो **महः** महतः **रजसः** रञ्जकात्स्वर्गादिति यावत् । ल्यब्लोपनिमित्ता-पञ्चमी । स्वर्गमधिष्ठायैव विदुरखिलमिति शेषः । तैर्दूरदर्शनादिमद्भिर्मरुद्भिरग्न आगहि ।। ३ ।।

**मन्त्रार्थमञ्जरी–** ये । अद्रुहः, न द्रुह्यन्तीति सतामद्रोग्धारः । विश्वे । देवासः, मरुतः । महः, महतः । रजसः, रञ्जकात्स्वर्गादिति यावत्, ल्यब्लोपनिमित्ता पञ्चमी, स्वर्गमधिष्ठायैव । विदुः (अखिलम्) इति शेषः । (तैः) दूरदर्शनादिमद्भिः । मरुद्भिः अग्ने आ गहि ।। ३ ।।

**स्कन्द–** रजःशब्दो लोकवचनः उदकवचनो वा । **महः रजसः** इति चोभयत्र द्वितीयार्थे षष्ठी । ये महद् रजः लोकमन्तरिक्षाख्यं उदकं वा मेघं **विदुः** जानन्ति । **विश्वे** सर्वे **देवासः** दीप्ता दातारो वा **अद्रुहः** अद्रोग्धव्या अद्रोग्धारो वा स्तोतॄणां यष्टॄणाञ्च । यच्छब्दश्रुतेस्तच्छब्दोऽ-ध्याहर्तव्यः । तैः मरुद्भिः अग्ने आ गहि ।। ३ ।।

**वेङ्कटमाधव– ये** मरुतः महान्तः लोकमन्तरिक्ष जानन्ति व्याप्ता देवाः द्रोहरहिताः ।। ३ ।।

**मुद्गल–** हे **अग्ने! ये** मरुतः **महः रजसः** महतः उदकस्य वर्षणप्रकारम् विदुः । कीदृशा

मरुतः ? **विश्वे** सर्वे सप्तविधगणोपेताः । **देवासः** द्योतमानाः । **अद्रुहः** द्रोहरहिता वर्षणेन सर्वभूतोपकारित्वात् । मरुद्भिः इत्यादि पूर्ववत् ।। ३ ।।

**सायण–** हे **अग्ने ये** मरुतः **महः रजसः** महत उदकस्य वर्षणप्रकारं **विदुः** तैः मरुद्भिः इत्यन्वयः । कीदृशा मरुतः ? **विश्वे** सर्वे सप्तविधगणोपेताः । 'सप्तगणा वै मरुतः' (तै.सं. २,२,११,१) इति श्रुतेः । **देवासः** द्योतमानाः **अद्रुहः** द्रोहरहिता वर्षणेन सर्वभूतोपकारित्वात् । तथा च उपरिष्टादाम्नायते– 'उदीरयथा मरुतः समुद्रतो यूयं वृष्टिं वर्षयथा पुरीषिणः' (ऋ.सं. ५,५५,५) इति । शाखान्तरेऽपि मन्त्रान्तरस्य ब्राह्मणमेवमाम्नायते– 'मरुतां पृषतयः स्थेत्याह मरुतो वै वृष्ट्या ईशते' (तै.ब्रा.३,३,९,४) इति । रजःशब्दो यास्केन बहुधा व्याख्यातः– 'रजो रजतेर्ज्योती रज उच्यत उदकं रज उच्यते लोका रजांस्युच्यन्तेऽसृगहनी रजसी ये ते' (निरु.४,१९) इति ।

रजसः । 'नब्विषयस्यानिसन्तस्य' इत्याद्युदात्तः । विदुः । 'विद ज्ञाने' । 'विदो लटो वा' (पा.सू.३,४,८३) इति झेः उसादेशः । प्रत्ययस्वरः । यद्वृत्तयोगात् निघाताभावः । विश्वे । विशेः क्वनन्तस्य नित्त्वादाद्युदात्तत्वम् । देवासः । 'आज्जसेरसुक्' । देवशब्दः पचाद्यजन्तः । चित्त्वादन्तोदात्तः । अद्रुहः । सम्पदादित्वात् भावे क्विपि बहुव्रीहौ 'नञ्सुभ्याम्' इत्यन्तोदात्तत्वम् । कर्तरि वा क्विप् । तत्पुरुषे हि अव्ययपूर्वपदप्रकृतिस्वरत्वं स्यात् । न च कृदुत्तरपदप्रकृतिस्वरत्वम् (पा.सू.६,२,१३९), यतो नञ् न गतिर्न च कारक इति ।।

**सिद्धाञ्जनम्–** तृतीयामृचमाह– हे **अग्ने** ये **अद्रुहः** अद्रोग्धारः, स्तोतारमाश्रितं ये न वञ्चयन्ति ते **विश्वे देवासः** सर्वे देवाः सप्तविधमरुद्गणाः **महः** महतः । तलोपः । **रजसः** लोकस्य । द्वितीयार्थे षष्ठी । महदन्तरिक्षं, रजश्शब्दो लोकवचनः अन्तरिक्षे प्रसिद्धः **विदुः** जानन्ति । मध्यमस्थानाः मध्यमं लोकं सर्वं विदन्ति । ते मरुद्भिरित्यादि पूर्ववत् ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**य उग्रा अर्कमानृचुरनाधृष्टास ओजसा । मरुद्भिरग्न आ गहि ।। ४ ।।**

ये । उग्राः । अर्कम् । आनृचुः । अनाधृष्टासः । ओजसा । मरुत्ऽभिः । अग्ने । आ । गहि ।। ४ ।।

ऋग्भाष्यम्

**प्राप्ता अर्कं विशेषेण सन्निधिस्तत्र यद्धरेः ।। ४ ।।**

**ऋग्भाष्यटीका– य उग्राः ।** अत्रार्कमानृचुरित्येतावद्व्याख्याति– **प्राप्ता इति ।।** सर्वगतस्य हरेरर्कप्राप्तिः कस्माद्विशेषेणोच्यत इत्यत आह– **विशेषेणेति ।।** तत्रार्के तस्माद्विशेषोक्तिर्युक्तेति शेषः । **ये उग्राः** क्रूरा दैत्यान्प्रति **ओजसा** सामर्थ्येन **अनाधृष्टासः** अनाधर्षिता अनभिभूता **अर्कमानृचुः** प्राप्ताः । अर्चतेर्गत्यर्थस्येदं रूपम् । अर्के विशेषेण संनिहिताः तैर्मरुद्भिरग्न आगहि ।।

**मन्त्रार्थमञ्जरी–** ये । उग्राः, क्रूराः, दैत्यान्प्रति । ओजसा, सामर्थ्येन । अनाधृष्टासः, अनाधर्षिताः, अनभिभूताः । अर्कम् । आनृचुः, प्राप्ताः, 'अर्च गतिपूजनयोः' लिट् । (तैः) अर्के सूर्ये विशेषेण सन्निहितैः । मरुद्भिः, माभिर्वैदैरुतत्वहेतुना भगवद्रूपैः प्रसिद्धमरुद्भिश्च । अग्ने आ गहि ।। ४ ।।

**स्कन्द– ये उग्राः** अन्येनासप्रसह्याः क्रूराः **अर्कं** देवम् । कतमम् इमम् ? इन्द्रम् । कुत एतत् । आर्चन्नत्र मरुतः सस्मिन्नाजौ (ऋ १,५२,१५) इति इन्द्रस्य मरुत्स्तुतिसम्बन्धदर्शनात् । **आनृचुः** अर्चतेः स्तुतिकर्मण एतद्रूपम् । वृत्रघ्नं तं 'प्रहर भगवो जहि वीरयस्व' (ऐवा ३,२०) इत्येवमादिभिर्वचनैः स्तुतवन्तः । अत्र चेतिहासः 'त्वां देवा अबिभ्युषः' (ऋ १,११,५) इत्यत्र निदर्शितः । अथवा संवादसूक्तेषु 'कया शुभा' (ऋ १,१६५,१) इत्यादिषु वा स्तुतिः तामभिप्रेत्यैतदुच्यते– य उग्रा अर्कमिन्द्रं स्तुवन्तीति । कीदृशाः ? **अनाधृष्टासः** अनाधर्षिता अनभिभूतपूर्वा **ओजसा** परबलेन । तैः मरुद्भि इत्यादि पूर्ववत् ।। ४ ।।

**वेङ्कटमाधव–** मे उद्गूर्णा अर्चनीयमिन्द्रं अस्तुवन् बलेन अन्यैरनभिभूताः ।। ४ ।।

**मुद्गल– ये** मरुतः **उग्राः** तीव्राः सन्तः **अर्कं** उदकं **आनृचुः** अर्चितवन्तः । वर्षणेन सम्पादितवन्त इत्यर्थः । कीदृशा मरुतः ? **ओजसा** बलेन **अनाधृष्टासः** अतिरस्कृताः । सर्वेभ्योऽपि प्रबला इत्यर्थः । मरुद्भिः इत्यादि पूर्ववत् ।। ४ ।।

**सायण– ये** मरुतः **उग्राः** तीव्राः सन्तः **अर्कं** उदकं **आनृचुः** अर्चितवन्तः वर्षणेन सम्पादितवन्त इत्यर्थः । तैः मरुद्भिः इत्यन्वयः । कीदृशा मरुतः ? **ओजसा** बलेन **अनाधृष्टासः** अतिरस्कृताः सर्वेभ्योऽपि प्रबला इत्यर्थः । अर्कशब्दस्योदकवाचित्वं वाजसनेयिन

आमनन्ति– 'आपो वा अर्कः' (श.ब्रा.१०,६,५,२) इति । तन्निर्वचनं च त एवामनन्ति– 'सोऽर्चन्नचरत्तस्यार्चत आपोऽजायन्तार्चतो वै मे कमभूदिति तदेवार्कस्यार्कत्वम्' (श.ब्रा.१०,६,५,१) इति । स जगत् सृष्ट्वा हिरण्यगर्भ उदकं स्रष्टुमुद्युक्तोऽर्चन् सत्यसङ्कल्पमहिमप्रख्यापनेन स्वात्मानं पूजयन्नचरत् । तथा पूजयतो हिरण्यगर्भस्य सकाशादुदकमुत्पन्नम् । तदानीमर्चतो मत्तः कमभूदित्यवोचत् । तेनोदकस्य अर्कनाम निष्पन्नमित्यर्थः ।

आनृचुः । अर्चतेः 'अपस्पृधेथाम्' (पा.सू.६,१,३६) इत्यादिना निपातितः । प्रत्ययस्वरः । यद्वृत्तयोगात् न निघातः । अनाधृष्टासः । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । ओजसा । 'उब्जेर्बलोपश्च' (उ.सू.४,६३१) इति असुन् । नित्त्वादाद्युदात्तः ॥ ४ ॥

**सिद्धाञ्जनम्**– चतुर्थीमृचमाह– **ये** मरुतः **उग्राः** शूराः **ओजसा** बलेन परकीयेन **अनाधृष्टासः** अप्रधर्षिताः अनभिभूता इत्यर्थः, **अर्कं** अर्चनं ऋगात्मकं स्तोत्रं **आनृचुः** अर्चन्ति ऋच गतिपूजनयोः इत्यस्य रूपम्, गीतं गायन्तीतिवत् , लडर्थे लिट् । अर्कं उदकमिति सायणः, इन्द्रमिति स्कन्दस्वामी । उभयत्र श्रुत्युदाहरणेन समर्थितम् । स्तोत्रं वीर्यवत्तरं विधातुं सर्वसम्पद्वर्षिणमिन्द्रं प्रापयितुं अप्छब्दलक्षितदिव्यशक्तिवाहिनीः प्रेरयितुं वा प्रभवन्ति शूराः इन्द्रभ्रातरो मरुतः । तैः मरुद्भिरित्यादि पूर्ववत् ॥ ४ ॥

## ऋक्संहिता पदपाठसहिता

**ये शुभ्रा घोरवर्पसः सुक्षत्रासो रिशादसः । मरुद्भिरग्न आगहि ॥ ५ ॥**

ये । शुभ्राः । घोरऽवर्पसः । सुऽक्षत्रासः । रिशादसः । मरुत्ऽभिः । अग्ने । आ । गहि ॥

## ऋग्भाष्यम्

**शुद्धा घोरबलाः क्षेत्रत्रातारः क्षतितोऽपि वा ।**
**रम्यसत्सुखभोक्तारो मरुतो मारुतत्वतः ।**
**एतादृशानि रूपाणि प्राणाग्निस्थानि चेशितुः ।**
**पृथग्वा तादृशान्येव देवगान्यपि सर्वशः ॥ ५,३६ ॥**

**ऋग्भाष्यटीका**– ये शुभ्राः । शुद्धाः । शुभ्राः शुद्धाः । घोरं दैत्यान्प्रतिक्रूरं वर्पो बलं येषान्ते **घोरवर्पसः** । **सुक्षत्रासः** क्षि निवासगत्योरित्यतोऽधिकरणे डः । क्षं क्षेत्रं तस्मिन्नुपपदे

त्रायतेरातोनुपसर्गे क इति कः । सुष्ठु क्षेत्रत्रातारः । क्षतितोपि त्रातार इति वा सुक्षत्राः । क्षिक्षये इत्यस्य क्षमिति रूपं अन्यत्समानम् । **रिशादसः** रमेर्डिः । रि रम्यम् । कथं ? सत् निर्दोषं शं सुखं तददन्तीति रम्यसत्सुखभोक्तारः । एवम्भूता ये मरुतो माभिः वेदैः रुतत्वतः कारणात् । तैर्मरुद्भिरग्र आगहि । अत्र मरुदग्निशब्दाभ्यां मुख्यतो विष्णुरभिधीयत इति सिद्धमेव । रूपविशेषं तु प्रतिपादयन्नाह– **एतादृशानीति** ।। इदमध्यात्ममुक्तम् । एतादृशानीत्युक्तगुणकानि । प्राणस्थानीन्द्रियस्थानि प्राणादिवायुस्थानि वा । मरुच्छशब्दानि अग्निस्थानि जाठराग्निस्थान्यग्नि-शब्दानि पृथगधिष्ठानान्तरस्थतां विनेत्यर्थः । देवगानीति मरुदग्निगतानि । अनेन बाह्यमुक्तम् ।।

**मन्त्रार्थमञ्जरी–** ये । शुभ्राः, शुद्धाः । घोरं दैत्यान्प्रति क्रूरं वर्पो बलं येषां ते घोरवर्पसः । सुक्षत्रासः, सुष्ठु क्षेत्रत्रातारः, सुष्ठु क्षतितस्त्रातार इति वा, सुपूर्वात् 'क्षि निवासे' इत्यतः 'क्षि क्षये' इत्यतो वा डप्रत्ययः, 'त्रैङ् पालने' इत्यतः 'आतोऽनुपसर्गे कः' 'आज्जसेरसुक्'रिशादसः, रम्यसत्सुखभोक्तारः, रमेः डिः, रि रम्यं शं सुखमदन्तीति व्युत्पत्तेः, अत्तेः असुन् । एवं भूता ये मरुतः (तैः) मरुद्भिः अग्ने आ गहि ।। ५ ।।

**स्कन्द– ये शुभ्राः** शोभनाः **घोरवर्पसः** 'वर्प' (निघ ३,७) इति रूपनाम । घोररूपाश्च । द्वयोश्चानयोः परस्परविरोधित्वात् कालभेदेन योजना । शोभनाः क्रीडाकाले । घोररूपाः सङ्ग्रामकाले । **सुक्षत्रासः** सुधन्वानः सुबला वा । **रिशादसः** क्षेप्तारो हिंसितॄणां प्रति हिंसितार इत्यर्थः । तै मरुद्भिः इत्यादि पूर्ववत् ।। ५ ।।

**वेङ्कटमाधव–** ये अलङ्करणैः शोभमानाः घोररूपाः सुबलाः रिशतामसितारः ।। ५ ।।

**मुद्गल– ये** मरुतः **शुभ्राः** शुभ्रत्वादिगुणोपेताः शोभनाः **घोरवर्पसः** उग्ररूपधराः **सुक्षत्रासः** शोभनधनोपेताः **रिशादसः** हिंसकानां भक्षकाः । मरुद्भिः इत्यादि पूर्ववत् ।। ५ ।।

**सायण.– ये** मरुतः शुभ्रत्वादिगुणोपेताः तैः मरुद्भिः इत्यन्वयः । **शुभ्राः** शोभनाः **घोरवर्पसः** उग्ररूपधराः **सुक्षत्रासः** शोभनधनोपेताः **रिशादसः** हिंसकानां भक्षकाः । 'मघम्' इत्यादिष्वष्टाविंशतिसङ्ख्याकेषु धननामसु 'क्षत्रं भगः' (नि.२,१०,९) इति पठितम् ।। ५ ।।

**सिद्धाञ्जनम्–** पञ्चमीमृचमाह– **ये शुभ्राः** शोभनाः घोरवर्पसः भीषणरूपाः, वर्पः रूपनाम,

**सुक्षत्रासः** सुबलाः **रिशादसः** हंसितृणां अत्तारः तैः मरुद्भिः पूर्ववत् । मरुतां घोररूपादिमत्त्वेऽपि शोभनफलकर्मत्वद्योतनाय शुभत्वविशेषणं प्रयुक्तं लक्षणीयम् ।। ५ ।।

**।। इति प्रथमाष्टके प्रथमाध्याये षट्त्रिंशो वर्गः ।।**

## ।। अथ सप्तत्रिंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**ये नाकस्याधि रोचने दिवि देवास आसते । मरुद्भिरग्न आ गहि ।। ६ ।।**

ये । नाकस्य । अधि । रोचने । दिवि । देवासः । आसते । मरुत्ऽभिः । अग्ने । आ । गहि ।। ६ ।।

## ऋग्भाष्यम्

**स्वर्गोपरि प्रकाशेच सूर्यादावासते सुराः ।**
**नाको निर्दुःखरूपत्वाद् द्यौः प्रकाशस्वरूपतः ।। ६ ।।**

**ऋग्भाष्यटीका– ये नाकस्य** । स्वर्गोपरि । ये **देवासः** सुराः मरुतो **नाकस्याधि** स्वर्गोपरि दिवि **रोचने** रुचदीप्तौ सूर्यादौ प्रकाशे **आसते** । तैर्मरुद्भिरग्न आगहि । अत्र नाकस्याधि दिवीति पुनरुक्तिरित्यतोऽर्थभेदमाह– **नाक इति** । कं सुखम् । तद्विरुद्धं दुःखमकम् । न विद्यते अकमस्मिन्निर्दुःखरूपत्वान्नाकः । द्यौः प्रकाशस्वरूपतः । दीव्यतेर्हि रूपमेतत् ।। ६ ।।

**मन्त्रार्थमञ्जरी–** ये देवासः, सुराः, मरुतः । नाकस्य, निर्दुःखस्य स्वर्गस्य । अधि, स्वर्गस्योपरि । दिवि रोचने, 'रुच दीप्तौ' ल्युट् (युच्) सूर्यादौ प्रकाशे च । आसते, तिष्ठन्ति । (तैः) मरुद्भिः अग्ने आ गहि ।। ६ ।।

**स्कन्द–** नाक इत्यादित्यनाम (या २,१४) । **ये नाकस्य अधि** उपरि **रोचने** दीप्ते **दिवि** 'अथापि ताद्धितेन कृत्स्नवन्निगमा भवन्ति' (या २,५) इत्येव दिवोऽवयवो द्युशब्देनोच्यते । **दिवि** दिव एकदेशे स्थाने सप्तमे वायुस्कन्धे **देवास आसते** । तैः मरुद्भिः इत्यादि पूर्ववत् ।।

**वेङ्कटमाधव–** ये आदित्यस्य रोचने दिवि देवा वसन्ति ।। ६ ।।

**मुद्गल–** **ये** मरुत **नाकस्य अधि** दुःखरहितस्य सूर्यस्योपरि **दिवि** द्युलोके **रोचने** दीप्यमाने ये **देवासः** स्वयमपि दीप्यमाना **आसते** मरुद्भिः इत्यादि पूर्ववत् ।। ६ ।।

**सायण–** **ये** मरुतः **नाकस्याधि** दुःखरहितस्य सूर्यस्योपरि **दिवि** द्युलोके **रोचने** दीप्यमाने ये **देवासः** स्वयमपि दीप्यमानाः **आसते** तैः मरुद्भिः इत्यन्वयः ।

नाकस्य । कं सुखम् । तत् यस्मिन्नास्ति असौ अकः इति बहुव्रीहिं कृत्वा पश्चात् नञ् । न अको नाक इति नञ्तत्पुरुषः । 'नलोपो नञः' (पा.सू.६,३,७३) इति लोपो न भवति, 'नभ्राण्नपात्' (पा.सू.६,३,७५) इत्यादिना प्रकृतिभावात् । 'तत्पुरुषे तुल्यार्थ' (पा.सू.६,२,२) इत्यादिना अव्ययपूर्वपदप्रकृतिस्वरत्वेनोदात्तत्वम् । प्रथमतस्तत्पुरुषं कृत्वा पश्चात् बहुव्रीहौ उत्तरपदान्तोदात्तत्वं स्यात् । अधिशब्द उपर्यर्थे । उपसर्गप्रतिरूपको निपातः । रोचने । 'रुच दीप्तौ' । 'अनुदात्तेतश्च हलादेः' (पा.सू.३,२,१४९) इति युच् । 'चितः' इत्यन्तोदात्तत्वम् । दिवि । 'ऊडिदम्' इत्यादिना विभक्तेरुदात्तत्वम् । देवासः । 'आज्जसेरसुक्' इति असुक् । आसते । 'आस उपवेशने' । अनुदात्तेत्त्वात् आत्मनेपदम् । झस्य अदादेशः । 'अदिप्रभृतिभ्यः शपः' इति शपो लुक् । अनुदात्तेत्त्वात् लसार्वधातुकानुदात्तत्वम् । यद्वृत्तयोगात् न निघातः ।।

**सिद्धाञ्जनम्–** षष्ठीमृचमाह– अपरार्धत्रिलोक्यां तृतीयं स्थानं नाक उच्यते । न अकं असुखं यस्मिन् स नाक इति नसमास इति कृत्वा विग्रहमाचक्षते । तस्य त्रिलोक्यामवस्थितस्य स्वर्गाख्यस्य **नाकस्य अधि** उपरि **रोचने** दीप्ते **दिवि** द्युलोकस्यैकदेशे स्थाने 'सप्तमे वायुस्थाने' इति स्कन्दस्वामी । सप्त मारुतस्कन्धाः प्रोक्ताः । ये **देवासः आसते** तै मरुद्भिः प्राग्वत् । मध्यमस्थानाः स्वभावतः प्राणमयप्रभावा अपि इन्द्रसम्बन्धित्वात् तदावासद्युलोकावधि ऐन्द्रेण विभवेन व्याप्रियन्ते । अत एवेमे 'स्वतवस कवयः सूर्यत्वचः' इत्यन्यत्र मन्त्रवर्णेषु वर्णिताः ।।

## ऋक्संहिता पदपाठसहिता

**य ईङ्खयन्ति पर्वतान् तिरः समुद्रमर्णवम् । मरुद्भिरग्न आगहि ।। ७ ।।**

ये । ईङ्खयन्ति । पर्वतान् । तिरः । समुद्रम् । अर्णवम् । मरुत्ऽभिः । अग्ने । आ । गहि ।।

## ऋग्भाष्यम्

**प्रतोलयन्ति च गिरींस्तिरस्कृत्य च सागरम् ।**

**पुरुषान्प्रकृतिं वाऽपि पर्ववन्तो हि जन्मना ।**
**पुरुषाः सुसमुद्रेकात्समुद्रः प्रकृतिर्मता ।**
**प्रकृतेः पुरुषाणां च प्रेरकः सन्सदा हरे ।**
**स्वरूपैर्बहुभिर्युक्त आयाहि समसद्गुणैः ।। ७ ।।**

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमदृग्भाष्ये प्रथमोऽध्यायः ।। १ ।।

**ऋग्भाष्यटीका– य ईंखयन्ति ।** प्रतोलयन्ति । **ये पर्वतान्** गिरीन् **ईंखयन्ति** ईंखिर्गत्यर्थः, गमयन्ति प्रतोलयन्तीति यावत् । तथा **अर्णवं** उदकवन्तं **समुद्रं** सागरं च **तिरः** तिरस्कृत्य वर्तन्ते । विष्णुविषये पर्वतान् समुद्रं चेति व्याचष्टे– **पुरुषानिति** ।। कथं पुरुषाः पर्वतशब्दार्था इत्यत आह– **पर्ववन्तो हीति** ।। यस्मात्पुरुषा जन्मना पर्ववन्तो जन्मलक्षणपर्ववन्तः तस्मात्पर्वताः । मत्त्वर्थे तः । प्रकृतिः कथं समुद्रशब्देत्यत आह– **सुसमुद्रेकादिति** । अर्णवत्वं च तस्या जलादिभूताधारत्वं पुरुषादीनामींखनादिकं व्याकुर्वन् मरुद्भिरग्र आगहीत्येतदपि व्याख्याति– **प्रकृतेरिति** ।। मरुद्भिरिति सहयोगलक्षणा तृतीया ततः सहयुक्तेऽप्रधान इति मरुतामप्राधान्यं प्रसक्तं तन्निरासार्थमाह– **समसद्गुणैरिति** ।। ७ ।।

**मन्त्रार्थमञ्जरी–** ये । पर्वतान्, गिरीन् । ईङ्खयन्ति, 'ईखि गतौ' गमयन्ति, प्रतोलयन्तीति यावत् । तथा अर्णवम्, (अर्णांसि जलान्यत्र सन्तीत्यर्णवस्तम्, 'अर्णसो लोपश्च' इति वः सलोपश्च) समुद्रम्, सागरम् । (च) तिरः, तिरस्कृत्य । (वर्तन्ते) । विष्णौ तु 'पर्वतान्, जन्मलक्षणपर्ववत्त्वात्पुरुषान्, पर्वन्शब्दान्मतुबर्थे (तप्पर्वमरुद्भ्याम्' इति) तप्प्रत्ययः । ईङ्खयन्ति, प्रेरयन्ति । अर्णवम्, जलादिभूताधारत्वादुदकवन्तम् । समुद्रेकहेतुना 'समुद्रम्' इत्युक्तां प्रकृतिम् । तिरः, तिरस्कुर्वन्ति, नियमयन्ति । इति व्याख्या । (तैः) मरुद्भिः मरुन्नामकैर्देवैः सह, मरुदन्तर्गतैः पृथक्स्थितैर्वा रूपविशेषैः सह । अग्ने, विष्णो, प्रसिद्धाग्ने वा । आ गहि ।। ७ ।।

**स्कन्द– ये ईङ्खयन्ति** ईङ्खतिर्गतिकर्मा (निघ. २,१४) । गमयन्ति क्षिपन्तीत्यर्थः । किम् ? **पर्वतान्** शैलान् । 'तिरः सतः' (निघ ३,२९) इति प्राप्तस्य नामनी । प्राप्ताः सन्तः । कं प्रति क्षिपन्ति ? उच्यते– **समुद्रं** द्वितीयाश्रुतेः कर्मप्रवचनीयप्रतिशब्दाध्याहारः । पार्थिवं समुद्रं प्रति । कीदृशम् ? **अर्णवं** उदकवन्तम् । पर्वतक्षेपणेन चात्र बलवत्ता प्रतिपाद्यते । एतदुक्तं

भवति– ये महाबलाः प्राप्ताः सन्तः पर्वतानपि समुद्रे क्षेप्तुं समर्था इति । अथवा पर्वतशब्दो मेघनाम (निघ १,१०) । पार्थिवेन च समुद्रेण पृथिव्येव लक्ष्यते । ये गमयन्ति मेघान् वर्षाय पृथिवीम् । वर्षयन्तीत्यर्थः । मेघान् प्रति प्राप्ताः सन्तः । तैः मरुद्भिः इत्यादि पूर्ववत् ॥

**वेङ्कटमाधव–** ये चालयन्ति पर्वतान् तिरस्कुर्वन्ति च उदकवन्तं समुद्रम् ॥ ७ ॥

**मुद्गल– ये** मरुतः **पर्वतान्** मेघान् **ईङ्खयन्ति** चालयन्ति तथा **अर्णवं** उदकयुक्तं **समुद्रं तिरः** कुर्वन्तीति शेषः। निश्चलस्य जलस्य तरङ्गाद्युत्पत्तये चालनं तिरस्कारः । मरुद्भिः इत्यादिपूर्ववत् ॥ ७ ॥

**सायण– ये** मरुतः **पर्वतान्** मेघान् **ईङ्खयन्ति** चालयन्ति तथा **अर्णवं** उदकयुक्तं **समुद्रं तिरः** कुर्वन्तीति शेषः । निश्चलस्य जलस्य तरङ्गाद्युत्पत्तये चालनं तिरस्कारः । तैः मरुद्भिः इत्यन्वयः ।

ईङ्खयन्ति । 'उख उखि' इत्यादौ ईखिर्गत्यर्थः । 'हेतुमति च' (पा.सू.३,१,२६) इति णिच् । 'इदितो नुम् धातोः' इति नुम् । णिजन्तधातोः 'चितः' इत्यन्तोदात्तत्वम् । शपः पित्त्वादनुदात्तत्वम् । तिङश्च लसार्वधातुकस्वरेण धातुस्वर एव शिष्यते । पर्वतान् । 'पूर्व पर्व मर्व पूरणे' । औणादिकोऽतन् । प्रत्ययस्वरः ॥ ७ ॥

**सिद्धाञ्जनम्–** सप्तमीमृचमाह– **ये** देवाः मरुतः **पर्वतान्** अचलान् **ईङ्खयन्ति** चालयन्ति **अर्णवं** उदकवन्तं **समुद्रं तिरः** तिरस्कुर्वन्ति, अपारस्य समुद्रस्य तरणमेव तिरस्करणम् । तैः मरुद्भिरित्यादि पूर्ववत् ।

अत्र अचलानां पर्वतानां चालनं, दुस्तरस्य अपां राशेः समुद्रस्य तरणं च मरुतां प्रचण्डबलत्वमावेदयत आपाततः । निस्तरङ्गस्य समुद्रस्य तरङ्गाद्युत्पत्तये चालनं तिरस्कार इति व्याख्यतारः । अत्र गम्योऽर्थोऽस्माकं सङ्केतार्थस्मरणेन ग्राह्यो भवति । प्राणपराक्रमविसारिताः दिव्यधीवृत्तिशक्तिभूता मरुतः । ते स्वान्तर्निहितज्ञानबनलादिसत्त्वं पर्वतशब्दसङ्केतितं तमोघनं जडं शरीरं जडीभूतं स्थूलज्ञानं वा चालयन्ति । तेन ज्ञानबलादेर्विकासो भवति । सर्वशक्तिसम्पन्नस्य अनन्तसत्वस्य समुद्रशब्दलक्षितस्य अखण्डवस्तुनो दुस्तरस्य निश्चलस्य चालनेन तरङ्गभूतानां

तदंशानां प्रादुर्भावः सम्पाद्यते । तत्तादृशचण्डविक्रमैर्मरुद्भिः सह अग्नेरागमनं प्रार्थ्यते । ईङ्खयन्ति- उख-णख इत्यादौ ईखिर्गत्यर्थः ।। ७ ।।

### ऋक्संहिता पदपाठसहिता

**आये तन्वन्ति रश्मिभिस्तिरः समुद्रमोजसा । मरुद्भिरग्न आगहि ।। ८ ।।**
**आ । ये । तन्वन्ति । रश्मिऽभिः । तिरः । समुद्रम् । ओजसा मरुत्ऽभिः । अग्ने । आ । गहि ।। ८ ।।**

**ऋग्भाष्यटीका– आये । ये रश्मिभिः** तेजोभिः सर्वं **आतन्वन्ति** व्याप्नुवन्ति । तथा ओजसा समुद्रं तिरस्कुर्वन्ति । तैर्मरुद्भिरग्न आगहि ।। ८ ।।

**मन्त्रार्थमञ्जरी–** ये । रश्मिभिः, तेजोभिः । (सर्वम्) आ तन्वन्ति, व्याप्नुवन्ति । यथा ओजसा, सामर्थ्येन । समुद्रम् तिरः, तिरस्कुर्वन्ति । (तैः) मरुद्भिः अग्ने आ गहि ।। ८ ।।

**स्कन्द–** आतानो नाम व्याप्तिः । **ये आ तन्वन्ति** व्याप्नुवन्ति **रश्मिभिः** स्वतेजोभिः । रश्मिभि **तिरः** प्राप्ताः पार्थिवमन्तरिक्षं वा । समुद्रशब्दो ह्यन्तरिक्षनामाऽपि (निघ १,३) । न च केवलैः स्वतेजोभिः । किन्तर्हि । **ओजसा** बलेन च । तैः मरुद्भिः इत्यादि पूर्ववत् ।।

**वेङ्कटमाधव–** ये रश्मिसदृशैः प्रत्यक्षमारतैरुदकं बलेन समुद्रं तिरः आ तन्वन्ति ।। ८ ।।

**मुद्गल– ये** मरुतः **रश्मिभिः** सूर्यकिरणैः सह **आ तन्वन्ति** आप्नुवन्ति आकाशमिति शेषः । किञ्च **ओजसा** स्वकीयेन बलेन समुद्रं तिरः कुर्वन्ति । मरुद्भिः इत्यादि पूर्ववत् ।। ८ ।।

**सायण– ये** मरुतः **रश्मिभिः** सूर्यकिरणैः सह **आ तन्वन्ति** आप्नुवन्ति आकाशमिति शेषः । किञ्च **ओजसा** स्वकीयबलेन **समुद्रं** तिरस्कुर्वन्ति तैः मरुद्भिः इत्यन्वयः ।

तन्वन्ति । 'तनु विस्तारे' । लटो 'झोऽन्तः' । 'तनादिकृञ्भ्य उः' (पा.सू.३,१,७९) । 'सति शिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्यः' इति तिङ एव आद्युदात्तत्वम् । समुद्रम् । 'उन्दी क्लेदने' । 'स्फायितञ्चि' इति रक् । समासे कृदुत्तरपदप्रकृतिस्वरत्वम् ।। ८ ।।

**सिद्धाञ्जनम्**–अष्टमीमृचमाह– **ये** देवाः रश्मिभिः प्रज्ञाविसारिभिः सौरैः किरणैः **आतन्वन्ति** व्याप्नुवन्ति । तनु विस्तारे । अनन्तं अन्तरिक्षं पूर्वोक्तलक्षणं समुद्रं वा, **ओजसा** स्वेन बलेन

**समुद्रं तिरः** तिरस्कुर्वन्ति । तरणमेव तिरस्कारः, इह आतानो वा व्याप्त्यर्थः। तैः । शिष्टं प्राग्वत् ।। ८ ।।

**ऋक्संहिता पदपाठसहिता**

**अभि त्वा पूर्वपीतये सृजामि सोम्यं मधु । मरुद्भिरग्न आ गहि ।। ९ ।।**

**अभि । त्वा । पूर्वऽपीतये । सृजामि । सोम्यम् । मधु मरुत्ऽभिः । अग्ने । आ । गहि ।।**

**।। इति प्रथमाष्टके प्रथमाध्याये सप्तत्रिंशोवर्गः ।।**

**।। इति ऋक्संहितायां प्रथमोऽध्यायः ।।**

**ऋग्भाष्यटीका– अभित्वा** । अहं **त्वा अभि** त्वां प्रति **पूर्वपीतये** प्रथमपानाय **सोम्यं** सोमरूपं **मधु** स्वादुद्रव्यं **सृजामि** निर्मिमामि । तस्मान्मरुद्भिरग्न आगहि ।। ९ ।।

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमदृग्भाष्यस्य विवरणे श्रीमज्जयतीर्थमुनिविरचिते प्रथमोऽध्यायः ।। १ ।।**

**मन्त्रार्थमञ्जरी–** (अहम्) त्वा अभि, त्वां प्रति । पूर्वपीतये, प्रथमपानाय । सोम्यम्, सोमरूपम् । मधु, स्वादुद्रव्यम् । सृजामि, निर्मिमामि । तस्मात् । मरुद्भिः अग्ने आ गहि ।।९।।

आद्याध्यायस्थमन्त्रार्थान्भाष्यटीकानिरूपितान् ।
समग्रहीष्म बालानां बोधाय प्रार्थिता वयम् ।।

**।। इति श्री राघवेन्द्रतीर्थविरचिता मन्त्रार्थमञ्जरी ।।**

**स्कन्द–** अभिशब्दोऽत्र 'अभिरभागे' (पा.१,४,९१) इति लक्षणे कर्मप्रवचनीयः । **त्वां प्रति** । **पूर्वपीतये** पूर्वकालप्रवृत्ताय पानाय **सृजामि** । शुद्धोऽप्यत्र सृजतिः सोपसर्गार्थे द्रष्टव्यः । उत्सृजामि । अनादिकालप्रवृत्तं यत् पानं तदर्थं तुभ्यं ददामीत्यर्थः । किम् ? **सोम्यं** सोममयं **मधु** द्रवत्वसामान्यान्मृष्टत्वसामान्याच्च सोमरसोऽत्र मधूच्यते । एतज्ज्ञात्वा मरुद्भिः अग्ने आगहि ।।

वलभीविनिवास्येतामृगर्थागमसंहृतिम् ।
भर्तृध्रुवसुतश्चक्रे स्कन्दस्वामी यथास्मृति ।।

**।। इति भर्तृध्रुवसुतस्य स्कन्दस्वामिनः कृतौ ऋग्वेदभाष्ये प्रथमोऽध्यायः ।।**

**वेङ्कटमाधव–** अभि सृजामि त्वा पूर्वपानाय सोममयं मधु । सः अग्ने! मरुद्भिः सह आगच्छेति ।। ९ ।।

ऋक्संहितायाः प्रथममध्यायं व्याकरोदिति ।
कुशिकानां कुले जातो माधवः सुन्दरीसुतः ।।

**।। इति वेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने प्रथमाष्टके प्रथमोऽध्यायः ।।**

**मुद्गल–** हे **अग्ने! पूर्वपीतये** पूर्वकाले प्रवृत्ताय पानाय **त्वा** त्वां प्रति **सोम्यं मधु** सोमसम्बन्धिनं मधुरसं **अभि सृजामि** सर्वतः सम्पादयामि । मरुद्भिः इत्यादि पूर्ववत् ।।९।।

**सायण– हे अग्ने पूर्वपीतये** पूर्वकाले प्रवृत्ताय पानाय त्वां प्रति **सोम्यं मधु** सोमसम्बन्धिनं मधुररसं **अभि सृजामि** सर्वतः सम्पादयामि । अतस्त्वं मरुद्भिः सह अत्र आगच्छ ।

अभि । 'एवमादीनामन्तः' इत्यन्तोदात्तत्वम् । 'त्वामौ द्वितीयायाः' (पा.सू.८,१,२३) इति त्वादेशः सर्वानुदात्तः । पूर्वपीतये । पूर्वा चासौ पीतिश्च । 'पुंवत्कर्मधारय' (पा.सू.६,३,४२) इत्यादिना पुंवद्भावः । सृजामि । 'सृज विसर्गे' । मिपः पित्त्वादनुदात्तत्वम् । विकरणस्वरः । सोम्यम् । 'सोममर्हति यः' । प्रत्ययस्वरेणान्तोदात्तः । मधु । 'फलिपाटिनमि' (उ.सू.१,१८) इत्यादिना उप्रत्ययः । 'नित्' इत्यनुवृत्तेराद्युदात्तत्वम् । अन्यद्गतम् ।। ९ ।।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ।।

**।। इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये प्रथमाष्टके प्रथमोऽध्यायः समाप्तः ।।**

**सिद्धाञ्जनम्–** नवमीमृचमाह– हे **अग्ने! त्वा अभि** त्वामभिलक्ष्य **पूर्वपीतये** पूर्वपानाय **सोम्यं** सोममयं सोममर्हति यत् **मधु** मधुरं रसं **सृजामि** उत्सृजामि। शिष्टं प्राग्वत् ।।९।।

**।। इति श्रीभारद्वाजेन विश्वेश्वरसूनुना कपालिशास्त्रिणा रचिते सिद्धाञ्जनाख्ये ऋक्संहिताभाष्ये प्रथमाष्टके प्रथमोऽध्यायः समाप्तः ।।**

**।। इति ऋक्संहितायां प्रथमाष्टके प्रथमोऽध्यायः समाप्तः ।।**

'यो हि सात्विकप्रकृतिर्लोकप्रवादात् कार्यत्वादिलिङ्गानुसन्धानाद्वा स्वतनुभवनादेः कर्तारं सामान्यतो जानन् स्नेहमाहात्म्यज्ञानाभ्यां तद्विशेषज्ञानार्थमुत्कण्ठितमानसस्तत्संस्कारवशाच्चान्यदगणयन् वर्तते तं प्रत्याप्तो बन्धुरिवायं समस्तो वेदस्तत्स्वरूपं स्वप्राधानमेव प्रतिपादयति । ततो वाक्यार्थज्ञानादवाप्तपरमानन्दस्तत्साक्षात्कारं कामयते । तं प्रति तदुपासना विधीयते । सा च प्रक्षीणान्तःकरणमलस्यैव सम्भवतीति तदर्थं कर्मविधयः । अथवा यः सांसारिकविविधदुःखं जिहासुः परमानन्दं च प्रेप्सुस्तत्साधनं जिज्ञासते, तं प्रति परमेश्वर एव प्रसन्नः परमेष्टसाधनतयोपदिश्यते । ततः कथमसौ प्रतीदतीत्यपेक्षायां तत्साक्षात्कारस्तदङ्गतया कर्माणीत्युभयथा स्वप्रधान एव परमेश्वरो वेदार्थः' ।

तदेतद्वैदिकं महातात्पर्यं श्रीमदानन्दतीर्थकृतभाष्याधीत्यैव ज्ञायते । भाष्यश्चानन्दतीर्थीयं श्रीमज्जयतीर्थकृतटीकासहायेनैव परिज्ञाततात्पर्यं भवतीति विदितमेव विपश्चिदपश्चिमानाम् ।